॥ श्रीः ॥

# चौखम्बा अमरभारती ग्रन्थमाला

४



श्रीमद्गदाधरभट्टाचार्यप्रणीतः

# व्युत्पत्तिवादः

सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डनपण्डितकुलपति-

झोपाह्वश्रीधर्मदत्त(बच्चाझा)प्राज्ञविरचित-

## गूढार्थतत्त्वालोकसहितः


सम्पादको भूमिकालेखकश्च

**श्री पं० कीर्त्यानन्दझा न्याय-वेदान्ताचार्यः**

काशी–हिन्दू–विश्वविद्यालय–प्राध्यापकः








**चौखम्बा अमरभारती प्रकाशन, वाराणसी**

प्रकाशक : चौखम्बा अमरभारती प्रकाशन, वाराणसी

मुद्रक : चौखम्बा प्रेस, वाराणसी

संस्करण : प्रथम, वि० सं० २०३३

मूल्य : ४५–००



के० ३७/११८, गोपाल मन्दिर लेन

पो० बा० १३८, वाराणसी–२२१००१

( भारत )





अपरं च प्राप्तिस्थानम्

चौखम्बा संस्कृत सीरीज आफिस

के० ३७/९९, गोपाल मन्दिर लेन

पो० बा० ८, वाराणसी–२२१००१ ( भारत )

फोन : ६३१४५

# गूढार्थतत्त्वालोकव्याख्यासनाथीकृतस्य व्युत्पत्तिवादस्य भूमिका

महाकालस्योरस्यविरतमहानृत्यनिरता, सृजन्ती चावन्ती निरुपधि हरन्ती च भुवनम् ।
निपीयेवाज्ञानोल्वणविषमतिश्यामवपुषा, स्फुरत्संविद्दीप्तिर्वितरतु शिवं नः करुणया ॥ १ ॥

आन्वीक्षिकीं हृदि निधाय मनोऽभिरामाम्, स्वान्तेस्थितामपि मुहुर्मुहुरीक्षमाणः ।
सूक्ष्मार्थसङ्कलनयेव नितान्तसूक्ष्माम्, बुद्धिं तनुञ्च दधदेति जयं गुरुर्नः ॥ २ ॥

दुग्धं निपोय वचसामधिदेवतायाः, सारस्वतं हृदि निधाय च सारभूतम् ।
सर्वात्मना जगति शुक्लतया प्रसिद्धः, सिद्धो गुरुर्जयति सम्प्रति कीर्त्तिकायः ॥ ३ ॥

अथेदानीं न्यायविद्यास्वरूपाया देवतायाः स्वात्मनश्च तुष्टये व्युत्पित्सूनां व्युत्पन्नानामुपकाराय च बहुलतमगम्भीरविचारपरिपूर्णया गूढार्थतत्त्वालोकेतिव्याख्यया सनाथीकृतं व्युत्पत्तिवादाख्यं ग्रन्थरत्नं प्रकाश्यते । तत्र विविधवादिविप्रतिपत्त्युपस्थापनमुखेन स्वसिद्धान्तप्रतिपादनैककुशला नानाविचारोपबृंहिता भूमिकेयं विरच्यत इति महान् प्रमोदस्यावसरः । तत्र "घटः" इत्येकशब्दादस्तित्वरूपमर्थमध्याहृत्य "अस्तितावान् घटः" इतिशाब्दबोधमङ्गीकुर्वतां प्राभाकराणां मतं निराचिकीर्षूणां भट्टाचार्याणां "शाब्दबोधे चैकपदार्थे" इत्यादिप्रतिज्ञावाक्यं तदैव सङ्गतं स्यात्, यदा शब्दस्य प्रमाणान्तरत्वं शाब्दबोधस्य वा प्रमान्तरत्वं सिध्येत् । तदेव तु वैशेषिका नामनन्ति । नहि वैशेषिकानुगामिनां शाब्दबोधाकाङ्क्षाज्ञानयोर्यः कार्यकारणभावस्तज्ज्ञानाय व्युत्पत्तिशब्दार्थाय यो वादोऽनुकूलतया शब्दप्रयोगात्मको व्यापारस्तत्र रुचिर्दृश्यते । मन्मते तु शाब्दबोधो नाम शब्दप्रयोज्यः प्रमाविशेषोऽतिरिक्त एव । अत एव च शब्दस्य प्रमाणान्तरत्वं सिद्धं भवति । नहि क्रियाभेदं विना प्रमाणभेदः कैश्चित्प्रतिपादयितुं शक्यः । अत एव प्रमाणनिरूपणप्रस्तावे सूत्रकृद्भिर्गौतमपादैः "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्" इत्येतत्सूत्रेण प्रथमं प्रत्यक्षप्रमालक्षणमेव प्रत्यपादि । अस्तु, प्रत्यक्षानुमानद्वयस्यैव प्रमाणत्वमङ्गीकुर्वतां तेषां मते तु शाब्दबोधस्यानुमान एवान्तर्भावः, ते च प्रयोज्यप्रयोजकव्यवहारेण प्रथमशक्तिग्रहस्थले "गामानय, कुठारेण काष्ठं छिन्धि" इति वाक्यार्थस्य ज्ञानमनुमानेनैव भवति, तत्र शक्तिग्रहाभावेन शब्दतोऽर्थग्रहासम्भवात् । तत्र "गामानय" इति वाक्यं श्रुतवता प्रयोज्येन नीतं घटं पश्यन् व्युत्पित्सुर्बालः "अयं गवानयनकार्यताज्ञानवान् गवानयनविषयकचेष्टावत्वादित्यनुमिनोति, ततः कारणं विना कार्योत्पत्तेरसम्भवेन प्रयोज्यज्ञानम् "गामानय" इति वाक्यजन्यम्, इत्यनुमानेनोक्तवाक्ये गवानयनविषयकबोधजनकत्वं निश्चिनोति, ततः "गामानय, घटं नय, गां बधान" इत्यावापोद्वापाभ्यां गोपदस्य सास्नादिमति शक्तिग्रहो दृश्यते, आवापो निक्षेपः, उद्वापो निष्काशनम्, ततस्तद्वाक्यमेव दृष्टान्तीकृत्यान्यवाक्यस्थलेऽपि वाक्यार्थस्यानुमानेनैव [illegible]च्छब्दप्रमाणं नैव स्वीकरणीयमिति कथयन्ति । तन्मतसिद्धानुमानाकाराः—"घटमानयेति वाक्यम्, [illegible]कर्मत्वान्वितबोधतात्पर्यकम्, घटाद्यर्थस्मारकसाकाङ्क्षपदकदम्बकत्वात्, गामानयेति वाक्यवत्" इत्यनुमानेन तात्पर्यविषयीभूतो यस्तावद्बोधस्तस्य विषयविधयाऽवच्छेदकतया घटानयनरूपवाक्यार्थस्य सिद्धिः । अथवा "एते पदार्थाः, परस्परं संसर्गवन्तः, तात्पर्यवत्साकाङ्क्षपदकदम्बघटकपदस्मारितत्वात्, गोकर्मत्वादिपदार्थवत्" इत्यनुमानेन संसर्गस्य सिद्धिः । अथवा "घटीयं कर्मत्वम्, घटस्मारकपदसाकाङ्क्षम्, पदस्मारितत्वात्, घटकर्मत्वविशिष्टमानयनम्, घटकर्मतानिरूपकम्, द्वितीयान्तघटपदसाकाङ्क्षानयतिस्मारितत्वादिति । एवं क्रमेण च विशिष्टार्थबोधसम्भवाच्छब्दो न प्रमाणमिति । तत्र किञ्चिद्विचार्यते–अनुमितिस्थले सर्वत्रैव व्याप्तिज्ञानं परामर्शश्चापेक्ष्येते, शाब्दबोधस्थले तु व्याप्तिज्ञानादिकं विनाऽप्यन्यविधसामग्र्या आकाङ्क्षाज्ञानादिघटितायाः शाब्दबोधोत्पत्तिसम्भवेन न तद्बोधस्यानुमितित्वं सम्भवेत् । यद्यपि शब्दस्य प्रमाणान्तरत्वे विभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्या अनुमितिसामग्र्याश्च प्रतिबन्धकताद्वयकल्पने गौरवमापद्यते, तस्यानुमानेऽन्तर्भावे चैकविधमेव प्रतिबन्धकत्वं कल्पनीयं भवतीति लाघवम्, अतश्च तादृशलाघवानुरोधेन सर्वत्रैव शाब्दबोधस्थले व्याप्तिज्ञानादिकल्पनैव समीचीना, तथापि

पर्वते वह्निनिश्चयोत्तरं सिषाधयिषामन्तरेणानुमितिर्न भवति, तत् सत्त्वे तु भवत्येव, शाब्दबोधस्तु निश्चयसत्त्वेऽपीच्छां विनापि भवति, अतश्चानयोर्वैलक्षण्यसम्पादनाय शब्दस्य प्रमाणान्तरत्वमवश्यमेवाभ्युपेयम् ।

**यद्यपि** समानविषयकप्रत्यक्षत्वावच्छिन्नं प्रति शाब्दबोधसामग्र्या अनुमितिसामग्र्याश्च प्रतिबन्धकत्वं नैव भवति, तत्र च स्थले प्रत्यक्षसामग्री एव बलीयसी, अत एव "अयं पुरुषो न वा" इति संशयस्थले "पुरुषत्वव्याप्यकरचरणादिमानयम्" इति परामर्शात्मकविशेषदर्शनकाले प्रत्यक्षसामग्र्या बलवत्त्वेन "अयं पुरुष एव" इत्येव प्रत्यक्षं भवति न त्वनुमितिः, एवं "अत्र घटः" इति वाक्यप्रयोगकाले प्रत्यक्षसामग्रीसत्त्वे तत्र "अत्र घटः" इत्येवं प्रत्यक्षं जायते न तु "एतद्देशवृत्तिर्घटः" इत्येवंभूतः शाब्दबोधः, अतश्चोक्तदशायां यथाऽनुमितिर्न भवति तथैव प्रत्यक्षसामग्र्या बलवत्त्वेन तत्र प्रत्यक्षमेव भवति न शाब्दबोधः, तस्य तत्रानुपयोगात्, **तथापि** शाब्दबोधस्य प्रमान्तरत्वास्वीकारे शाब्दबोधानन्तरं जायमाने "अहममुमर्थं शृणोमि, शाब्दयामि" इत्याद्यनुव्यवसाये यद्विलक्षणा शाब्दबोधरूपा प्रमा भासते तस्यापलापो वैशेषिकैरपि कर्त्तुमशक्य एव । तथा च तादृशानुभवबलाच्छाब्दबोधरूपायाः प्रमायाः सिद्धौ सत्यां शब्दस्य प्रमाणान्तरत्वमवश्यमेवाभ्युपेयं भवेत् तन्मतेऽपि । अन्यथा शाब्दप्रमाया आकस्मिकत्वापत्तिरेव स्यात्, अनुमितिसामग्र्याः शाब्दप्रयोजकत्वे च धूमादिलिङ्गकानुमितिस्थलेऽपि "शाब्दयामि" इत्येवंभूतस्यानुव्यवसायस्यापत्तिः स्यात् । **यदि च** यत्राकाङ्क्षाज्ञानादिशाब्दसामग्रीघटितैवानुमितिसामग्री वर्तते तत्र तादृशसामग्रीजन्यत्वेन श्रुधात्वर्थोऽनुमितिरेवाङ्गीकरणीयः, तथा च शाब्दस्थलेऽपि अनुमितिसामग्रीसत्त्वेन "अनुमिनोमि" इत्येवंरूपोऽनुव्यवसायो भवत्येवेत्युच्येत, **तथापि** यत्र तादृशसामग्रीजन्यत्वस्य ज्ञानं नास्ति तत्रापि "अनुमिनोमि" इत्यनुव्यवसायस्य जायमानत्वेन तदनुमित्यर्थमाकाङ्क्षाज्ञानघटितायाः सामग्र्याः कारणत्वकल्पनं निरर्थकमेव बोध्यम् । **यद्यपि** यत्राकाङ्क्षादिघटितैव शाब्दसामग्री वर्तते, तत्र तया सामग्र्या जायमानं शाब्दमधिकृत्य शाब्दत्वजातिः सिध्यत्येव "शृणोमि, शाब्दयामि" इत्यनुभवसाक्षिको जातिविशेष एव शाब्दत्वम्, **तथापि** शाब्दत्वस्यानुमितित्वव्याप्यत्वस्वीकारे यथा ज्ञानत्वस्य व्याप्यो धर्मः प्रत्यक्षत्वं, व्याप्यीभूतप्रत्यक्षत्वावच्छिन्नं प्रति व्यापकीभूतज्ञानत्वावच्छिन्नस्य सामग्री अपेक्षिता भवति, अत एव च प्रत्यक्षं ज्ञानमितिसमानार्थकत्वेन व्यवहृत भवति, तथैव शाब्दत्वस्य तद्व्याप्यत्वस्वीकारे व्यापकीभूतानुमितित्वावच्छिन्नस्य शाब्दोत्पत्तौ सामग्र्या अपेक्षितत्वेन "शाब्दोऽनुमितिः" इति व्यवहारस्य निर्दोषत्वेन शब्दस्य प्रमाणान्तरत्वास्वीकारे न काचिद्धानिः । **किञ्च** शाब्दस्य तद्व्याप्यत्वस्वीकारे समानविषयकप्रत्यक्षसामग्रीसत्त्वे शाब्दबोधवारणाय प्रत्यक्षसामग्र्याः पृथक्प्रतिबन्धकत्वाकल्पनेन लाघवमपि भवति, तत्र च स्थलेऽनुमितिं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वस्य क्लृप्ततया तत्प्रतिबन्धकत्वस्वीकारेण निर्वाहो जायत एव ।

**परञ्चात्रैव विचार्यताम्**—यत्र घटप्रत्यक्षसामग्री तत्समानविषयकशाब्दसामग्री च वर्तते तत्र घटशाब्दं जायतामितीच्छादशायां घटशाब्दबोध एव जायते नतु घटप्रत्यक्षम्, इच्छाघटितसामग्रया बलवत्त्वात्, अतश्च समानविषयकप्रत्यक्षसामग्रीकाले तद्विषयकशाब्दं प्रति तद्विषयकशाब्देच्छाविरहविशिष्टप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वं वाच्यं भवेत् । एवमपि यत्र घटप्रत्यक्षसामग्री, घटशाब्दसामग्री पटप्रत्यक्षसामग्री पटशाब्दसामग्री वर्तन्ते तत्र घटशाब्देच्छादशायां पटशाब्दबोधापत्तिः स्यात्, घटप्रत्यक्षसामग्र्यां घटशाब्देच्छावैशिष्ट्[illegible]न पटशाब्दबोधार्थं घटशाब्देच्छाविशिष्टघटप्रत्यक्षसामग्र्या प्रतिबन्धकत्वाकल्पनात् । अतश्च घटप्रत्यक्षसामग्री[illegible]ले घटशाब्दबोधसामग्रीसत्त्वे घटशाब्देच्छादशायां घटशाब्दबोधोपपत्तये घटशाब्दबोधं प्रति घटशाब्देच्छाविरहविशिष्टघटप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वमिव घटप्रत्यक्षसामग्रीकाले पटशाब्दबोधसामग्रीसत्त्वे पटशाब्देच्छादशायां पटशाब्दबोधोपपत्तये तच्छाब्दबोधं प्रति पटशाब्देच्छाविरहविशिष्टपटप्रत्यक्षसामग्र्याः पृथक् प्रतिबन्धकत्वं वाच्यं तेन नोक्तदोष आपद्यते । परञ्च यत्र घटप्रत्यक्षसामग्री घटशाब्दसामग्री च वर्तते तत्र घटप्रत्यक्षेच्छादशायां घटशाब्देच्छादशायाञ्च घटशाब्दबोधापत्तिः स्यात्, तत्र घटशाब्देच्छाविरहविशिष्टघटप्रत्यक्षसामग्र्या असत्वेन प्रतिबन्धकाभावात्, अतश्च समानविषयकप्रत्यक्षशाब्दसामग्रीकाले यद्यदिच्छाव्यक्तिसत्त्वे शाब्दबोधो जायते तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटविशिष्टप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वं स्वीकार्यमतो नोक्तदोषः । एवञ्च शाब्दत्वस्यानुमितित्वव्याप्यत्वस्वीकारे प्रतिबन्धकताविशेषस्य कल्पनीयत्वेन वैशेषिकमते तथापि न लाघवम् । परञ्च यत्र यत्र विषये प्रत्यक्षसामग्रीकाले शाब्देच्छा न जाता तत्र तत्र स्थलविशेषे तादृशप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वाकल्पनेन वैशेषिक-

मते तथापि लाघवं भवत्येव, न्यायमते तु तत्रापि तत्कल्पनेन गौरवमेव भवति एवं शाब्दबोधस्यानुमित्यनात्मकत्वे समानविषयकानुमितिसामग्रीकाले शाब्दवारणाय तादृशानुमितिसामग्र्याः प्रतिबन्धकत्वस्यावश्यकत्वेन, तस्यानुमित्यात्मकत्वे त्वनुमित्यात्मकशाब्दबोधस्येष्टत्वेन तत्सामग्र्या प्रतिबन्धकत्वाकल्पनेन वैशेषिकमतमेव साधीयः। परञ्च यद्यपि शाब्दबोधस्यानुमितित्वस्वीकारे विभिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकत्वेन स्वीकृतायां शाब्दसामग्र्यां व्याप्तिज्ञानादिप्रवेशेन गौरवमेव भवति। अनुमितित्वास्वीकारे तु तत्सामग्र्यां व्याप्तिज्ञानाद्यप्रवेशेन लाघवमेव भवति, तथापि यथाऽनुमितिस्थल एकाऽन्वयव्याप्तिज्ञानादिघटिता सामग्री अपरा च व्यतिरेकव्याप्तिज्ञानादिघटिता, तयोश्च नानुगमकं किमपि किन्तु कार्यतावच्छेदकीभूतमनुमितित्वं त्वनुगतमेव भवति, तथा शाब्दसामग्र्या अनुमितिसामग्र्याश्च परस्परभेदेऽपि तदुभयकार्यतावच्छेदकमनुमितित्वमेव स्यादतो नोक्तदोषावसरः। यदि परस्परजन्याया-मनुमितौ व्यभिचारवारणाय कार्यतावच्छेदककोटौ तत्तत्कारणाव्यवहितोत्तरत्वस्य प्रवेशनीयत्वेन तत्रानुमितित्वस्य प्रयोजनविरहान्नैव प्रवेश उचित इति ब्रूयात्, तथापि अन्वयव्याप्तिज्ञानाव्यवहितोत्तरत्वावच्छिन्नं प्रत्यन्वयव्याप्तिज्ञानं कारणम्, एवं व्यतिरेकव्याप्तिज्ञानाव्यवहितोत्तरत्वाच्छिन्नं प्रति व्यतिरेकव्याप्तिज्ञानं कारणमिति कार्यकारणभाव-स्वीकारेऽनुमितिमात्रस्याकस्मिकत्वापत्तिरेव स्यात्। अतश्च कार्यतावच्छेदककोटौ अनुमितित्वप्रवेश आवश्यक एव, तदावश्यकत्वे त्वनुमितित्वावच्छिन्नं प्रत्यभावज्ञानत्वेन कारणत्वमभ्युपेयम्, अभावज्ञानत्वेनान्वयव्यतिरेकव्याप्त्योर्ज्ञानस्य परिगृहीतत्वान्न शाब्दस्यानुमितित्वस्वीकारे शाब्दसामग्र्यां व्याप्तिज्ञानादिघटितत्वेन गौरवमापद्यते, नवाऽनुमिति-सामग्र्यामाकाङ्क्षाज्ञानादिघटितत्वेन गौरवं भवति, आकाङ्क्षाया एकपदाव्यवहितोत्तरापरपदत्वरूपत्वादाकाङ्क्षा-ज्ञानस्याव्यवहितोत्तरत्वघटकाभावविषयकत्वेन शाब्दसामग्री अनुमितिसामग्री चाभावज्ञानघटितत्वेन समानैवेति शाब्दस्यानुमितित्वं निराबाधमेव जायते। अथ सिद्धिसत्त्वे विनापीच्छां शाब्दबोधोत्पत्तिसम्भवात्, सिषाधयिषाविरह-विशिष्टसिद्ध्यभावरूपायाः पक्षताया अभावेन अनुमित्युत्पत्तेरसम्भवाच्चोक्तस्थलीयज्ञानेऽनुमितित्वं तु न केनापि साधयितुं शक्यम्। परञ्च तत्तल्लिङ्गकानुमितिं प्रति तत्तल्लिङ्गकानुमित्साविरहविशिष्टसिद्ध्यभावत्वेन कारणत्वपक्षे शाब्दस्य लिङ्गज्ञानाजन्यत्वेन कार्यतावच्छेदकानाक्रान्ततया पक्षतारूपकारणविरहेऽप्यनुमितित्वस्वीकारे न कापि क्षतिरिति वैशेषिकाः संगिरन्ते।

तत्र वयं ब्रूमः—शाब्दत्वमनुमितित्वव्याप्यमित्यत्र विनिगमनाविरहादनुमितित्वं शाब्दत्वव्याप्यमित्येव कथं न स्वीक्रियते। शाब्दत्वमनुमितित्वव्याप्यमिति भवतां पक्षः, अस्माकं त्वनुमितित्वं शाब्दत्वव्याप्यमिति समानमेव। किञ्च यदि समानविषयकप्रत्यक्षसामग्र्याः शाब्दत्वावच्छिन्नं प्रति प्रतिबन्धकत्वाकल्पनप्रयुक्तं लाघव मित्युच्येत, तर्हि वयमपि समानविषयकप्रत्यक्षसामग्र्या अनुमितित्वावच्छिन्नं प्रति प्रतिबन्धकत्वाकल्पनप्रयुक्तं लाघवमिति वक्तुं प्रभवेमेत्यत्रापि लाघवं समानम्। किञ्च यद्यनुमितौ शाब्दत्वव्याप्यत्वस्वीकारेऽनुमितिसामग्र्यामाकाङ्क्षाज्ञानादि-प्रवेशेन गौरवमित्युच्येत, तदा तु वयमपि व्याप्तिज्ञानादिघटितस्य शाब्दसामग्रीविशेषस्याकाङ्क्षाज्ञानाद्यघटितस्यैव स्वीकारेण तद्गौरवं वारयितुं सक्षमा एव भवेम। शाब्दत्वावाच्छिन्नं प्रति व्याप्तिज्ञानादिघटितस्याकाङ्क्षा-ज्ञा[illegible]स्य शाब्दबोधसामग्रीविशेषस्य, आकाङ्क्षाज्ञानादिघटितस्य व्याप्तिज्ञानाद्यघटितस्य शाब्दसामग्रीविशेषस्य [illegible]च्छावा[illegible] च [illegible]प्रयोजकत्वस्वीकारे परस्परजन्यशाब्दबोधे व्यभिचारवारणं त्वाकाङ्क्षानाव्यवहितोत्तरशाब्दत्वावच्छिन्नं प्रत्याकाङ्क्षाज्ञानस्य, व्याप्तिज्ञानाव्यवहितोत्तरशाब्दत्वावच्छिन्नं प्रति व्याप्तिज्ञानस्य च पृथक् पृथक् कारणत्व-स्वीकारेण कर्त्तुं शक्यमेव। किञ्च यद्यनुमितौ शाब्दत्वस्वीकारे सर्वत्रानुमितिस्थले "शाब्दयामि" इत्यनुव्यव-सायापत्तिः स्यादित्युच्येत, तर्हि वयमपि शाब्दस्यानुमितित्वस्वीकारे सर्वत्र शाब्दस्थले "अनुमिनोमि" इत्यनुव्यव-सायापत्तिः स्यादिति वक्तुं प्रभवेमैवेति समाना आपत्तिः समानश्च तद्वारणम्। किञ्च यदि "अनुमिनोमि" इत्याकारकानुव्यवसायं प्रति व्यवसायत्वेन शाब्दान्यानुमितिः कारणमित्युच्येत, तर्हि "शाब्दयामि" इत्याकारकानु-व्यवसायं प्रत्यनुमित्यन्यशाब्दः कारणमिति वक्तुं वयमपि शक्नुयामैव। किञ्च यद्यनुमितिस्थले व्याप्तिज्ञानादि-कार्यतावच्छेदककुक्षौ शाब्दत्वस्याप्रवेशान्नानुमितौ शाब्दत्वसम्भव इत्युच्येत, तर्हि वयमपि शाब्दस्थले आकाङ्क्षा-ज्ञानादिकार्यतावच्छेदककुक्षावनुमितित्वाप्रवेशेन नानुमितित्वसम्भव इति वक्तुं प्रभवेम। किञ्च यदि शाब्दस्यानु-मितित्वस्वीकार आकाङ्क्षाज्ञानादिकार्यतावच्छेदकेऽनुमितित्वप्रवेशेन समानविषयकानुमितिसामग्रीकाले शाब्दबोधवारणा-

यानुमितिसामग्र्याः प्रतिबन्धकत्वाकल्पनप्रयुक्तं लाघवमित्युच्येत, तर्हि वयमपि व्याप्तिज्ञानादिकार्यतावच्छेदके शाब्दत्वप्रवेशेन समानविषयकशाब्दसामग्रीकाल अनुमितिवारणाय तादृशशाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनप्रयुक्तं लाघवमिति वक्तुं सक्षमा एव भवेम । "घटम्" इतिवाक्यस्थले "घटव्याप्यवत्कर्मत्वम्" इति योग्यताज्ञानस्यैव परामर्शरूपत्वेन निष्ठत्वसम्बन्धेन "घटवत्कर्मत्वम्" इत्यनुमितिं प्रति कारणस्य सत्त्वेऽपि शाब्दबोध एव भवति नानुमितिरितोऽपि शाब्दत्वं सिध्यत्येव । किञ्चानुमितिस्थले "न शाब्दयामि किन्त्वनुमिनोमि" इत्यनुभवबलान्न शाब्दत्वं सिध्यतीत्युच्येत, तर्हि वयमपि शाब्दबोधस्थले "नानुमिनोमि किन्तु शाब्दयामि" इत्यनुभवबलान्नानुमितित्वं सिध्यतीति वक्तुं शक्ता एव । वस्तुतस्तु शाब्दत्वावच्छिन्नं प्रति ज्ञानत्वेनाकाङ्क्षाज्ञानादीनां कारणत्वस्वीकारेऽपि निर्विशेषसामान्यस्योत्पत्तौ प्रमाणाभावेन शाब्दस्थले चक्षुरादिसन्निकर्षादिरूपविशेषसामग्रीविरहेणानुव्यवसाये मानसप्रत्यक्ष इव व्याप्तिज्ञानादिघटितविशेषसामग्रीविरहेणानुमितौ शाब्दत्वं न सिध्यत्येव । अतश्च पूर्वोक्तपर्यालोचनयाऽनुमितित्वं शाब्दत्वञ्च परस्परविरुद्धमेवेति सिद्धं जातम् । तथा च शाब्दस्य प्रमान्तरत्वे सिद्धे शब्दस्यापि प्रमाणान्तरत्वं सिद्धमेव जातमिति तु विद्वद्भिरनुचिन्तनीयम् ।

शाब्दबोधस्य प्रमान्तरत्वे सिद्धे तत्र भासमानः सम्बन्धोद्विविधः, शक्तिभास्य आकाङ्क्षाभास्यश्च । पदार्थेन साकं पदार्थतावच्छेदकीभूतस्य घटत्वादेः सम्बन्धस्तु शक्तिभास्य एव पदार्थद्वयस्य सम्बन्धस्त्वाकाङ्क्षाभास्यः । "घटोऽस्ति" इति वाक्यस्थले "अस्ति" पदाभावेऽपि केवलाद्घटपदाद् घटस्योपस्थितौ सत्यामस्तित्वं सत्तारूपमर्थमध्याहृत्य "घटः सत्तावान्" इति शाब्दबोधमङ्गीकुर्वतामर्थाध्याहारवादिनां प्राभाकराणां मतं निराकर्त्तुकामो गदाधर आह "शाब्दबोधे चैकपदार्थे" इत्यादि । तत्र शाब्दबोधे पदज्ञानजन्यपदार्थोपस्थितिः कारणम् । सत्यप्याकाङ्क्षाज्ञानादौ वृत्तिरूपसम्बन्धेन घटादिपदाद्घटाद्यर्थास्मरणे शाब्दबोधो न जायत एव । तत्र पदज्ञानजन्यपदार्थोपस्थितौ वृत्तिज्ञानमेव कारणं भवति । शाब्दबोधीया विषयता उपस्थितीयविषयताप्रयोज्या, उपस्थितीयविषयता च शक्तिज्ञानीयविषयताप्रयोज्या भवति । अत एव च शक्तिज्ञाने पदार्थविषयता न पदप्रयोज्या भवति, किन्तूपस्थितावेव पदप्रयोज्या पदार्थविषयता तिष्ठति, न वा शक्तिज्ञाने भासमाना पदार्थविषयता शाब्दबोध उपयुज्यते । अतश्च शक्तिज्ञानस्य पदार्थोपस्थितावेवोपयोग इत्युक्तं संगच्छते । एतेन शक्तिज्ञानेनैव शाब्दबोधोत्पत्तिसम्भवात्पदार्थोपस्थितेरनावश्यकत्वमिति निरस्तम् । तत्र वृत्तिः शक्तिर्लक्षणा च । उक्तञ्च भट्टाचार्यैः "सङ्केतो लक्षणा चार्थे पदवृत्तिः" इति । तत्र वृत्तिश्चार्थानुयोगिकः पदप्रतियोगिकः शाब्दबोधौपयिकः सम्बन्धः, अथवा पदानुयोगिकोऽर्थप्रतियोगिकः शाब्दबोधौपयिकः सम्बन्धः । तत्र शक्तिर्द्विविधा "अस्माच्छब्दादयमर्थो बोद्धव्यः" इत्याकारिकाऽर्थविशेष्यिका, "इदं पदममुमर्थं बोधयतु" इत्याकारिका पदविशेष्यिका चेश्वरेच्छारूपा । तत्रास्माच्छब्दादित्यत्र शब्दपदं शब्दज्ञानपरम्, पञ्चम्यर्थो जन्यत्वम्, तस्य स्वरूपेण "बोद्धव्यः" इत्यत्र बुध्धात्वर्थे बोधेऽन्वयः, तव्यत्प्रत्ययस्य विषयत्वमर्थः, तस्य चाश्रयत्वसम्बन्धेनार्थेऽन्वयः । तथा च "एतच्छब्दज्ञानजन्यबोधविषयतावानर्थो भवतु" इति बोधः । द्वितीयेच्छायाः शक्तित्वपक्षेऽर्थमित्यत्र द्वितीयार्थो विषयत्वम्, तस्य बुध्धात्वर्थे बोधेऽन्वयः, णिच्प्रत्ययस्य जनकत्वमर्थः, तस्य स्व[illegible]ण पदेऽन्वयः, बोधस्य निरूपितत्वसम्बन्धेन च जनकत्वेऽन्वयः । तथा च "एतदर्थविषयकबोधजनकताव[illegible]" इति बोधः । तत्र यद्यपीश्वरेच्छाया विषयत्वलक्षणसम्बन्धेन पदेऽर्थे बोधे जनकत्वे विषयत्वे च सत्त्वेन पदादा[illegible]पि वाच्यत्वापत्तिः स्यात्, स्याच्चार्थादीनामपि वाचकत्वापत्तिः, किञ्चेश्वरेच्छाया एकत्वात् समूहालम्बनात्मकत्वाच्च घटादिपदादीनामपि पटादिवाचकत्वापत्तिः स्यात्, किञ्चेश्वरेच्छाविषयत्वस्य केवलान्वयित्वेन गङ्गादिपदस्यापि तीरादिवाचकत्वापत्तिः स्यात्, तथापि प्रकृते स्वज्ञानजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वं तत्पदवाच्यत्वम्, एवं स्वविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वमेव तद्वाचकत्वं वाच्यम् । अथवा स्वजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेच्छावत्त्वमेव तत्पदवाच्यत्वम्, स्वविषयकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेनेच्छावत्त्वं तद्वाचकत्वञ्च बोध्यम् । तथा चोक्तसम्बन्धेन "घटपदाद्घटो बोद्धव्यः" इतीच्छाया घट एव सत्त्वेन न घटपदस्य पटवाचकत्वापत्तिः, न वा गङ्गादिपदस्य तीरादिवाचकत्वापत्तिः । ईश्वरेच्छाया बोधविषयतात्वेनैव तीरादौ सत्त्वेन गङ्गापदजन्यबोधविषयतात्वेनतत्राभावात् । "तीरादिकं बोधविषयतावद्भवतु" इत्येवेश्वरेच्छायाः सिद्धान्तसिद्धत्वात्

पूर्वोक्तदोषः। तत्र न्यायमत ईश्वरेच्छीयतत्पदजन्यबोधविषयत्वरूपा शक्तिरर्थे पदस्य सम्बन्धः। ईश्वरेच्छीयैतदर्थविषयकबोधजनकत्वरूपा शक्तिश्च पदेऽर्थस्य सम्बन्धः। तत्र घटादिपदस्य घटघटत्वसमवायेषु त्रिष्वेव शक्ततया त्रिष्वेव वाच्यत्वम्, ईश्वरेच्छीयबोधविषयताया एव गदाधरभट्टाचार्यैः शक्तित्वेन स्वीकृतत्वात्। उक्तञ्च तैरेव शक्तिवादे "ईश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयोजकसम्बन्ध एव तत्र तत्पदशक्तिव्यपदेशनियामकः, "घटपदाद्घटो बोद्धव्यः" इतीश्वरेच्छायां घटत्वावच्छेदेन बोधविषयत्वमवगाहमानायां ( विषयीकृतायाम् ) समवायावच्छिन्नं बोधविषयतावच्छेदकत्वं घटत्वे समवायेन घटत्वावच्छेद्यत्वं वा विषयतायां संसर्गमर्यादया भासते" इति। तथाचेश्वरेच्छीयतत्पदजन्यबोधविषयताया आश्रयत्वसम्बन्धेन घटादौ सत्त्वेन "आश्रयत्वसम्बन्धावच्छिन्ना या घटादिपदजन्यबोधविषयत्वनिष्ठा प्रकारता तन्निरूपितेश्वरेच्छीयविशेष्यतावान् घटाद्यर्थो भवतु" इत्याकारकं घटादिपदजन्यशाब्दबोधीयघटादिनिष्ठविषयताप्रयोजकघटादिनिष्ठविषयताकम्, घटत्वादौ तादृशशक्तिरूपाया विषयताया अवच्छेदकत्वसम्बन्धेन सत्त्वेन "अवच्छेदकत्वसम्बन्धावच्छिन्ना या घटादिपदजन्यबोधविषयत्वनिष्ठा प्रकारता तन्निरूपितेश्वरेच्छीयविशेष्यतावद्घटत्वादिकम्" इत्याकारकं घटादिपदजन्यशाब्दबोधीयघटत्वादिनिष्ठविषयताप्रयोजकघटत्वादिनिष्ठविषयताकम्; तस्याश्च शक्तेरवच्छेदकतावच्छेदकत्वसम्बन्धेन समवाये सत्त्वेन "अवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्ना या घटादिपदजन्यबोधीयविषयत्वनिष्ठा प्रकारता तन्निरूपितेश्वरेच्छीयविशेष्यतावान् समवायोभवतु" इत्याकारकं घटादिपदजन्यशाब्दबोधीयसमवायनिष्ठविषयताप्रयोजकसमवायनिष्ठविषयताकं शक्तिज्ञानं शाब्दबोधजनकं स्वीकरणीयम्।

एवञ्च तत्पदजन्यबोधविषयतावत्त्वं तत्पदशक्तिः, विषयतावत्त्वञ्च स्वनिष्ठाश्रयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्व-स्वनिष्ठावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्व-स्वनिष्ठावच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वान्यतमसम्बन्धेन, तेन घटघटत्वसमवायादीनां वाच्यत्वं घटादिपदानां वाचकत्वञ्च समुपपद्यते। **व्युत्पत्तिवादगूढार्थतत्त्वालोककृतस्तु** पदजन्यबोधविषयत्वनिष्ठप्रकारतैव हि शक्तिः; तन्नियामकसम्बन्धश्च स्वनिरूपितविशेष्यत्व-स्वावच्छेद्यविशेष्यतानिरूपितावच्छेद्यत्वनिष्ठविषयतानिरूपितावच्छेदकत्वनिष्ठविषयतावत्त्वान्यतरात्मकः, विषयतावत्त्वञ्च स्वनिरूपिताधेयत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितसंसर्गत्वनिष्ठविषयतानिरूपितविषयतावत्त्वान्यतरसम्बन्धेन बोध्यमित्याहुः। तत्र घटादिपदजन्यबोधविषयतायां समवायेन घटत्वाद्यवच्छिन्नत्वस्य भानात् समवायनिष्ठसंसर्गताकघटत्वादिनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वस्य तत्र भानं भवतीत्यर्थादायाति। एवञ्च "यत्समवायनिष्ठसंसर्गताकघटत्वादिनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वं तन्निष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या घटादिपदजन्यबोधविषयत्वनिष्ठप्रकारता तन्निरूपितविशेष्यतावान् घटाद्यर्थो भवतु" इत्याकारकं शक्तिज्ञानं शाब्दबोधजनकमिति पर्य्यवसन्नं भवति। तथा चैकज्ञानीयसमानाधिकरणविषयतयोरिवैकेच्छीयसमानाधिकरणविषयतयोरवच्छेद्यावच्छेदकभावस्य स्वीकृतत्वात्स्वनिरूपितविशेष्यत्वसम्बन्धेन तादृशबोधविषयत्वनिष्ठप्रकारताया घटादावर्थे यथा सत्त्वं, तथैव स्वं बोधविषयत्वनिष्ठप्रकारता तस्या अवच्छेद्या तादृशघटत्वादिनिष्ठावच्छेदकतानिरूपितावच्छेद्यत्वनिष्ठप्रकारतानिरूपितविशेष्यता तन्निरूपितावच्छेद्यत्वनिष्ठविषयता त[illegible]रूपितावच्छेदकत्वनिष्ठविषयता तादृशविषयतावत्त्वस्य स्वमवच्छेदकत्वनिष्ठविषयता तन्निरूपिताधेयत्वस[illegible]न्धावच्छिन्नावच्छेदकता घटत्वादिनिष्ठा तादृशावच्छेदकतावत्त्वेन सम्बन्धेन घटत्वादौ, स्वमवच्छेदकत्वनिष्ठावच्छेदकता तन्निरूपितसंसर्गत्वनिष्ठविषयता तन्निरूपितविषयतावत्त्वसम्बन्धेन समवाये च सत्त्वेनैकविधायास्तादृशप्रकारतावत्त्वरूपायाः शक्तेः पदार्थत्रये सत्त्वाद्घटादिपदानामेकार्थकत्वमपि संगच्छते। यत्र तादृशबोधविषयतायास्तादृशबोधविषयत्वनिष्ठप्रकारताया वैक्यं तत्रैव शक्तेरैक्यं तत्पदमेकार्थकम्। हर्यादिपदस्थले तु तस्या नानात्वादेव तेषां पदानां नानार्थकत्वमिति बोध्यम्। येषां मते तु यत्र शक्यतावच्छेदकस्यैक्यं तत्र शक्तेरैक्यं तत्पदमेकार्थकम्, यत्र च शक्यतावच्छेदकस्य नानात्वं तत्र शक्तेर्नानात्वं तत्पदं नानार्थकमित्यङ्गीकृतमस्ति तन्मते स्वर्गपदशक्यतावच्छेदकस्य नानात्वात्तत्पदमनेकार्थकमेव स्यात्, तत्र दुःखासम्भिन्नत्वं सुखत्वञ्चेतिद्वयमेव तत्पदशक्यतावच्छेदकत्वेनाभिप्रेतमस्ति। एवञ्च तत्पदजन्यबोधविषयतायास्तादृशप्रकारताया वा शक्तिरूपत्वे तस्याश्चैकत्वे "जात्याकृतिव्यक्तयः पदार्थः" इति सूत्रे पदार्थपदं पदशक्तिपरमेव, पदशक्तिश्च तादृश-

२ व्यु० भू०

विषयतारूपा तादृशप्रकारतारूपा वा, तस्याञ्च सुविभक्तिप्रतिपाद्याया एकत्वसङ्ख्याया अन्वये बाधकाभावा-दुक्तवाक्यस्य प्रामाण्यं निर्बाधमिति तु विभावनीयम् ॥

**प्राभाकरास्तु**—शास्त्रं नाम सम्बन्धज्ञानवशेन प्रमाणान्तरासन्निकृष्टार्थविषयकं शाब्दबोधजनकं पदजातम् । तच्च स्वतः प्रमाणम् । वाक्यं द्विविधं लौकिकं वैदिकञ्च । तत्र लौकिकं प्रमाणान्तरसन्निकृष्टार्थविषयक वाक्यं लिङ्गतया प्रमाणम् । तत्र पदान्येव वाक्यम्, पदार्थ एव वाक्यार्थः । अत एवार्थान्तरान्वितस्वार्थे पदानां शक्तिः । तत्र यथा धूमोऽविनाभावरूपसम्बन्धवलेन वह्न्यनुमापको भवति न तथा वाक्यम्, किन्तु वाच्यवाचकभावरूपसम्बन्ध-बलेनैवार्थप्रत्यायकं भवति । शब्दार्थयोः सम्बन्ध औत्पत्तिकः । औत्पत्तिकश्चापौरुषेयः । तज्ज्ञानञ्च न सर्वत्र पुरुषसङ्केतग्रहाधीनम्, देवदत्तादिपदेषु तत्सम्बन्धग्रहस्य पुरुषसङ्केतग्रहाधीनत्वेऽपि गवादिपदेषु तस्य च वृद्धव्यवहारादेव सम्भवात् । नहि शब्दमात्रादर्थोऽनुमितो भवति, किन्तु विशिष्टशब्दादेव विशिष्टोऽर्थोऽनुमितो भवति । विशेषश्चात्र वाच्यवाचकभाव एव । वाचकत्वमेव शब्दस्य विशेषः वाच्यत्वमेव चार्थस्य । वाच्यवाचकभावरूपः एवापौरुषेयः स्वाभाविकः शब्दार्थयोः शक्तिरूपः सम्बन्धः । **तत्रोक्तसम्बन्धग्रहप्रकारः**—

प्रथमं तावत्प्रयोजको वृद्धो "गामानय" इति वाक्यं प्रयुङ्क्ते, पश्चात्प्रयोज्यो वृद्धो गवानयने प्रवर्तते, तदा तटस्थो व्युत्पित्सुर्बाल एवं मन्यते—अस्य गवानयनक्रिया, प्रयत्नपूर्विका, विलक्षणक्रियात्वात्, मदीयक्रियावत्, इत्यनु-मानेन प्रयत्नसिद्धौ तया च शाब्दबोधानुमानम्—गवानयनविषयकप्रवृत्तिः, गवानयनविषयकज्ञानजन्या, गवानयन-विषयकप्रवृत्तित्वात्, या यद्गोचरा प्रवृत्तिः सा तद्गोचरज्ञानजन्या, मदीयस्तन्यपानप्रवृत्तिवदित्यनुमानेन शाब्देऽनुमिते पश्चात् "गवानयनविषयकज्ञानम्, गामानयेति वाक्यजन्यम्, तदन्वयव्यतिरेकानुविधायित्वात्, यद्यदन्वयव्यतिरेकानु-विधायि तत्तज्जन्यं यथा कपालान्वयव्यतिरेकानुविधायी घटः" इत्यनुमानेन ज्ञानस्य वाक्यजन्यत्वे सिद्धे पश्चात् कदाचित् "अश्वमानय" इति वाक्यप्रयोगे तथैव प्रवृत्तौ अश्वपदावापे तदर्थान्वयाद्गोपदोद्वापे गवार्थानन्वयादावापोद्वापाभ्या-मश्वपदस्यार्थान्तरान्विते हयार्थे गोपदस्य चार्थान्तरान्विते सास्नादिमत्त्वविशिष्टेऽर्थे व्युत्पत्तिर्जायते । इत्थं भूयो भूयः प्रयोगदर्शनाद्व्युत्पन्नस्य तस्यैव पुंसो विचिकित्सा जायते, यदि प्रत्यायकः शब्दस्तदा ममापि पूर्वं शब्दश्रवण-मात्रेणैव प्रत्याययेत्, यदि त्वप्रत्यायकः शब्दस्तदा वृद्धमपि न प्रत्याययेत्, अतश्च नूनमपि शब्दस्य कोऽपि विशेषो नाम, इति विशेषनिर्णयमिच्छतः पुंसः पुनर्वृद्धव्यवहारेण तेभ्यः शब्देभ्योऽर्थावगमात् प्रत्यायकत्वमेव विशेषः, स वाच्यवाचकभावरूपशक्तिग्रहाधीनः, स च वृद्धव्यवहारादेव जायत इति ज्ञानं भवति । अतश्च शक्तिग्रहस्तु वृद्धव्यव-हारादेव जायते नतु सङ्केतग्रहात् । अत एव च शब्दस्यार्थप्रत्यायकत्वं स्वाभाविकमेवेति सिद्धम् । देवदत्तादिपदानां वाचकत्वं तु पुरुषसङ्केतग्रहाधीनम् । यद्यपि शक्तिज्ञाननिबन्धना अर्थप्रतिपत्तिरित्यन्वयव्यतिरेकाभ्यां सिध्यति, सा प्रतिपत्तिः प्रत्यक्षमेव । प्रत्यक्षे सति कारणे कारणान्तरमनुमातुं न शक्यत इति नियमः । देवदत्तादिषु च यस्य सङ्केतग्रहनिबन्धना अर्थप्रतिपत्तिस्तस्य सङ्केतग्रह एव कारणम्, किन्तु ये तेष्वपि व्यवहारदर्शनाद्वाचकतां शक्ति-मवगम्यार्थं प्रतिपद्यन्ते तेषां तु व्यवहारदर्शनभवं शक्तिज्ञानं कारणं न च सङ्केतग्रहः । तत्र तु सङ्केतग्रहपूर्वक एव व्यवहारोऽर्थप्रतिपत्तिश्च । वेदस्थले तु पुरुषसङ्केताभावात् तद्वाक्यानां स्वत एवार्थबोधकत्वमिति व्याहरन्ति ।

**तत्र नैयायिकाः**—क्षित्यङ्कुरादिकं सर्वमेव कार्यं सावयवम्, यच्च सावयवं तत् स्वावयवे सम्बद्धं सदुत्पद्यते । दृश्यते चास्माभिस्तन्तुषु सम्बद्धः सन् पटः, वीरणसंयुक्तः सन् कटश्च समुत्पद्यत इति । एवं परमाणुसकाशाद्द्व्यणुकं द्व्यणुकादिक्रमेणान्त्यावयविनः पदार्था उत्पद्यन्ते । तत्र द्व्यणुकोत्पत्त्यर्थं परमाणुसंयोगस्यासमवायिकारणत्वात्तदुत्पत्त्यर्थं स संयोगो नियतः, स चान्यतरकर्मज उभयकर्मजो वा भवति । कर्म च परमाणुष्वदृष्टवच्चेतनसंयोगादेव जायतेऽन्यस्य कारणस्याभावात् । नचादृष्टं चेतनानधिष्ठितं सत् कार्याय पर्याप्तं भवति । उक्तञ्चोदयनाचार्यैश्चेतनाधिष्ठेयतया धर्माधर्मयोः सिद्धिप्रसङ्गे—

"सापेक्षत्वादनादित्वाद्वैचित्र्याद्विश्ववृत्तितः ।
प्रत्यात्मनियमाद्भुक्तेरस्ति हेतुरलौकिकः ॥ इति ।

नहि कुठारश्चेतनानधिष्ठितः सन् छिदाकर्मणि प्रवर्तते । एवमेव यथाऽदृष्टं चेतनाधिष्ठितं सत् कार्याय क्षमते तथैव परमाणुगतकर्मापि चेतनाधिष्ठितमेव कार्याय सक्षमं भवतीत्यवश्यमेव स्वीकार्यम् । ये खलु जीवा न तेऽदृष्ट-

स्याधिष्ठातारो भवितुमर्हन्ति, तेषामज्ञत्वात् । नहि ते जीवा धर्माधर्मलक्षणेऽदृष्टे स्वरूपतः कार्यतो वा ज्ञातुमीशते । अतश्च य एव स्वरूपतः कार्यतो वा धर्माधर्मलक्षणेऽदृष्टे जानाति स एव तस्याधिष्ठाता, यथा कुठारस्याधिष्ठाता तक्षकः । तस्माज्जीवेभ्योऽन्योऽचिन्त्यशक्तिः सकलजीवगतधर्माधर्मलक्षणादृष्टस्य साक्षात्कर्ता चेतनातिशयो दिग्ग्प्रतिष्ठः स्वतन्त्रः परमात्मपदवाच्य ईश्वर इत्यवश्यमेव स्वीकार्यम् । किञ्च जीवास्तु स्वापेक्षितं प्रयोजनमुद्दिश्य प्रवर्तन्ते परमात्मा तु अनपेक्षितप्रयोजनः स्वातन्त्र्येणैव प्रवर्तते । अतश्च सिद्धं क्षित्यङ्कुरादिकस्य सादित्वमुत्पत्तिमत्त्वञ्च । किञ्च कृतका हि भावा उत्पत्तिविनाशशीला यथा प्रत्यक्षाः घटादय इति वृद्धव्यवहारपरम्परया तस्य नानादित्वम् । एवञ्च परमात्मसङ्केतवलादेव वेदवाक्यानामर्थबोधकत्वमिति सिध्यत्येव । अनया रीत्या गवादिपदानां देवदत्तादि-पदानाञ्च पुरुषसङ्केतग्रहाधीनैवार्थप्रतिपत्तिरिति न शब्दार्थयोः सम्बन्धोऽपौरुषेय इत्याहुः ।

**प्राभाकरास्तु**—शक्तिर्द्विविधा, स्मारिका आनुभाविकी च । तत्र घटादिपदानां घटत्वादिजातौ स्मारिका, आनुभाविकी च कार्यान्वितघटाद्यर्थे । तथा च घटादिपदानि घटत्वादिजातिस्मरणद्वारा कार्यान्वयानुभवजनकानि । तथाहि-सर्वत्र व्यवहारेणैव शक्तिग्रहः, प्रयोज्यवृद्धस्य प्रयोजकवाक्यश्रवणानन्तरं प्रवृत्तौ सत्यां तत्र कार्यताज्ञानस्य हेतुत्वदर्शनात् कार्यताज्ञानमनुमाय पदानां कार्यताज्ञानहेतुत्वमनुमाय तस्य कार्यताज्ञानहेतुत्वस्य तदर्थशक्ति विनानुप-पन्नतया कार्यान्वित आनुभाविकीं शक्तिमवधारयति व्युत्पित्सुः । अतो लिङ्लोट्तव्यत्प्रत्ययघटितानामेव वाक्यानां प्रामाण्यम् । यत्र च कार्यतावाचकपदाभावस्तत्र न वाक्यार्थबोधः किन्तु पदार्थस्मरणमात्रमेवेति प्राहुः ।

कार्यान्वितस्वार्थे शक्तिरिति पक्षमधिकृत्यात्रैव किञ्चिद्विचार्यते—**प्रभाकरमते** लिङ्लोट्तव्यत्—प्रत्ययादिघटितानामेव वाक्यानां प्रामाण्यमिति प्रागेव निवेदितम् । तत्र लिङादिपदानां कार्यत्व एव शक्तिः, एतन्मते शक्तिग्राहकत्वेन व्यवहारस्यैव प्राधान्यं वर्तते । एवञ्च कार्यत्वविषयतानिरूपितघटादिनिष्ठविषयताशालिशाब्दं प्रति ज्ञायमानशक्तिमत्पदत्वेनैव कार्यकारणभावः । तथा च तद्विषयकत्वशाब्दत्वोभयधर्मावच्छिन्नजन्यतानिरूपितजनकता-वच्छेदकीभूतशक्तिमत्पदत्वमेव तद्वाचकत्वम् । सर्वत्र शाब्दबोधे कार्यत्वविषयताया भानस्यावश्यकत्वेन कार्यता-विषयकत्वं जन्यतावच्छेदकत्वेन नियतम् । एवञ्च तत्पदेन यदि कार्यत्वं गृह्यते तदा तद्विषयकत्वावच्छिन्ना या जन्यता तादृशजन्यतानिरूपितजनकतावच्छेदकीभूतशक्तिमत्पदत्वस्य घटादिपदादावपि सत्त्वेन घटादिपदानां कार्यत्व-वाचकत्वापत्तिः स्यात् । अतश्च तद्वारणाय कश्चित् प्रयासो विधेयः । तत्र च कार्यत्वविषयतानिरूपितघटादिविषयता-शालिशाब्दत्वं जन्यतावच्छेदकम्, घटादिविषयतायां कार्यत्वविषयतानिरूपितत्वं विशेषणम्, तदपि निरूपितत्वं साक्षात्परम्परैतदन्यतरसम्बन्धेन । तत्र कार्यत्वविषयतानिरूपितत्वन्तु साक्षादानयनादिविषयतायां परम्परया च घटादिविषयतायां वर्तते । तैश्च "घटमानय" इति वाक्याद्घटकर्मकमानयनङ्कार्यमित्यस्यैव शाब्दबोधस्य स्वीकृतत्वात् । एवञ्च या कार्यत्वविषयतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितघटादिविषयत्व-निष्ठावच्छेदकता तन्निरूपिता या जन्यता तादृशजन्यताशालिशाब्दबोधत्वं कार्यतावच्छेदकम्, एवञ्च कार्यत्वविष-यतानिष्ठावच्छेदकतानिरूपिता या निरूपितत्वनिष्ठावच्छेदकता तादृशावच्छेदकत्वाऽनिरूपिका या तद्विषयत्वनिष्ठा-वच्छेदकता तादृशावच्छेदकताकशाब्दबोधनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतशक्तिमत्पदस्य तद्वाचकत्वे स्वीक्रिय-माणे न घटादिपदानां कार्यत्ववाचकत्वमापद्यते । विशेष्यनिष्ठावच्छेदकत्वादौ विशेषणनिष्ठावच्छेदकत्वादिनिरूपि-तत्वस्यैवैतन्मते स्वीकृतत्वात् । तत्र तद्विषयत्वं विशेष्यम्, कार्यत्वविषयतानिरूपितत्वन्तु विशेषणम् । एवं निरूपितत्वं कार्यत्वविषयताया विशेष्यम्, निरूपितत्वस्य तु कार्यत्वविषयता विशेषणम् । तथा च निरूपितत्वनिष्ठा याऽवच्छेदकता तस्या निरूपितत्वमेव घटादिनिष्ठविषयतायां न तु निरूपकत्वम् । एवञ्च निरूपितत्वनिष्ठावच्छेदकताया अनिरूपिका घटादिनिष्ठविषयत्वनिष्ठावच्छेदकता जाता । एवञ्च तद्विषयत्वनिष्ठावच्छेदकतापदेन घटादिनिष्ठविषयत्वनिष्ठावच्छेदकताया धर्तुं शक्यत्वेन तादृशावच्छेदकताकजन्यतानिरूपितजनकतावच्छेदकीभूतशक्तिमत्पदत्वस्य घटादिपदादौ सत्त्वेन घटादिपदानां घटादेः वाचकत्वमुपपन्नम् । कार्यत्वविषयताया निरूपितत्वस्य विशेषणत्वेन निरूपितत्वनिष्ठा याऽ-वच्छेदकता तादृशाऽवच्छेदकत्वाऽनिरूपिका न कार्यत्वविषयतानिष्ठाऽवच्छेदकता भवितुमर्हति, अतो न कार्यत्ववाचकत्वं घटादिपदानाम् ।

**परञ्च विचार्यताम्—**

"घटवद्भूतलम्" इत्यत्र घटनिष्ठप्रकारतानिरूपितभूतलनिष्ठविशेष्यताशालिज्ञानमेव भूतलनिष्ठविशेष्यतानिरूपितघटनिष्ठप्रकारताशालिज्ञानात्मकं भवति। एवञ्च प्रकारताविशेष्यतयोर्निरूप्यनिरूपकभावे विनिगमनाविरहाद्यथा पूर्वस्थले प्रकारतानिरूपितत्वं विशेष्यतायां तथैव विशेष्यतानिरूपितत्वस्यापि प्रकारतायां सत्त्वे बाधकाभावात्, प्रकृतस्थलेऽपि निरूपितत्वनिष्ठावच्छेदकतानिरूपितत्वं यथा तद्विषयत्वनिष्ठावच्छेदकतायां तथैव तद्विषयत्वनिष्ठावच्छेदकताया निरूपितत्वस्य निरूपितत्वनिष्ठाऽवच्छेदकतायां सत्त्वे बाधकाभावेन निरूपितत्वनिष्ठाऽवच्छेदकत्वाऽनिरूपिका या तद्विषयत्वनिष्ठाऽवच्छेदकता तादृशावच्छेदकताकजन्यतानिरूपितजनकतावच्छेदकीभूतशक्तिमत्पदत्वस्य वाचकत्वेनाभिप्रेतत्वेऽपि न घटादिपदानां कार्यत्ववाचकत्ववारणं संगच्छेत।

**तत्र प्राभाकरानुयायिनः—**

विनिगमनाविरहेणोभयोर्निरूप्यनिरूपकभावस्वीकारे प्रकारतावच्छेदकत्वस्य, विशेष्यतावच्छेदकत्वस्य, च यन्निरवच्छिन्नत्वप्रतिपादनं तदसंगतमेव स्यात्। तथाहि—"भूतलं दण्डिमत्" इति बुद्धिं प्रति "भूतलं न दण्डिमत्" इत्याकारकनिर्णयस्य प्रतिबन्धकत्वं सिद्धान्तसिद्धम्। तत्र "भूतलं दण्डिमत्" इत्यत्र भूतलं विशेष्यं भूतलत्वञ्च विशेष्यतावच्छेदकम्, एवं दण्डी विशेषणम्, दण्डस्तु विशेषणतावच्छेदकः प्रकारतावच्छेदको वा। एवञ्च दण्डत्वावच्छिन्ना या दण्डनिष्ठाऽवच्छेदकता तादृशावच्छेदकताकदण्डिनिष्ठप्रकारता तादृशप्रकारतानिरूपितभूतलत्वनिष्ठविशेष्यतावच्छेदकताकभूतलनिष्ठविशेष्यता तच्छालिनीं बुद्धिं प्रति दण्डत्वावच्छिन्नदण्डनिष्ठाऽवच्छेदकताकदण्डिनिष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितभूतलत्वनिष्ठावच्छेदकताकभूतलनिष्ठविशेष्यताशालिनिर्णयस्य प्रतिबन्धकत्वमास्थीयते। तत्र दण्डिनिष्ठप्रकारतावच्छेदकीभूतो धर्मो दण्डः, तादृशप्रकारतावच्छेदकतावच्छेदको धर्मो दण्डत्वम्, तन्निष्ठाऽवच्छेदकता निरवच्छिन्नैव भवति, नहि दण्डत्वे किमपि विशेषणं वर्तते। एवं भूतलत्वनिष्ठाऽवच्छेदकताऽपि निरवच्छिन्ना न हि भूतलत्वे किमपि विशेषणं वर्तते। एवञ्च यथा दण्डत्वनिष्ठाऽवच्छेदकतानिरूपितदण्डनिष्ठावच्छेदकतानिरूपितदण्डिनिष्ठप्रकारतानिरूपितभूतलत्वनिष्ठावच्छेदकताकभूतलनिष्ठविशेष्यताशालिज्ञानत्वं "दण्डिमद् भूतलम्" इति ज्ञानेवर्तते तथैव विनिगामनाविरहेण भूतलत्वनिष्ठाऽवच्छेदकताकभूतलनिष्ठविशेष्यतानिरूपितदण्डिनिष्ठप्रकारतानिरुपितदण्डनिष्ठावच्छेदकतया निरूपितदण्डत्वनिष्ठावच्छेदकताशालिज्ञानत्वस्य सत्त्वेन दण्डत्वनिष्ठावच्छेदकतायां दण्डनिष्ठावच्छेदकत्वस्य निरूपितत्वसम्बन्धेन विशेषणत्वान्नहि दण्डत्वनिष्ठावच्छेदकत्वं निरवच्छिन्नमिति कैश्चिद्वक्तुं शक्यम्। यदि दण्डत्वनिष्ठावच्छेदकता न निरवच्छिन्ना इति स्वीक्रियते तदा यथा "भूतलं दण्डिमत्" इति। इति बुद्धिं प्रति "भूतलं न दण्डिमत्" इति निर्णयः प्रतिबन्धको भवति, तथैव "भूतलं दण्डत्वाश्रयाश्रयवत्" इति निर्णयोऽपि प्रतिबन्धकः स्यात्। प्रकारतावच्छेदकत्वादेर्निरवच्छिन्नत्वसावच्छिन्नत्वस्वीकारे तु "भूतलं दण्डिमत्" इति बुद्धिं प्रति "भूतलं न दण्डिमत्" इति निर्णयस्य, "भूतलं दण्डत्वाश्रयाश्रयवत्" इति बुद्धिं प्रति "भूतलं न दण्डत्वाश्रयाश्रयवत्" निर्णयस्य चैव प्रतिबन्धकत्वं संगच्छते। "भूतलं दण्डत्वाश्रयाश्रयवत्" इति ज्ञानस्य "भूतलं दण्डिमत्" इति ज्ञानस्य च परस्परं को विशेषः? किं वा प्रयुक्त उभयोर्भेदः? न हि विषयवैलक्षण्यं विना ज्ञानयोर्भेदः कैश्चिदपि वक्तुं शक्यः। अतश्च एकत्र दण्डत्वनिष्ठावच्छेदकता निरवच्छिन्ना अपरत्र तन्निष्ठावच्छेदकता सावच्छिन्ना इति अवच्छेदकतारूपविषयभेदादेवानयोर्वैलक्षण्यं वक्तुं शक्यम्। यद्यप्यत्र निरवच्छिन्नत्वं यदि विशेष्यत्वाऽनवच्छिन्नत्वरूपं विवक्ष्यते तदा "भूतलं दण्डिमत्" इत्यत्र यद्दण्डत्वं प्रकारतावच्छेदकतावच्छेदकं तत्तु न कस्यापि विशेष्यम्। तथा च दण्डत्वनिष्ठावच्छेदकता विशेष्यत्वानवच्छिन्नैव भवति "भूतलं दण्डत्वाश्रयाश्रयवत्" इत्यत्र त्वनुलिख्यमानजात्यखण्डोपाध्यतिरिक्तपदार्थ—ज्ञानस्य किञ्चिद्धर्मप्रकारकत्वनियमाद्दण्डत्वस्य दण्डत्वत्वेन भाननियमाद्दण्डत्वं दण्डत्वत्वस्यैव विशेष्यम्, अतश्चोक्तस्थले दण्डत्वनिष्ठाऽवच्छेदकता तु दण्डत्वत्वनिष्ठा याऽवच्छेदकता तादृशावच्छेदकतानिरूपिता या दण्डत्वनिष्ठा विशेष्यता तादृशविशेष्यताऽवच्छिन्नैव भवति। अन्तराभासमानयोः समानाधिकरणज्ञानीयविषयतयोरवच्छेद्यावच्छेदकभावस्य भट्टाचार्यमते स्वीकृतत्वात्। परञ्च विशेष्यत्वानवच्छिन्नत्वस्य निरवच्छिन्नत्वरूपतास्वीकारेऽनुमितित्वावच्छिन्नजन्यतानिरूपितव्याप्तिज्ञाननिष्ठजनकताया विषयत्वसम्बन्धावच्छिन्ना या व्याप्तिनिष्ठावच्छेदकता तत्र व्याप्तित्वावच्छिन्नत्वस्य सत्त्वेऽपि विशेष्यत्वानवच्छिन्नत्वस्य सत्त्वेन निरवच्छिन्नत्वापत्तिः स्यात्, स्याच्च जातिमात्रास्तीत्य-

भावीयप्रतियोगितानिरूपितायां जातिनिष्ठावच्छेदकतायां जातित्वावच्छिन्नत्वसत्त्वेऽपि विशेष्यत्वानवच्छिन्नत्वसत्त्वेन निरवच्छिन्नत्वापत्तिः। अतश्च कारणतावच्छेदकत्वादौ निरवच्छिन्नत्वापत्तिदोषेण विशेष्यनिष्ठावच्छेदकतायां विशेषणनिष्ठावच्छेदकतानिरूपितत्वस्य, विशेषणनिष्ठावच्छेदकतायां विशेष्यनिष्ठावच्छेदकतानिरूपकत्वस्य चावश्यं स्वीकर्तव्यत्वान्नोक्तदोषः संगच्छते।

**यद्यपि** लाघवानुरोधान्निरूपितत्वसम्बन्धेन कार्यत्वविषयताविशिष्टघटत्वाद्यवच्छिन्नविषयताशालिशाब्दत्वावच्छिन्नं प्रति ज्ञायमानशक्तिमत्पदत्वेन यदि कारणत्वं स्वीक्रियते तदा निरूपितत्वसम्बन्धनिष्ठसांसर्गिकावच्छेदकतानिरूपितावच्छेदकत्वानिरूपिका या तद्विषयत्वनिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतशक्तिमत्पदत्वेनैव कारणत्वं स्वीकार्यम्। एवञ्च निरूपितत्वसंसर्गनिष्ठा याऽवच्छेदकता तादृशावच्छेदकतानिरूपितत्वं कार्यत्वविषयत्वनिष्ठावच्छेदकतायाम्, तदनिरूपकत्वन्तु घटादिविषयत्वनिष्ठावच्छेदकतायामित्यदोषः। **परञ्चात्रैव विचार्यताम्**—यथा कार्यत्वविषयतानिरूपितघटादिविषयताशालिशाब्दत्वं कार्यतावच्छेदकत्वेन स्वीक्रियते तथा घटादिविषयतानिरूपितकार्यत्वविषयताशालिशाब्दत्वमपि विनिगमनाविरहेण कार्यतावच्छेदकं निर्वक्तुं शक्यम्। एवञ्च निरूपितत्वनिष्ठावच्छेदकत्वाऽनिरूपकत्वस्य यथापूर्वं घटादिविषयतायां तथेदानीं कार्यत्वविषयतायामप्यस्त्येव। तथा च निरूपितत्वनिष्ठावच्छेदकत्वाऽनिरूपिका या कार्यत्वविषयत्वनिष्ठावच्छेदकता तादृशावच्छेदकताकजन्यतानिरूपितजनकत्वस्य घटादिपदे विद्यमानत्वात् पुनरपि कार्यत्ववाचकत्वं तत्पदानां निराबाधमेव, **तथापि** विषयतात्वावच्छिन्ना याऽवच्छेदकता तादृशाऽवच्छेदकतानिरूपिता या निरूपितत्वनिष्ठाऽवच्छेदकता तादृशावच्छेदकतानिरूपितकार्यताविषयतात्वावच्छिन्नावच्छेदकता तादृशाऽवच्छेदकताभिन्नत्वे सति निरूपितत्वनिष्ठावच्छेदकत्वाऽनिरूपिका या यन्निष्ठविषयतात्वावच्छिन्नावच्छेदकता तन्निरूपितशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतशक्तिमत्पदत्वमेव तत्पदवाचकत्वं बोध्यम्। एवञ्च घटादिनिष्ठविषयतानिरूपितकार्यत्वनिष्ठविषयताशालिशाब्दत्वावच्छिन्ना या जन्यता तादृशजन्यतानिरूपितकार्यत्वनिष्ठविषयतानिष्ठावच्छेदकतायामुक्तभेदासत्त्वेन पूर्वोक्तदोषवारणं निरापदमेवेति **सङ्गिरन्ते**।

**नवीनास्तु**—घटादिपदानां कार्यत्ववाचकत्वापत्तिभिया घटादिविषयतानिष्ठावच्छेदकतानिरूपितकार्यत्वविषयतानिष्ठावच्छेदकताकत्वं जन्यतावच्छेदकं नैव स्वीकुर्वन्ति। एतन्मते च कार्यत्वविषयतानिरूपितघटादिविषयताशालिशाब्दत्वमेव ज्ञायमानशक्तिमद्घटादिपदानां जन्यतावच्छेदकमिति नोक्तदोष इति।

**परे तु**—कार्यत्वविषयतानिरूपितत्वाऽतिरिक्तनिरूपितत्वानवच्छिन्नत्वं जन्यतायां निवेशेन नोक्तदोषः। लिङ्ादिपदस्य तु कार्यताविषयताशालिशाब्दत्वावच्छिन्नं प्रत्येव कारणत्वात्तत्पदे कार्यत्वस्य वाचकत्वं सिध्यतीत्याहुः।

**तत्र नैयायिकाः**—"कार्यान्वितस्वार्थे पदानां शक्तिः" इति न तावद्रमणीयम्। अत्र लिङ्लोट्तव्यत्प्रत्ययादिघटितानामेव वाक्यानां प्रामाण्ये "चैत्र पुत्रस्तेजातः" इति वाक्यश्रवणानन्तरं चैत्रस्य यद्मुखप्रसादः संजायते तन्न स्यात्, नहि शाब्दबोधं विना मुखप्रसादो भवितुमर्हति। मुखप्रसादलिङ्गेन तत्रानुमातं भवति यच्चैत्रस्योक्तवाक्याच्छाब्दबोधो जात इति। **किञ्च** "सर्पोऽयम्" इति कथनानन्तरं यदस्मच्छरीरादिकं कम्पते तदपि न स्यात्। **किञ्च** "तव दारा मृताः" इति वाक्यश्रवणानन्तरं यच्चैत्रस्य शोको जायते तदपि न स्यात्। **किञ्च** "चैत्र पुत्रस्ते जातो मृतश्च" इति वाक्यश्रवणानन्तरं यत्तस्य मोहादिकं जायते तन्न स्यात्। **किञ्च** "चैत्र। कन्या ते गर्भिणी जाता" इति वाक्यश्रवणानन्तरं यच्चैत्रस्य मुखमालिन्यं जायते तदपि न स्यात्। नह्युक्तवाक्येषु च लिङ्लोट्तव्यत्प्रत्ययादिघटितत्वं येन तत्रापि कार्यान्वितस्वार्थे तत्तत्पदानां शक्तिः स्यात्। **किञ्च**—"अनन्यलभ्यः शब्दार्थः" इत्यार्षवचनप्रामाण्याल्लिङ्गादिपदानां कार्यतावाचकत्वे नह्यन्येषां पदानां "कार्यान्वितस्वार्थे शक्तिः" इति वक्तुं योग्यम्। **किञ्च** एतन्मते ज्ञायमानशक्तिमत्पदत्वेन कारणत्वमुररीकृतमस्ति, तत्र या कार्यानुकूला शक्तिरर्थस्मारिका, अर्थानुभाविकी च, सा स्वरूपसती कारणमुतवा ज्ञाता सती, वह्न्यादिनिष्ठा या कार्यानुकूला शक्तिर्भवन्मतसिद्धा, सा तु स्वरूपसत्येव कारणं भवति, तादृश्येवेयं पदनिष्ठा शक्तिर्यदि स्वरूपसत्येव कारणं

स्यात्, तदा न तावदर्थस्मारिकाऽर्थानुभाविकी च भवितुमर्हेत्, शाब्दबोधे तु ज्ञातैव कार्यानुकूला भवति। एवञ्चातीतानागतपदज्ञानादपि शाब्दबोधस्योत्पत्तेरवश्यम्भावित्वेन तत्र पदानामसत्त्वेन कथं तत्र शाब्दबोधः स्यात्। यदि पदानां नित्यत्वं स्वीक्रियते तदा सर्वदैव कथन्न शाब्दबोधो जायते तस्य नित्यत्वेन सर्वदैव विद्यमानत्वात्। यद्येवं ब्रूयुः पदस्याभिव्यक्तिः कादाचित्कीति, तदा कस्तावत् तस्याभिव्यञ्जक इति प्रश्नो भद्भिरेव समाधेयः स्यात्। यदि कण्ठताल्वाद्यभिघातो व्यञ्जकत्वेन स्वीक्रियेत, तदाऽप्यवं प्रष्टुं प्रभवेम कथमभिघातानामभिव्यञ्जकत्वमिति। यदि प्रत्यक्षस्य यस्तावत्प्रतिबन्धकस्तस्यापसारकत्वेन तत्सम्भवतीत्युच्येत, तर्हि तत्रैव प्रोच्यतां प्रत्यक्षस्य कस्तावत् प्रतिबन्धकः, यस्यापसारकत्वेन कण्ठताल्वाद्यभिघातोऽभिव्यञ्जको भवतीति। यद्यभिघातानां शब्दश्रावणप्रत्यक्षे सहकारिकारणत्वमेव तदभिव्यञ्जकत्वमिति स्वीक्रियेत, तर्हि तदपि न समीचीनम्, यतो हि कण्ठताल्वाद्यभिघातस्य विरहवेलायामपि शब्दश्रावणप्रत्यक्षस्य सम्भवान्नहि तस्य सहकारिकारणत्वं सिद्धं भवितुमर्हति। किञ्च "तत्त्वमसि, शालिग्रामो हरिः, धर्मो गौः" इत्यादिसिद्धपरकाणां वाक्यानां प्रामाण्यं तव मते व्याहतमेव स्यात्। तद्वाक्यानाञ्च लिङ्गादिप्रत्ययाघटितत्वादिति व्याहरन्ति।

भट्टास्तु—गवादिपदानां जातावेव शक्तिः, "नागृहीतविशेषणाबुद्धिर्विशिष्टेपूपजायते" इति वचनप्रामाण्याद्विशेषणज्ञाने सत्येव विशेष्यात्मकस्य व्यक्तिविशेषस्य ज्ञानं जायते। व्यक्तौ नास्ति पदानां शक्तिः, व्यक्तेः शाब्दबोधे भानन्त्वनुमानादर्थापत्तिप्रमाणतो लक्षणया वा संभवति। आनयनं गोत्वस्य भवितुं नार्हति किन्तु यथा "अरुणया एकहायन्या गवा सोमं क्रिणाति" इति मन्त्रे आरुण्यस्य गोपरिच्छेदद्वारैव क्रियान्वितत्वं तथैव गोत्वस्यापि स्वाश्रयवृत्तित्वादिसम्बन्धेन कर्मत्वादावन्वये सति पश्चादनुमानतो व्यक्तेर्लाभो भवति, एवं "घटो नश्यति" इत्यत्र "नश्" धात्वर्थे नाशे स्वाश्रयप्रतियोगिकत्वसम्बन्धेन घटत्वस्यान्वये सति पश्चादनुमानतो जातितुल्यवित्तिवेद्यत्वेन व्यक्तेर्लाभो भवति। अत्रायंभावः "घटमानय, गामानय" इत्यादौ यदा शाब्दबोधे गोत्वादिजातीनां भानं जायते तदा गवादिव्यक्तीनामपि तत्र भानं जायत एव, अत एव चैकज्ञानविषयत्वं जातिव्यक्तीनामस्त्येव। एवञ्च जातिभासकसामग्र्याः व्यक्तिभासकत्वनियमेन "जातिविषयकं ज्ञानं व्यक्तिविषयकम्, जातितुल्यवित्तिवेद्यत्वात्" इत्यनुमानेन जातिविषयकज्ञाने व्यक्तेर्भानं सम्भवति। अर्थापत्त्या तु यथा "पीनोऽयं देवदत्तो दिवा न भुङ्क्ते" इति वाक्यस्थले पीनत्वं दिवाऽभुञ्जानत्वे सति रात्रिभोजनं विनाऽनुपपन्नमित्यनुपपत्तिप्रतिसन्धानाद्रात्रिभोजनं कल्पितं भवति, तथैव स्वाश्रयवृत्तित्वसम्बन्धेन गोत्वान्वितकर्मत्वाकमानयनं गोव्यक्तिं विनाऽनुपपन्नमित्यनुपपत्तिप्रतिसन्धानसहकृतगोशब्दादेव लक्षणामन्तरेण गोव्यक्तीनां भानं जायते। अथवा जातिशक्तपदेन लक्षणया गोत्वविशिष्टगोव्यक्तेर्भानम्। यद्यपि गवादिपदानां गोत्वादिजातौ शक्तिस्वीकारे गोत्वत्वं शक्यतावच्छेदकं स्यात्, गोत्वं गोपदशक्यमिति शक्तिज्ञानाद्गोत्वत्वेन रूपेण गोत्वस्योपस्थितौ च सत्यां गोत्वत्वेनैव गोत्वविषयकः शाब्दबोधः स्यात्, नहि स्वरूपतो गोत्वप्रकारको गोविशेष्यकः शाब्दबोधः स्यात्, तथाप्यत्र स्वरूपतः शक्तिसम्बन्धेन गोत्वप्रकारकस्य शक्त्यंशे वा निरूपितत्वसम्बन्धेन गोत्वप्रकारकस्य शक्तिज्ञानस्य स्वीकृतत्वान्न स्वरूपतो गोत्वप्रकारकस्य शाब्दबोधस्यानुपपत्तिः। तत्र च स्वरूपतः शक्तिसम्बन्धेन गोत्वप्रकारकशक्तिज्ञानन्तु स्वसमवेतनिरूपितशक्तिसम्बन्धेन गोमत्पदमित्याकारकं बोध्यम्। स्वं गौः, तत्समवेता जातिर्गोत्वम्, तन्निरूपितशक्तिसम्बन्धेन गोविशिष्टं गोपदम्। एवं शक्त्यंशे निरूपितत्वसम्बन्धेन गोत्वप्रकारकं शक्तिज्ञानन्तु स्वसमवेतनिरूपितत्वसम्बन्धेन गोमच्छक्तिमत्पदमित्याकारकम्। तत्रापि स्वं गौः, तत्समवेता जातिर्गोत्वम्, तन्निरूपितत्वं शक्ताविति गोपदात् स्वरूपतो गोत्वस्योपस्थितौ सत्यां स्वरूपतो गोत्वप्रकारकशाब्दबोधे बाधकाभावः। यथा जातौ शक्तिर्वर्तते तथा सम्बन्धेऽपि शक्तिः वर्तत एव। पदैरभिहिता एवार्थाः शाब्दबोधे भासन्त इति नियमः। वृत्त्यविषयस्य संसर्गस्य शाब्दबोधेऽभानात्तत्रापि शक्तिरवश्यमेव स्वीकरणीया। अन्वयमधिकृत्य शक्तिज्ञानाकारस्तु "इतरान्वितो घटो घटपदशक्यः" इत्येवम्भूतः। अत एव च तद्विषयकशाब्दत्वावच्छिन्नं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेनैव हेतुत्वम्। शाब्दबोधे विशिष्टज्ञाने वा तिस्रो विषयता अवतिष्ठन्ते, काचित् संसर्गतारूपा काचिद्विशेष्यतारूपा काचिच्च प्रकारतारूपा। एवञ्च तद्विषयकशाब्दबोधेत्यत्र तत्पदेन "घटमानय" इत्यादौ निष्ठत्वादिसंसर्गस्यापि परिगृहीतत्वात्तत्रापि शक्तेरवश्यं स्वीकर्तव्यत्वाद्घटादिपदानामन्वये शक्तिरङ्गीकृता भवति। यद्यपि "अनन्यलभ्यः शब्दार्थः" इत्यार्षवचनप्रामाण्यादितरपदार्थस्यान्यपदेनैव

लभ्यत्वादितरपदार्थान्वितस्वार्थे घटादिपदानां शक्तिरिति कथनं निर्युक्तिकम्, **तथापि** यथा भीमसेनस्य "भीमः" इति कथनेनापि बोधो भवति, तथैव पदैकदेशन्यायेनान्वितघटादावेव शक्तिः स्वीकरणीया, एतेन घटादिपदानामितरान्वितस्वार्थबोधकत्वे तस्य शाब्दबोधरूपत्वेन शाब्दबोधात्प्राक् तदसंभवेन शक्तिज्ञानं प्रति शाब्दबोधस्य, शाब्दबोधं प्रति शक्तिज्ञानस्य च कारणत्वे भवति चान्यान्याश्रयो दोष इत्यपि निरस्तम् । घटादिपदानामन्वितस्वार्थ एवास्माभिः शक्तिः स्वीक्रियते । **किञ्च** "इतरान्वितो घटो घटपदशक्यः" इत्येवम्भूते इतरत्वेन सामान्यधर्मेणेतरपदार्थस्य ज्ञानेऽपि घटत्वादिरूपेण विशेषधर्मेण तद्बोधार्थं शाब्दबोधः स्वीकर्तव्य एव भवति । तद्विषयकशाब्दं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुत्वे "शरेण संयुनक्ति, पटसमवेतो रक्तः" इत्यादितो वृत्त्या संयोगादेरनुपस्थितिकाले तच्छाब्दबोधो न भवति; तदुपस्थितिकाले तु भवत्येव । अतश्च संयोगादिविषयकशाब्दं प्रति वृत्तिज्ञानजन्यसयोगादिविषयकोपस्थितेः कारणत्वस्यावश्यकत्वादपि शाब्दबोधे संयोगादेर्भानार्थं संयोगादावपि शक्तिः स्वीकर्तव्या भवति ।

अथात्र घटादिपदाद्घटत्वादिरूपेणापूर्वव्यक्तीनामपि भानं भवति । किन्तु तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुत्वे शाब्दबोधेऽपूर्वव्यक्तीनां भानं कथं स्यात्, नहि सामान्यलक्षणाऽनङ्गीकर्तृभिर्मीमांसकैः सामान्यलक्षणयाऽपूर्वव्यक्तीनां भानं भवेदिति वक्तुं शक्येत इत तु नाशङ्कनीयम्, यतो हि सामान्यतो विषयतासम्बन्धेन तत्तत्पुरुषीयशाब्दबोधं प्रति विषयत्वस्वप्रकाराश्रयत्वान्यतरसम्बन्धेन तत्पुरुषीयवृत्तिज्ञानजन्योपस्थितित्वेन कारणत्वस्वीकारे नोक्तापत्तिः संजायते । यथा च तत्पुरुषीयशाब्दबोधो विषयतासम्बन्धेन गोत्वादौ वर्तते, तत्र वृत्तिज्ञानजन्योपस्थितिरपि विषयतासम्बन्धेन वर्तत एव, तथा विषयतासम्बन्धेन स चापूर्वव्यक्तौ वर्तते, तत्र च स्वप्रकाराश्रयत्वसम्बन्धेनोपस्थितिरपि वर्तत एव । तथाहि—तत्पुरुषीयवृत्तिज्ञानजन्या योपस्थितिस्तस्याः प्रकारो गोत्वादिकं तस्याश्रयत्वं सकलगवादिव्यक्तिषु वर्तमानत्वेन भवति च तथाप्यपूर्वव्यक्तिभानम् । कारणतावच्छेदकः सम्बन्धश्चात्र विषयत्वस्वप्रकाराश्रयत्वान्यतरात्मकः । तत्र शाब्दबोधस्य विषयतासम्बन्धेन गोत्वादिजातावपि सत्त्वेन तत्र स्वप्रकाराश्रयत्वसम्बन्धेनोपस्थितेरवर्तमानत्वात्प्रसक्तस्य व्यभिचारस्य वारणार्थं प्रथमसम्बन्ध उपयुज्यते । एवं शाब्दबोधस्य विषयतासम्बन्धेनापूर्वगोव्यक्तिषु सत्त्वेन तत्र स्वविषयत्वसम्बन्धेनोपस्थितेरभावात्प्रसक्तस्य व्यभिचारस्य वारणार्थं द्वितीयः सम्बन्ध उपयुज्यते ।

**यद्यपि** विषयतासम्बन्धेन तत्तत्पुरुषीयशाब्दबोधं प्रत्युक्तान्यतरसम्बन्धेन तादृश्या उपस्थितेः कारणत्वस्वीकारे पुरुषभेदेन कार्यकारणभावस्यानन्त्यं प्रसज्यते, **तथापि** समवायनिष्ठप्रत्यासत्त्या कार्यकारणभावाऽङ्गीकर्तृमतेऽपि गोत्वादिरूपधर्माणां गोव्यक्त्यात्मकधर्मिणाञ्च प्रवेशे कार्यकारणभावस्यानन्त्यं स्यादेव । एवञ्चेतरान्वितघटादिविषयकशाब्दबोधत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकीभूतशक्तिमत्पदत्वमेव घटादिपदानामितरान्वितघटादिवाचकत्वम् । कार्यकारणभावस्तु इतरत्वोपलक्षितनिष्ठविषयतानिरूपितान्वयनिष्ठविषयतानिरूपितघटत्वावच्छिन्नविषयताशालिशाब्दबोधं प्रत्यनुकूलशक्तिमत्पदं कारणमित्येवम्भूतः । **यद्यपि** तद्विषयकशाब्दं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन कार्यकारणभावपक्षे तद्विषयतायां यदि संसर्गनिष्ठविषयताभिन्नत्वं निवेश्यते तदा नोक्तदोष आपद्यते । परञ्च सामान्यकार्यकारणभावे संसर्गताभिन्नत्वनिवेशे गौरवं प्रसज्यत, अतश्च तदुपेक्षणीयमिति **प्राहुः** ।

**तत्र नैयायिकास्त्वाकाङ्क्षाज्ञानेनैव** सर्वत्र बोधे पदार्थद्वयसम्बन्धस्य भानसंभवान्न तत्र शक्तिकल्पनावश्यकी । **किञ्च** यत्र "पशुपदं लोम्नि शक्तं लाङ्गूलवति च शक्तम्" इति शक्तिज्ञानाल्लोम्नो लाङ्गूलवतश्च विशेष्यविशेषणभावानापन्नत्वेनोपस्थितिर्जनिता, तत्र तत्पदाल्लोमवल्लाङ्गूलवानित्याकारकः शाब्दबोधः स्यात् । "पशुपदं लोमवल्लाङ्गूलवति शक्तम्" इत्याकारकं शक्तिज्ञानं यदा जायते तदैव विशेष्यविशेषणभावाऽऽपन्नत्वेन लोमवल्लाङ्गूलवतः स्मरणाच्छाब्दबोधोऽपि तदाकार एव जायते । किन्तु यदा खण्डशः शक्तिज्ञानं जायते तदा तु खण्डश एवोपस्थितिर्भवति शाब्दबोधोऽपि तदाकार एव । अतश्च "पशुपदं लोम्नि शक्तं लाङ्गूलवति च शक्तम्, धेनुपदं धानकर्मत्वे शक्तं गवि च शक्तम्" इति शक्तिज्ञानाद्विशेष्यविशेषणभावाऽपन्नत्वेन प्रसक्तस्य शाब्दबोधस्य वारणाय तद्धर्मनिष्ठप्रकारताकतन्निष्ठविशेष्यताकशाब्दत्वावच्छिन्नं प्रति वृत्तिज्ञानजन्यतद्धर्मनिष्ठप्रकारताकतन्निष्ठविशेष्यताकोपस्थितित्वेन हेतुत्वस्यावश्यकत्वात्तत्संसर्गकबोधे किञ्चिद्धर्मप्रकारेण तत्संसर्गनिष्ठविषयताकत्वाभावाद्वृत्तिज्ञानात् संसर्गस्याभानेऽपि नोक्तापत्तिः संभवति ।

**तत्रायं विमर्शः**—विशेष्ये विशेष्यताख्या, प्रकारे प्रकारताख्या, प्रकारतावच्छेदके प्रकारतावच्छेदकताख्या प्रकारता, विशेष्यतावच्छेदके विशेष्यतावच्छेदकताख्या प्रकारतारूपा च विषयता संतिष्ठते। संसर्गे संसर्गतावच्छेदके च न प्रकारताख्या विषयता, किन्तु विशेषणताख्या विषयतैव। एवञ्च तद्धर्मनिष्ठप्रकारतापदेन संयोगत्वादिनिष्ठप्रकारता धर्तुमशक्यैव। तस्याश्च धर्तुमशक्यत्वात् तत्संसर्गनिष्ठविषयता अपि तादृशप्रकारतानिरूपितत्वेन धर्तुमशक्यैव। तथा च तद्धर्मनिष्ठप्रकारतानिरूपिततन्निष्ठविषयताकबोधत्वेन तत्संसर्गकबोधस्योपादातुमशक्यत्वेन न तत्र संसर्गे वृत्तिज्ञान-स्यापेक्षा। **यद्यपि** तद्धर्मनिष्ठप्रकारतानिरूपिततन्निष्ठविशेष्यताकशाब्दत्वावच्छिन्नं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुत्वस्यावश्यकत्वेऽपि सामान्यकार्यकारणभावानुसारेण विषयतासम्बन्धेन शाब्दबोधं प्रति वृत्तिज्ञानजन्योपस्थितेः कारणत्वमवश्यमेव वाच्यम्। एवञ्च पदार्थद्वयसंसर्गबोधस्याप्युक्तशाब्दबोधत्वेन धर्तुं शक्यत्वात्तत्संसर्गस्यापि कार्यता-वच्छेदकाक्रान्ततया तत्रापि वृत्तिः कल्पनाऽऽवश्यकी। **तथापि** "अनन्यलभ्यः शब्दार्थः" इत्यार्षवचनप्रामाण्याद्यथेतर-पदार्थस्यान्यलभ्यत्वात्तस्य त्यागो भवद्भिः स्वीकृतः, तथैव संसर्गस्याप्याकाङ्क्षावललभ्यत्वात्तत्रापि वृत्तिकल्पनमनु-पयुक्तमेव। **किञ्च** वाक्यार्थः संसर्गोऽपि भवति, यदि वाक्यार्थीभूतस्य संसर्गस्य वृत्त्यैव ज्ञानं स्यात् तदा शाब्दबोधस्य किं प्रयोजनं स्यात्। भवन्मते तु शाब्दबोधमात्रस्योच्छेद एव स्यात्। **यदि** शक्तिज्ञाने यः संसर्गः भासते स तु सामान्यरूपेणैव भासते विशेषरूपेण च बोधार्थं शाब्दबोधोऽपेक्ष्यत एवेत्युच्येत **तदा** तु विशेषरूपेण शाब्दबोधे संसर्गभानस्याङ्काक्षाज्ञानं विना भवितुमशक्यत्वेन न तत्र शक्तिज्ञानस्यावश्यकत्वम्। अस्यां स्थितौ संसर्गस्य शाब्दबोध आकांक्षाभास्यत्वमात्र-स्वीकारे लाघवमेव भवति। **किञ्च** अन्विते यदि शक्तिः स्यात्तदा "घटमानय" इत्यत्रान्वितो घटः, अन्वितं कर्मत्वम्, अन्वितमानयनम्, अन्वितो व्यापार इति स्मरणचतुष्टयस्यापत्तिः स्यात्। **किञ्च** भवन्मते यदि घटादि-पदानां जातावेव शक्तिः स्यात् **तदा** द्वितीयादिविभक्तीनां धातूनाञ्च कुत्र शक्तिः स्यात्। **यदि** जातावुपाधौ चोभयत्र शक्तिः स्वीक्रियेत **तदा** भवन्मते नानाविधशक्तिकल्पने गौरवमेव जायेत। **किञ्च** भवद्भिर्वाच्यवाचकभावरूप एव शब्दार्थयोः सम्बन्धस्तत्तु पदार्थान्तरमेवेत्युक्तम्। तत्रैवास्माभिः परिपृच्छ्यते। वाच्यवाचकभाव इत्यस्य कोऽर्थः, **यदि** वाच्यत्वे सति वाचकत्वं तस्यार्थः स्वीक्रियते **तदा** वाच्यत्वस्यार्थनिष्ठत्वेन, वाचकत्वस्य च पदनिष्ठत्वेन न तावद्-वाच्यत्वे सति वाचकत्वञ्चार्थे पदे वा सम्बन्धः स्यात्। वाच्यत्वं वाचकत्वं वा सम्बन्ध इति तु वक्तुं न शक्येत। सम्बन्धिद्वयभिन्नत्वे सति द्विष्ठत्वे सति विशिष्टधीनियामकत्वमेव सम्बन्धत्वम्। **यद्यपि** न्यायनयेऽपि विषयत्वादि-संसर्गे तल्लक्षणं न सङ्घटते। "घटः" इति ज्ञानस्य विषयतया घटे सत्त्वेऽपि, न तेन सम्बन्धेन तज्ज्ञाने घटस्य सत्त्वम्, तज्ज्ञाने घटानिष्ठविषयत्वस्याभावात्, **तथापि** विषयतायाः स्वरूपेण घटे निरूपकत्वेन च ज्ञाने सत्त्वेन विषयत्वाख्यसम्बन्धे द्विष्ठत्वं निराबाधमेवास्ति। **यदि** वाच्यत्ववाचकत्वान्यतरात्मकत्वमेव तदिति ब्रूयात्, तर्हि "वाच्यञ्च वाचकञ्चेति वाच्यवाचके तयोर्भावो वाच्यवाचकभावः" इति व्युत्पत्त्यनुसारेण तत्पदेन द्वित्वावच्छेदेनैव भावप्रत्ययार्थस्य विधेयत्वेन लभ्यतया नान्यतरावच्छेदेन तल्लाभः प्रकृतावुपपद्यते। प्रकृत्यर्थे प्रकारीभूतधर्मस्य भावप्रत्ययार्थत्वनियमात्स च द्वित्वावच्छेदेनैव लभ्यते।

**किञ्च** वाचकत्वं नाम तत्प्रतीतिजनकत्वं वाच्यत्वं नाम तत्प्रतीतिविषयत्वम्, तत्र तादृशजनकत्वं न शब्दार्थ-योरसति सम्बन्धे वक्तुं शक्यम्। यदि सम्बन्धमन्तरेणापि पदस्य वाचकत्वं भवद्भिः स्वीक्रियेत, **तर्हि** सम्बन्धं विनाऽपि धूमस्य वह्न्यनुमापकत्वे सिद्धे व्याप्तेः सर्वथैवोच्छेदः स्यात्। **यदि** वाचकत्वोपपत्तये किमपि सम्बन्धान्तरं स्वीक्रियेत, **तथा** तत्सम्बन्धोपपत्तये सम्बन्धान्तरकल्पने स्याच्चानवस्थादोषः।

**किञ्च** भवद्भिर्जातावेव शक्तिः, व्यक्तेर्लाभस्त्वाक्षेपादित्युक्तम्। तत्राक्षेपोऽनुमानमर्थापत्तिर्लक्षणा वा। **तत्रैवा-स्माभिः परिपृच्छ्यते**—गोत्वेन साकं गोव्यक्तेः कीदृशः सम्बन्धः, यद्यविनाभावरूपः सम्बन्धः स्वीक्रियेत, तदाऽस्मन्म-तेऽविनाभावरूपसम्बन्ध एव व्याप्तिः। एवञ्च यथा व्याप्तिमता धूमेन वह्निरनुमितो भवति, तथा गोत्वादिजात्या किं व्यक्तिमात्रेणाविनाभावरूपः सम्बन्धः, अथवा व्यक्तिविशेषणः, येन तया साऽनुमिता भवेदिति समाधेयं स्यात्। **यदि** व्यक्तिमात्रेण स च सम्बन्धः स्वीक्रियेत **तदा** तु गोत्वजात्या घटादीनामपि शाब्दबोधः स्यात्। यतो हि गोत्वादिजात्या सह घटादिपदार्थानामविनाभावस्य भवद्भिः स्वीकृतत्वात्। **यदि** गोत्वादिजात्या घटादिपदार्थानाञ्च नास्त्यविनाभावसम्बन्धः इत्युच्येत **तदाऽपि** गोत्वजात्या सह गोव्यक्तेरविनाभावरूपः सम्बन्ध इत्युच्यमान आत्माश्रय एव स्यात्। नहि गोव्यक्ति

विना गोत्वजातेर्भानं भवितुमर्हति, आकृतिव्यङ्ग्याया जातेः स्वीकृतत्वात्। एवञ्चाविनाभावरूपसम्बन्धविरहाद्गोत्व-शक्तेन गोपदेन गोव्यक्तेर्लाभः कथं स्यात्। **किञ्च** यद्यर्थापत्तिप्रमाणतो व्यक्तेर्लाभ इत्युच्येत **तदाऽपि वयं ब्रूमः**—अस्मन्मतेऽर्थापत्तिप्रमाणस्य केवलव्यतिरेक्यनुमान एवान्तर्भावो जायते। तथाहि "पीनोऽयं देवदत्तो दिवा न भुङ्क्ते" इत्यत्र पीनत्वं दिवाऽभुञ्जानत्वे सति रात्रिभोजनं विनाऽनुपपन्नमित्यनुपपत्तिप्रतिसन्धानाद्यज्ज्ञानं जायते तच्चानुमितिरेव, पीनोऽयं देवदत्तो रात्रिभोजनवान् दिवाऽभुञ्जानत्वे सति पीनत्वात्, यन्नैवं तन्नैवं यथा चैत्र इति। **अत्रेदं तत्त्वम्**—गोत्वस्य भानं गोव्यक्तिं विना नास्ति सर्वथाऽनुपपन्नम्, जातिशक्तिवादिमतेऽपि यथा "घटोऽस्ति" इत्यत्र "घटत्वं सत्तावत्" इति शाब्दबोधस्वीकारेऽपि न काचिदनुपपत्तिरस्ति, तथैव "गौरस्ति" इति वाक्यस्थलेऽपि "गोत्वं सत्तावत्" इति शाब्दबोधाङ्गीकारे गोत्वविषयकबोधे न सर्वत्र गोव्यक्तिभानं नियतम्। **किञ्च** लक्षणया गोव्यक्तिभानस्वीकार-पक्षेऽप्यन्वयानुपपत्तिज्ञानस्यावश्यकत्वेन "गामानय" इत्यादौ गोत्वजातेरानयनादावन्वयानुपपत्त्या तत्र गोपदस्य गोव्यक्तौ लक्षणास्वीकारेऽपि "गौरस्ति" इत्यादौ गोत्वजातेरस्तित्वेऽन्वयानुपपत्तेरभावेन लक्षणाऽपि स्वीकर्तुम-शक्यैव। किञ्चातीतानागतपदज्ञानादपि शाब्दबोधस्यानुभविकत्वात्तेषां पदानामिदानीमसत्त्वाज्ज्ञायमानपदत्वेनापि कारणत्वं न सुलभमित्युक्तमुपरिष्टात्। **वैयाकरणभूषणकारमते** बोधजनकत्वयोग्यत्वमेव शक्तिः। तादृशयोग्यता च बोधजनकतावच्छेदकत्वेनाभिमतो धर्मः। स च वाच्यवाचकभावरूपः। तत्र यथा लौकिकप्रत्यक्षस्थले चक्षुरादौ तत्कारणत्वनिर्वाहाय काचिदनादिः शक्तिः कल्पिता भवति, सा शक्तिरपि कमपि सम्बन्धान्तरमधिकृत्यैव तत्प्रत्यक्षं जनयति, तथैव बोधजनकतावच्छेदकत्वेनाभिमतस्य धर्मस्य शाब्दबोधोपपत्तये सम्बन्धान्तरमपेक्षणीयं भवत्येव। तच्च सम्बन्धान्तरमुक्तप्रत्यक्षस्थले सन्निकर्षः, शाब्दस्थले तु तादात्म्यम्। इदमत्र बोध्यम्—यथा बोधजनकता-वच्छेदकत्वेनाभिमतस्य धर्मस्य ज्ञानार्थं सम्बन्धान्तरं तादात्म्यमपेक्षणीयं भवति, न तथा तादात्म्यस्य ज्ञानार्थम्, तन्मते तादात्म्यसम्बन्धः स्वाभाविकः, स च पुरुषप्रयत्नानपेक्षोऽकृत्रिम एव वा।

**तत्रैव किञ्चिद्विचार्यते**—बोधजनकत्वयोग्यत्वमित्यत्र कीदृशी व्युत्पत्तिः? यदि बोधजनकत्वमेव योग्यता-रूपा शक्तिस्तदा बोधजनकत्वरूपाया योग्यतात्मिकायाः शक्तेरवच्छेदिका शक्तिः कथं स्यात्? स्वं यदि स्वावच्छेदकं स्यात् तर्हि स्वस्मादभिन्नं स्यादिति नियमात् स्वं स्वावच्छेदकं नैव भवति। नहि घटादिनिष्ठप्रतियोगिताया अवच्छेदिका घटादिनिष्ठप्रतियोगितैव भवति। यदि बोधजनकत्वस्य बोधजनकत्वे वा शक्तिः इति स्वीक्रियते तदाऽर्थपर्यालोचनया शक्तिस्तु कारणे तिष्ठति न तु कारणगतवाचकत्वरूपेऽयं इत्येव सिध्यति। बोधजनकत्वमिति त्वस्माभिरप्यर्थस्य पदनिष्ठा शक्तिः स्वीक्रियते, न तु बोधजनकतावच्छेदकत्वेन सा स्वीक्रियत इत्येवावयोर्वैमत्यम्। **किञ्च** बोधजनकतावच्छेदकत्वेन शक्तिस्वीकारे तज्ज्ञानार्थं तादात्म्यलक्षणः सम्बन्धः स्वीकर्तव्यो भवति, इति तु महागौरवम्। **किञ्च** शब्दार्थयोस्तादात्म्यसम्बन्धो भट्टवैयाकरणानामेव रोचते। तथा च शब्दार्थयोस्तादात्म्यरूपे सम्बन्धे स्वीक्रियमाणे "गुडः" इत्युक्ते मुखे न माधुर्यादिप्रतीतिः सङ्गच्छते, न वा "वह्निः" इत्युक्ते औष्ण्यादिप्रतीतिर्मुखे जायते। यद्यपि वैयाकरणैर्बौद्धार्थविषया अपि स्वीक्रियन्ते। एवञ्चाग्नौ दाहकत्वशक्तिर्बाह्येऽग्निरूपे पदार्थे एवास्ति न तु बौद्धार्थेऽग्नौ, एवं माधुर्यं बाह्ये एव पदार्थे गुडादावस्ति नतु बौद्धार्थे विषये। परञ्चैतन्मते विषया द्विविधा भवन्ति। एके बाह्यार्थविषया अपरे बौद्धार्थविषयाश्च, शाब्दबोधस्तु बौद्धार्थविषयक एव भवति। तथा च यत्र स्थलविशेषे केनचित् प्रयोजकेन वृद्धेन घटोऽस्तीति वाक्यमुक्तम्, तत्र प्रयोज्यवृद्धस्य घटेन साकं सति सन्निकर्षे प्रत्यक्षमेव भवति, समानविषयकशाब्दबोधं प्रति प्रत्यक्षसामग्र्या बलवत्त्वात्। परञ्चात्र शाब्दबोध एव स्यात्, नहि बाह्यार्थविषयकं ज्ञानं बौद्धार्थविषयकं ज्ञानञ्च समानविषयकम्, अतश्चानुभवबलात् प्रत्यक्षसामग्र्या बलवत्त्वाच्च प्रतिबन्धकत्वान्यथानुपपत्त्या च बौद्धार्थविषया नाङ्गीकार्या इति बहुभिर्दोषैर्नैयायिकाः शब्दार्थयोः सम्बन्धं तादात्म्यं बौद्धार्थाञ्च न मेनिरे।

**नव्यवैयाकरणमते** च भेदाभेदरूपमेव तादात्म्यम्। उक्तञ्च नागेशभट्टैः "तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्" इति। अभेदस्याध्यासिकत्वेन भेदाभेदरूपता सङ्गच्छत एव। एवञ्च यथा शब्दार्थयोरा-ध्यासिकस्तादात्म्यरूपः सम्बन्धस्तथा शब्दार्थज्ञानानामपि। उक्तञ्च—

**ज्ञानं प्रयोक्तुरर्थस्य स्वरूपञ्च प्रतीयते। शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः॥** इति।

अत एव च "घटः" इति ज्ञानम्, "घटः" इति पदम्, "घटः" इत्यर्थ इति समानाकारत्वेन शब्दार्थज्ञानानां व्यवहारो जायत एव। भेदाभेदात्मकस्य तादात्म्यस्य स्वीकृतत्वादेव "गुडः" इत्युक्ते न माधुर्यानुभवापत्तिः, न वाऽग्निशब्दोच्चारणे मुखदाहापत्तिः, तत्र तादात्म्यं सङ्केत एव। एवञ्च शब्दार्थयोः कथञ्चिद्भेदसत्त्व एव न मुखदाहाद्यापत्तिः, अभेदे तु घटतदर्थयोरभेदव्यवहारः "योऽयं घटशब्दः सोऽयं घटरूपोऽर्थः" इति। एवञ्च इतरेतराध्यासमूलकं यत्तादात्म्यं वर्तते तज्ज्ञानादेव वाच्यवाचकभावरूपसम्बन्धस्य ज्ञाने जाते शब्दार्थप्रतीतिर्भवति। उक्तञ्च पातञ्जलभाष्ये—

"सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको "योऽयं शब्दः सोऽर्थः" योऽर्थः स शब्दः" इति। तत्राध्यासो रूपं बोधकं यस्येति बहुव्रीहिसमासाश्रयणे तच्छब्देनाध्यासग्राह्य इत्यर्थो लभ्यते। स्मृत्यात्मक इत्यनेन स्मृतिविषय इति लभ्यते, एवञ्चाध्यासग्राह्यत्वे सति स्मृतिविषयत्वं तादात्म्यमिति लक्षणं पर्यवसितं भवति। तत्राध्यासो नाम अविद्या, सा चानादिः। अत एव चाविद्यया ग्राह्यं यत्तादात्म्यं तदपि न वास्तविकं किन्तु काल्पनिकमेव, अत एव शब्दार्थयोराध्यासिकतादात्म्यस्वीकारेण "योऽर्थः सः शब्दो यः शब्दः सोऽर्थः" इति व्यवहारो जायते। एतस्मादेव तादात्म्यज्ञानात् पदार्थान्तरभूतस्य वाच्यवाचकभावरूपसम्बन्धस्य ज्ञानं जायते ततोऽर्थप्रतिपत्तिः। तादात्म्यस्य सङ्केतत्वेऽपि न तत्र सम्बन्धत्वं स्वीक्रियते भेदाऽभेदघटितस्य तादात्म्यस्य सम्बन्धत्वास्वीकारात्। तत्र शब्दार्थयोर्भेदो नैयायिकानामेव रोचते, अभेदस्त्वितरेषाम्। परञ्च न्यायमते तादात्म्यमभेदस्तस्याभेदस्यैकनिष्ठत्वेन प्रतियोग्यनुयोगिभिन्नत्वे सति द्विष्ठत्वे सति विशिष्टधीनियामकत्वरूपसम्बन्धत्वस्य तत्र विरहात्, न तावदभेद एव सम्बन्धो भवितुमर्हति भेदस्यापि द्विष्ठत्वाभावान्न सम्बन्धत्वम्, अतश्च तादात्म्यं सङ्केत एव न तु सम्बन्धः, सम्बन्ध एव ज्ञातः सन् शाब्दबोधोपयोगितां भजते, अतश्च पदार्थान्तरं वाच्यवाचकरूपा शक्तिरेव सम्बन्धः, तज्ज्ञानमेव शाब्दबोधोपयोगि। शब्दार्थयोः वाच्यवाचकभावरूपसम्बन्धस्तु स्वाभाविक एव, नहि केनचित् क्रियत इति।

अत्र नैयायिका विवदन्ते—यद्भवद्भिर्वाच्यवाचकभावरूपा या शक्तिः स्वाभाविकीति स्वीक्रियते सा प्रत्यक्षगम्यानुमानगम्या वा। नहि प्रत्यक्षप्रमाणेन यथा द्रव्यादिकं गम्यते तथा शक्तेरपि ज्ञानं जायते, यदि च कार्यानुमेया सेत्युच्यते, तदपि न समीचीनम्। अनुमानं त्रिविधं भवति, कार्यलिङ्गकम्, कारणलिङ्गकम्, तदुभयविपरीतञ्च। तद्यथा धूमाद्वह्निकार्याद्वह्नेरनुमितिर्जायते न तथा शब्दस्य कार्यमर्थप्रत्ययो येन तत्प्रत्ययादेव तद्गता शक्तिरनुमिता भवेत्, किन्तु यदा शाब्दबोधस्य सहकारिसमवधानं जायते तदैव शाब्दबोधो जायते, अत एव च सहकारिसमवधानासमवधानाभ्यां शाब्दबोधस्योपपत्त्यनुपपत्ती संगच्छेते। एवञ्च शब्दे पदार्थान्तररूपाया वाच्यवाचकभावात्मिकायाः शक्तेरस्वीकारेऽपि न कश्चिद् दोष आपद्यते।

किञ्च भवद्भिरुक्तं सङ्केतज्ञानबलादेव शक्तेर्ज्ञानं जायत इति। किन्तु तत्र सङ्केतज्ञानबलाच्छक्तेर्ज्ञानापेक्षया सङ्केतज्ञानस्य शाब्दबोधजनकत्वेऽतीवलाघवं भवत्येव किं नित्यसम्बन्धरूपायाः शक्तेः स्वीकारेण। यद्यपि सङ्केतः प्रायेण पुरुषेच्छाधीनो भवति; पुरुषेच्छायाश्च स्वातन्त्र्यादयमेव वाचकोऽयमेवार्थो वाच्य इति नियमो न स्यात्, अतिरिक्तायाः शक्तेः स्वीकारे तु तादृशो नियम उपपद्यते, अतश्च तादृशनियमनिर्वाहार्थं शक्तिः कल्पनीया भवत्येव। परञ्च विचार्यताम्—शक्त्यभावे च "शब्दस्यैव वाचकत्वे योग्यता अर्थस्य च वाच्यत्वे योग्यता" इति स्वीकारे वाचकशब्दादेव तदर्थप्रमीतिर्जायत एव, नहि वाचकत्वयोग्यतायां शक्तेरावश्यकताऽस्ति। गकारोत्तरवर्त्योकाररूपानुपूर्वीविशिष्टात् "गो" शब्दाद्गोः प्रत्ययो भवेदेव।

किञ्च यदि शब्दस्य वाचकत्वयोग्यतायां शक्तिरपेक्षणीया भवत्येवेत्युच्यते तदा तु शक्त्यधीनमेव वाचकत्वम्। एवञ्च वाचकत्वं स्वाभाविकमिति यद्भवद्भिरुच्यते तन्न मनोरमम्। अस्माभिस्तु वाचकत्वनियामकत्वेन शक्तिरेव स्वीक्रियते, सा शक्तिः किंरूपा, सा त्विदानीं न विचार्यते, तद्विवेचनन्तूपरिष्टात् कृतमेव। यथा सांख्यैः कारणे कार्यं सदित्युच्यते न तथा भवद्भिरिदानीं स्वीक्रियते तत्स्वीकारेऽपि भवदभिप्रेता शक्तिर्न सिध्यति। अतश्च यत्रानुपूर्वीविशिष्टाच्छब्दादर्थप्रत्ययो जायते तत्रार्थप्रत्यये पदार्थोपस्थितिरावश्यकतां भजत एव, तदुपस्थितौ च शक्तिज्ञानस्याप्युपयोगिता सम्भवत्येव। सा शक्तिर्यदि सङ्केतग्रहबलादेव ज्ञाता स्यात् तदा किं शक्तेः स्वीकारेण।

अथ यथा धूमाग्न्योरविनाभावं व्याप्तिरूपं सम्बन्धं विना केवलाद् धूमाद् धूमज्ञानाद्वा वह्नेर्ज्ञानं न जायते, किन्तु व्याप्तिविशिष्टादेव धूमात् तद्विशिष्टधूमज्ञानाद्वा, तथैव शब्दार्थयोरपि वाच्यवाचकभावरूपे सम्बन्धेऽज्ञाते न

शब्दमात्रादेवार्थप्रत्ययो जायते। अत एव च भ्रान्तपुरुषोच्चारितादन्यतो वा शब्दान्न जायते शाब्दबोधः। तत्कस्य हेतोः? यस्मिच्छब्दे शक्तिरूपः सम्बन्धो ज्ञात एवास्ति, तच्छब्दादेवार्थप्रत्ययो जायत इति नियमस्य जागरूकत्वादेव न तथाशब्दात्तथाप्रत्ययः, तथापि यद्भवद्भिरुक्तं धूमाग्न्योरविनाभावरूपसम्बन्धबलादेव धूमस्य ज्ञापकत्वं सिध्यतीति, किन्त्वेतद्दृष्टान्तेन भवदभिप्रेतं शब्दस्य स्वाभाविकं वाचकत्वमिदानीमपि न सिध्यत्येव। यतो हि यदि शब्दस्य वाचकत्वं स्वाभाविकं स्यात्तदा शक्तिज्ञानस्य काऽऽवश्यकता स्यात्। तथा च दृष्टान्तदार्ष्टान्तिकबलेनापि भवदभिप्रेताऽतिरिक्ता शक्तिर्न सिध्यति। यद्यपि सङ्केतमात्रं स्वीकृत्य तस्याः शक्तेरस्वीकारेऽपभ्रंशध्वन्यात्मकशब्दानां वर्णात्मकसच्छब्दैः सहाभिन्नत्वेन "शब्दादर्थं वयं प्रतिपद्यामहे" इति व्यवहारो यो भवति, स न स्यात्। तत्स्वीकारेऽपि "शक्तेरर्थं प्रतिपद्यामहे" इत्येव व्यवहारः स्यादिति तु नाशङ्कनीयम्, यतो हि धूमस्याविनाभावरूपः सम्बन्धः सम्बन्धिनं धूममाश्रित्यैवानुमितावुपयुज्यते, नहि धूममनुयोगिनं परित्यज्य "व्याप्त्या वह्निमनुमिमीमहे" इति व्यवहारो जायते। अतश्चातिरिक्ता शक्तिर्निर्वहत्यैवेति।

**परञ्चेदमपि न मनोज्ञम्**—साङ्केतिकशब्दादेवार्थप्रत्ययो भवतीति व्यवहारबलाच्छब्दस्य सङ्केतग्रहबलादेवार्थप्रत्यायकत्वे सिद्धे ध्वनितं भवति "सङ्केतग्रह एव शाब्दबोधोपयोगी नान्यः कश्चित् शक्तिरूपः सम्बन्धः" इति। तत्र यदि वैयाकरणैर्यथा धूमस्य ज्ञापकत्वं व्याप्तिज्ञानसापेक्षं तथैव वाचकत्वस्यापि सङ्केतग्रहसापेक्षत्वेऽपि न तत्र स्वाभाविकत्वं व्याहन्यत इत्युच्येत, तर्हि तदपि न समीचीनम्। यतो हि धूमादेः प्रत्यायकत्वं व्याप्तिज्ञानसापेक्षमतो न स्वाभाविकमिति यथा सिध्यति, तथैव शब्दस्य वाचकत्वं सङ्केतग्रहसापेक्षं न स्वाभाविकमित्येव सिध्येत्। यद्यपि शब्दः प्रत्यायको भवति तत्तु प्रत्ययं दृष्ट्वाऽवगच्छति, नहि शब्दश्रवणमात्रेण प्रत्ययो जायते, यावत्कृत्वः श्रुतेन शब्देन "इयं संज्ञा, अयं संज्ञी" इत्यवगम्यते तावत्कृत्वस्तेन श्रुतेन शब्देनार्थावगम इति तावत्कालमेव सङ्केतोपयोगः, एवञ्च सङ्केतस्योपयोगित्वेऽपि वाच्यवाचकभावरूपसम्बन्धस्यापलापो न जायत एव, परञ्चेदमपि न समीचीनम्, यतो हि संज्ञासंज्ञिसम्बन्ध एव सङ्केतः, तज्ज्ञानादेव पदार्थोपस्थितिद्वारा शाब्दबोधो जायते। तादृशसम्बन्धं विना न कस्यचिच्छब्दस्य प्रत्यायकत्वमवगतं भवति, तथा च प्रत्यायकत्वस्यास्वाभाविकत्वात् किं कृत्वा स्वाभाविकी शक्तिः सिध्येत्। अथ वैयाकरणमते इतरेतराऽऽध्यासरूपत्वं तादात्म्ये स्वीकृतम्, इतरेतराऽऽध्यासस्तु ज्ञानमेव। एवञ्च तादात्म्यं यदि ज्ञानरूपं स्यात् तर्हि तादात्म्यस्यात्मवृत्तिरेव स्यात्, आत्मवृत्तिः सङ्केतःशब्दार्थयोः सम्बन्ध इति तु बृहस्पतिसहस्रेणापि वक्तुं न शक्यम्, अतश्चातिरिक्ता स्वाभाविकी शक्तिरवश्यमेवाङ्गीकरणीया भवत्येवेति, किन्त्विदमपि न मनोरमम्, सङ्केतो ज्ञानरूपो भवतु नाम, भवतु नाम इच्छारूपः, भवतु नाम वा तस्यात्मवृत्तित्वम्, तथापि तस्य शब्दार्थविषयकत्वादेव सम्बन्धः संगच्छते। तथापि योऽर्थः स शब्दः, यः शब्दः सोऽर्थः इति सङ्केतात्मके ज्ञाने शब्दार्थयोर्विषयतया सत्त्वेनोभयोर्ज्ञानरूप एव सम्बन्धो न तु शक्तिरूपः। यद्यपि वैयाकरणमते "सर्वे सर्वार्थवाचकाः" इत्युक्तं वर्तते तथापि केनचिदर्थेनैव कश्चिद् व्यवहारो जायते तत्र यदि सङ्केतमात्रस्य स्वीकारो भवेत् तदा तु सर्वे सर्वार्थवाचका इति व्याहन्येत। अतिरिक्तायाः शक्तेः स्वीकारे तु सर्वेषामेवार्थानां शब्दे शक्तिवर्तते। अतश्च तस्य सर्वार्थवाचकत्वं सिध्यति। विशेषेणार्थप्रत्ययस्तु सङ्केतग्रहादेव भवति, इतोऽपि शक्तिरतिरिक्ताऽङ्गीकरणीया भवति। परञ्च तत्रैवास्माभिः परिपृच्छ्यते भवन्मते सर्वार्थवाचकत्वनियामिका या शक्तिर्वर्तते सा शब्दाद्भिन्नाऽभिन्ना वा? शब्दशक्त्योर्भिन्नत्वं तु नहि केनचित् प्रमाणेनावगम्यते, अभिन्नत्वपक्षे तु यः शब्दः सैव शक्तिः, या शक्तिः स एव शब्द इत्येव व्यवहारः स्यात्, किन्तु लोके एतादृशो व्यवहारो न जायत एव। यद्यपि शब्दस्य सर्वार्थवाचकत्वादेव शब्दश्रवणानन्तरं किमस्य वाच्यमिति जिज्ञासा जायते, सा च जिज्ञासा सङ्केतग्रहबलादेव निवर्तते। यदि शब्दस्यैकार्थवाचकत्वमेव स्यात्तर्हि कुतो जिज्ञासा तत्र प्रवर्तेत, अतश्चातिरिक्तत्वेनावश्यमेव शक्तिरङ्गीकरणीया भवतीति। परञ्च तन्न युक्तम्, यतो हि शब्दश्रवणानन्तरं या जिज्ञासा जायते, सा किं कृत्वा? किं शब्दस्य सर्वार्थवाचकत्वप्रयुक्ता? किं वाऽन्यस्मादेव कारणात्? नहि सा सर्वार्थवाचकत्वप्रयुक्ता, शक्तिप्रयुक्ता वा भवितुमर्हति। किन्त्वानुपूर्वीविशिष्टशब्दप्रयुक्तैव सा जायत इति। तथाहि—गकारोत्तरवर्त्योत्वरूपानुपूर्वीविशिष्टाद् गोशब्दादर्थप्रत्ययकाले "कस्यार्थस्येदं पदं वाचकम्" इति जिज्ञासा जायते; अत एव नानार्थकहर्य्यादिपदस्थले तत्प्रतिपाद्यानां सर्वेषामेवार्थानामुपस्थितौ सत्यां तात्पर्यवशादेव कस्यचिदर्थस्यैव बोधो

जायते। एवं "सैन्धवमानय" इति व्यवहारकाले सैन्धवपदेन सहैव लवणस्याश्वस्य चोपस्थितौ सत्यां भोजनप्रसङ्गे लवणस्य यात्राप्रसङ्गेऽश्वस्य च तात्पर्यवशाद् बोधो जायते। यद्यपि सङ्केतग्रहस्यार्थप्रत्यायकत्वे म्लेच्छसङ्केतितशब्दादप्यर्थबोधे बाधकाभावेन "यस्मिन्नर्थे यं शब्दमार्याः प्रयुञ्जते स एवार्थः, न तु म्लेच्छजनप्रसिद्धः" इति वैयाकरणसिद्धान्तो व्याहन्येत, अतश्च सङ्केतो न शाब्दबोधोपयोगीति सिध्येत्येव,

तथापि म्लेच्छशब्दात्तदर्थप्रत्ययो न भवत्यार्याणामित्यत्र किं विनिगमकम्? यदि म्लेच्छशब्दादार्याणाम्, आर्यशब्दाच्च म्लेच्छानामर्थप्रत्ययो न भवति, तदा तत्र काचिद् बाधिका प्रतीतिरेवावश्यमेवावगन्तव्या भवेत्। वयं तु ब्रूमः—आर्यदेशेऽपि म्लेच्छशब्दादर्थप्रत्ययो भवत्येव। यथा "यवमयश्चरुर्भवति" इत्यत्र यवपदस्य म्लेच्छानां कङ्गौ आर्याणां तु दीर्घशूकविशेषे शक्तिर्वर्तते। तत्र च कोऽर्थः समीचीन इति सत्यां जिज्ञासायां "यदान्या ओषधयो म्लायन्तेऽथैते मोदमानास्तिष्ठन्ति" "वसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः" इति श्रुतिस्मृतिवाक्यविशेषाद् यवपदस्य दीर्घशूक एव शक्तिः निर्णीयते। एवमाऽऽर्यशब्दादपि म्लेच्छानामर्थप्रत्ययो जायत एव, किन्तु बाधकप्रत्ययबलात् सन्देहबलाच्च म्लेच्छैः सोऽर्थः परित्यज्यते। अत एव शावरभाष्ये राज्यपदमान्ध्रप्रसिद्धेऽर्थे वर्णितवन्तः। अतश्च सर्वत्रैव सङ्केतग्रहबलाच्छाब्दबोधोत्पत्तिसम्भवात् किमर्थमतिरिक्ताः शक्तिः स्वीकरणीया स्यादित्युक्तं सङ्गच्छते। यद्यपि वैयाकरणैः पुरुषभेदेन नानाविधः सङ्केतः स्वीक्रियते। अत एवैकेनैव शब्देन कस्मिंश्चिद्ग्रन्थे कस्यचिदर्थस्य प्रत्ययो भवति यथा गुणशब्दात् "रूपादिचतुर्विंशतिगुणाः" इति नैयायिकाः, "सत्वरजस्तमांसि" इति साङ्ख्याचार्याः, "ओजप्रसादमाधुर्याणि" इत्यालङ्कारिकाः, "रज्जुः" इति व्यावहारिकाः, "शौर्यादयः" इति राजनीतिज्ञाश्चामनन्ति। अतश्च सङ्केतग्रहबलाद्यद्यपि तत्र तत्र कस्यचिदेवार्थस्य बोधो जायते, तथापि पूर्वोक्तानां सर्वेषामर्थानां गुणशब्दे वाचकत्वं नास्तीति वक्तुं पण्डितरूपेणापि न शक्यम्। अतश्च तत्रापि तत्तदर्थवाचकत्वं यद्गुणशब्दे वर्तते तन्नियामकत्वेनातिरिक्ता शक्तिरवश्यमेव स्वीकरणीयेति। तन्न समीचीनम्, पाणिनीयव्याकरणे गुणशब्दादेकारौकाराकाराणामेव बोधो जायते। तस्मिन् बोधे तु पाणिनिसङ्केतः एव कारणम्। वैशेषिकदर्शने तु कणादसङ्केतिततच्छब्दाच्चतुर्विंशतिगुणानामेव बोधः। तत्र च कणादसङ्केत एव कारणम्। एवञ्च तत्तत्सङ्केतग्रहबलादेव तत्तदर्थप्रतीत्युत्पत्तिसम्भवात् किमतिरिक्तायाः शक्तेः कल्पनया। अथ सङ्केतस्य कारणत्वे स्वीकृतेऽप्यकृतशब्दशक्तिकल्पना उपयुज्यत एव। तथाहि सङ्केतो न्यायमते द्विविधो भवति, ईश्वरसङ्केत आधुनिकसङ्केतश्चेति। तत्र चाधुनिकसङ्केतः परिभाषा, तया चार्थबोधकं पदं पारिभाषिकम्, तद्बोध्योऽर्थः परिभाष्यः परिभाषितो वा, यथा पाणिनीयसङ्केतितनदीवृद्ध्यादिपदमिति। तथा च यथा लोके केनचित् सङ्केतितेन शब्देनार्थबोधो जायते ततो यस्य बोधो जायते सोऽपि पुरुषः स्वीयसङ्केतितेन शब्देनान्यं पुरुषं बोधयति, एवमन्योऽपि स्वीयसङ्केतितेन शब्देन परं पुरुषं बोधयत्येव। तथैव योऽपीश्वरो येन सङ्केतितेन शब्देन पुरुषविशेषं बोधयामास। सोऽप्यवश्यमेव केनचिदन्येन सङ्केतितेन शब्देनार्थमवगत्य परमृष्यादिकं बोधयामास। एवमेव रीत्या सङ्केतस्य नानाविधत्वात् कोऽपि स्वाभाविक एकः सम्बन्धः शब्दार्थयोरवश्यमेवाभ्युपगन्तव्य इति। परन्तु इदमपि न समीचीनम्, यः खलु कर्तुमकर्तुमन्यथाकर्तुं समर्थोऽचिन्त्यशक्तिः सर्वान्तर्यामी सर्वेषां जन्यवस्तूनां कर्त्ता सर्वप्रथमं वेदस्योच्चारयिता जीवगतधर्माधर्मयोरधिष्ठाता स एवास्माकं परमात्मपदवाच्य ईश्वरः। तेनैव च प्रथमं सङ्केतः कृतः। अतश्च नहि तत्रापि सङ्केतान्तरमपेक्ष्यते। एवं पाणिन्यादिसङ्केतिता अपि शब्दा न संकेतान्तरमपेक्षन्ते। अतश्च संकेत एव शक्तिः सैव शब्दार्थयोः सम्बन्ध इति सर्वं चतुरस्रम्।

शक्तिरिव लक्षणाऽपि वृत्त्यन्तरम्। सा च त्रिविधा जहत्स्वार्था, अजहत्स्वार्था; जहदजहत्स्वार्था चेति। शक्यस्योपस्थितस्यार्थस्य यः सम्बन्धः सैव लक्षणोच्यते। उक्तञ्च मुक्तावल्याम्—"शक्यसम्बन्धरूपा लक्षणेति"। तत्र "गङ्गायां घोषः" इत्यत्र शैत्यपावनत्वादिविशिष्टतीरवृत्तिर्घोषः "इत्याकारकबोधोपपत्तये गङ्गापदस्यैव या शैत्यपावनत्वादिविशिष्टे तीरे लक्षणा भवति सा जहत्स्वार्था, गङ्गापदशक्यस्य प्रवाहरूपस्यार्थस्य सर्वथैव परित्यागात्। एवं "विषं भुङ्क्ष्व" इति वाक्यस्थलेऽपि भुज्धातोः शत्रुगृहभोजननिवृत्तौ जहत्स्वार्थैव लक्षणा जायते। "काकेभ्यो दधि रक्ष्यताम्" इति वाक्यस्थले शक्यार्थस्य काकपदबोध्यस्य काकस्य तदन्यस्य बिडालादेश्च दध्युपघातकत्वेन काकबिडालादीनां बोधो जायते तत्र काकपदशक्यतावच्छेदककाकत्वरूपस्वार्थपरित्यागादजहत्स्वार्थैव। वस्तुतस्तु

तत्रापि जहदजहल्लक्षणैव वर्तते। शक्यतावच्छेदककाकत्वरूपार्थस्य परित्यागात् काकरूपार्थस्यापरित्यागाच्च दध्युपघातकत्वेन सर्वेषां दध्युपघातकानां काकमार्जारादीनां च बोधात्। "तत्त्वमसि" इति वाक्यस्थले तत्पदस्य सर्वज्ञत्वादिविशिष्टचैतन्यार्थकत्वात् "त्वम्" पदस्याल्पज्ञत्वादिविशिष्टचैतन्यार्थकत्वाच्च न तदर्थबोधकयोः पदयोः परस्परं सामानाधिकरण्यं स्यादिति मनसि निधाय वेदान्तिभिश्च विशिष्टांशपरित्यागेन विशेष्यमात्रे चैतन्यरूपे लक्षणा स्वीकृता सैव "**भागलक्षणा**" इत्युच्यते। अथ "**लक्षणा शक्यसम्बन्धरूपा**" भवति। शक्तिस्तु पदे पदार्थे वाऽवतिष्ठते। वाक्यार्थस्य तु न कुत्रापि लक्षणा संभवति, तस्य च शक्यत्वाभावात्। अत एव पदबोध्य-सम्बन्धरूपैवात्र लक्षणा स्वीकर्तव्या। पदबोध्यत्वं वाक्यार्थस्यापि संभवति। अत एव च—

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्॥"

इत्यर्थवादवाक्यानां प्राशस्त्ये लक्षणा सम्भवति। सा च न्यायनये पदस्यैव, मीमांसकवेदान्तिनये वाक्यस्यै-वेत्यनयोर्विशेषः। शक्यार्थस्य गुणरूपं यत्सादृश्यं तद्रूपः सम्बन्धो गौणी लक्षणेति वैयाकरणाः। "**सिंहो माणवकः, गौर्वाहीकः**" इत्यत्र क्रौर्य्यादिरूपसादृश्यसम्बन्धेन सिंहपदस्य सिंहसादृश्यविशिष्टे, जाड्यमान्द्यादिरूपतत्सम्बन्धेन गोपदस्य गोसादृश्यविशिष्टे लक्षणया "**सिंहसदृशो माणवकः, गोसदृशो वाहीकः**" इति बोधो जायते। शक्यार्थस्य परम्परासम्बन्धो लक्षितलक्षणेति नैयायिकाः। "**द्विरेफो रौति**" इत्यत्र स्वशक्यघटितपदवाच्यत्व-सम्बन्धेन द्विरेफपदस्य भ्रमरे लक्षणया "**भ्रमरो रौति**" इति बोधो जायते। स्वं द्विरेफपदं तस्य शक्यं रेफद्वयं तद्घटितं पदं भ्रमरपदं तद्वाच्यत्वं भ्रमर इति परम्परासम्बन्धश्चात्र निर्वहति। "**गम्भीरायां नद्यां घोषः**" इत्यत्र नदीपदस्यैव गम्भीरनदीतीरे लक्षणां स्वीकृत्य गम्भीरपदं तात्पर्यग्राहकमिति न्यायविदः। स्वबोध्यसम्बन्धस्य लक्षणात्वं मन्यमानैर्मीमांसकैरुक्तस्थले स्वं "**गम्भीरायां नद्याम्**" इति वाक्यं तद्बोध्योऽर्थो गम्भीरनदीवृत्तित्व-रूपस्तस्य स्वबोधकशब्दप्रतिपाद्यत्वसम्बन्धेन गम्भीरनदीतीरवृत्तित्वरूपेऽर्थे सत्त्वेन "**गम्भीरायां नद्याम्**" इति वाक्यस्योक्तार्थे लाक्षणिकत्वात्तद्वाक्यात् "**गम्भीरनदीतीरवृत्तिर्घोषः**" इति बोधो जायते। एतन्मते च "**अनन्य-लभ्यः शब्दार्थः**" इति वचनप्रामाण्याद्गम्भीरपदस्य गाम्भीर्यरूपार्थपरकत्वे सम्भवे तत्परित्यागस्यानौचित्यात्तत्पदं तात्पर्यग्राहकमिति कथनं निर्युक्तिकमेवास्ति।

**बच्चाझामहोदयास्तु** गीतामधुसूदनीव्याख्यायां वेदान्तदर्शनानुसारेण गम्भीरायां नद्यां घोष इत्यत्र वाक्यार्थ-स्यैव लक्षणां स्वीकृत्य गम्भीरपदं तात्पर्यग्राहकं नेति वर्णितवन्तः। अन्यत्रास्तु यथा तथा, तथापि तैरपि न्यायरीत्या गम्भीरपदस्य तात्पर्यग्राहकत्वमेव स्वीकृतम्, अन्यथा समासस्थलेऽपि "राजपुरुषः" इत्यादौ लक्षणयैव निर्वाहाद् राजपदस्य राजसम्बन्धिनि लक्षणा निर्युक्तिका स्यात्। यद्यपि "निपातातिरिक्तनामार्थयोः क्रियातादृश-प्रातिपदिकार्थयोश्च भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वमिति नियमाङ्गीकारे "गम्भीरायां नद्यां घोष" इत्यत्रैव गम्भीरनदीतीररूपार्थस्याधेयतासम्बन्धेन घोषेऽनन्वयात्; उक्तवाक्यात् तादृशसम्बन्धेन शाब्दबोध एव न संगच्छते, इति वक्तुं समुचितम्, तथापि नामार्थद्वयस्य भेदेनान्वयबोधस्यैवाव्युत्पन्नत्वमित्युक्तनियमानुसारेणो-पवर्णितमस्ति। अत्र तु गम्भीरनदीतीरस्य वाक्यार्थत्वेऽपि नामार्थत्वाभावात् स च नियमोऽत्र स्थले नैव संङ्घटते, अतश्च तत्राप्युक्तलक्षणास्वीकारे न कोऽपि दोषः। अनया रीत्या च शक्यार्थसम्बन्धत्वं यल्लक्षणाया लक्षणमुररीकृतं तस्य सर्वासु लक्षणासु संभवेन लक्षणायास्त्रैविध्यमपि सङ्गच्छते। अपराऽपि लक्षणा द्विविधा भवति (१) निरूढलक्षणा (२) आधुनिकलक्षणा च। आधुनिकलक्षणैव स्वारसिकलक्षणेत्युच्यते। अनादि-प्रयोगपरम्परयाऽनुमितानादितात्पर्यवती लक्षणा निरूढलक्षणा, "आयुर्वै घृतम्" इत्यत्र आयुःपदस्यायुर्जनके लाक्षणिकत्वात् तत्र निरूढलक्षणैव। आधुनिकतात्पर्यवती लक्षणा तु स्वारसिकलक्षणा, यथा गुणपदस्याकारै-कारौकारेषु लाक्षणिकत्वाद्गुणपदं स्वारसिकलाक्षणिकं पारिभाषिकं वा। उक्तञ्च शक्तिवादे—"आधुनिकसङ्केतः परिभाषा तया चार्थबोधकं पदं पारिभाषिकं यथा पाणिनिसङ्केतितनदीवृद्ध्यादिपदमिति। व्यञ्जनावृत्तिस्तु आलङ्कारिकैरेव स्वीक्रियते। तत्र व्यञ्जना द्विविधा भवति, शब्दशक्तिमूला, अर्थशक्तिमूला च। शब्दशक्तिमूलाऽपि द्विविधा, अभिधामूला, लक्षणामूला चेति।

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः। ममाऽपि जन्म तत्रैव यत्र भूयाद्गतो भवान् ॥

इति कस्याश्चित् कान्तायाः कान्तं प्रति विदेशगमनकाले प्रत्युक्तिः। तत्र च तव गमने मम मरणं भविष्यति "इत्यात्मकः यो वाक्यार्थबोधः संजायते स तु व्यञ्जनावृत्त्यैव। शब्दकर्मणां विरम्यव्यापाराभावाच्छक्यलक्ष्यार्थान्वयबोधपर्यवसाने यस्तावद्व्यङ्ग्यार्थबोधो भवति स तु व्यञ्जनावृत्त्यैव। अभिधामूला व्यञ्जना तु "वयस्था नागरासङ्गादङ्गानां हन्ति वेदनाम्" इत्यत्र शरीरगतवेदनाहननप्रयोजकत्वं शुण्ठिसहितस्य हरीतकीरूपौषधिविशेषस्य चूर्णे उपदर्शितम्, तदर्थबोधस्तु अभिधामूलया व्यञ्जनयैव जायते "गङ्गायां घोषः" इत्यत्र गङ्गापदस्य तीरमात्र एव लाक्षणिकत्वम्। अतश्च तत्र शैत्यपावनत्वादिरूपार्थस्य यस्तावत् बोधो जायते स तु लक्षणामूलयैव व्यञ्जनयेति। तन्न समीचीनम्, यतो हि "गच्छ गच्छसि" इत्यादिवाक्यस्यानुमानेनैव तादृशार्थबोधसंभवात्, तद्बोधार्थमर्थशक्तिमूलाया व्यञ्जनाया नैरर्थक्यमेव। तत्रानुमानाकारस्तु "कान्तेयं मम गमनोत्तरकालवृत्तिमरणधर्मवती, विलक्षणवाक्यप्रयोगकर्तृत्वात्, यन्नैवं तन्नैवं, यथा मदीयभ्रातृजाया। एवमभिधामूलाया व्यञ्जनाया अभिधावृत्त्यैव बोधसम्भवात् तस्याप्यभिधायामेवान्तर्भावः।

गङ्गायां घोष इत्यत्र तु गङ्गापदस्य शैत्यपावनत्वादिविशिष्टे तीर एव लाक्षणिकत्वात्, न शैत्यपावनत्वादिविशिष्टरूपार्थस्य बोधार्थं लक्षणामूला व्यञ्जनाऽऽवश्यकी। अत एव च व्यञ्जनास्थलेऽपि सर्वत्रैव "शृणोमि शाब्दयामि" इत्येवानुव्यवसायो जायते, नहि तत्र तत्र "व्यनज्मि" इत्यनुव्यवसायो भवति येन तत्रापि व्यञ्जनावृत्तेरावश्यकत्वं स्यात्, अतश्च व्यङ्ग्यार्थबोधः क्वचिल्लक्षणया क्वचिच्छक्त्या क्वचिच्च मानस एवेति ध्येयम्। अथ लक्षणाबीजत्वेन कुत्रचित्स्थले तात्पर्यानुपपत्तिः कुत्रचिच्च स्थले अन्वयानुपपत्तिरुपवर्णिताऽस्ति। तत्र **मीमांसकाः**—अन्वयानुपपत्तिरेव लक्षणाबीजम्, तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्वीकारे वेदे तात्पर्याभावाद्वेदार्थबोधो न स्यात्। **किञ्च** "यष्टीः प्रवेशय" इत्यत्रापि प्रवेशपदस्य यष्टिभोजनकप्रवेशपरत्वासंभवात् तत्राप्यन्वयानुपपत्तिरेव लक्षणाबीजमिति वदन्ति। तन्न, सर्वत्र तात्पर्यानुपपत्तिरेव लक्षणाबीजम्, अन्यथा "काकेभ्यो दधि रक्ष्यताम्" इत्यत्र काकपदशक्यार्थस्य दधिरक्षणेन साकमन्वयसम्भवेऽपि कथं तत्पदस्य दध्युपघातके काकमार्जारादौ लक्षणा स्वीकृता विद्वद्भिरिति। **किञ्च** "यष्टीः प्रवेशय" इत्यत्रापि यष्टिपदशक्यार्थस्य दण्डस्य गृहप्रवेशान्वयसंभवात् कथं तत्र लक्षणा स्वीक्रियते, तात्पर्यानुपपत्तेः लक्षणाबीजत्वे तु भोजनतात्पर्येण यष्टिपदस्य यष्टिधरे लक्षणा संजायते, अतश्च सर्वत्रैव तात्पर्यानुपपत्तिरेव लक्षणाबीजं स्वीकर्तव्यम्। **किञ्च** वेदस्थलेऽपि तात्पर्यानुपपत्तिरेव लक्षणाबीजम्—वक्तुरिच्छा तात्पर्यम्, सा चेच्छा परमेश्वरस्य, स चैव जगतः कर्ता, वेदस्य प्रथमोच्चारयिता, जीवगतधर्माधर्मयोरधिष्ठाता, कर्तुमकर्तुमन्यथाकर्तुं समर्थोऽघटितघटनापटीयस्या मायया परिगृहीतविविधविग्रहोऽस्ति, तदन्य एतादृशः को यस्य तात्पर्यं वेदे स्वीकुर्यात्। अतश्च वेदेऽपि भगवतः परमेश्वरस्य तात्पर्यमेव सर्वत्राङ्गीकृत्य तत्रापि तात्पर्यानुपपत्तिरेव लक्षणाबीजं स्वीकरणीयम्। परञ्च प्राचां मते लाक्षणिकं पदं न शाब्दबोधजनकं शक्तमेव पदं तद्बोधजनकम्। उक्तञ्च मुक्तावल्याम्—"लाक्षणिकं पदं नानुभाविकम्" इति। तत्र शक्तं पदं चतुर्विधम्—"रूढम्, यौगिकम्, योगरूढम्, यौगिकरूढञ्च। तत्र समुदायशक्त्याऽर्थबोधकं रूढम्, यथा गवादिपदम्। अवयवशक्त्याऽर्थबोधकं यौगिकम्, यथा पाचकादि पदम्। समुदायशक्त्या अवयवशक्त्या चैकार्थबोधकं योगरूढम्, यथा पङ्कजादि पदम्। समुदायशक्त्याऽवयवशक्त्या च भिन्नार्थबोधकं यौगिकरूढम्, यथोद्भिदादिपदम्। एवञ्च लाक्षणिकपदस्थले लक्षणाद्वारा पदार्थोपस्थितिमात्रमेव भवति, शक्तेन पदेन तु पदार्थोपस्थितौ सत्यामेव तत्पदं शाब्दबोधोपयोगि भवति। तन्मत इतरान्वितस्वार्थविषयकशाब्दबोधं प्रत्यपि स्वपदग्राह्यशक्तपदमेव कारणं न तु लाक्षणिकं पदम्। **अत्र नव्याः**—लाक्षणिकपदस्याननुभावकत्वे "धूमात्" इति वाक्याच्छाब्दबोधो न स्यात्, नहि तत्र किमपि शक्तं पदं वर्तते, धूमादित्यत्र धूमपदस्य धूमज्ञाने पञ्चमीविभक्तेश्च ज्ञानविषयत्वे ज्ञाप्यत्वे लक्षणा, धूमज्ञानस्य जन्यत्वसम्बन्धेन ज्ञानेऽन्वयात् "धूमज्ञानजन्यज्ञानविषयत्वम्" इत्यर्थः संगच्छते। एवञ्चात्र सर्वस्यैवार्थस्य लक्ष्यार्थत्वेनाभिप्रेतत्वात् तच्छब्दाच्च शाब्दबोधोपपत्तये लाक्षणिकपदमप्यानुभाविकत्वेन स्वीकर्तव्यमिति वदन्ति।

**न्यायविदस्तु** द्विविधैव लक्षणा भवति, जहत्स्वार्थाऽजहत्स्वार्था च। लक्षितलक्षणाया अपि जहत्स्वार्थायामेवान्तर्भावात्साक्षात्परम्परया वा यः शक्यार्थसम्बन्धः सैव लक्षणेति नास्ति साऽतिरिक्ता येन लक्षणायास्त्रैविध्यं

स्यात्। "सोऽयं देवदत्तः, तत्त्वमसि" इति वाक्यस्थले शक्त्या तदादिपदाद्विशिष्टस्य पदार्थस्योपस्थितौ सत्यां परस्परमन्वयबोधेन विशिष्टांशस्य प्रमोषेण लक्षणां विनैव विशेष्यस्यान्वयबोधसम्भवाज्जहदजहल्लक्षणाऽपि नातिरिक्तत्वेनाङ्गीकृता भवति। गौणी अपि न लक्षणान्तरम्, तस्याश्च शक्यार्थसादृश्यात्मकसम्बन्धत्वेन "गौर्वाहीकः" इत्यादौ गवादिपदेन गोसादृश्यविशिष्टार्थोपस्थापकत्वादजहल्लक्षणायामेवान्तर्भावो बोध्यः। "गम्भीरायां नद्यां घोषः" इत्यादौ "गम्भीरनदीतीरवृत्तिर्घोषः" इत्यादिबोधोपपत्तये वाक्ये लक्षणामङ्गीकुर्वतां मीमांसकानां मते स्वबोध्यसम्बन्धत्वं लक्षणात्वमिति लक्षणाया लक्षणं नैव सङ्घटते। तथाहि—स्वबोध्यसम्बन्धत्वं किमितिपरिप्रश्ने यदि स्वजन्यबोधविषयत्वमित्युच्येत, तदा "गङ्गायां घोषः" इत्यत्र "गङ्गायाम्" इतिवाक्यस्यापि लाक्षणिकत्वं स्यात्, तत्र च स्वं "गङ्गायाम्" इतिवाक्यं तज्जन्यो बोधो "गङ्गातीरवृत्तिर्घोषः" इत्यात्मकः, तद्विषयो गङ्गा, तस्याः सम्बन्धस्य तीरे सत्त्वात्। इदञ्च गङ्गातीरत्वेन लक्षणामङ्गीकृत्योक्तम्। तत्र च गङ्गापदस्यैव लक्षणा सर्वानुमतसिद्धा। यदि यादृशानुपूर्व्यवच्छिन्नस्य लक्षकत्वं तादृशानुपूर्व्यवच्छिन्नज्ञाननिष्ठजनकतानिरूपितजन्यताशालिबोधविषयसम्बन्धत्वमेव तदुच्येत, तदा "गाछ, माछ" इत्याद्यपभ्रंशशब्दत्वावच्छिन्नविषयकज्ञानस्यापि शक्तिभ्रमसहकारेणार्थस्मारत्वात्तत्तच्छब्दानां लाक्षणिकत्वापत्त्या वृत्तिमत्त्वेन साधुत्वापत्तिः स्यात्। यदि तादृशापूर्व्यवच्छिन्ना या स्वनिष्ठाऽवच्छेदकता तन्निरूपिका या शक्तित्वावच्छिन्ना विषयित्वसम्बन्धावच्छिन्ना शक्तिनिष्ठाऽवच्छेदकता तन्निरूपिका या ज्ञाननिष्ठजनकता तन्निरूपितजन्यताशालिबोधविषयसम्बन्धत्वमेव तदिति स्वीक्रियेत, तदा वाक्येऽपि शक्त्यभावेन तस्यापि लाक्षणिकत्वानुपपत्तिरेव स्यात्। यदि शक्त्यभावेऽपि वाक्यस्येवापभ्रंशशब्दस्यापि लाक्षणिकत्वमिष्यत एवेत्युच्येत, तदा स्वजन्यशाब्दबोधविषयत्वमेव तदिति वक्तव्यं भवेत्। एवञ्च "गङ्गायां घोषः" इत्यत्र गङ्गापदस्यापि लाक्षणिकत्वं न सिध्येत् उक्तवाक्यात् "तीरवृत्तिर्घोषः" इति शाब्दबोधस्यैव जायमानत्वेन गङ्गायास्तादृशशाब्दविषयत्वाभावात्। इदञ्च तीरत्वेनैव लक्षणां स्वीकृत्योक्तम्। अतश्च शक्त्या स्वजन्यज्ञानविषयसम्बन्धत्वमेव तदिति वक्तव्यं भवेत्, अन्यथा समवायेन घटपदस्मारिताकाशरूपार्थस्य स्वजन्यज्ञानविषयेतिशब्देन धर्तुं शक्यत्वेन तत्सम्बन्धस्य स्वसमवेतपदबोध्यत्वात्मकस्य पटेऽपि सत्त्वेन घटपदेन पटस्यापि शाब्दबोधापत्तिः स्यात्। तथा च शक्त्या स्वजन्यज्ञानविषयसम्बन्धापेक्षया शक्यसम्बन्धस्य लक्षणात्वस्वीकारे महल्लाघवं भवतीति तदुपेक्षणीयम्। यद्यपि पदलक्षणावादिमते "गम्भीरायां नद्यां घोषः" इत्यादौ गम्भीरपदस्य तात्पर्यग्राहकत्वम्, वाक्यलक्षणावादिमते तदग्राहकत्वमिति वाक्यलक्षणावादिमत एव लाघवं भवति, तथापि शक्त्या स्वजन्यज्ञानविषयसम्बन्धस्य लक्षणात्वस्वीकारे "गम्भीरायां नद्यां घोषः" इत्यत्र "गम्भीरायां नद्याम्" इति सप्तम्यन्तपदद्वयघटितस्य वाक्यस्य गम्भीरनदीतीरलक्षकत्वेन तादृशतीराधेयताबोधकपदाभावाद्यथा "गम्भीरनदीतीरवृत्तिर्घोषः" इति शाब्दबोधानुपपत्तिस्तथैव नामार्थयोर्भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वनियमादाधेयतासम्बन्धेनापि "गम्भीरनदीतीरविशिष्टो घोषः" इति शाब्दबोधानुपपत्तिरेव स्यात्। यद्यपि गम्भीरनदीतीरस्य वाक्यार्थत्वेन न नामार्थत्वम्, तथापि परस्परसाकाङ्क्षपदसमूहस्यैव वाक्यत्वात्, तत्समूहत्वस्य च प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वनियमबलाद्वाक्यजन्यज्ञानेऽपि नामजन्यत्वस्य सत्त्वेन बाधकाभाव एवास्ति। किञ्च "गम्भीरायां नदी" इति सप्तमीशून्यभागस्य गम्भीरनदीतीरलक्षकत्वे "प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्" इति नियमादाधेयत्वस्य गम्भीरनदीतीरेऽन्वयबोधानुपपत्तिरेव स्यात्, नहि सप्तमीविभक्तेः प्रकृतिः "गम्भीरायां नदी" इति वाक्यम्। किञ्च "गम्भीरायां नद्याम्" इति सप्तम्यन्तभागस्य गम्भीरनदीतीरवृत्तित्वं लक्षणात्वस्वीकारे तादृशतीरवृत्तित्वे नामपदजन्यस्मृतिविषयत्वात्मकस्य नामार्थत्वस्य पूर्वोक्तयुक्त्या सत्त्वेन नामार्थयोर्भेदेन साक्षादन्वयबोधस्याव्युत्पन्नत्वनियमात्स्वरूपेणापि तादृशवृत्तित्वस्यापि लक्ष्यार्थस्य घोषे नान्वयबोधः स्यात्। किञ्च "गम्भीरायां नद्याम्" इति सप्तम्यन्तभागस्य गम्भीरनदीतीरवृत्तिलक्षकत्वस्वीकारेऽपि तादृशतीरवृत्तेरभेदसम्बन्धेन घोषेऽन्वयबोधो न भवत्येव; अभेदसंसर्गकशाब्दबोधे स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वस्य प्रयोजकत्वात् "गम्भीरायां नद्याम्" इति वाक्यस्य च कस्या अपि विभक्तेः प्रकृतित्वविरहात्। यद्यपि "राजपुरुषः" इत्यादिसमस्तवाक्यस्थले "राजसम्बन्ध्यभिन्नः पुरुषः" इत्यभेदसंसर्गकशाब्दबोधनिर्वाहाय स्वाव्यवहितपूर्ववर्त्तिपदत्वस्यापि तादृशशाब्दबोधप्रयोजकत्वस्वीकारस्यावश्यकत्वात्तत्र स्थलेऽभेदसंसर्गकशाब्दबोधानुपपत्तिः, "नीलघटरूपम्" इत्यत्र "नीलाभिन्नघटीयाभिन्नरूपम्" इति शाब्दबोधोपपत्तये स्वाव्यवहितपूर्ववर्त्तिशक्तत्वविशिष्टपदत्वस्य तादृशशाब्दबोधप्रयोजकत्वं स्वीकर्त्तुमप्यवश्यमेव, तथापि "घोषो गम्भीरायां नद्याम्" इति वाक्यादपि तादृशशाब्दबोधस्य

सर्वानुभवसिद्धत्वेन, तत्र स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वस्य स्वाव्यवहितपूर्ववर्त्तिपदत्वस्य चाभेदसंसर्गकशाब्दबोधप्रयोजकत्वेनाभिमतस्योक्तवाक्यस्थलेऽभावान्न तत्राभेदसंसर्गकशाब्दबोधोऽपि। अतश्च स्वबोध्यसम्बन्धत्वं लक्षणात्वमिति बालप्रलपितमेवेति वदन्ति।

प्रतिपक्षनिरासपूर्वकं स्वसिद्धान्तानुसारेण वृत्तिस्वरूपं तज्ज्ञानस्य शाब्दे परमोपयोगिताञ्चोपवर्ण्येदानीं तत्राकाङ्क्षादिज्ञानानि किं स्वरूपकाणि कथञ्चोपयोगितां लभन्त इति विचार्यते। तत्र शाब्दबोध आकाङ्क्षायोग्यतातात्पर्याणां ज्ञानमासत्तिश्च कारणं भवति। तत्र "येन पदेन विना यत्पदस्यान्वयाननुभावकत्वं तेन पदेन सह तस्याकाङ्क्षा" इति ग्रन्थेनाकाङ्क्षालक्षणमुक्तं मुक्तावलीकृद्भिः। "घटमानय" इत्यत्र घटं विनाऽम्पदस्य, अम्पदं विना नीधातोः, नीधातुं विना लोट्प्रत्ययस्याननुभावकत्वं घटनिष्ठं कर्मत्वम्, कर्मतानिरूपकमानयनम्, आनयनानुकूला कृतिश्चेत्याकारकशाब्दबोधाजनकत्वम्, तेन घटपदेन सहाम्पदस्य, अम्पदेन सह नीधातोः, नीधातुना सह लोट्प्रत्ययस्य पदविशिष्टपदत्वरूपाऽऽकाङ्क्षा पर्यवस्यति। पदवैशिष्ट्यञ्च पदे स्वाव्यवहितपूर्ववृत्तित्वस्वाव्यवहितोत्तरवृत्तित्वान्यतरसम्बन्धेन। अतश्च "घटः कर्मत्वमानयनं कृतिः" इति वाक्यान्न "घटनिष्ठकर्मतानिरूपकानयनानुकूला कृतिः" इति शाब्दबोधः। अम्पदे घटपदस्योक्तान्यतरसम्बन्धेन सत्त्वविरहान्नाम्पदे "घटनिष्ठं कर्मत्वम्" इति शाब्दबोधाननुभावकत्वं घटपदाभावप्रयुक्तम्। प्रयुक्तत्वञ्चात्र "कारणाभावात् कार्याभावः" इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। तत्राननुभावकत्वमाकाङ्क्षाघटकपदस्य परिचायकमात्रं न तु तत्स्वरूपान्तर्गतम्। तत्स्वरूपान्तर्गतत्वेऽपि वा तस्य स्वरूपतः (अज्ञाततया) शाब्दबोधोपयोगित्वं न तु तज्ज्ञानं कारणम्। तेनोक्तवाक्याच्छाब्दे जनिते न पुनः शाब्दबोधापत्तिरिति मन्तव्यम्। परञ्च एकपदेऽपरपदवत्त्वमेवाकाङ्क्षेति न युक्तम्। तथाहि पदवत्ता च स्वाव्यवहितपूर्ववृत्तित्वस्वाव्यवहितोत्तरवृत्तित्वान्यतरसम्बन्धेनोपवर्णिता प्राक्। तत्राव्यवधानांशस्य पदाव्यवधानरूपयाऽऽसत्यैव लाभात्, उत्तरपूर्ववृत्तित्वान्यतरस्य क्रियाकारकपदेष्वनुपयोगाच्चोक्ताकाङ्क्षाया विरहेऽपि 'चैत्रः पचति, पचति चैत्रः" इति वाक्यद्वयादपि समानाकारकशाब्दबोधो जायते। इदञ्च प्राचीनमतानुसारेण।

नव्यास्तु पदयोरव्यवधानमासत्तिरिति नैव स्वीकुर्वन्ति, किन्तु पदज्ञानयोरेवाव्यवधानमासत्तिः। एवञ्चाव्यवधानांशस्यासत्याऽचरितार्थत्वेऽपि क्रियाकारकपदज्ञानयोरव्यवधानेन शाब्दबोधनिर्वाहकस्य क्रियाकारकपदयोरव्यवधानस्यानियमेन न तत्र पौर्वापर्यरूपेऽव्यवधान आकाङ्क्षाज्ञानस्योपयोगः। अतश्च प्रकृतिप्रत्यययोरेवानुपूर्वीविशेषरूपाया आकाङ्क्षाया ज्ञानं शाब्दबोधे कारणमित्येव स्वीकार्यम्। एवञ्च "घटम्" इत्यत्राधेयतासम्बन्धावच्छिन्नघटनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठविशेष्यताशालिशाब्दबोधं प्रत्यव्यवहितोत्तरत्वसम्बन्धेन घटपदविशिष्टमम्पदमित्याकारकानुपूर्वीरूपाकाङ्क्षाज्ञानस्य, "आनय" इत्यत्रानुकूलत्वसम्बन्धावच्छिन्नानयननिष्ठप्रकारतानिरूपितकृतिनिष्ठविशेष्यताशालिबोधं प्रत्यव्यवहितोत्तरत्वसम्बन्धेनाङ्पूर्वकनीधातुविशिष्टलोट्प्रत्यय इत्याकारकानुपूर्वीरूपाकाङ्क्षाज्ञानस्य च कारणत्वं पर्यवस्यति। तथा चोक्तसम्बन्धेन "घटनिष्ठकर्मतानिरूपकानयनानुकूलकृतिः" इत्याकारकशाब्दत्वव्यापकं यद्घटनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठविशेष्यताकशाब्दत्वं तदवच्छिन्नं प्रति "घटम्" इत्याकारकानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानस्य कारणत्वात् "घटनिष्ठप्रकारतानिरूपितकर्मत्वनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितानयननिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपितकृतिनिष्ठविशेष्यताकशाब्दत्वावच्छिन्नं प्रत्यपि कारणत्वं सिध्यति, व्याप्यधर्मावच्छिन्नोत्पत्तौ व्यापकधर्मावच्छिन्नसामग्र्या अपेक्षितत्वात्। अतश्च व्याप्यधर्मावच्छिन्नं प्रति तादृशानुपूर्वीरूपाकाङ्क्षाज्ञानस्य पार्थक्येन कारणत्वं न स्वीक्रियत इति।

अथ "घटमानय" इत्यत्र "घटकर्मकानयनानुकूला कृतिः" इति शाब्दबोधोपपत्तये "द्वितीयान्तघटपदसमभिव्याहृताख्यातान्तनीधातुत्वम्" इत्याकारकसमभिव्याहाररूपाकाङ्क्षाज्ञानस्य कारणत्वं नैवास्ति, समभिव्याहारस्याकाङ्क्षात्वे कार्यकारणभावे गौरवं प्रसज्यते। तथाहि यत्र पर्यायान्तरवाचिनो राजपदस्य भूपदस्य च पञ्च-पञ्च शब्दा विद्यन्ते, शाब्दबोधस्त्वेकविध एव भवति। तत्र च समभिव्याहारज्ञानस्य कारणत्वपक्षे पञ्चाशत्सङ्ख्याकानि कारणानि, आनुपूर्वीज्ञानस्य कारणत्वपक्षे दशसङ्ख्याकानि कारणानि भवन्ति। तथाहि "राज्ञो भूः" इत्यादौ राजसम्बन्धप्रकारकभूविशेष्यकशाब्दं प्रति (१) "षष्ठ्यन्तराजपदसमभिव्याहृतस्वन्तभूपदत्वम्" इत्येवंरूपस्य

"राज्ञो भूः" इत्याकारकस्य ( २ ) षष्ठचन्तराजपदसमभिव्याहृतस्वन्तमहीपदत्वम्" इत्येवंरूपस्य "राज्ञो मही" इत्याकारकस्य, ( ३ ) षष्ठचन्तराजपदसमभिव्याहृतस्वन्तपृथ्वीपदत्वम् इत्येवंरूपस्य "राज्ञः पृथ्वी" इत्याकारकस्य, ( ४ ) षष्ठचन्तराजपदसमभिव्याहृतस्वन्तगोत्रापदत्वम्" इत्येवंरूपस्य "राज्ञो गोत्रा" इत्याकारकस्य, (५) षष्ठचन्तराजपदसमभिव्याहृतस्वन्तमेदिनीपदत्वम्" इत्येवंरूपस्य "राज्ञो मेदिनी" इत्याकारकस्य, ( ६ ) षष्ठचन्तनृपपदसमभिव्याहृतस्वन्तभूपदत्वम्" इत्येवंरूपस्य "नृपस्य भूः" इत्याकारकस्य, ( ७ ) षष्ठचन्तनृपपदसमभिव्याहृतस्वन्तमहीपदत्वम्" इत्येवंरूपस्य "नृपस्य मही" इत्याकारकस्य, ( ८ ) षष्ठचन्तनृपपदसमभिव्याहृतस्वन्तपृथ्वीपदत्वम्" इत्येवंरूपस्य "नृपस्य पृथ्वी" इत्याकारकस्य, ( ९ ) "षष्ठचन्तनृपपदसमभिव्याहृतगोत्रापदत्वम्" इत्येवंरूपस्य "नृपस्य गोत्रा" इत्याकारकस्य, ( १० ) "षष्ठचन्तनृपपदसमभिव्याहृतस्वन्तमेदिनीपदत्वम्" इत्येवंरूपस्य "नृपस्य मेदिनी" इत्याकारकस्य, ( ११ ) षष्ठचन्तभूपतिपदसमभिव्याहृतस्वन्तभूपदत्वम्" इत्येवंरूपस्य "भूपतेर्भूः" इत्याकारकस्य, ( १२ ) षष्ठचन्तभूपतिपदसमभिव्याहृतस्वन्तमहीपदत्वम्" इत्येवंरूपस्य "भूपतेर्मही" इत्याकारकस्य, षष्ठचन्तभूपतिपदसमभिव्याहृतस्वन्तपृथ्वीपदत्वम्" इत्येवंरूपस्य "भूपतेः पृथ्वी" इत्याकारकस्य, ( १४ ) षष्ठचन्तभूपतिपदसमभिव्याहृतगोत्रापदत्वम्" इत्येवंरूपस्य "भूपतेर्गोत्रा" इत्याकारकस्य, ( १५ ) षष्ठचन्तभूपतिपदसमभिव्याहृतस्वन्तमेदिनीपदत्वम्" इत्येवंरूपस्य "भूपतेर्मेदिनी" इत्याकारकस्य, ( १६ ) षष्ठचन्तप्रभुपदसमभिव्याहृतस्वन्तभूपदत्वम्" इत्येवंरूपस्य "प्रभोर्भूः" इत्याकारकस्य, ( १७ ) "षष्ठचन्तप्रभुपदसमभिव्याहृतमहीपदत्वम्" इत्येवंरूपस्य "प्रभोर्मही" इत्याकारकस्य, ( १८ ) "षष्ठचन्तप्रभुपदसमभिव्याहृतपृथ्वीपदत्वम्" इत्येवंरूपस्य "प्रभोः पृथ्वी" इत्याकारकस्य, ( १९ ) "षष्ठचन्तप्रभुपदसमभिव्याहृतस्वन्तगोत्रापदत्वम्" इत्येवंरूपस्य "प्रभोर्गोत्रा" इत्याकारकस्य, ( २० ) "षष्ठचन्तप्रभुपदसमभिव्याहृतस्वन्तमेदिनीपदत्वम्" इत्येवंरूपस्य "प्रभोर्मेदिनी" इत्याकारकस्य, ( २१ ) षष्ठचन्ताधिपपदसमभिव्याहृतस्वन्तभूपदत्वम्" इत्येवंरूपस्य "अधिपस्य भूः" इत्याकारकस्य, ( २२ ) "षष्ठचन्ताधिपपदसमभिव्याहृतस्वन्तमहीपदत्वम्" इत्येवंरूपस्य "अधिपस्य मही" इत्याकारकस्य ( २३ ) "षष्ठचन्ताधिपपदसमभिव्याहृतस्वन्तपृथ्वीपदत्वम्" इत्येवंरूपस्य "अधिपस्य पृथ्वी" इत्याकारकस्य, ( २४ ) "षष्ठचन्ताधिपपदसमभिव्याहृतस्वन्तगोत्रापदत्वम्" इत्येवंरूपस्य "गोत्रा पृथ्वी" इत्याकारकस्य, ( २५ ) "षष्ठचन्ताधिपपदसमभिव्याहृतस्वन्तमेदिनीपदत्वम्" इत्येवंरूपस्य "अधिपस्य मेदिनी" इत्याकारकस्य च समभिव्याहाररूपाकाङ्क्षाज्ञानस्य यथा कारणत्वं तथैव वैपरीत्येन "स्वन्तभूपदसमभिव्याहृतषष्ठचन्तराजपदत्वम्" इत्यादिरूपाणाम् "भूः राज्ञः" इत्याद्याकारकाणामपि पञ्चविंशतिसङ्ख्याकानां समभिव्याहारज्ञानानां कारणत्वेन तत्पक्षे पञ्चाशत्सङ्ख्याकानि कारणानि भवन्ति। समभिव्याहृतत्वञ्चेदंपदमनेन पदेनान्वयबोधजनकं भवत्वितीच्छारूपम्; पदविशिष्टपदत्वं वेति बोध्यम्। पदवैशिष्टचञ्च स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्व-स्वभिन्नत्वोभयसम्बन्धेन।

**आनुपूर्वीज्ञानस्य कारणत्वपक्षे तु—**

उक्तस्थल एव दशसङ्ख्याकानि कारणानि भवन्ति। तथाहि—राजसम्बन्धप्रकारकभूविशेष्यकशाब्दं प्रति ( १ ) राजपदोत्तरङस्पदत्वम्, ( २ ) भूपदोत्तरसुपदत्वम्, ( ३ ) नृपपदोत्तरङस्पदत्वम्, ( ४ ) महीपदोत्तरसुपदत्वम् ( ५ ) भूपतिपदोत्तरङस्पदत्वम्, ( ६ ) पृथ्वीपदोत्तरसुपदत्वम्, ( ७ ) प्रभुपदोत्तरङस्पदत्वम् ( ८ ) गोत्रापदोत्तरसुपदत्वम्, (९) अधिपपदोत्तरङस्पदत्वम्, (१०) मेदिनीपदोत्तरसुपदत्वम्" इत्येवंरूपाणां "राज्ञः, भूः, नृपस्य, मही, भूपतेः, पृथ्वी, प्रभोः, गोत्रा, अधिपस्य, मेदिनी" इत्याद्याकारकाणामानुपूर्वीज्ञानानां दशसङ्ख्याकानां कारणत्वे महल्लाघवमिति सर्वत्रानुपूर्वीज्ञानस्यैव कारणत्वं स्वीकार्यम्। एवञ्च राजसम्बन्धप्रकारकभूविशेष्यकशाब्दं प्रति "राज्ञः, भूः" "नृपस्य, भूः" इत्यादिद्विविधा—आनुपूर्वी चैकपदाव्यवहितोत्तरापरपदत्वरूपा बोध्या। यत्र "राज्ञो भूः, भूतले घटः" इति स्थलविशेषे "राज्ञः, भूः" इति द्विविधाकाङ्क्षाज्ञानमप्रामाण्यज्ञानानास्कन्दितम् "भूतले घटः" इत्यत्र स्वाव्यवहितोत्तरत्वसम्बन्धेन "भूतलविशिष्टं ङिपदम्" इत्याकारकाकाङ्क्षाज्ञानञ्च "इदं ज्ञानमव्यवहितोत्तरत्वसम्बन्धेन "भूतलपदाभाववति तत्सम्बन्धेन भूतलपदप्रकारताकम्" इत्याकारकाप्रामाण्यज्ञानास्कन्दितं वर्तते, तत्र "राज्ञः, भूः" इत्यानुपूर्वीज्ञानस्य कारणत्वात्तादृशशाब्दत्वमुभयज्ञानकार्यतावच्छेदकमिति सिध्यति। एवञ्चोभयज्ञानं विना शाब्दबोधासम्भवादुभयज्ञानस्यैकदा सत्त्वमावश्यकम्। तच्च नोभयानुपूर्वीविशिष्टसम-

भिव्याहारं विनेति समभिव्याहारस्यावश्यकत्वेऽपि सर्वत्र शाब्दबोधस्थल आनुपूर्वीज्ञानस्यैव कारणत्वमवगन्तव्यमिति गूढार्थतत्त्वालोककृतामभिप्रायः।

अथ राजसम्बन्धप्रकारकभूविशेष्यकशाब्दं प्रति यथा "राज्ञः" इत्यानुपूर्वीज्ञानस्य कारणत्वं तथैव "नृपस्य" इत्याद्यानुपूर्वीज्ञानानामपीति परस्परजन्यबोधे व्यभिचारवारणाय तत्तदाकाङ्क्षाज्ञानाव्यवहितोत्तरशाब्दत्वावच्छिन्नं प्रति तत्तदाकाङ्क्षाज्ञानस्य कारणत्वं स्वीकार्यम्। तत्र कार्यतावच्छेदककोटौ शाब्दबोधत्वस्यानिवेशे घटध्वंसादौ व्यभिचारः स्यात्, कदाचित्तस्यापि तादृशाकाङ्क्षाज्ञानाव्यवहितोत्तरक्षणे जायमानत्वेन तत्र च तादृशाकाङ्क्षाज्ञानस्य कारणत्वाभावात्। किन्तु शाब्दबोधत्वस्य कार्यतावच्छेदककोटौ निवेशेऽपि विषयताविशेषस्य निवेश आवश्यको न वेति शङ्केदानीमप्यवशिष्यते। यद्यपि "राज्ञो भूः" इत्यत्र यदा "राजपदाव्यहितोत्तरवर्तिङस्पदत्वम्" इत्याकारकानुपूर्वीज्ञानम् "इदं ज्ञानं राजपदाव्यवहितोत्तरवर्त्तित्वाभाववति राजपदाव्यवहितोत्तरवर्तित्वप्रकारताकम्" इत्याकारकज्ञानधर्मिकाप्रामाण्यज्ञानास्कन्दितं जातम्, तत्रोक्ताकाङ्क्षाज्ञानाच्छाब्दबोधवारणाय कारणतावच्छेदककुक्षावप्रामाण्यज्ञानानास्कन्दितत्वनिवेशस्यावश्यकत्वेन यत्र "राज्ञो भूः, भूतले घटः" इतिद्विविधाकाङ्क्षाज्ञानम्, एकञ्च "भूतलपदाव्यवहितोत्तरवर्तिङसपदत्वम्" इत्याकारकानुपूर्वीज्ञानम् "इदं ज्ञानं भूतलपदाव्यवहितोत्तरवर्त्तित्वाभाववति तादृशवर्त्तित्वप्रकारताकम्" इत्याकारकज्ञानधर्मिकाप्रामाण्यज्ञानास्कन्दितम्, तत्र "राजसम्बन्धिभूः, भूतलवृत्तिर्घटः" इतिद्विविधशाब्दबोधवारणाय विषयताविशेषनिवेश आवश्यकः, तथापि यत्र "राजपुरुषः, नृपपुरुषः" इति द्विविधानुपूर्वीज्ञानम्, एकञ्च "नृपपदाव्यवहितोत्तरवर्त्तिपुरुषपदत्वम्" इत्याकारकानुपूर्वीज्ञानम् "इदं ज्ञानं नृपपदाव्यवहितोत्तरवर्त्तित्वाभाववति तादृशवर्त्तित्वप्रकारताकम्" इतिज्ञानधर्मिकाप्रामाण्यज्ञानास्कन्दितं वर्तते, तत्र विषयताविशेषनिवेशपक्षेऽपि "राजपुरुषः" इत्याकारकाप्रामाण्यज्ञानानास्कन्दितादाकाङ्क्षाज्ञानात् "राजसम्बन्ध्यभिन्नः पुरुषः" इत्याकारकशाब्दबोधो न स्यात्, अतश्चाप्रामाण्यज्ञानाभावविशिष्टतत्तदाकाङ्क्षाज्ञानाव्यवहितोत्तरशाब्दबोधत्वस्यैव कार्यतावच्छेदकत्वेन वाच्यतया दोषाभावान्न कार्यतावच्छेदककुक्षौ विषयताविशेषनिवेश आवश्यक इति।

अत्रोच्यते—यत्र "राजपुरुषः, भूतले घटः" इति द्विविधानुपूर्वीज्ञानम्, एकञ्च "भूतलपदाव्यवहितोत्तरवर्त्तिङिपदत्वम्" इत्याकारकानुपूर्वीज्ञानम् "इदं ज्ञानं भूतलपदाव्यवहितोत्तरवर्त्तित्वाभाववति भूतलपदाव्यवहितोत्तरवर्त्तित्वप्रकारताकम्" इत्याकारकज्ञानधर्मिकाप्रामाण्यज्ञानास्कन्दितं तत्र "भूतलवृत्तिर्घटः" इति शाब्दबोधो न जायते, किन्तु तत्रैव "इदं ज्ञानं भूतलपदाव्यवहितोत्तरवर्त्तित्वाभाववति तादृशवर्त्तित्वप्रकारताकम्" इत्याकारकज्ञानधर्मिकाप्रामाण्यज्ञानस्य "तादृशाप्रामाण्यज्ञानं भूतलपदाव्यवहितोत्तरवर्त्तित्वाभाववन्निष्ठविशेष्यतानिरूपिततादृशवर्त्तित्वनिष्ठप्रकारताकत्वाभाववति तादृशप्रकारताकत्वप्रकारताकम्" इत्याकारकाप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानास्कन्दितस्य सत्त्वे स बोधो जायत एव। एवं तत्रैव "तादृशाप्रामाण्यज्ञानं भूतलपदाव्यवहितोत्तरवर्त्तित्वाभाववन्निष्ठविशेष्यतानिरूपिततादृशवर्त्तित्वप्रकारताकत्वाभाववन्निष्ठविशेष्यतानिरूपिततादृशप्रकारताकत्वप्रकारताकत्वाभाववति तादृशप्रकारताकत्वप्रकारताकत्वप्रकारताकम्" इत्याकारकाप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानस्य सत्त्वे स बोधो न जायते। एवं तादृशाप्रामाण्यज्ञानं "भूतलपदाव्यवहितोत्तरवर्त्तित्वाभाववन्निष्ठविशेष्यतानिरूपिततादृशवर्त्तित्वप्रकारताकत्वाभाववन्निष्ठविशेष्यतानिरूपिततादृशप्रकारताकत्वप्रकारताकत्वाभाववन्निष्ठविशेष्यतानिरूपिततादृशप्रकारताकत्वप्रकारताकत्वप्रकारताकत्वाभाववति तादृशप्रकारताकत्वप्रकारताकत्वप्रकारताकत्वप्रकारताकम्" इत्याकारकाप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानास्कन्दितस्य सत्त्वे स बोधो जायत एव। अतश्च यद्यदप्रामाण्यग्रहव्यक्तिसत्त्वे यद्यदाकाङ्क्षाज्ञानसत्त्वे च शाब्दबोधो न जायते, तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटविशिष्टतत्तदाकाङ्क्षाज्ञानस्य कारणत्वस्वीकारेण पर्य्यायस्थलीयाप्रामाण्यज्ञानव्यक्तेरभावस्य प्रयोजनाभावेन परित्यक्ततया कार्यतावच्छेदककुक्षावप्रामाण्यग्रहाभावनिवेशस्यानावश्यकत्वेऽपि यत्र "राज्ञः पुरुषः, भूतले घटः" इति द्विविधाकाङ्क्षाज्ञानम्, एकत्र चाप्रामाण्यग्रहस्तत्र "भूतलवृत्तिर्घटः" इति शाब्दवारणाय विषयताविशेषनिवेश आवश्यक एवेति।

किञ्च प्रवृत्ति प्रतीष्टसाधनताज्ञानस्य कारणत्वम्, तत्रेष्टः "नीलो घटः" इतिवाक्याज्जायमानः शाब्दबोधः।

एवञ्चेष्टसाधनत्वस्योक्तवाक्येऽग्रहे कथं तत्र वाक्ये मानवानां प्रवृत्तिः स्यादतश्चोक्तप्रवृत्तिसम्पादनाय कार्यतावच्छेदककुक्षौ विषयताविशेषनिवेश आवश्यकः।

**किञ्च**—कार्यतावच्छेदककुक्षौ विषयताविशेषानिवेशे "नीलो घटः" इत्यादौ नीलाभिन्नघटान्वयबोधाभावस्य कारणाभावेनानुमेयत्वमपि न स्यात्।

एवं यत्र "नीलो घटः" इत्याकाङ्क्षाज्ञानमप्रामाण्यज्ञानास्कन्दितम् "नीलो घटः" इत्यनुमितिसामग्री च वर्तते तत्रोक्तानुमितौ तादृशाकाङ्क्षाज्ञानाव्यवहितोत्तरत्वस्य विषयताविशेषस्य च सत्त्वेऽपि तादृशाकाङ्क्षाज्ञानरूपस्य कारणस्य विरहाद्प्रसज्यते व्यतिरेकव्यभिचारः, अतश्च तत्र शाब्दबोधत्वनिवेशनमप्यावश्यकम्।

अथाकाङ्क्षाज्ञानानामन्यतमत्वेन कारणत्वे परस्परजन्ये बोधे प्रसक्तस्य व्यभिचारस्य वारणसम्भवात्कार्यतावच्छेदककुक्षौ तत्तदाकाङ्क्षाज्ञानान्तर्यनिवेशो न कार्य इति तु न वक्तव्यम्, यतो हि अन्यतमत्वं भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, भेदकूटत्वञ्चैकभेदविशिष्टापरभेदत्वमपरभेदविशिष्टान्यभेदत्वम्। एवञ्च "राज्ञो भूः, नृपस्य भूः, भूपतेर्भूः, अधिपस्य भूः" इत्यत्र "राज्ञः" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदविशिष्ट—"नृपस्य" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदविशिष्ट—"भूपतेः" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदविशिष्ट—"अधिपस्य" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदावच्छिन्नप्रतियोगिताकभेदवत्त्वेनेव "अधिपस्य" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदविशिष्ट—"भूपतेः" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदविशिष्ट—"नृपस्य" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदविशिष्ट—"राज्ञः" इत्यानुपूर्वीज्ञानप्रतियोगिकभेदावच्छिन्नप्रतियोगिकभेदवत्त्वादिनाऽपि विनिगमनाविरहेणाकाङ्क्षाज्ञानानां कारणत्वे सिद्धे कारणताबाहुल्येन महागौरवं स्यात्।

किञ्चान्यतमत्वेन कारणत्वेऽपि यत्र "राज्ञः भूः" इत्यत्र "राज्ञः" इत्यानुपूर्वीज्ञानाच्छाब्दबोधो जातस्तत्रोक्तान्यतमत्वस्य "नृपस्य" इत्यानुपूर्वीज्ञानेऽपि सत्त्वेन तज्ज्ञानस्योक्तशाब्दबोधे कारणाभावाद्व्यभिचारस्तदवस्थ एव। अत एव चान्यतमत्वस्याखण्डोपाधिरूपत्वेऽपेक्षाबुद्धिविशेषविषयत्वरूपत्वे वा न निस्तारः।

**अत्रेदं बोध्यम्**—यत्रैकजातीयकारणानामेकजातीयकार्येणान्वयव्यतिरेकग्रहबलात्कार्यकारणभावस्तत्र न कारणानन्तर्यस्य कार्यतावच्छेदकत्वम्, यथा कपालत्वेन कपालानां घटत्वेन घटमात्रं प्रति कारणत्वेन न तत्तत्कपालानन्तर्यस्य घटनिष्ठकार्यतावच्छेदकत्वमभ्युपगतं भवति, किन्तु यत्रैकजातीयकार्येणानेकजातीयकारणानामन्वयव्यतिरेकग्रहबलात्कार्यकारणभावस्तत्र व्यभिचारवारणाय कारणानन्तर्यस्य प्रवेशोऽत्यावश्यक एवेति तु विभावनीयम्।

अथ तत्तदाकाङ्क्षाज्ञानानां स्वस्वाव्यवहितोत्तरतत्तद्विषयताकशाब्दत्वावच्छिन्नं प्रति कारणत्वे सिद्धे राजसम्बन्धप्रकारकभूविशेष्यकशाब्दस्थले "राज्ञः" इत्यानुपूर्वीज्ञानाभावेऽपि "नृपस्य" इत्यानुपूर्वीज्ञानयोग्यताज्ञानादिघटितसामग्रीतस्तादृशशाब्दबोधोत्पत्त्या योग्यताज्ञानस्याकाङ्क्षाज्ञानसहकृतत्वविरहात्केवलयोग्यताज्ञानबलादपि शाब्दबोधोत्पत्तिः स्यात्।

**अत्रोच्यते**—व्यापकधर्मावच्छिन्नोत्पत्तौ व्याप्यधर्मावच्छिन्नसामग्र्या अपेक्षितत्वं भवति, नहि ज्ञानविशेषप्रत्यक्षसामग्रीविरहकाले ज्ञानम्, न वा सविशेषद्रव्यसामग्रीविरहकाले मृत्तिकामात्राद्घट उत्पद्यते। एवञ्च "राज्ञो भूः" इत्यत्र योग्यताज्ञानस्य कार्यतावच्छेदकं राजनिरूपितस्वत्ववती भूः" इत्याकारकराजसम्बन्धप्रकारकभूविशेष्यकशाब्दबोधत्वम्, तस्य व्याप्यं "निरूपितत्वसम्बन्धेन राजविशिष्टं स्वत्वम्" इत्याकारकशाब्दत्वं, तच्च "राज्ञः; नृपस्य, भूपतेः" इत्याद्यानुपूर्वीज्ञानकार्यतावच्छेदकम्। तथा च योग्यताज्ञानकार्यतावच्छेदकतादृशशाब्दत्वावच्छिन्नोत्पत्तौ तद्धर्मव्यापककार्यतावच्छेदकीभूतयावद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावत्कूटविशिष्टत्वे सति स्वावच्छिन्नकार्यतानिरूपितकारणतावत्कूटविशिष्टत्वसम्बन्धेन तद्धर्मव्याप्यधर्मविशिष्टत्वे सति तद्धर्मावच्छिन्नकार्यतानिरूपितकारणत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिककूटत्वेन सामग्र्या अपेक्षितया न तदसमवधानप्रयुक्तफलोपधायकत्वाभाववत्त्वस्वकत्वरूपतत्सहकृतत्वस्याभावस्तत्र। सहकारिनियमः सामग्रीनियमान्नैव भिद्यते। यथैकस्य कारणस्यासमवधाने सत्यपरकारणे फलोपधायकस्वाभावे तयोः सहकार्यसहकारिभावः सिध्यति, तथैवैकस्याः

सामग्र्या अभावे सति अपरस्यां सामग्र्यां फलोपधायकत्वाभावे सति तयोरपि सहकार्यसहकारिभावः सिध्यत्येव। तथा च यथा ज्ञानविशेषप्रत्यक्षसामग्रीविरहकाले न ज्ञानस्योत्पत्तिर्निर्विशेषसामान्यस्योत्पत्तौ प्रमाणाभावात् तथैव ज्ञानत्वावच्छिन्नस्य या त्वङ्मनोयोगादिघटिता सामग्री तदभावादपि न प्रत्यक्षसामग्रीबलात्प्रत्यक्षज्ञानस्योत्पत्तिः। अतश्च यथा ज्ञानत्वरूपव्यापकधर्मावच्छिन्नोत्पत्तौ व्याप्यधर्मावच्छिन्नसामग्रीविशिष्टाया एव ज्ञानत्वरूपव्यापकधर्मावच्छिन्नसामग्र्याः, प्रत्यक्षत्वरूपव्याप्यधर्मावच्छिन्नोत्पत्तौ व्यापकधर्मावच्छिन्नसामग्रीविशिष्टाया एव व्याप्यधर्मावच्छिन्नसामग्र्याश्च फलोपधायकत्वं तथैव प्रकृतेऽपियोग्यताज्ञानकार्यतावच्छेदकतत्तद्विषयताकशाब्दत्वरूपव्यापकधर्मावच्छिन्नोत्पत्तौ व्याप्यीभूततत्तदाकाङ्क्षाज्ञानाव्यवहितोत्तरशाब्दत्वावच्छिन्नसामग्रीविशिष्टाया एव व्यापकधर्मावच्छिन्नसामग्र्याः, तत्तदाकाङ्क्षाज्ञानाव्यहितोत्तरशाब्दत्वावच्छिन्नोत्पत्तौ व्यापकधर्मावच्छिन्नसामग्रीविशिष्टाया एव व्याप्यधर्मावच्छिन्नसामग्र्याश्च फलोपधायकत्वमिति न योग्यताज्ञानस्याकाङ्क्षाज्ञानसहकृतत्वानुपपत्तिरि.त।

**वेदान्तिनस्तु** पदोपस्थितयोरन्वयप्रतियोग्यनुयोगिनोः परस्परजिज्ञासाविषयत्वयोग्यतैवाकाङ्क्षा। "घटमानय" इत्यादौ घटपदाम्पदोपस्थितयोर्घटत्वकर्मत्वाद्योः कर्मत्वानयनाद्योश्च तिष्ठति परस्परजिज्ञासाविषयत्वयोग्यता। तथा हि घटपदाद्घटज्ञाने जाते तदन्वयिकर्मत्वस्य जिज्ञासा जायते,. नहि घटादिकं कर्मत्वादिद्वारा क्रियायामनन्वितं सत् घटानयने प्रवर्तकं यद्वाक्यार्थज्ञानं तद्विषयतया पर्य्यासं भवति। एवं नहि कर्मत्वादिकमपि घटाद्यनन्वितं सद् क्रियासमन्वितम्, क्रिया वा कारकानन्विता सती, कारकं वा क्रियानन्वितं सत्तादृशवाक्य.र्थज्ञानविषयतया पर्यासं भवति। यदा तु तादृशवाक्यार्थज्ञाने घटनिष्ठकर्मतानिरूपकानयनं विषयतया भासते तदैव तद्बोधः प्रवर्तको भवति। अतश्च घटपदोत्तरद्वितीयाविभक्त्यर्थकर्मत्वज्ञाने जाते कर्मत्वान्वयिनं प्रातिपदिकार्थं, प्रातिपदिकार्थान्वयि कर्मत्वम्, एतत्प्रातिपदिकार्थान्वयिनीं क्रियाम्, एतत्क्रियान्वयि कारकं वा जानीयामित्याकारिका जिज्ञासा जायते। सा च जिज्ञासा न सर्वत्र शाब्दबोधस्थले नियता, क्वचिदजिज्ञासितानामप्यर्थानां शाब्दबोधो जायत एव, अतश्च जिज्ञासाविषयत्वयोग्यत्वपर्यन्तानुधावनम्। तद्विषयत्वयोग्यत्वञ्च समभिव्याहृतपदार्थान्वयबोधाभावविशिष्टत्वे सति क्रियात्वकारकत्वादिकं समानविभक्तिपदोपस्थाप्यत्वञ्च। समभिव्याहृतपदार्थान्वयबोधे जात इच्छामन्तरेण क्वचिदप्यन्वयिनो जिज्ञासा न जायते, अतश्च तादृशबुबोधयिषाविरहविशिष्टसमभिव्याहृतपदार्थान्वयबोधाभावविशिष्टत्वमेव तत्र निवेशितम्। वस्तुतस्तु तत्तद्वाक्यजन्यबोधेच्छाविरहविशिष्टतत्तद्वाक्यजन्यबोधाभावस्यैवाकाङ्क्षात्वं, तस्या एव चाकाङ्क्षायाः स्वरूपत एव कारणत्वम्। एतेन "एकत्र विशेषणत्वेनान्वितस्यान्यत्र विशेषणत्वायोगादिति सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति चाबाधितनियमानुसारेण कर्मत्वस्यानयनेऽन्वितत्वे पुनः घटेऽन्वयायोगात्कथमन्वितं प्रातिपदिकार्थम्, अन्वितं कर्मत्वम्, अन्वितां क्रियाम्, अन्वितं कारकं वाजानीयामित्याकारिका जिज्ञासा स्यात्, कथं वा वाक्याच्छाब्दबोधे जाते पुनः शाब्दबोधः स्यादिति शङ्का निराकृता जाता। नहि तादृशाभावस्याकाङ्क्षारूपत्व उक्तदोषावसरः। अथवा तत्तत्पदार्थान्वितत्तत्तत्पदार्थबोधे तत्तत्पदार्थान्वितत्तत्तत्पदार्थबोधाभावलक्षणमेव जिज्ञासाविषयत्वयोग्यत्वमाकाङ्क्षाया मूलं बोध्यम्। अत एव च "घटमानय, अश्वमपसारय" इत्यत्र घटकर्मकानयनबोधे जाते न घटकर्मकत्वेनापसारणस्य बोधो जायते। "घटमानय पिधेहि" इत्यत्र तु "घटम्" अनुसंहितपदान्तरादेव घटकर्मकत्वेन पिधानस्य बोधो जायत एव। एतत्पक्षे धारावाहिकशाब्दबोधस्तु सामग्र्यनुवृत्तिविरहान्न जायते, सामग्रीसत्वे तु जायत एव 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' इति नियमस्य चान्यत्रैव तात्पर्य्यं बोध्यम्। तथाहि यत्रैकस्यैव वाक्यस्यार्थद्वये तात्पर्यं वर्तते, तत्र वाक्यभेदभिया एकस्मिन्नेवार्थे तात्पर्यमङ्गीकरणीयमित्यत्रैव तात्पर्यम्, श्लेषस्थले तु वाक्यस्यावृत्त्यैवोभयबोधकत्वमित्यवधेयम्। तादृशाकाङ्क्षायाः स्वीकारे "घटः कर्मत्वमानयनं कृतिः" इति शाब्दबोधो जायेतेति तु नाशङ्कनीयम्, तादृशबोधे च "घटम्" इत्यानुपूर्वीज्ञानस्य कारणत्वेन तत्र तादृशानुपूर्वीज्ञानविरहादेव न तादृशशाब्दबोधापत्तिः। "घटम्, कलशम्" इत्याद्यानुपूर्वीज्ञानानां परस्परजन्यबोधे प्रसक्तस्य व्यभिचारस्य वारणं तु कार्यतावच्छेदककोटौ तत्कारणाव्यवहितोत्तरत्वनिवेशेनैव कार्यमिति **प्राहुः**।

तन्न समीचीनम्, आकाङ्क्षाज्ञानस्यैव शाब्दबोधकारणत्वेन व्यवस्थापितत्वात्तस्याः स्वरूपतः कारणत्वं निर्युक्तिकमेव। किञ्च तस्या अभावात्मकत्व उत्थितोत्थाप्याकाङ्क्षायोरुत्कर्षापकर्षौ न स्याताम्, नहि अभावे उत्कर्षापकर्षौ सन्तिष्ठेते। आकाङ्क्षायाः स्वरूपतः कारणत्वञ्च चिन्तामणिकृद्भिर्बहुधा खण्डितम्, तत्तु विस्तरभयान्नोपस्थाप्यतेऽत्रेति

प्राभाकरास्तु—

यत्किञ्चित्पदार्थोपस्थितिसत्त्वे तत्सहकृतपदजन्यपदार्थस्मरणाच्छाब्दबोधस्य जायमानत्वेनावान्तरवाक्यार्थबोधपूर्वकमहावाक्यार्थबोधेऽवान्तरवाक्यार्थस्मरणं कारणं न तु समूहालम्बनात्मकं स्मरणम्। द्वारमित्यादावर्थाध्याहारस्यैवोपयुक्तत्वाच्छाब्दबोधे पदार्थोपस्थितित्वेनैव हेतुता, नतु पदजन्यपदार्थस्मरणं कारणम्। प्रत्यक्षादिनोपस्थितानां पदार्थानां सति तात्पर्यज्ञाने शाब्दबोधस्येष्टत्वान्न पदार्थोपस्थितिमात्रस्य कारणत्वे काचिद्धानिः। वक्तुरिच्छात्मकस्य तात्पर्यस्यापि ज्ञानं शाब्दबोधे कारणम्। द्वारकर्मकपिधानानुकूलकृतिबोधे "द्वारम्" इत्यानुपूर्वीज्ञानस्य "पिधेहि" इत्यानुपूर्वीज्ञानस्य च कारणत्वस्वीकारेण न "द्वारं कर्मत्वं पिधानं कृतिः" इति वाक्यादुक्तशाब्दबोधापत्तिः। तत्तदानुपूर्वीज्ञानानां परस्परजन्ये बोधे प्रसक्तस्य व्यभिचारस्य वारणं तु कार्यतावच्छेदककाटावव्यवहितोत्तरत्वस्य निवेशेनैव कार्यम्। तथा च प्रतिपत्तुर्जिज्ञासैवाकाङ्क्षा। सा च पुरुषनिष्ठैव। द्वारमित्येकपदप्रयोगस्थले द्वारकर्मत्वत्वान्वयि किमिति जिज्ञासायां पिधानरूपार्थस्याध्याहारः। तेनैव चान्विताभिधानं पर्यवस्यति। अन्विताभिधानानुपपत्तिस्त्वर्थाध्याहारेणैव शाम्यति, अतश्च न तत्र पदाध्याहारस्यावश्यकता। यत्रानेकपदप्रयोगेऽप्यभिहितोऽर्थो शाब्दबोधाय न पर्याप्तो भवति यथा "दिवाऽभुञ्जानो देवदत्तः पीनः" इति। तत्र च रात्रिभोजनस्य जिज्ञासायां रात्रिभोजनाध्याहारे "दिवाऽभुञ्जानत्वे सति पीनो देवदत्तो रात्रिभोजनवान्" इति बोधो जायते। "अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्" इत्यत्र राजपुरुषस्य पुत्रापसर्पणे निराकाङ्क्षत्वात् "राज्ञः" इति पदान्वयि किमिति जिज्ञासायां "राज्ञः" इति पदेनैव तात्पर्यज्ञानबलात्पुत्रपदस्य सम्बन्धो जायते। अतश्च यथाऽर्थविषयिणी जिज्ञासा भवति तथैव पदविषयिणी अपि। अतश्चार्थविषयिणीव पदविषयिण्यपि जिज्ञासा शाब्दबोधे कारणम्। तदुक्तं **वाक्यार्थमातृकायाम्।**

**अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा। प्रतियोगिनि जिज्ञासा या साऽऽकाङ्क्षेति गीयते॥**
**परिपूर्णेन योग्यस्य समीपस्याप्यनन्वयात्। व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाप्युपलक्षणम्॥**
**जिज्ञासा जायते बोद्धुः सम्बन्धिषु यथा यथा। तथा तथैव शब्दानामन्विताभिधायिता॥ इति।**

**न्यायनये** तु वृत्त्या पदज्ञानजन्यपदार्थस्मरणस्यैव शाब्दबोधे कारणत्वात्सर्वत्र पदाध्याहार एवावश्यकः। **किञ्च** "स्पृहेरीप्सितः" इति सूत्रेण स्पृहयतीतियोगे कर्मत्वार्थकचतुर्थ्या अनुशासनात्, सा च "पुष्पेभ्यः" इत्यादौ स्पृहयतिपदाध्याहारं विना कथमपि नोपपन्नम्। वैयाकरणमते त्वर्थविषयिणी वाक्यसमयग्राहिकाऽऽकाङ्क्षैव जिज्ञासा, सा च पुरुषनिष्ठैव। उक्तञ्च **नागेशभट्टैर्लघुमञ्जूषायाम्—**

"वाक्यसमयग्राहिका चाकाङ्क्षा। सा चैकपदार्थज्ञाने तदर्थान्वययोग्यस्यार्थस्य यज्ज्ञानं तद्विषयेच्छा, "अस्यान्वय्यर्थः कः" इत्येवंरूपा पुरुषनिष्ठैव, तथापि तस्या आकाङ्क्षाविषयेऽर्थे आरोपः, एतदेवाभिधानापर्यवसानमित्युच्यते, "अयमर्थोऽर्थान्तरसाकाङ्क्षः" इति व्यवहारात्, पदे तु नारोपः, मानाभावादर्थबोधोत्तरमेव जिज्ञासोदयाच्च। "पदं साकाङ्क्षम्" इति तु साकाङ्क्षार्थबोधकमित्यर्थकम्" इति। परञ्चेदं सर्वं वाक्यशक्तिवादिनां वैयाकरणानामेव रोचते नतु नैयायिकानाम्। किञ्च "वर्तमाने लट्, लः कर्मणि च भावे चाकर्मकेभ्यः, कर्मणि द्वितीया, गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि इत्यनुशासनाल्लडादीनामेव तत्तदर्थे शक्तिस्मरणाद्वाक्ये शक्तिरिति कथनं तु निर्युक्तिकमेव। अधिकन्तु विस्तरभयान्नोपस्थाप्यते।

योग्यताज्ञानस्य शाब्दबोधं प्रति कारणत्वमित्युपरिष्टादुक्तम्। तत्रेदानीं प्रतिवादिविप्रतिपत्तिप्रदर्शनमुखेन स्वसिद्धान्तानुसारियुक्तिभिस्तद्विप्रतिपत्तिं निराकर्तुं कतिपये विचाराः प्रस्तूयन्ते। तत्र **मुक्तावलीकृद्भिः "पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता"** इति कारिकया योग्यतास्वरूपं निगदितम्। तत्र च "पदार्थे तत्र तद्वत्ता" इति ग्रन्थेन तत्तत्पदार्थे तत्तत्पदार्थवत्त्वं योग्यतेत्युक्तं भवति। किन्तु स्वस्मिन् स्वाधिकरणत्वाभावात्तद्रूपा योग्यता भवितुं नार्हतीति मनसि निधाय तैरेव **"एकपदार्थेऽपरपदार्थसम्बन्धो योग्यता"** इति मुक्तावलीग्रन्थेन **"विशेष्ये विशेषणसंसर्गवत्त्वम्"** इति तस्या निष्कृष्टं लक्षणं ध्वनितम्। तज्ज्ञानस्य च शाब्दबोधे हेतुत्वात् "वह्निना सिञ्चति" इत्यत्र तादृशज्ञानाभावान्न शाब्दबोधो जायते। यद्यप्येकपदार्थानुयोगिकापरपदार्थप्रतियोगिसंसर्गस्य वाक्यार्थतया

शाब्दबोधात्पूर्वं तादृशयोग्यताज्ञानस्य विरहान्न शाब्दबोधे योग्यताज्ञानं कारणमिति वक्तुं शक्यम्, तथापि शाब्दबोधस्य प्रमारूपतया योग्यताज्ञानस्य संशयनिश्चयसाधारणज्ञानत्वेन कारणतया च शाब्दबोधात्पूर्वं संशयात्मकस्य योग्यताज्ञानस्य सद्भावे न काचित्क्षतिरिति प्राचीनमतानुसारेण बोध्यम्। नव्यास्तु लौकिकसन्निकर्षाजन्यदोषविशेषाजन्य-तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य सामान्यतया प्रतिबन्धकत्वस्य सिद्धत्वादयोग्यताया बाधरूपतया तन्निश्चयस्य शाब्दबोधं प्रति प्रतिबन्धकत्वेन तादृशबाधनिश्चयाभावस्यैव प्रतिबन्धकाभावरूपतया कारणत्वे सिद्धे योग्यताज्ञानस्य पृथक्कारणत्वं नैव स्वीकरणीयम्। "शङ्खो न पीतः" इत्याकारकबाधनिश्चयसत्त्वेऽपि पित्तादिदोषवशात् "पीतः शङ्खः" इति प्रत्यक्षस्य जायमानत्वेनोक्तप्रतिबध्यप्रतिबन्धकभावानुपपत्तिरूपदोषवारणाय प्रतिबध्यतावच्छेदककोटौ बुद्धौ दोषविशेषाजन्यत्वं विशेषितम्। एवं "घटाभाववद्भूतलम्" इतिबाधनिश्चयसत्त्वे लौकिकसन्निकर्षवशात् "घटवद्भूतलम्" इति प्रत्यक्षस्य जायमानत्वेनोक्तानुपपत्तिवारणाय तादृशबुद्धावेव लौकिकसन्निकर्षाजन्यत्वं विशेषितम्। परञ्च यत्र "घटाभाववद्भूतलम्" इति निश्चयसत्त्वेऽपि "घटप्रकारकं भूतलविशेष्यकं चाक्षुषं मे जायताम्' इतीच्छाबलाद्घटस्य ज्ञानलक्षणासन्निकर्षेण भूतले चाक्षुषोत्पत्तिस्तत्र तद्भाववत्तानिश्चयस्य प्रतिबन्धकत्वेनाभिमतस्य सत्त्वेऽपि लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यघटप्रकारकभूतलविशेष्यकचाक्षुषोत्पत्त्या प्रसज्यते व्यभिचारः। अतश्च तद्वारणाय प्रत्यक्षत्वावच्छिन्नं प्रति प्रत्यक्षेच्छाविरहविशिष्टबाधनिश्चयस्य पृथगेव प्रतिबन्धकत्वं वक्तव्यम्। एवञ्च विशेषतः प्रतिबध्यप्रतिबन्धकभावस्यावश्यकत्वात्सामान्यप्रतिबध्यप्रतिबन्धकभावबलादयोग्यतानिश्चयस्य प्रतिबन्धकत्वं नैव सिध्यति। प्रत्यक्षान्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति तद्भाववत्तानिश्चयस्य प्रतिबन्धकत्वस्वीकारे यद्यपि प्रति-बध्यतावच्छेदककुक्षौ लौकिकसन्निकर्षाजन्यत्वस्य दोषविशेषाजन्यत्वस्य चानिवेशेन लाघवमेव भवति, तथापि प्रत्यक्षा-न्यत्वबुद्धित्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण प्रत्यक्षान्यत्वविशिष्टबुद्धित्वं बुद्धित्वविशिष्टप्रत्यक्षान्यत्वञ्चेति-द्वयस्य प्रतिबध्यतावच्छेदकत्वकल्पने गौरवमेव स्यात्। अतश्च तत्प्रकारकशाब्दत्वावच्छिन्नं प्रति तद्भाववत्ता-निश्चयस्य तद्विधेयकानुमितिं प्रति च तदभाववत्तानिश्चयस्य पृथक् पृथक् प्रतिबन्धकत्वं वाच्यम्। एवञ्च शाब्दत्वा-वच्छिन्नं प्रत्ययोग्यतानिश्चयस्य प्रतिबन्धकत्वं स्वीकृत्य तादृशनिश्चयाभावस्य कारणत्वापेक्षया योग्यताज्ञानस्य कारणत्वस्वीकारे लाघवमेव भवति। यत्र चायोग्यतानिश्चयस्तत्र योग्यताज्ञानरूपकारणविरहादेव शाब्दबोधो न जायत एव। यद्यपि तद्वत्तापरोक्षत्वावच्छिन्नं प्रति तदभाववत्तानिश्चयस्य सामान्यतः प्रतिबन्धकत्वस्वीकारे योग्यता-ज्ञानस्य कारणत्वाकल्पनाल्लाघवमेव भवति, तथापि परोक्षत्वस्य जातित्वे मानाभावान्न तादृशप्रतिबध्य-प्रतिबन्धकभावः, परञ्च परोक्षत्वस्य जातित्वाभावेऽपि यत्र "घटम्" इतिवाक्यस्थले "कर्मत्वं निष्ठत्वसम्बन्धेन घटवन्नवा" इत्याकारकं संशयात्मकं योग्यताज्ञानं तत्रोक्तज्ञानस्य "कर्मत्वं निष्ठत्वसम्बन्धावच्छिन्नप्रतियोगिताक-घटाभाववत्" इति बाधनिश्चयं प्रत्यप्रतिबन्धकत्वेन तादृशसंशयानन्तरं तादृशबाधनिश्चयसत्त्वे बाधकाभावेन शाब्द-बोधापत्तिर्दुर्वारैव। अतश्च तत्रत्यशाब्दबोधवारणाय शाब्दत्वावच्छिन्नं प्रत्ययोग्यतानिश्चये प्रतिबन्धकत्वकल्पन-स्यावश्यकत्वेन योग्यताज्ञानस्य कारणत्वकल्पनमनावश्यकमेव। परञ्चायोग्यतानिश्चयाभावरूपबाधनिश्चयाभावस्य कारणत्वपक्षे "वह्निकरणकत्वाभाववत्सेकीया कृतिः" इति मानसप्रत्यक्षं प्रति "वह्निना सिञ्चति" इत्यादिशाब्द-सामग्र्याः "वह्निकरणकत्वाभाववान्सेकः" इत्याकारकायोग्यतानिश्चयाभावघटितायाः प्रतिबन्धकत्वं कल्पनीयं भवति विभिन्नविषयकप्रत्यक्षं प्रति शाब्दबोधसामग्र्याः प्रतिबन्धकत्वात्, योग्यताज्ञानस्य कारणत्वपक्षे तु योग्यताज्ञान-घटितशाब्दसामग्रीकालेऽयोग्यतानिश्चयविरहादेव न तादृशं मानसम्। किञ्चायोग्यतानिश्चयाभावस्य कारणत्वपक्षे "भूतलपदार्थे घटपदार्थप्रकारकज्ञानाभाववानहम्" इत्याकारकयोग्यताज्ञानाभावविषयकमानसप्रत्यक्षं प्रति "भूतलं संयोगेन घटाभाववत्" इत्याकारकायोग्यतानिश्चयाभावघटिताया "भूतलं घटवत्" इत्यादिसामग्र्याः प्रतिबन्धकत्वं कल्पनीयं भवति। योग्यताज्ञानस्य कारणत्वपक्षे तूक्तमानसप्रत्यक्षे योग्यताज्ञानाभावस्य विषयतया भानेन योग्यता-ज्ञानघटितशाब्दसामग्रीकाले तद्विरहादेव न तादृशं मानसम्। यद्यपि विशिष्टबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुत्वात् "वह्निकरणकत्वाभाववत्सेकीया कृतिः" इति विशिष्टबुद्ध्यात्मकमानसप्रत्यक्षं प्रति "वह्निकरणकत्वा-भाववान् सेकः" इति विशेषणतावच्छेदकप्रकारकनिर्णयस्य "वह्निकरणकत्वाभाववान् सेकः" इत्ययोग्यतानिश्चया-भावघटितशाब्दसामग्रीकाले विरहादेव तादृशमानसप्रत्यक्षस्याभावेन योग्यताज्ञानस्य कारणत्वस्वीकारोऽनुपयुक्तः, तथापि बुद्धिर्द्विविधा भवति, उपलक्षितबुद्धिर्विशिष्टबुद्धिश्च। तत्र विशेष्ये विशेषणं तत्रापि विशेषणान्तरमितिरीत्या जायमाना

बुद्धिरुपलक्षितबुद्धिरिति कथ्यते। तत्र च न विशेषणतावच्छेदकप्रकारकनिर्णयस्य कारणत्वम्। यत्र तु यस्य विशेषण-स्यान्वयि यद्विशेष्यं तदन्वयिनि तस्य विशेषणतयान्वयो विवक्ष्यते तत्र जायमाना बुद्धिर्विशिष्टबुद्धिरिति कथ्यते। तथाहि "गुणकर्मान्यत्वविशिष्टसत्तावान् गुणः" इत्यत्र यथा गुणकर्मान्यत्वस्य सत्तायामन्वयो भवति, तथैव तस्य सत्तावत्यप्यन्वय इष्यते, किन्तु सत्तावति गुणे तस्य बाधितत्वात्तादृशी विशिष्टबुद्धिर्भ्रम एव भवति। "घटो नास्ति" इत्यत्र तु घटत्वस्य घटेऽन्वयेऽपि तस्य प्रतियोगितया घटान्वयिन्यभावेऽन्वयसत्त्वात् "घटो नास्ति" इति विशिष्टबुद्धिः कथ्यते। अत्रैव च विशेषणतावच्छेदकप्रकारकनिर्णयोऽपेक्ष्यते। एवञ्च यत्र विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति रीत्या "वह्निकरणकत्वाभाववत्सेकीया कृतिः" इति मानसं जायते, तत्र विशेषणतावच्छेदकप्रकारकनिर्णयस्याहेतुतया "वह्निकरणकत्वाभाववान् सेकः" इति बाधनिश्चयस्यानावश्यकत्वेन तादृशमानसस्य "वह्निकरणकत्ववत्सेकीया कृतिः" इति शाब्दबोधस्य च सामग्रीद्वयस्य सत्त्वसम्भवात्तादृशमानसप्रत्यक्षं प्रति "वह्निना सिञ्चति" इत्यादिशाब्द-सामग्र्याः प्रतिबन्धकत्वं कल्पनीयं भवति, योग्यताज्ञानस्य कारणतापक्षे विशेषणतावच्छेदकांशे संशयस्यानभ्युप-गमेन सेकविशेष्यकवह्निकरणकत्वनिश्चयात्मकस्य वह्निकरणकसेककृतिविषयकयोग्यताज्ञानस्य "वह्निकरणकः सेकः" इतिबाधनिश्चयविधया "वह्निकरणकत्वाभाववत्सेकीया कृतिः" इति मानसप्रत्यक्षं प्रति विरोधित्वान्न तादृशं मानसं जायते। "भूतलविशेष्यकघटप्रकारकयोग्यताज्ञानाभाववानहम्" इति तादृशयोग्यताज्ञानाभावविषयकमानसं प्रति योग्यताज्ञानस्य स्वरूपतः एव प्रतिबन्धकतया न तादृशमानसोत्पत्तिः।

अथ संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन कारणत्वमित्युक्तमुपरिष्टात्। एवञ्च योग्यताज्ञानत्वेन कारणत्व-स्वीकारे यत्र "घटवद् भूतलम्" इत्यत्र संयोगेन घटप्रकारकं भूतलविशेष्यकं योग्यताज्ञानं संयोगेन घटाभाववति घटप्रकारकं नवेत्याकारकज्ञानधर्मिकाप्रामाण्यसंशयस्तत्रोक्तसंशयवशात् "भूतलं घटवन्न वा" इति विषयसंदेहेऽपि तस्य संशयात्मकयोग्यताज्ञानात्मकत्वेन कारणतया शाब्दबोधोत्पत्तौ न कापि क्षतिः। किन्तु तत्र "भूतलविशेष्यकं घटप्रकारकं योग्यताज्ञानं घटाभाववति घटप्रकारकम्" इत्याकारकज्ञानधर्मिकघटाभाववद्विशेष्यकघटप्रकारकत्व-प्रकारकाप्रामाण्यनिश्चयस्योक्तयोग्यताज्ञाने कारणताविघटकत्वेन तादृशयोग्यताज्ञानेऽप्रामाण्यनिश्चयानास्कन्दितत्वनिवेश आवश्यकः। तथा चाप्रामाण्यनिश्चयाभावविशिष्टयोग्यताज्ञानस्य कारणत्वापेक्षयाऽप्रामाण्यज्ञानाभावविशिष्टायोग्यता-निश्चयाभावस्य कारणत्वे लाघवमेव भवति। यत्र च संशयात्मकं ज्ञानं कारणं भवति तत्राप्रामाण्य-निश्चय एव कारणताविघटकः, यत्र तु निश्चयात्मकमेव ज्ञानं कारणं तत्राप्रामाण्यसंशयोऽपि कारणताविघटक इति। योग्यताज्ञानस्य कारणतापक्षे निश्चयत्वांशनिवेशेन गौरवमेव भवति। यद्यप्यप्रामाण्यज्ञानाभावविशिष्टायोग्यतानिश्च-याभावस्य कारणतापक्षेऽपि निश्चयत्वांशनिवेश आवश्यक एव, तथापि योग्यताज्ञानधर्मिकाप्रामाण्यनिश्चयत्वं "घटवद् भूतलम्" इत्यत्र घटाभाववद्विशेष्यकघटप्रकारकत्वाभाववति तादृशप्रकारकत्वप्रकारताकत्वम्,अयोग्यतानिश्चयत्वंतु घटाभावाभावाप्रकारकत्वे सति घटाभावप्रकारकत्वमित्ययोग्यतानिश्चयस्य कारणतापक्ष एव लाघवम्। परञ्च योग्यता-ज्ञानस्य कारणतापक्षे "घटवद् भूतलम्" इति स्थलेऽप्रामाण्यनिश्चयः "घटभाववति घटप्रकारकम्" इत्येकविध एव अयोग्यतानिश्चयस्य कारणत्वपक्षे च "घटाभावाभाववति घटाभावप्रकारकम्, घटवति घटाभावप्रकारकम्, प्रतियोगिता-सम्बन्धेन घटाभाववति तत्सम्बन्धेन घटप्रकारकम्" इति त्रिविधमप्रामाण्यज्ञानमित्ययोग्यताज्ञानस्य कारणतापक्षे गौरवमेव जायते। वस्तुतस्तु बाधनिश्चयस्य शाब्दबोधं प्रति नैव प्रतिबन्धकत्वम्। "वह्निकरणको न सेकः" इति बाधनिश्चयसत्त्वेऽपि "वह्निना सिञ्चति" इति वाक्याच्छाब्दबोधो जायते, अत एव च दीर्घतरं पुरुषं दृष्ट्वा केनचित्प्रयुक्तं "उष्ट्रं पश्य" इति वाक्यमुपहासाय संजायते। उक्तञ्च खण्डने "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" इति। एवञ्च बाधनिश्चयकालेऽपि बोधेच्छायां सत्यां मानसयोग्यताज्ञानबलाच्छाब्दबोधो जायत एव। तादृशेच्छाविरहकाले तु तादृशयोग्यताज्ञानस्यासत्त्वादेव बोधो न जायते। अतश्च बुभुत्सितार्थस्य प्रतिपत्तिरबुभुत्सितार्थस्येति व्यवस्थायै योग्यताज्ञानस्य कारणत्वं सिध्यत्येव। परोक्षस्याहार्यत्वे मानाभावेनाहार्यशाब्दबोधे योग्यताज्ञानस्योपयोग इति वक्तुमशक्यमेव। बाधनिश्चयकाले बोधेच्छादशायां योग्यताज्ञानबलात्"वह्निना सिञ्चति" इति वाक्यादाहार्यमानसं एव बोध इत्यपि "शृणोमि, शाब्दयामि" इत्याद्यनुभवबलाद्धेयमेवेति बोध्यम्।

केचित्तु बाधाभावो योग्यता। सा च यदि तात्पर्यविषयीभूतपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वा-

भावरूपा स्वीक्रियते, तदा "घटमानय" इति वाक्यस्यापि प्रामाण्यं न स्यात् । तत्र च तात्पर्यविषयीभूतः पदार्थसंसर्गो घटप्रतियोगिकनिष्ठत्वं तत्रापरपदार्थकर्मत्वनिष्ठघटप्रतियोगिकनिष्ठत्वघटोभयाभावप्रतियोगित्वस्य सत्त्वेन योग्यताविरहात् । अतश्च तात्पर्यविषयीभूतपदार्थसंसर्गनिष्ठधर्मे संसर्गतावच्छेदकताख्येऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभाव एव योग्यतापदेन ग्राह्यः । एवञ्चोक्तोभय.भावप्रतियोगितावच्छेदकत्वस्य घटप्रतियोगिकनिष्ठत्वत्वे घटत्वे उभयत्वे चेति त्रिष्वेव पर्याप्ततया केवले घटप्रतियोगिकनिष्ठत्वत्वे विरहाद्योग्यता सङ्गच्छते । अत्रापरपदार्थनिष्ठाऽत्यन्ताभावश्च प्रतियोगिव्यधिकरणत्वेन विशेषणीयः, अन्यथा "घटवद्भूतलम्" इत्यत्र तात्पर्यविषयीभूते घटप्रतियोगिकसंयोगत्वे भूतलनिष्ठो यो घटानधिकरणदेशावच्छेदेन घटसंयोगाभावस्तत्प्रतियोगितावच्छेदकत्वस्य सत्त्वेन तादृशप्रतियोगितावच्छेदकत्वाभावविरहादुक्तवाक्यस्य प्रामाण्यं न स्यात् ।

अथवा एकपदार्थतावच्छेदके तात्पर्यविषयापरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो योग्यता । अपरपदार्थे तात्पर्यविषयत्वरूपविशेषणदानेन "पयसा सिञ्चति" इत्यत्र सेककरणतात्वे समुद्रजलनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽपि तात्पर्यविषयीभूतकूपादिजलनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य सत्त्वेनोक्तवाक्यं योग्यम् । समुद्रजलाभिप्रायेण प्रयुक्तमुक्तवाक्यंत्वयोग्यमेव । एवं पचतीत्यत्रैकपदबोध्ययोः कृतिवर्तमानत्वयोरेकपदार्थत्वसत्त्वेऽपि पदार्थतावच्छेदकभेदादेव तयोर्योग्यता बोध्या । सा च न स्वरूपसती ( अज्ञाता सती ) कारणं योग्यताभ्रमादपि शाब्दबोधोदयादतस्तज्ज्ञानं हेतुः । शाब्दत्वावच्छिन्नं प्रति संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन हेतुत्वस्वीकारादेव "शब्दो नित्यो न वा" इति विप्रतिपत्तिवाक्याद्योग्यतासंशयादपि शाब्दबोधो जायत एव ।

अथवोक्तस्थले नित्यत्वाभावविषयकशाब्दबोधसामग्र्या नित्यत्वविषयकशाब्दबोधं प्रति प्रतिबन्धकत्वं प्रकल्प्य तत्र पदार्थस्मरणमात्रं भवति न शाब्दबोध इति स्वीकरणीयम् ।

वस्तुत एकपदार्थतावच्छेदके तात्पर्यविषयीभूतापरपदार्थनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वरूपायोग्यतानिश्चयस्य शाब्दबोधं प्रति प्रतिबन्धकत्वं स्वीकृत्य तादृशायोग्यतानिश्चयाभावस्यैव कारणत्वं स्वीकार्यमिति प्राहुः ।

**तत्र नागेशभट्टाः—**

शाब्दबोधं प्रति नायोग्यतानिश्चयरूपबाधज्ञानस्य प्रतिबन्धकत्वं न वा तादृशनिश्चयाभावस्य कारणत्वम् । सत्यपि बाधनिश्चये "एष वन्ध्यासुतो याति, वह्निना सिञ्चति" इत्यादितो वाक्येभ्यः शाब्दबोधो जायत एव । अत एव च "कथमद्रवेण वह्निना सेकं ब्रवीषि" इत्युपहासः सङ्गच्छते । किञ्च बाधनिश्चये सति "शब्दो नित्यो न वा" इति विप्रतिपत्तिवाक्यस्य शाब्दबोधाजनकत्वं वादिप्रतिवादिभ्यां वादकथा न प्रवर्तेत । बाधनिश्चयकाले उक्तवाक्याच्छाब्दबोधो न जायते किन्तु पदार्थस्मरमात्रमिति स्वीकारे तु सर्वत्रैव पदार्थस्मरणमात्रस्वीकारेणैव निर्वाहे शाब्दमात्रस्योच्छेदः स्यात् । यद्यपि प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वाद्यत्र प्रवृत्तिर्जायते तत्र विशिष्टज्ञानरूपः शाब्दबोधोऽवश्यमेव कल्पनीयः "वह्निना सिञ्चति" इत्यादौ तु प्रवृत्त्यभावान्न तादृशशाब्दबोधः कल्पयितुं योग्यः, तथापि यथा प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वं तथैव दुःखद्वेषादिकं प्रत्यपि तस्य हेतुत्वं निराबाधमेव, एवञ्च सत्यपि बाधनिश्चये "अहं महापण्डितः" इत्यसत्यभूतार्थकवाक्यश्रवणेन दुःखम्, "त्वं महापण्डितः" इत्यसत्यभूतार्थकवाक्यश्रवणेन सुखम् "अनेन चौर्यं कृतम्, व्यभिचारिणीपुत्रोऽयम्" इत्यसत्यभूतार्थकवाक्यश्रवणेन च द्वेषादिकं यज्जायते तत्सर्वं तत्तद्वाक्यजन्यविशिष्टज्ञानद्वारैव जायत इत्यवश्यमेव स्वीकरणीयं भवति । तथा च प्रवृत्तिसामर्थ्यादेव विशिष्टज्ञानं कल्पनीयमिति निर्युक्तिकमेव प्रतिभाति । विशिष्टज्ञानस्याहेतुत्वे "मुखंचन्द्रः" इतिवाक्यादिव "मुखत्वमाश्रयश्चन्द्रत्वमाश्रयः । इति वाक्यादपि चमत्कारापत्तिः स्यात् । किञ्च क्वचिद्वक्तृतात्पर्याभावाद्दैववशात्कलहसदृशवाक्यश्रवणादपि नैव दुःखं जायते । किञ्च "नेदं रजतम्" इतिभ्रमवतः पुरुषस्य ततो निवृत्तौ सत्यां केनचिदाप्तेन "इदं रजतमेव" इति प्रयुक्ते बाधनिश्चयकालेऽप्युक्तवाक्याच्छाब्दबोधात् प्रवृत्तिदर्शनाच्च बाधनिश्चयस्य शाब्दबोधे प्रतिबन्धकत्वकथनं सर्वथैवासङ्गतम् । परञ्चाप्रामाण्यज्ञानानास्कन्दितज्ञानस्यैव प्रवृत्तिं प्रति कारणत्वं स्वीकार्यम् । अत एव "वह्निना सिञ्चति" इत्यत्र "वह्निकरणकः सेकः" इतिशाब्दबोधसत्त्वेऽपि "वह्निकरणत्वाभाववान् सेकः" इति बाधनिश्चयवशादुक्तशाब्दबोधेऽप्रामाण्यज्ञानोदयान्न प्रवृत्त्युपपत्तिः । अथवा शाब्दबोधमात्रस्य

बोद्धार्थविषयकतया बाधस्यैवाभावान्न कुत्रापि शाब्दबोधानुपपत्तिः। उक्तञ्च खण्डने **"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि"** इति। वस्तुतो बाधज्ञानं न ज्ञानमात्रं प्रति प्रतिबन्धकम्। बाधनिश्चयकालेऽपि सामग्र्यां सत्यां ज्ञानं जायत एव। "शब्दो नित्यो न वा" इत्यत्र नित्यत्वविषयकशाब्दसामग्र्यां नित्यत्वाभावविषयकशाब्दसामग्र्याञ्च सत्यां यथा नित्यत्वविषयकः शाब्दबोधो जायते तथैवानित्यत्वविषयकोऽपि जायत एव। एवञ्च ज्ञानद्वयस्य जातत्वे यत्र ज्ञाने सदोषसामग्रीजन्यत्वग्रहस्तत्राप्रामाण्यग्रहस्ततः प्रवृत्त्यनुपपत्तिः। तथा च बाधनिश्चयस्याप्रतिबन्धकत्वादेव तस्याभावस्याकारणत्वं सिध्यतीत्याहुः। **आलङ्कारिकास्तु** शाब्दबोधे न योग्यताज्ञानं कारणं न वाऽयोग्यतानिश्चयः प्रतिबन्धकः। बाधनिश्चयसत्त्वेऽपि "मुखं चन्द्रः" इत्यादितो रूपकादिबोधोदयात् "एष बन्ध्यासुतो याति खपुष्पकृत-शेखरः" इत्यादिश्लोकार्थबोधेन चमत्कारातिशयानुभवाच्च। तत्र तत्र पदार्थस्मरणमात्रस्वीकारे **"घटमानय"** इत्यादिवाक्यस्थलेऽपि तथा वक्तुं शक्यतया शाब्दबोधमात्रस्योच्छेद एव स्यात्। अतश्च बाधनिश्चयनिष्ठप्रतिबन्धकता-निरूपितप्रतिबन्ध्यतावच्छेदककोटौ शाब्दभिन्नत्वमेव विशेषणीयम्। प्रवृत्तिश्चाप्रामाण्यज्ञानशून्यज्ञानेनैव जायते। अतश्च प्राक्तनबाधज्ञानेन तज्ज्ञाने यदाऽप्रामाण्यग्रहस्तदा प्रवृत्तिर्नैव जायते। तत्र च प्रवृत्त्यर्थं न विशिष्टज्ञानमपेक्षितं भवति। अत एव च नाट्यकाव्यजन्यबोधस्थले सम्बन्धिविशेषशून्यत्वेन विभावादीनां प्रत्ययो भवति। उक्तञ्च ( काव्य प्र० उल्लास ४ कारिका ३०, २७, २८ )।

> "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
> जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः॥"
>
> "कारणान्यथ कार्याणि सहकारीणि यानि च।
> रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥"
>
> "विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।
> व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः॥" इति॥

तत्र रतिः = अनुकूलेऽर्थे मनस उत्कटावेशः, तदादयः स्थायिभावा वासनारूपेणात्मनि स्थितास्तान् विभा-वयन्ति = आस्वादयोग्यतां सम्पादयन्तीति विभावा ललनादीनि, तान्येव रत्यादीनामाविर्भावकारणान्यालम्बनपदाभि-धेयानि, प्रादुर्भूते तस्मिन् रत्यादौ तस्य यानि पुष्टिरूपोद्दीपनकारीणि चन्द्रोदयप्रभृतीन्युद्दीपनपदव्यपदेश्यानि कारणानि, कार्याणि रत्यादिजन्यानि कायिकादिभेदेन नानाविधानि कटाक्षभुजोत्क्षेपकाकूक्तिप्रभृतीनि। सहकारीणि रत्यादिकार्यस्य कटाक्षभुजोत्क्षेपादेर्जनने सहायकभूतानि निर्वेदादीन्यवमानादीनि। तानि नाट्यकाव्ययोरभिनयात्मकं काव्यं नाट्यम्, काव्यं श्रव्यं तयोर्ललनादीनि विभावाः, कटाक्षादीन्यनुभावाः, निर्वेदादीनि व्यभिचारिण इति कथ्यन्ते। तैर्विभावाद्यै-र्व्यक्तः = व्यञ्जनाख्यवृत्त्या प्रतिपादितः, स पूर्वप्रकान्तः, स्थायी = अविच्छिन्नप्रवाहः, भावः = चित्तवृत्तिविशेषः, रसः स्मृतः कथितो ध्वनिकारादिभिरिति। तथा च काव्यादिना बोधकाले रामादीनां दर्शनीयचरितानामभावेऽपि नाट्यनैपुण्येन कृत्रिमैरपि = अविद्यमानैरपि, विभावादिभिर्नर्तके सीतादिविषयिणी अनुरागरूपा रामरतिरविद्यमानापि तस्मिन् स्थितेव प्रतीयमाना रसिकानां हृदये चमत्कारं समर्पयन्ती विभावादिभिः सहैव रसपदमधिरोहति। अर्थाद्-विभावादिभिः सहैव रसस्य समूहालम्बनात्मिका प्रतीतिर्जायते। यथाऽसत्यपि सर्पे सर्पतयाऽवलोकिताद्रज्जुविशेषाद्-दभीरुदेति। तथा च बाधनिश्चयसत्त्वेऽपि योग्यताज्ञानविरहेऽपि रामादिसम्बन्धिविशेषराहित्येन शाब्दबोधोदयेन न योग्यताज्ञानं कारणं न वा बाधनिश्चयः प्रतिबन्धक इति कथयन्ति। तन्न युक्तम्, एवं सत्ययोग्यवाक्यस्योच्छेदापत्तिः स्यात्। "चन्द्रो मुखम्" इति वाक्यादालङ्कारिकाणां बोधे सत्यपि पामराणां बोधानुदयाद् वासनाविशेष एव उत्तेजको वाच्यो भवेत्। एवञ्चोत्तेजकाभावविशिष्टस्य बाधनिश्चयस्य प्रतिबन्धकत्वं प्रकल्प्य तदभावस्य हेतुत्वकल्पने गौरवमेव प्रसज्यते। अतश्च योग्यताज्ञानस्यैव कारणत्वमङ्गीकार्यम्। "चन्द्रो मुखम्" इतिरूपकस्थले चन्द्रपदस्य चन्द्रसदृशे लाक्षणिकत्वस्वीकारेण "चन्द्राभिन्नं मुखम्" इत्येव बोधो जायते। "वन्ध्यासुतो याति" इत्यादिवाक्यस्थले मानसबोध एव स्वीकार्यः।

नाट्यकाव्यस्थले च न रत्यादीनामुत्पत्तिरभिव्यक्तिर्भुक्तिर्वा भवति किन्तु तत्रानुमितिरेव जायते। तथाहि

रामोऽयं सीताविषयकरत्यादिमान्, सीताद्यात्मकविभावादिसम्बन्धित्वात्, सीताविषयककटाक्षादिमत्त्वाद्वा, यन्नैवं तन्नैवं यथा चैत्र इति। तथा च व्यञ्जनावृत्त्या जायमानबोधस्थले सर्वत्रैवानुमितिर्मानसबोधो वा स्वीकार्यः। किञ्च शाब्दबोधमात्रस्य विशिष्टबुद्धित्वात्तत्र योग्यताज्ञानस्य कारणत्वाकल्पने मानाभावेन तस्याकारणत्वकथनं बालप्रलपितमेव। अत एव च काव्यप्रकाशस्य प्रसिद्धटीकाकर्तृभिः श्रीभीमसेनदीक्षितैः "यद्वाऽमुकस्यैवेत्यवधारणं विनाऽमुकस्येत्येवं प्रतीतिः। अत एवोक्तं **ममैवैत इति। नियमानवध्यवसायादिति**। तथा च स्वीयत्वासंसर्गाग्रहात्स्वीयत्वसंसर्गग्रहप्रयोजनं सम्पद्यते। एवञ्च वाक्यार्थबोधे सम्बन्धित्वानुभवोऽपि न विरुध्यते। संसर्गबोधे सम्बन्धी न विषयः किन्तु पदार्थमात्रमेवेत्यनुभवविरोधाद्विचाराऽसहत्वाच्चानुपादेयम्" इत्युक्तं सङ्गच्छते। तथा च तन्मतेऽपि वाक्यार्थबोधे सम्बन्धिविषयत्वनियतत्वात् तस्य कारणत्वं निर्वहत्येव।

**प्राभाकरास्तु** योग्यत्वं नाम सम्बन्धार्हत्वमेव। सम्बन्धार्हत्वञ्च सम्बन्धित्वेन दृष्टत्वादवगम्यते। यद्यपि वैदिकपदानामपूर्वकार्येणान्विताभिधानं न स्यात्, तस्य मानान्तरागोचरतया तेन साकं कस्यचित्पदार्थस्य सम्बन्धायोग्यत्वात्, तथापि तत्रापि सामान्यतया योग्यतावधारणं विशेषेणान्वयबोध उपयुज्यते। यदप्यपूर्वं तदपि कार्यमेवेति यल्लौकिककार्यसम्बन्धार्हं तद् वेदेऽपि योग्यमित्यदोषः। उक्तञ्च—

**सामान्येनैव योग्यत्वं लोके यदवधारितम्।**
**तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम्॥** (प्र० प० वाक्यार्थमातृकावृत्तिः।) इति।

अन्ये तु यदयोग्यतया नावधारितं तद् योग्यम्। तेन प्रमाणान्तराप्रतीतेनापि विध्यर्थेनान्विताभिधानं सिध्यतीत्याहुः। तदिदमसारम्। यथा प्रमाणावेद्ये वस्तुनि कस्यचिदयोग्यताऽवधारयितुं न शक्यते तथैवायोग्यताऽपीति सर्वस्य सर्वेण प्रकारेण तस्मिन्नन्वयः स्यात्। भावार्थस्यैव विषयत्वेनान्वयः, अनुपादेयविशेषविशिष्टस्य स्वर्गकामादेर्नियोज्यत्वेनान्वय इति नियमो नोपपद्यत इत्याहुः। तन्न समीचीनम्, योग्यतावधारणस्य शाब्दबोधहेतुत्वस्वीकारे पदानामन्विते शक्तिरिति कथनं निर्युक्तिकमेव। यदि सामान्येन योग्यतावधारणं विशेषेणान्वयबोध उपयुज्यत इत्युच्यते, तर्हि सामान्येन योग्यतावधारणवशाद् विशेषतोऽन्वयबोधसम्भवादन्विते शक्तिरित्यस्य काऽऽवश्यकता। एवञ्च विशेषेणाभिहितान्वयं परित्यज्यान्विताभिधानाश्रयणे गौरवमेव प्रसज्यत इत्यादिबहुभिर्दोषैर्नैयायिकैर्न तादृशं योग्यत्वं स्वीक्रियते।

**भाट्टास्तु** अन्वयप्रयोजकधर्मवत्त्वमेव योग्यत्वम्। "पयसा सिञ्चति" इत्यत्र सेकान्वयप्रयोजकधर्मस्य जलत्वस्य पयसि सत्त्वाद्योग्यता सङ्घटते। "वह्निना सिञ्चति" इत्यत्र च सेकान्वयप्रयोजकजलत्वादिधर्मस्य वह्नौ विरहान्न तत्र योग्यतेति प्राहुः। परञ्च पदानामितरान्विते शक्तिरिति वादिनां भाट्टानां मते संसर्गस्य शक्तिभास्यतया पदार्थद्वयसंसर्गस्य योग्यतां परित्यज्यान्वयप्रयोजकधर्मवत्त्वस्य योग्यतारूपत्वस्वीकारे "वह्निना सिञ्चति" इति वाक्यस्यापि प्रामाण्यं स्यादेव। तत्रापि च सेकान्वयप्रयोजकधर्मपदेन द्रव्यत्वमादाय तस्य वह्नावपि सत्त्वात्। यदि "वह्नित्वेन वह्निना सिञ्चति" इति वाक्यस्यैवाप्रामाण्यं न तु "द्रव्यत्वेन वह्निना सिञ्चति" इति वाक्यस्य, तर्हि विदुषामपि द्रव्यत्वेन वह्निमुपादाय सेके प्रवृत्तिः स्यात्। यद्यपि द्रव्यत्वरूपधर्ममादाय न केनापि विदुषा "द्रव्येण सिञ्चति" इति प्रयुज्यते, अतश्च सेकान्वयप्रयोजको धर्म द्रव्यत्वं भवितुं नार्हति, तथापि "शकटेन याति" इत्यत्र गमनान्वयप्रयोजको धर्मो यथा शकटत्वं भवति तथा चरणत्वादिकमपि। एवञ्च गमनान्वयप्रयोजकधर्मपदेन चरणत्वादिकमादाय तस्य शकटेऽभावादुक्तवाक्यस्य प्रामाण्यं न स्यात्। यद्यन्वयप्रयोजकतात्पर्यविषयतावच्छेदकीभूतधर्मवत्त्वमेव तदित्युच्यते तर्हि "पयसा सिञ्चति न वह्निना" इत्यत्र परम्परया सेकान्वयप्रयोजकतात्पर्यविषयतावच्छेदकीभूतधर्मपदेन वह्नित्वमादाय तस्य पयसि विरहादुक्तवाक्यस्य प्रामाण्यं न स्यात्। साक्षादन्वयप्रयोजकतादृशधर्मवत्त्वस्य तत्स्वीकारे "पयसा सिञ्चति" इत्यत्रापि साक्षादन्वयप्रयोजकतादृशधर्मपदेन जलत्वं ग्रहीतुं न शक्यते। तत्र च सेके जलकरणकत्वान्वयस्यैव सिद्धान्तसिद्धत्वादित्यादिभिर्दोषैर्न सा योग्यता समीचीनेत्याधुनिका वदन्ति।

अथ शाब्दबोधं प्रति योग्यताज्ञानस्य कारणत्वं यथा सिध्यति तत्प्रतिपाद्याधुना तयोः कार्यकारणभाव आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या वेति लाघवगौरवानुसन्धानमुखेन गूढार्थतत्त्वालोककृतां सरणिमनुसृत्य

किञ्चिद्विचार्यते। समवायेन तद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तेन सम्बन्धेन तद्धर्मावच्छिन्नविशेष्यतानिरूपिततद्धर्मावच्छिन्नप्रकारताशालियोग्यताज्ञानं कारणमित्यात्मनिष्ठप्रत्यासत्त्या धर्मितावच्छेदकतासम्बन्धेन तत्प्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन तत्प्रकारकयोग्यताज्ञानं कारणमिति विषयनिष्ठप्रत्यासत्त्या च कार्यकारणभावः। तत्र च भट्टाचार्यैः "योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेनानन्तकार्यकारणभावकल्पनमपेक्ष्य लाघवाद्धर्मितावच्छेदकतासम्बन्धेन शाब्दबुद्धौ तादृशसम्बन्धेन धर्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात्" इति ग्रन्थेन विषयनिष्ठप्रत्यासत्त्या कार्यकारणस्यैव लाघवादौचित्यं प्रत्यदर्शि। परञ्च धर्मितावच्छेदकतासम्बन्धेन तत्प्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन तत्प्रकारकयोग्यताज्ञानस्य कारणत्वे चैत्रस्य तादृशयोग्यताज्ञानाद् मैत्रस्यापि तादृशशाब्दबोधः स्यात्। चैत्रस्य "घटो द्रव्यम्" इत्यत्र घटप्रकारकयोग्यताज्ञानस्य यथा द्रव्यत्वे सत्त्वम्, तथैव मैत्रस्यापि घटप्रकारकशाब्दबोधस्यापि सत्त्वात्। समवायस्य प्रत्यासत्तित्वे च चैत्रस्य द्रव्यत्वनिष्ठधर्मितावच्छेदकताकघटप्रकारकयोग्यताज्ञानस्य मैत्रे विरहान्न शाब्दबोधापत्तिः। यदि तु कार्यकारणतावच्छेदककुक्षौ तत्तत्पुरुषीयत्वनिवेशेन नोक्तापत्तिरित्युच्यते तदा धर्मितावच्छेदकानामिव पुरुषाणामानन्त्येन गौरवमेव प्रसज्यते। किन्त्वेतावन्मात्रेणैव लाघवगौरवयोरन्यतरस्य निर्णेतुमशक्यत्वात्प्रकारान्तरेण तन्निर्णयार्थं प्रस्तूयते। तत्र च चैत्रः, मैत्रः, देवदत्तः, विमलः, कौशलः, रामः, सुनीतिः, अजयः, अभयश्चेति पुरुषदशकम्, द्रव्यम्, प्रमेयः, अभिधेयः, जातिमान्, पृथिवी, संयोगी, अवयवी, सक्रियः, समवायी, विभागाश्रयश्चेति विषयदशकञ्चानुसृत्य कार्यकारणभावविचारे पुरुषनिष्ठप्रत्यासत्त्या विंशतिः कार्यकारणभावाः, विषयनिष्ठप्रत्यासत्त्या तु दशैव। पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे तत्तत्पुरुषस्यापि विशेष्यत्वसम्भवेन यथा विंशतिः कार्यकारणभावा भवन्ति तथा प्रदर्श्यन्ते। तथाहि

(१) द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशप्रकारताशालियोग्यताज्ञानम्। (२) प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (३) अभिधेयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (४) जातिमत्त्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (५) पृथिवीत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (६) संयोगित्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (७) अवयवित्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (८) सक्रियत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (९) समवायित्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१०) विभागाश्रयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (११) चैत्रत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१२) मैत्रत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१३) देवदत्तत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१४) यज्ञदत्तत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१५) विमलत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१६) कौशलत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१७) रामत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१८) सुनीतित्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (१९) अजयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानम्। (२०) अभयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तादृशयोग्यताज्ञानञ्च कारणमिति।

विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे च यथा दश कार्यकारणभावास्तथा प्रदर्श्यन्ते। तथाहि

( १ ) धर्मितावच्छेदकतासम्बन्धेन चैत्रीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन चैत्रीयपदार्थप्रकारकयोग्यताज्ञानम् ( २ ) धर्मितावच्छेदकतासम्बन्धेन मैत्रीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन मैत्रीयपदार्थप्रकारकयोग्यताज्ञानम् । ( ३ ) धर्मितावच्छेदकतासम्बन्धेन देवदत्तीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन देवदत्तीयपदार्थप्रकारकयोग्यताज्ञानम् । ( ४ ) धर्मितावच्छेदकतासम्बन्धेन यज्ञदत्तीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन यज्ञदत्तीयपदार्थप्रकारकयोग्यताज्ञानम् । ( ५ ) धर्मितावच्छेदकतासम्बन्धेन विमलीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन विमलीयपदार्थप्रकारकयोग्यताज्ञानम् । ( ६ ) धर्मितावच्छेदकतासम्बन्धेन कौशलीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन कौशलीयपदार्थप्रकारकयोग्यताज्ञानम् । ( ७ ) धर्मितावच्छेदकतासम्बन्धेन रामीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन रामीयपदार्थप्रकारकयोग्यताज्ञानम् । (८ धर्मितावच्छेदकतासम्बन्धेन सुनीतीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन सुनीतीयपदार्थप्रकारकयोग्यताज्ञानम् । ( ९ ) धर्मितावच्छेदकतासम्बन्धेन अजयीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेन अजयीयपदार्थप्रकारकयोग्यताज्ञानम् । ( १० ) धर्मितावच्छेदकतासम्बन्धेनाभयीयपदार्थप्रकारकशाब्दबोधं प्रति तेन सम्बन्धेनाभयीयपदार्थप्रकारकयोग्यताज्ञानञ्च कारणमिति ।

अथ केचित्तु पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे प्रकारत्वविशेष्यत्वयोर्निरूप्यनिरूपकभावापन्नयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण विषयदशकं पुरुषदशकञ्चाधिकृत्य विचारे विंशतिः कार्यकारणभावाः, धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे च दशैव कार्यकारणभावा भवन्ति । (१) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालियोग्यताज्ञानम्, ( २ )समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति पदार्थत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालियोग्यताज्ञानम्, ( ३ ) प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालियोग्यताज्ञानम्, ( ४ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वावच्छिन्नविशेष्यताशालियोग्यताज्ञानम्, (५) समवायेनाभिधेयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ६ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपिताभिधेयत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ७ ) समवायेन जातिमत्त्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ८ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितजातिमत्त्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम् ( ९ ) पृथिवीत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( १० ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितपृथिवीत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ११ ) संयोगित्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम् ( १२ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितसंयोगित्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १३ ) समवायेनावयवित्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( १४ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितावयवित्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १५ ) समवायेन सक्रियत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( १६ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितसक्रियत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १७ ) समवायेन समवायित्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, (१८) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितसमवायित्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १९ ) समवायेन विभागाश्रयत्वावच्छिन्नविशेष्यतानिरूपित-

पदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २० ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितविभागाश्रयत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानञ्च कारणमिति विंशतिः कार्यकारणभावाः।

धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे च ( १ ) धर्मितावच्छेदकतासम्बन्धेन चैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २ ) धर्मितावच्छेदकतासम्बन्धेन मैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३ ) धर्मितावच्छेदकतासम्बन्धेन देवदत्तीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ४ ) धर्मितावच्छेदकतासम्बन्धेन यज्ञदत्तीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ५ ) धर्मितावच्छेदकतासम्बन्धेन विमलीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ६ ) धर्मितावच्छेदकतासम्बन्धेन कौशलीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन कौशलीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ७ ) धर्मितावच्छेदकतासम्बन्धेन रामीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन रामीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ८ ) धर्मितावच्छेदकतासम्बन्धेन सुनीतीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन सुनीतीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ९ ) धर्मितावच्छेदकतासम्बन्धेनाजयीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेनाजयीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( १० ) धर्मितावच्छेदकतासम्बन्धेनाभयीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेनाभयीयतादृशप्रकारताशालियोग्यताज्ञानञ्च कारणमिति दशकार्यकारणभावा इति प्राहुः।

तन्न योग्यम्, अत्र द्रव्यं प्रमेयोऽभिधेयो जातिमान् पृथिवी संयोग्यवयवो सक्रियः समवायी विभागाश्रयश्चेति विशेष्यदशकम्, पदार्थः कार्यं रूपवान् गुणवाननित्यो गन्धवान् नीलो मूर्तो हेतुमान् महांश्चेति प्रकारदशकम्, चैत्रो मैत्रो देवदत्तो यज्ञदत्तो विमलः कौशलो रामः सुनीतिरजयोऽभयश्चेति पुरुषदशकञ्चेत्यधिकृत्य कार्यकारणभावविचारे लाघवगौरवे सुज्ञाते एव भवतः। तथा च यथैकैकप्रकारस्य विशेष्यदशकं तथैवैकैकविशेष्यस्य प्रकारदशकं विनिगमनाविरहादधिकृत्य धर्मितावच्छेदकताप्रत्यासत्त्यैव प्रकारतावच्छेदकताप्रत्यासत्त्याऽपि कार्यकारणभावस्य विषयनिष्ठप्रत्यासत्तित्वपक्षे वक्तव्यत्वात्तत्पक्षे धर्मितावच्छेदकताप्रत्यासत्त्या यत्कार्यकारणभावदशकं यच्च प्रकारतावच्छेदकताप्रत्यासत्त्या कार्यकारणभावदशकं तत्रैकैकस्मिन् ( कार्यकारणभावे ) तत्तत्पुरुषीयत्वनिवेशे कार्यकारणभावानां द्वे शते। तथाहि—( १ ) धर्मितावच्छेदकतासम्बन्धेन चैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन चैत्रीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( २ ) धर्मितावच्छेदकतासम्बन्धेन मैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन मैत्रीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ३ ) तत्सम्बन्धेन देवदत्तीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन देवदत्तीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ४ ) तत्सम्बन्धेन यज्ञदत्तीयतादृशप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन यज्ञदत्तीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ५ ) तत्सम्बन्धेन विमलीयतादृशप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन विमलीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ६ ) तत्सम्बन्धेन कौशलीयतादृशप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन कौशलीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ७ ) तत्सम्बन्धेन रामीयतादृशप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन रामीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ८ ) तत्सम्बन्धेन सुनीतीयतादृशप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन सुनीतीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ९ ) तत्सम्बन्धेनाजयीयतादृशप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेनाजयीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( १० ) तत्सम्बन्धेनाभयीयतादृशप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेनाभयीयतादृशप्रकारताशालियोग्यताज्ञानञ्च कारणमिति पुरुषदशकं विशेष्यदशकं प्रकारमेकञ्चाधिकृत्य यथा दश कार्यकारणभावास्तथोपर्युक्तप्रकारनवकमधिकृत्य नवतिः कार्यकारणभावा भवन्ति।

एवम् ( १ ) प्रकारतावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयतादृशविशेष्यताशालियोग्यताज्ञानम् ( २ ) तत्सम्बन्धेन मैत्रीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन

मैत्रीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३ ) तत्सम्बन्धेन देवदत्तीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन देवदत्तीयतादृशविशेष्यताशालियोग्यताज्ञानम्, (४) तत्सम्बन्धेन यज्ञदत्तीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन यज्ञदत्तीयतादृशविशेष्यताशालियोग्यताज्ञानम्, (५)तत्सम्बन्धेन विमलीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन विमलीयतादृशविशेष्यताशालियोग्यताज्ञानम्, (६) तत्सम्बन्धेन कौशलीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन कौशलीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ७ ) तत्सम्बन्धेन रामीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन रामीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ८ ) तत्सम्बन्धेन सुनीतीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन सुनीतीयतादृशविशेष्यताशालियोग्यताज्ञानम् , ( ९ ) तत्सम्बन्धेनाभयीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धे-नाजयीयतादृशविशेष्यताशालियोग्यताज्ञानम्, (१०) तत्सम्बन्धेनाभयीयतादृशविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेना-भयीयतादृशविशेष्यताशालियोग्यताज्ञानञ्चेति दश कार्यकारणभावा प्रकारतावच्छेदकतायाः प्रत्यासत्तित्वपक्षे यथा भवन्ति तथोपर्युक्तं पुरुषनवकं विशेष्यनवकञ्चाधिकृत्य नवतिः कार्यकारणभावा भवन्तीति मिलित्वा विषयनिष्ठप्रत्यासत्या तत्पक्षे कार्यकारणभावानां द्वे शते सञ्जाते ।

पुरुषनिष्ठप्रत्यासत्या कार्यकारणभावपक्षेऽपि प्रकारत्वविशेष्यत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण तेषां द्वे शत एव । अस्मिन् पक्षेऽप्येकैकप्रकारस्य विशेष्यदशकमेकैकविशेष्यस्य प्रकारदशकञ्चाधिकृत्य कार्यकारणभावोऽनु-सन्धेयः । तथाहि ( १ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितकार्यत्वावच्छिन्न-प्रकारताशालिबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यता-निरूपितरूपवत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ४ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितगुणवत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्य-ताज्ञानम्, ( ५ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितानित्यत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्ब-न्धेन तादृशयोग्यताज्ञानम्, ( ६ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितगन्धवत्त्वावच्छिन्नप्रकारताशालि-शाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ७ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपित-नीलत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ८ ) समवायेन द्रव्य-त्वावच्छिन्नविशेष्यतानिरूपितमूर्तत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, (९)समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितहेतुमत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारता-शालियोग्यताज्ञानम्, ( १० ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितमहत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशयोग्यताज्ञानञ्च कारणमिति दश कार्यकारणभावाः ।

एवम् ( १ ) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २ ) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितकार्यत्वा-वच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३ ) समवायेन प्रमेयत्वावच्छिन्न-विशेष्यतानिरूपितरूपवत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ४ ) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितगुणवत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारता-शालियोग्यताज्ञानम्, ( ५ ) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितानित्यत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, (६) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितगन्धवत्त्वावच्छिन्न-प्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ७ ) समवायेन प्रमेयत्वावच्छिन्नविशेष्यता-निरूपितनीलत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ८ ) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितमूर्तत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यता-ज्ञानम्, ( ९ ) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितहेतुमत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, (१०) समवायेन प्रमेयत्वावच्छिन्नविशेष्यतानिरूपितमहत्त्वावच्छिन्नप्रकारताशालि-

शाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानञ्च कारणमिति दश कार्यकारणभावाः। एवम् "अभिधेयो जातिमान् पृथिवी संयोग्यवयवी सक्रियः समवायी विभागाश्रयश्च" इतिविशेष्याष्टकं "पदार्थः कार्यम्, रूपवान्, गुणवान्, अनित्यः, गन्धवान्, नीलः, मूर्तः, हेतुमान् महांश्च" इतिप्रकारदशकञ्चादायाशीतिः कार्यकारणभावा भवन्तीति मिलित्वा शतं कार्यकारणभावाः।

विशेष्यविशेषणभावे विनिगमनाविरहात् शतसङ्ख्याका अन्ये कार्यकारणभावा भवन्ति। तथाहि—( १ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २ ) समवायेन कार्यत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३ ) समवायेन रूपवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ४ ) समवायेन गुणवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ५ ) समवायेनानित्यत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ६ ) समवायेन गन्धवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ७ ) समवायेन नीलत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ८ ) समवायेन मूर्तत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ९ ) समवायेन हेतुमत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १० ) समवायेन महत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानञ्चेति दश कार्यकारणभावाः। एवं "प्रमेयः, अभिधेयः, जातिमान्, पृथिवी, संयोगी, अवयवी, सक्रियः, समवायी, विभागाश्रयश्च" इति विशेष्यनवकं "पदार्थः, कार्यम्, रूपवान्, गुणवान्, अनित्यः, गन्धवान्, नीलः, मूर्तः, हेतुमान्, महांश्च" इति प्रकारदशकञ्चादाय नवतिः कार्यकारणभावाः। तथा च पुरुषनिष्ठकार्यकारणभावपक्षे मिलित्वा कार्यकारणभावानां द्वे शते।

किञ्च—धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे एकैकस्मिन् विशेष्ये प्रकारदशकमध्यात् त्रयाणां त्रयाणामेव, विशेष्यत्रये एवैकैकस्य च प्रकारत्वे स्वीक्रियमाणे कार्यकारणभावानां द्वे शते। पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे विंशत्यधिकमेकशतमेव कार्यकारणभावाः। तथाहि विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे ( १ ) प्रकारतावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( २ ) प्रकारतावच्छेदकतासम्बन्धेन मैत्रीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन मैत्रीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३ ) प्रकारतावच्छेदकतासम्बन्धेन देवदत्तीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन देवदत्तीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ४ ) प्रकारतावच्छेदकतासम्बन्धेन यज्ञदत्तीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन यज्ञदत्तीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ५ ) प्रकारतावच्छेदकतासम्बन्धेन विमलीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन विमलीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ६ ) प्रकारतावच्छेदकतासम्बन्धेन कौशलीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन कौशलीयतादृशविशेष्यताशालियोग्यताज्ञानम् ( ७ ) प्रकारतावच्छेदकतासम्बन्धेन रामीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन रामीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ८ ) प्रकारतावच्छेदकतासम्बन्धेन सुनीतीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं तत्सम्बन्धेन सुनीतीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( ९ ) प्रकारतावच्छेदकतासम्बन्धेनाजयीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेनाजयीयतादृशविशेष्यताशालियोग्यताज्ञानम्, ( १० ) प्रकारतावच्छेदकतासम्बन्धेनाभयीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेनाभयीयतादृशविशेष्यताशालियोग्यताज्ञानञ्च कारणमिति दश कार्यकारणभावाः।

एवमेव पूर्वोक्तं विशेष्यनवकं पुरुषदशकञ्चादाय नवतिः कार्यकारणभावाः। एवमेकैकस्य प्रकारस्य विशेष्यत्रये तु ( १ ) धर्मितावच्छेदकतासम्बन्धेन चैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयतादृश-

प्रकारताशालियोग्यताज्ञानम्, ( २ ) धर्मितावच्छेदकतासम्बन्धेन मैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन मैत्रीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ३ ) धर्मितावच्छेदकतासम्बन्धेन देवदत्तीयपदार्थत्वावच्छिन्न-प्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन देवदत्तीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ४ ) धर्मितावच्छेदकतासम्बन्धेन यज्ञदत्तीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन यज्ञदत्तीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ५ ) धर्मितावच्छेदकतासम्बन्धेन विमलीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन विमलीयतादृशप्रकारता-शालियोग्यताज्ञानम्, ( ६ ) धर्मितावच्छेदकतासम्बन्धेन कौशलीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्ब-न्धेन कौशलीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ७ ) धर्मितावच्छेदकतासम्बन्धेन रामीयपदार्थत्वावच्छिन्नप्रकारता-शालिशाब्दं प्रति तत्सम्बन्धेन रामीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ८ ) धर्मितावच्छेदकतासम्बन्धेन सुनीतीय-पदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन सुनीतीयतादृशप्रकारताशालियोग्यताज्ञानम्, ( ९ ) धर्मिता-वच्छेदकतासम्बन्धेनाजयीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेनाजयीयतादृशप्रकारताशालियोग्यता-ज्ञानम्, ( १० ) धर्मितावच्छेदकतासम्बन्धेनाभयीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेनाभयीय-तादृशप्रकारताशालियोग्यताज्ञानञ्च कारणमिति दश कार्यकारणभावाः। एवमेव प्रकारनवकं पुरुषदशकञ्चाधिकृत्य नवतिः कार्यकारणभावाः। तथा च विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे कार्यकारणभावानां द्वे शते।

पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे तु विंशत्यधिकशतसङ्ख्याकाः कार्यकारणभावाः। तथाहि ( १ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यता-शालियोग्यताज्ञानम्, ( २ ) समवायेन कार्यत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३ ) समवायेन रूपवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्न-विशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानञ्च कारणमिति त्रयः कार्यकारणभावाः। एवमेव विशेष्यनवकं प्रकारत्रयञ्चाधिकृत्य सप्तविंशतिसङ्ख्याकाः कार्यकारणभावाः। एवम्, ( १ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यता-ज्ञानम्, ( २ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपिताभिधेयत्वावच्छिन्नविशेष्यता-शालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानञ्च कारणमिति त्रयः कार्यकारणभावाः। एवमेव प्रकारनवकं विशेष्यत्रयञ्चाधिकृत्य सप्तविंशतिसङ्ख्याकाः कार्यकारणभावाः। मिलित्वा च षष्टिः कार्यकारणभावा भवन्ति। एवं पुरुषत्रयस्यैव विशेष्यत्वे पूर्वोक्तप्रकारदशकस्य विशेष्यदशकस्य च प्रकारत्वे स्वीक्रियमाणे षष्टिः कार्य-कारणभावा भवन्ति। तथाहि ( १ ) समवायेन चैत्रत्वावच्छिन्नविशेष्यतानिरूपितद्रव्यत्वावच्छिन्नप्रकारताशालि-शाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २ ) समवायेन मैत्रत्वावच्छिन्नविशेष्यतानिरूपितद्रव्य-त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३ ) समवायेन देवदत्तत्वा-वच्छिन्नविशेष्यतानिरूपितद्रव्यत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानञ्च कारणमिति त्रयः कार्यकारणभावाः। एवमेव पूर्वोक्तविशेष्यनवकं प्रकारत्वेनाभिप्रेतम्, प्रकारदशकं पुरुषत्रयञ्चाधिकृत्य सप्तपञ्चाशत्सङ्ख्याकाः कार्यकारणभावाः। मिलित्वा तु विंशत्यधिकशतसङ्ख्याकाः कार्यकारणभावाः पुरुषनिष्ठप्रत्या-सत्त्या कार्यकारणभावपक्षे सङ्गच्छत इति विपरीत एव न्यूनाधिकभाव इति।

**गूढार्थतत्त्वालोककृतस्तु**– विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे विशेष्यदशकं प्रकारदशकं पुरुषदशक-ञ्चेत्यधिकृत्य कार्यकारणभावविचारे सर्वेषां सर्वविशेष्यत्वप्रकारत्वसम्भवेन कार्यकारणभावानां षट्शत्येव सम्भवति। तथाहि प्रकारतावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयतादृश-विशेष्यताशालियोग्यताज्ञानं कारणमिति रीत्या पुरुषभेदाद्दश कार्यकारणभावाः। एवं धर्मितावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयतादृशप्रकारताशालियोग्यताज्ञानं कारणमिति रीत्या चैत्रादिदश पुरुषभेदाद्दशकार्यकारणभावाः। तथा च विशेष्यदशकमध्यादेकैकस्य विशेष्यस्य प्रकारत्वं तदन्येषां विशेष्यत्वञ्चाधिकृत्य चैत्रादिदशपुरुषभेदात्कार्यकारणभावानां द्वे शते। एवं पदार्थादिप्रकारदशकमध्यादेकैकस्य

विशेष्यत्वं प्रकारत्वञ्चाधिकृत्य चैत्रादिदशपुरुषभेदात्कार्यकारणभावानां द्वे शते । एवं चैत्रादिपुरुषदशकमध्यादेकैकस्य पुरुषस्य प्रकारत्वं विशेष्यत्वञ्चाधिकृत्य चैत्रादिदशपुरुषभेदात्कार्यकारणभावानां द्वे शते । मिलित्वा च कार्यकारणभावानां षट्शती सम्भवति ।

पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे तु तेषां ससत्युत्तराष्टशती सम्भवति । तथाहि (१) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, (२) समवायेन कार्यत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३ ) समवायेन रूपवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ४ ) समवायेन गुणवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ५ ) समवायेनानित्यत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ६ ) समवायेन गन्धवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ७ ) समवायेन नीलत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ८ ) समवायेन मूर्तत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ९ ) समवायेन हेतुमत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १० ) समवायेन महत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ११ ) समवायेन चैत्रत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १२ ) समवायेन मैत्रत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १३ ) समवायेन देवदत्तत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १४ ) समवायेन यज्ञदत्तत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १५ ) समवायेन विमलत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १६ ) समवायेन कौशलत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १६ ) समवायेन रामत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १८ ) समवायेन सुनीतित्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १९ ) समवायेनाजयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २० ) समवायेनाभयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, (२१) समवायेन प्रमेयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २२ ) समवायेनाभिधेयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २३ ) समवायेन जातिमत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २४ ) समवायेन पृथिवीत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २५ ) समवायेन संयोगित्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २६ ) समवायेनावयवित्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, (२७) समवायेन सक्रियत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २८ ) समवायेन समवायित्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, (२९) समवायेन

विभागाश्रयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानञ्च कारणमित्येकोनत्रिंशत्कार्यकारणभावा भवन्ति । एवमेव विशेष्यदशकमध्यादेकैकस्मिन् विशेष्ये प्रकारदशकं पुरुषदशकं विशेष्यदशकमध्यादेकैकं विहाय विशेष्यनवकञ्चादाय तेषां प्रकारत्वे स्वीक्रियमाणेऽशीत्यधिकशतद्वयसङ्ख्याकाः कार्यकारणभावा भवन्ति । एवं प्रकारदशकमध्यादेकैकमधिकृत्य तस्य तस्य विशेष्यत्वेन स्वीक्रियमाणत्वे तत्र तत्र विशेष्यदशकं पुरुषदशकं प्रकारदशकमध्यादेकैकं विहाय विशेष्यत्वेनाभिप्रेतं प्रकारनवकञ्चादाय तेषां प्रकारत्वे स्वीक्रियमाणेऽप्यशीत्यधिकशतद्वयसङ्ख्याकाः कार्यकारणभावा भवन्ति । एवमेव पुरुषदशकमध्यादेकैकस्मिन् पुरुषे विशेष्यत्वेन स्वीक्रियमाणे विशेष्यदशकं प्रकारदशकं पुरुषदशकमध्यादेकैकं विशेष्यत्वेनाभिप्रेतं विहाय पुरुषनवकञ्चादाय तेषां प्रकारत्वे स्वीक्रियमाणेऽप्यशीत्यधिकशतद्वयसङ्ख्याकाः कार्यकारणभावा भवन्ति । तथा च पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे मिलित्वा तेषां कार्यकारणभावानां सप्तत्यधिकाष्टशती ( ८७० ) सम्भवति ।

कार्यकारणतावच्छेदककोटौ निरूप्यनिरूपकभावापन्नयोः प्रकारत्वविशेष्यत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहात्त्वितोऽप्यधिकाः कार्यकारणभावा भवन्ति । वस्तुतस्तु तत्तत्पुरुषस्य विशेष्यत्वाननुशरणेऽपि पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्ष एवाधिक्यं सञ्जायते । तत्र प्रकारदशकं विशेष्यदशकं पुरुषदशकञ्चाधिकृत्य विशेष्यविशेषणभावे विनिगमनाविरहात्पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे कार्यकारणभावानां षष्ट्यधिकसप्तशती विषयनिष्ठप्रत्यासत्त्या तत्पक्षे तु तेषां चतुःशत्येव सम्भवति ।

तथाहि पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे ( १ ) समवायेन पदार्थत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३ ) समवायेन कार्यत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ४ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितकार्यत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ५ ) समवायेन रूपवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ६ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितरूपवत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ७ ) समवायेन गुणवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ८ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितगुणवत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ९ ) समवायेनानित्यत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १० ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितानित्यत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ११ ) समवायेन गन्धवत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम् ( १२ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितगन्धवत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( १३ ) समवायेन नीलत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १४ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितनीलत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( १५ ) समवायेन मूर्तत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १६ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितमूर्तत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( १७ ) समवायेन हेतुमत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( १८ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितहेतुमत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( १९ ) समवायेन महत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २० ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपित-

महत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २१ ) समवायेनं प्रमेयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, (२२) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितप्रमेयत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २३ ) समवायेनाभिधेयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २४ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपिताभिधेयत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २५ ) समवायेन जातिमत्त्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम् ( २६ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितजातिमत्त्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २७ ) समवायेन पृथिवीत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( २८ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितपृथिवीत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( २९ ) समवायेन संयोगित्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३० ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितसंयोगित्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३१ ) समवायेनावयवित्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३२ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितावयवित्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम् ( ३३ ) समवायेन सक्रियत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्ननिशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३४ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितसक्रियत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३५ ) समवायेन समवायित्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशविशेष्यताशालियोग्यताज्ञानम्, ( ३६ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितसमवायित्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानम्, ( ३७ ) समवायेन विभागाश्रयत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालियोग्यताज्ञानम्, ( ३८ ) समवायेन द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितविभागाश्रयत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानञ्च कारणमित्यष्टात्रिंशत्सङ्ख्याकाः कार्यकारणभावाः। एवमेव प्रकारदशकं विशेष्यदशकमध्यापदेकैकं विहाय विशेष्यनवकञ्चाधिकृत्य तेषां प्रकारत्वे स्वीक्रियमाणे प्रकारत्वविशेष्यत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहाद्द्वाचत्वारिंशत्सङ्ख्याकाः (४२) कार्यकारणभावाः, मिलित्वा चाशीत्यधिकशतत्रयसङ्ख्याकाः ( ३८० ) कार्यकारणभावा भवन्ति।

एवं सर्वेषां सर्वविशेष्यत्वप्रकारत्वसम्भवाद्विशेष्यदशकं प्रकारदशकमध्यादेकैकं विहाय प्रकारनवकञ्च प्रकारत्वेनाधिकृत्य प्रकारत्वविशेष्यत्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहादशीत्यधिकशतत्रयसङ्ख्याकाः कार्यकारणभावा भवन्ति। तथा च मिलित्वा कार्यकारणभावानां षष्ट्यधिकसप्तशती (७६०) पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे भवति। विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे चतुःशती (४००) सम्भवति। तथाहि विशेष्यदशकं प्रकारदशकञ्चाधिकृत्य सर्वेषां सर्वप्रकारत्वविशेष्यत्वसम्भवात्तत्पुरुषस्य विशेष्यत्वानभ्युपगमेऽपि पुरुषदशकमध्यादेकैकं पुरुषमादाय तत्तत्पुरुषीयत्वनिवेशेऽपि (१) प्रकारतावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयतादृशविशेष्यताशालियोग्यताज्ञानम्, (२) धर्मितावच्छेदकतासम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयद्रव्यत्वावच्छिन्नप्रकारताशालियोग्यताज्ञानम्, ( ३ ) धर्मितावच्छेदकतासम्बन्धेन चैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयपदार्थत्वावच्छिन्नप्रकारताशालियोग्यताज्ञानम्, ( ४ ) प्रकारतावच्छेदकतासम्बन्धेन चैत्रीयपदार्थत्वावच्छिन्नविशेष्यताशालिशाब्दं प्रति तत्सम्बन्धेन चैत्रीयपदार्थत्वावच्छिन्नविशेष्यताशालियोग्यताज्ञानञ्च कारणमिति चत्वारः कार्यकारणभावाः। एवमेवरीत्या पुरुषनवकमधिकृत्य षट्त्रिंशत्सङ्ख्याकाः कार्यकारणभावाः। एवमेव प्रकारनवकं विशेष्यनवकं पुरुषदशकञ्चादाय षष्ट्यधिकशतत्रयसङ्ख्याकाः ( ३६० ) कार्यकारणभावा भवन्ति। तथा च मिलित्वा कार्यकारणभावानां चतुःशती ( ४०० ) एव भवति।

अथ विषयनिष्ठप्रत्यासत्त्या योग्यताज्ञानस्य कारणत्वस्य सिद्धौ सत्यामपि पदजन्यपदार्थोपस्थितेः सहकारिकारणत्वमधुना न सङ्गच्छते, यतो हि पदजन्यपदार्थोपस्थितिशाब्दबोधयोः कार्यकारणभावस्त्वात्मनिष्ठप्रत्यासत्त्या एव सञ्जायते। एवञ्च "द्रव्यं घटः" इत्यत्र धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वावच्छिन्नप्रकारताकशाब्दबोधस्य द्रव्यत्वे सत्त्वेन तत्र चोक्तसम्बन्धेन तादृशप्रकारताशालियोग्यताज्ञानस्य सत्त्वेऽपि द्रव्यपदाद्द्रव्यत्वावच्छिन्नविषयताकोपस्थितिविरहेपि शाब्दबोधापत्तिः स्यात्। प्रमेयपदात्प्रमेयत्वावच्छिन्नविषयताकोपस्थितिकाले घटत्वावच्छिन्नप्रकारताकशाब्दबोधस्योत्पत्तौ बाधकाभावेन तत्र द्रव्यपदजन्यद्रव्यत्वावच्छिन्नविषयताकोपस्थितिविरहस्याकिञ्चित्करत्वादितिशङ्कां निराकर्त्तुं ग्रन्थकार आह **समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वोपगमादिति।** तथा च यद्धर्मं प्रति यद्धर्मस्य व्यापकत्वं तद्धर्मावच्छिन्नकार्यतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ तत्तद्धर्मावच्छिन्नकार्यकारणतावच्छेदकसम्बन्धेन तद्धर्मावच्छिन्नसामग्र्यपेक्षितेति नियमानुसाराद्धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दबोधत्वं प्रति प्रकारतासम्बन्धेन शाब्दबोधत्वं व्यापकमतो धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दबोधत्वावच्छिन्नोत्पत्तौ प्रकारतासम्बन्धेन शाब्दबोधोत्पादकसामग्र्याः प्रकारतासम्बन्धेनोपस्थितिघटिताया अप्यपेक्षितत्वेन "द्रव्यं घटः" इत्यत्र न प्रकारतासम्बन्धेन द्रव्यत्वे उपस्थित्यसत्त्वे शाब्दबोधापत्तिः। **यद्यपि** योग्यताज्ञानेन सहोपस्थितेर्विषयनिष्ठप्रत्यासत्त्या सहकार्यसहकारिभावस्य सिद्धौ सत्यामप्याकाङ्क्षाज्ञानेन सह तस्या उपस्थितेस्तदनुपपत्तिरस्त्येव। "घटो द्रव्यम्" इत्याकाङ्क्षाज्ञानं विनापि "प्रमेयो घटः" इत्याकाङ्क्षाज्ञानबलाद् घटत्वावच्छिन्नप्रकारताकशाब्दबोधस्य जायमानत्वेन तत्र "घटो द्रव्यम्" इत्याकाङ्क्षाज्ञानस्य निष्प्रयोजनकत्वात्, **तथापि** व्यापकधर्मावच्छिन्नोत्पत्तौ व्याप्यधर्मावच्छिन्नसामग्र्या अप्यपेक्षितत्वनियमेन प्रकृते घटत्वावच्छिन्नप्रकारताकशाब्दबोधत्वव्याप्यो यो घटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधत्वरूपो धर्मः "घटो द्रव्यम्" इत्याकाङ्क्षाज्ञानजन्यतावच्छेदकीभूतस्तदवच्छिन्नं प्रति "घटो द्रव्यम्" इत्याकाङ्क्षाज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदकसमवायसम्बन्धेन घटत्वावच्छिन्नप्रकारताकशाब्दबोधत्वावच्छिन्नाधिकरणे आत्मनि कारणतावच्छेदकसमवायसम्बन्धेन "घटो द्रव्यम्" इत्याकाङ्क्षाज्ञानस्य पूर्वक्षणावच्छेदेन सत्त्वविरहेण न तादृशाकाङ्क्षाविरहकाले "घटो द्रव्यम्" इति वाक्याच्छाब्दबोधापत्तिः। **यद्यपि** घटत्वावच्छिन्नप्रकारताकशाब्दबोधत्वव्याप्यं यद्घटत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वावच्छिन्नविशेष्यताशालिशाब्दबोधत्वं तदवच्छिन्नं प्रति "प्रमेयो घटः" इत्याकाङ्क्षाज्ञानस्यापि कारणत्वात्तस्य समवायेनात्मनि सत्त्वेन प्रमेयत्व इव द्रव्यत्वेऽपि घटत्वावच्छिन्नप्रकारताकशाब्दबोधापत्तिः स्यात्। तत्र स्थले च प्रकारतासम्बन्धेन द्रव्यत्वे उपस्थितिविरहादेव न शाब्दापत्तिरिति कथनस्य यत्र "प्रमेयो घटः, द्रव्यं पटः" इति समूहालम्बनात्मकमाकाङ्क्षाज्ञानं तत्र द्रव्यपदजन्याया उपस्थितेः प्रकारतासम्बन्धेन द्रव्यत्वे सत्त्वेन "द्रव्यं घटः, द्रव्यं पटः" इत्यादिशाब्दबोधापत्त्या निरवकाशत्वात्।

**तथापि** घटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधं प्रति "घटो द्रव्यम्" इति वाक्यं घटान्वितद्रव्यविषयकशाब्दबोधं जनयतु" इति तात्पर्यज्ञानस्य हेतुत्वेन घटत्वावच्छिन्नप्रकारताशालिशाब्दबोधत्वावच्छिन्नोत्पत्तावपेक्षिता या व्याप्यीभूतघटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यताशालिशाब्दबोधत्वावच्छिन्नसामग्री तद्घटकतया तात्पर्यज्ञानस्य समवायेन घटत्वावच्छिन्नप्रकारताशालिशाब्दत्वावच्छिन्नाधिकरण आत्मनि समवायेन तादृशशाब्दबोधोत्पत्तेः प्राक्क्षणावच्छेदेन वृत्तित्वविरहान्नापत्तिः सम्भवति। तात्पर्यज्ञानस्याहेतुत्वपक्षे तु यथा "वह्नेर्महानसीयत्वे लाघवम्" इति लाघवज्ञानसहकृतात् "वह्निव्याप्यधूमवान् पर्वतः" इति सामान्यपरामर्शादपि व्यापकतानवच्छेदकरूपेणापि महानसीयवह्नित्वेन "महानसीयवह्निमान् पर्वतः" इति विशेषानुमितिर्भवति, तथैव "पदान्तरज्ञानस्याहेतुत्वे लाघवम्" इति लाघवज्ञानसहकृतायाः कारणतानवच्छेदकेनापि "द्रव्यं घटः" इत्याकाङ्क्षाघटकपदवाच्यत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितेरपेक्ष्यत्वान्न "प्रमेयो घटः, द्रव्यं पटः" इति समूहालम्बनाकाङ्क्षाज्ञानदशायां "द्रव्यं घटः, प्रमेयो घटः, द्रव्यं पटः" इति समूहालम्बनशाब्दबोधापत्तिः। न वा "द्रव्यं घटः" इत्यत्र द्रव्यत्वावच्छिन्नोपस्थितिविरहदशायां "घटान्वितं द्रव्यम्" इतिशाब्दानुपपत्तिः। **अत्रेदं बोध्यम्**—समभिव्याहाररूपाकाङ्क्षाज्ञानस्य कारणत्वपक्षे तात्पर्यज्ञानस्याहेतुत्वेऽपि नोपर्युक्तस्थले शाब्दबोधापत्तिः। आनुपूर्वीज्ञानस्य कारणत्वपक्षे तु तात्पर्यज्ञानं विनोक्तस्थले शाब्दबोधस्य वारणासम्भवात्

तत्र तात्पर्यज्ञानस्य कारणत्वमवश्यमेवाभ्युपेयम् । गूढार्थतत्त्वालोककृद्भिस्तु आनुपूर्वीज्ञानस्यैव कारणत्वमङ्गीकृतमित्युक्तमुपरिष्टात् । भट्टाचार्यैरपि तात्पर्यज्ञानेनैव निर्वाहात्समभिव्याहारज्ञानस्य कारणमित्यभिप्रेतम् । उक्तञ्च तैरेव व्युत्पत्तिवादे **"आकाङ्क्षाविचारे समभिव्याहाराकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वात्"** इति ।

अथ प्रकारतासम्बन्धेन शाब्दबोधत्वावच्छिन्नं प्रति तत्सम्बन्धेनोपस्थितेः कारणत्वे यत्र वृत्त्या प्रमेयपदजन्यायामुपस्थितावुद्बोधकान्तरवशाद् द्रव्यत्वेन द्रव्यस्य भानं जातं तत्र प्रकारतासम्बन्धेनोपस्थितेर्द्रव्यत्वेऽपि सत्त्वेन द्रव्यत्वावच्छिन्नविषयकशाब्दबोधापत्तिः स्यात् । तद्वारणाय यदि तद्धर्मावच्छिन्नविषयकशाब्दं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकोपस्थितेः कारणत्वं स्वीक्रियते तदा प्रकारविशेषनिवेशस्यावश्यकत्वे लाघवानुरोधाद् विषयनिष्ठप्रत्यासत्त्या हेतुत्वकल्पनं निरर्थकमेव स्यात् । किञ्चैतत्पक्षे तत्तत्पुरुषीयत्वस्य निवेशेन कार्यकारणभावस्य बाहुल्येन महद्गौरवमेवापद्येत । यदि च स्वजनकज्ञानीयवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतासम्बन्धेनोपस्थितेः कारणत्वं विवक्ष्यते तदाऽपि "द्रव्यं घटः" इत्यत्र प्रकारतासम्बन्धेन शाब्दबोधस्य घटरूपे प्रकारेऽपि सत्त्वेन तत्रोक्तसम्बन्धेनोपस्थितेर्विरहात्प्रसज्यते व्यतिरेकव्यभिचारः । तथाहि स्वमुपस्थितिस्तज्जनकज्ञानं "घटो घटपदशक्यः" इत्याकारकं तज्ज्ञानीया या वृत्तिनिष्ठप्रकारता तत्प्रकारतानिरूपितविशेष्यता घटनिष्ठा तादृशविशेष्यतावच्छेदकता घटत्वनिष्ठा तद्विशिष्टप्रकारता घटत्वनिष्ठा तादृशप्रकारतासम्बन्धेनोपस्थितेः शाब्दबोधीयप्रकारताश्रये घटेऽसत्त्वमेव । **अत्रेदं बोध्यम्**—स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतामात्रस्य कारणतावच्छेदकसम्बन्धत्वस्वीकारे यत्र "द्रव्यं द्रव्यपदशक्यम्, प्रमेयं प्रमेयपदशक्यम्" इत्याकारकसमूहालम्बनात्मकं वृत्तिज्ञानं "प्रमेयं प्रमेयपदशक्यमितिज्ञानं प्रमेयपदशक्यत्वाभाववति प्रमेयपदशक्यत्वप्रकारताकम्" इत्याकारकोक्तज्ञानधर्मिकाप्रामाण्यज्ञानञ्च वर्तते तत्र तादृशविशेष्यतावच्छेदकतासम्बन्धेन द्रव्यत्वे इव प्रमेयत्वेऽप्युपस्थितेः सत्त्वेन प्रकारतासम्बन्धेन तत्रापि शाब्दबोधापत्तिः स्यात् । अतश्च तादृशविशेष्यतावच्छेदकतावैशिष्ट्यं प्रकारतायां निवेशितम् । वैशिष्ट्यञ्च स्वप्रयोज्यत्वसम्बन्धेन । तथा चोपस्थितीया यादृशसम्बन्धावच्छिन्ना यादृशरूपावच्छिन्ना निरवच्छिन्ना वा या विषयता, तस्यास्तादृशसम्बन्धावच्छिन्ना तादृशरूपावच्छिन्ना निरवच्छिन्ना वा या वृत्तिज्ञानीया विषयता सा प्रयोजिका भवतीति नियमात्तादृशविशेष्यतावच्छेदकतायाः प्रयोज्या द्रव्यत्वनिष्ठैव प्रकारता भवतीत्यतो नोक्तदोषापत्तिः । तथा च यथा धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गकानुमितौ धर्मितावच्छेदकतासम्बन्धेन तल्लिङ्गकपरामर्शस्य कारणत्वपक्षे यत्र "भ्राविज्ञानमप्रमा" इत्याकारकाप्रामाण्यज्ञानोत्तरं "वह्निव्याप्यधूमवान् पर्वतः" इत्याकारकपरामर्शस्ततः "वह्निव्याप्यालोकवद्द्रव्यम्" इत्याकारकः परामर्शस्ततः "पर्वतो वह्निमान्, द्रव्यं वह्निमत्" इत्याकारिकानुमितिस्तत्रानुमितेर्धर्मितावच्छेदकतासम्बन्धेन द्रव्यत्वपर्वतत्वोभयस्मिन्नेव सत्त्वेनोक्तयोः परामर्शयोरेकतरस्य धर्मितावच्छेदकतासम्बन्धेनासत्त्वात्प्रसक्तस्य व्यतिरेकव्यभिचारस्य वारणाय तल्लिङ्गकपरामर्शधर्मितावच्छेदकताविशिष्टावच्छेदकताया परामर्शकार्यतावच्छेदकसम्बन्धत्वमङ्गीकरणीयम् । एवञ्चोक्तसम्बन्धेनानुमितेः पर्वतत्वे सत्त्वेन तत्र धूमलिङ्गकपरामर्शस्यापि सत्त्वात्, एवं द्रव्यत्वेऽपि सत्त्वेन तत्रालोकलिङ्गकपरामर्शस्य सत्वान्नोक्तदोषः । तथैव स्वजनकोपस्थितीयप्रकारताविशिष्टप्रकारताया उपस्थितिकार्यतावच्छेदकसम्बन्धत्वमङ्गीकृत्योक्तापत्तेर्वारणसम्भवात् ।

अथ शाब्दबोधपदार्थोपस्थित्योर्विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे स्वजनकोपस्थितीयप्रकारताविशिष्टप्रकारतायाः कार्यतावच्छेदकसम्बन्धत्वं स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताविशिष्टप्रकारतायाः कारणतावच्छेदकसम्बन्धत्वञ्च यथा सञ्जायते, तथैव विनिगमनाविरहात्कार्यकारणतावच्छेदकसम्बन्धत्वं विशेष्यताया अप्यङ्गीकरणीयं भवति । अत एव च "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तिः सङ्गच्छते । तथा चोक्तव्युत्पत्तिनिर्वाहककार्यकारणभावविचारप्रसङ्गे यदि विशेष्यतासम्बन्धेन शाब्दबोधं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितेः कारणत्वं स्वीक्रियते तदा पशुपदस्य लोमवल्लाङ्गुलवति शक्ततया तत्पदजन्यशाब्दबोधस्य विशेष्यतासम्बन्धेन लोम्नि लाङ्गुले च सत्त्वेन तत्र मुख्यविशेष्यतासम्बन्धेनोपस्थितेरभावात्प्रसज्यते व्यतिरेकव्यभिचारः । यदि च मुख्यविशेष्यतासम्बन्धेन शाब्दबोधत्वावच्छिन्नं प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितेः कारणत्वं स्वीक्रियते तदा "दीर्घः पशुः" इतिवाक्याल्लोमांशे दीर्घरूपेतरपदार्थान्वयावगाहिशाब्दबोधापत्तिः स्यात् । उक्तस्थले च शाब्दबोधस्य कार्यतावच्छेदकाक्रान्तत्वेन तत्र मुख्यविशेष्यतयोपस्थितेरनपेक्षणात् । अतश्च विशेष्यताविशिष्टविशेष्यतासम्बन्धेन शाब्दबोधत्वावच्छिन्ने

प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितेः कारणत्वमङ्गीकार्यम् । विशेष्यतावैशिष्ट्यञ्च विशेष्यतायां स्वतादात्म्यस्वप्रयोजक-वृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यविषयतानिरूपितत्वोभयसम्बन्धेन । तथा च "नीलो घटः" इत्यत्र घटनिष्ठ-विशेष्यतया विशिष्टा विशेष्यता घटनिष्ठैव, तत्र च घटनिष्ठविशेष्यतायास्तादात्म्यं यथा वर्तते तथैव स्वं घटनिष्ठविशेष्यता तत्प्रयोजकवृत्तिज्ञानीयविषयता घटनिष्ठैव तादृशविषयतानिरूपितविषयता घटत्वनिष्ठा तादृशविषयत्वाप्रयोज्यविषयता नीलनिष्ठा तन्निरूपितत्वं घटनिष्ठविशेष्यतायामेव । तत्र च मुख्यविशेष्यतासम्बन्धेनोपस्थितेः सत्त्वात् "नीलाभिन्नो घटः" इति शाब्दबोधः सङ्गच्छते । "दीर्घः पशुः" इत्यत्र तु यदि स्वपदग्राह्योपस्थितिजनकवृत्तिज्ञानीयलोमनिष्ठविषयतानिरूपि-तलोमत्वनिष्ठविषयत्वाप्रयोज्यदीर्घनिष्ठविषयतानिरूपितत्वस्वतादात्म्योभयसम्बन्धेन लोमनिष्ठविशेष्यतावैशिष्ट्यस्य लोम-निष्ठविशेष्यतायां सत्त्वेनोक्तसम्बन्धेन शाब्दबोधस्य लोम्नि सत्त्वं स्यात्तदा तत्र मुख्यविशेष्यतासम्बन्धेनोपस्थितेरभावान्न लोमांशे दीर्घपदार्थान्वयावगाहिशाब्दबोधापत्तिः । अत्र च स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यविष-यतानिरूपितत्वसम्बन्धेन घटनिष्ठविशेष्यतया विशिष्टा लोमनिष्ठविशेष्यता अपि भवति । तेन सम्बन्धेन शाब्दबोधस्य च लोम्नि सत्त्वेऽपि तत्र मुख्यविशेष्यतासम्बन्धेनोपस्थितेर्विरहात्प्रसक्तस्य व्यभिचारस्य वारणाय स्वतादात्म्येत्युक्तम् । यद्यपि "शोभनः पशुः" इत्यत्र शोभनपदजन्याया उपस्थितेर्मुख्यविशेष्यतासम्बन्धेन शोभनमात्रे सत्त्वेन लोमादावपि सत्त्वात्त-त्रैकत्वसङ्ख्यान्वयप्रसङ्गः शोभनपदार्थान्वयप्रसङ्गश्च स्यात्, "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति नियमानुरोधाच्छोभनपदार्थस्य वारद्वयं भानास्वीकारात् । तथापि विशेष्यताविशिष्टविशेष्यतात्वसम्बन्धेन शाब्दबोधत्वा-वच्छिन्नं प्रति स्वीयमुख्यविशेष्यताप्रयोज्यत्वसम्बन्धेनोपस्थितिः कारणमिति कार्यकारणभावस्वीकारेण नोक्तदोषः । विशेष्यतावैशिष्ट्यञ्च स्वतादात्म्यस्वप्रयोजकवृत्तिज्ञानीयविषयताविशिष्टविषयतानिरूपितविषयत्वाप्रयोज्यविषयतानि-रूपितविषयतावत्त्वोभयसम्बन्धेन । विषयतावैशिष्ट्यञ्च विषयतावत्ता च स्वावच्छेद्यत्वस्वतादात्म्यान्यतरसम्बन्धेन । तथा च "नीलो घटः" इत्यत्र घटत्वावच्छिन्नविशेष्यतायां घटत्वावच्छिन्नविशेष्यतायास्तादात्म्यस्य, स्वपदग्राह्या या शाब्दबोधीयघटनिष्ठविशेष्यता तादृशविशेष्यतया तादात्म्येन विशिष्टा या घटनिष्ठा विशेष्यता तन्निरूपिता या घटत्वनिष्ठा विषयता तदप्रयोज्या या नीलनिष्ठा विषयता तन्निरूपिता या घटनिष्ठा विषयता तद्वत्त्वस्य तादात्म्येन च घटनिष्ठविषयतायां सत्त्वेन तत्रोपस्थितेर्मुख्यविशेष्यताप्रयोज्यत्वसम्बन्धेन सत्त्वात् "नीलाभिन्नो घटः" इति शाब्दबोधो जायते । स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यविषयतानिरूपितविषयतावत्त्वमात्रस्य सम्बन्धत्वे स्वपदग्राह्यशाब्दबोधीयविषयताप्रयोजकवृत्तिज्ञानीयघटनिष्ठविषयतानिरूपितघटत्वनिष्ठविषयत्वाप्रयोज्यनीलनिष्ठविषयता-निरूपितघटनिष्ठविषयतावत्त्वस्य सत्त्वेऽपि "शोभनः पशुः" इत्यत्र लाङ्गुलत्वनिष्ठप्रकारतानिरूपितलाङ्गुलनिष्ठवि-शेष्यतायां स्वपदग्राह्यलाङ्गुलनिष्ठविशेष्यताप्रयोजकवृत्तिज्ञानीयलाङ्गुलनिष्ठविषयतानिरूपितलाङ्गुलत्वनिष्ठविषयत्वाप्रयो-ज्यलोमनिष्ठविषयतानिरूपितलाङ्गुलनिष्ठविषयतावच्छेद्यत्वस्य सत्त्वेन तत्र मुख्यविशेष्यताप्रयोज्यत्वसम्बन्धेनोपस्थितेर्विर-हात्प्रसज्यते व्यतिरेकव्यभिचारोऽतश्च विषयताविशिष्टेत्युपात्तम् । तेन च स्वावच्छेद्यत्वस्वतादात्म्यान्यतरसम्बन्धेन लाङ्गुलत्वनिष्ठप्रकारतानिरूपितविशेष्यताविशिष्टा यथा लाङ्गुलत्वनिष्ठप्रकारतानिरूपितलाङ्गुलनिष्ठविशेष्यता भवति तथैव लोमनिष्ठप्रकारतानिरूपितलाङ्गुलनिष्ठविशेष्यताऽपि, तादृशविषयतानिरूपितविषयत्वाप्रयोज्यविषयतापदेन घटादि-विषयताया एव ग्राह्यतया तन्निरूपितविषयतावत्त्वस्योक्तान्यतरसम्बन्धेन विरहान्न व्यभिचारः सङ्गच्छते ।

अथ "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इति व्युत्पत्तिनिर्वाहकं कार्यकारणभावं प्रदर्श्य "एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वायोगः" इति व्युत्पत्तेस्तात्पर्यार्थः प्रदर्श्यते । तथा हि—एकत्रेत्यत्र त्रल्प्र-त्ययार्थो विशेष्यत्वम्, तस्य च निरूपितत्वसम्बन्धेन विशेषणत्वेनेत्यत्र विशेषणत्वेऽन्वयः, तृतीयार्थस्तादात्म्यम्, तस्य चोपस्थितस्य उपस्थितविषयत्वरूपेऽन्वयः, अन्यत्रेत्यत्र त्रल्प्रत्ययार्थो विशेष्यत्वम्, तस्य च निरूपितत्वसम्बन्धेन विशेषण-त्वायोग इत्यत्र विशेषणत्वेऽन्वयः । तथा चैकनिष्ठविशेष्यतानिरूपितविशेषणत्वाभिन्नोपस्थितिविषयतावतोऽन्यनिष्ठ-विशेष्यतानिरूपितविशेषणत्वयोगो न भवतीत्यर्थः सङ्गच्छते । परञ्चोक्तव्युत्पत्तेरुक्तार्थकत्वस्वीकारे सिद्धान्ते पाचकादि-शब्दानां विशिष्टशक्त्यस्वीकारेण पाचकादिपदघटकपच्धातोः पाकविशेष्यिकाया एवोपस्थितेर्जायमानत्वेनोक्तविशेषण-त्वाभिन्नोपस्थितिविषयत्वस्य पाके विरहादुक्तव्युत्पत्त्यनुपपत्तिः स्यात् । एवञ्च "पाचकं पश्य" इत्यत्र यथा पाकस्य विशेषणतयाऽन्वयो भवति तथैव कर्मत्वेऽप्यन्वयः स्यात् । अतश्च विशेषणत्वेनेत्यत्र तृतीयार्थो वैशिष्ट्यं प्रयोजकत्वरूपं

स्वीकार्यः, तस्य तूपस्थितिविषयत्वेऽन्वयः। तथा चैकनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकोपस्थितिविषयतावतोऽन्य-निष्ठविशेष्यतानिरूपितविशेषणत्वप्रतियोगिकसम्बन्धो न भवतीत्यर्थः सञ्जायते। एवञ्च असति बाधके उद्देश्यतावच्छेदक-प्रयोज्यत्वस्य विधेये भाननियमाद्यथा "धनवान् सुखी" इत्यत्रोद्देश्यतावच्छेदकीभूतधनप्रयोज्यत्वस्य सुखे लाभेन धनसु-खयोःप्रयोज्यप्रयोजकभावरूपसम्बन्धस्य लाभस्तथैवोद्देश्यतावच्छेदकीभूतोपस्थितिविषयत्वप्रयोज्यत्वस्य विधेये विशेषणत्वे लाभेन विशेषणत्वोपस्थितिविषयत्वयोः प्रयोज्यप्रयोजकभावरूपः सम्बन्धो लभ्यते। तथा च यथा पशुपदादिविशिष्ट-शक्तिस्थले पशुपदजन्यलोमवल्लाङ्गुलवद्विषयकबोधे लाङ्गुलनिष्ठविशेष्यतानिरूपितलोमनिष्ठविशेषणत्वप्रयोजिका या लोमवल्लाङ्गुलवद्विषयकोपस्थितिविषयता लोमनिष्ठा तद्वतो लोम्नोऽन्यनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रतियोगिक-सम्बन्धाभावः प्रवर्तते तथा ययोरर्थयोर्मध्ये एकस्य विशेषणतयाऽपरस्मिन्नन्वय एव तद्बोधकपदयोः परस्परं नियत-साकाङ्क्षत्वं तत्तदर्थकपदद्वयघटितकृत्तद्धितान्तसमासादिपाचकादिस्थल उक्तव्युत्पत्तिः प्रवर्तते। अत एव च "पाचकं पश्य" इत्यत्र पाचकपदघटकपच्धातोः पाकस्य मुख्यविशेष्यतयोपस्थितस्य कर्त्तरि विशेषणत्वेऽपि न पुनः कर्मत्वेऽन्वयः।

अथ "अन्वयितावच्छेदकरूपेणानुपस्थितेः पदार्थान्तरस्यान्वयानुपपत्तेः" इतिनियमः। अत्रान्वयित्वं भासमानवैशिष्ट्यप्रतियोगित्वरूपप्रकारत्वभासमानवैशिष्ट्यानुयोगित्वरूपविशेष्यत्वान्यतररूपम्। एतद्व्युत्पत्तिनिर्वाहकः कार्यकारणभावस्तु विशेष्यतात्वविशेषसम्बन्धेन प्रकारतात्वविशेषसम्बन्धेन शाब्दबोधं प्रति स्वप्रकारावच्छिन्नत्व-सम्बन्धेनोपस्थितिः कारणमितिकार्यकारणभावः। "नीलो घटः" इत्यत्र नीलत्वावच्छिन्नप्रकारताया घटत्वावच्छिन्नविशे-ष्यतायाश्च सत्त्वेनोक्तकार्यकारणभावः सङ्गच्छते। बचाभामहोदयास्तु केचिदित्यादिनैतन्मतं प्रतिपाद्य "वस्तु-तस्तु शाब्दबोधविषयताद्वयी वृत्तिज्ञानीयविषयताप्रयोज्याऽऽकाङ्क्षाप्रयोज्या च। आद्याया नावच्छिन्नत्वनियमोऽन्त्याया-स्त्वपरतन्त्रभासमानगतायास्तथात्वनियमः, स चाकाङ्क्षाज्ञानकार्यकारणभावेनैव निर्वाह्यः, आकाङ्क्षाज्ञानमात्रस्य हि तत्तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्तत्सम्बन्धावच्छिन्नतत्तद्धर्मावच्छिन्नप्रकारताकशाब्दबोधं प्रत्येव कारणत्वम्, नहि कस्याप्यनवच्छिन्नविशेष्यताकशाब्दबोधं प्रति इति प्रत्यपादयन्। तथा च निर्विशेषस्य सामान्यस्याभावेन शाब्द-बोधविशेषसामग्रीं विना सामान्यसामग्रीतः शाब्दोत्पत्त्यसम्भवेन विशेषसामग्र्याः सर्वत्रैवापेक्षणीयतया तस्याश्च सावच्छिन्नविशेष्यताकशाब्दबोधकारणघटित्वान्निरवच्छिन्नविशेष्यताकबोधस्यालीकत्वमित्युक्तनियमः सङ्गच्छते। तथा च या शाब्दबोधीया विषयता वृत्तिज्ञानीयविषयताप्रयोज्या नास्ति, नवा धर्मिपारतन्त्र्येण भासमानाऽऽकाङ्क्षाप्रयोज्या, किन्तु धर्मिपारतन्त्र्येणाभासमानाऽऽकाङ्क्षाप्रयोज्यैव वर्तते सा तु सावच्छिन्नैवेतिनियमः, एतन्नियमनिर्वाहकश्च पूर्वोक्त आकाङ्क्षाज्ञानकार्यकारणभाव एव बोध्यः। यतो निरवच्छिन्नविशेष्यताकशाब्दबोधो न भवत्यत "अन्वयितावच्छेदक-रूपेण" इत्यादिनियमो निर्वहति।

अथाकाङ्क्षा द्विविधा समभिव्याहाररूपाऽऽनुपूर्वीरूपा च। तत्र समभिव्याहाररूपाया आकाङ्क्षाया ज्ञानस्य कारणत्वपक्षे तात्पर्यज्ञानस्य शाब्दबोधेऽहेतुत्वेऽप्यानुपूर्वीज्ञानस्य तत्पक्षे तज्ज्ञानस्य कारणत्वं निर्वहत्येव। तात्पर्यञ्च तत्प्रतीतिजनकत्वप्रकारकेच्छयोच्चरितत्वम्। तच्च द्विविधम्, पदार्थतात्पर्यं वाक्यतात्पर्यञ्च। तस्य च स्वरूपसतो न कारणत्वम्, तात्पर्यभ्रमादपि शाब्दबोधस्य सिद्धान्तसिद्धत्वात्तज्ज्ञानमात्रस्य कारणत्वात्। "सैन्धवं कलयति" इत्यत्र लवणभक्षणाश्वदर्शनतात्पर्ये सति लवणदर्शनाश्वभक्षणविषयकशाब्दबोधवारणाय वाक्यतात्पर्यज्ञानस्य शाब्दबोधे कारणत्वं यथा निर्वहति तथाऽन्वयव्यतिरेकाभ्यां वाक्यार्थतात्पर्यग्रहे पदार्थतात्पर्यग्रहस्य हेतुत्वं सिध्यति।

"सैन्धवमानय" इत्यत्र सैन्धवपदस्य सति लवणे तात्पर्यग्रहे "सैन्धवमानय" इतिवाक्यं लवणकर्मकानयन-तात्पर्यकमिति वाक्यार्थतात्पर्यग्रहो भवति। यद्यपि लाक्षणिकपदस्थले नानार्थकहर्यादिपदस्थले च तत्तत्पदार्थतात्पर्यज्ञान-हेतुत्वस्यावश्यकत्वेन न सामान्यतस्तत्तत्पदार्थविषयकशाब्दबोधत्वावच्छिन्नं प्रति तत्तत्पदार्थतात्पर्यज्ञानस्य हेतुत्व-मावश्यकम्, एकार्थकघटादिपदस्थले तत्तत्पदार्थतात्पर्यज्ञानाजन्ये तत्तत्पदार्थविषयकशाब्दबोधे व्यभिचारवारणं तु कार्यतावच्छेदककुक्षौ तत्तत्पदजन्यत्वनिवेशेनैव सम्भवेत्, तथापि कार्यतावच्छेदककुक्षौ तत्तत्पदजन्यत्वनिवेशेन गौरवा-त्सामान्यतस्तत्तत्पदार्थविषयकशाब्दबोधत्वावच्छिन्नं प्रति तत्तत्पदार्थतात्पर्यज्ञानस्य हेतुत्वकल्पनं समुचितम्। तथा च

"गङ्गायां घोषः" इत्यादौ शक्यलक्ष्योभयोपस्थितावपि लक्ष्यार्थतात्पर्यग्रहे लक्ष्यार्थस्यैव शाब्दबोधो जायते न तु शक्यार्थस्य। अत एव च तात्पर्यानुपपत्तिरेव लक्षणाबीजम्। मूर्खपठितवेदादिस्थले "अयं मूर्खः" इतिविशेषदर्शनसद्भावेन तात्पर्यभ्रमासत्त्वेपि परमेश्वरतात्पर्यज्ञानमेव कल्पनीयम्। अथवा तत्प्रतीतिजनकत्वप्रकारकेच्छयोच्चरितसजातीयत्वमेव तात्पर्यं बोध्यम्। सजातीयत्वञ्च तत्प्रतीतिजनकत्वप्रकारताकेच्छयोच्चरिता यादृशानुपूर्वीमच्छब्दास्तादृशानुपूर्वीमत्त्वम्। तथा च शुकोच्चरितवाक्यस्थलेऽपि तादृशतात्पर्यसत्त्वेन न बोधानुपपत्तिः। मुक्तावलीकृद्भिस्तु वेदवाक्यस्थले शुकादिवाक्यस्थले च परमेश्वरतात्पर्यज्ञानं स्वीकृतम्। उक्तञ्च तैरेव मुक्तावल्याम् "इत्थञ्च वेदस्थलेऽपि तात्पर्यज्ञानार्थमीश्वरः कल्प्यते। न च तत्राध्यापकतात्पर्यज्ञानं कारणमिति वाच्यम्, सर्गादावध्यापकाभावात्। न च प्रलय एव नास्ति; कुत्र सर्गादिरिति वाच्यम्, प्रलयस्यागमेषु प्रतिपाद्यत्वात्। इत्थञ्च शुकवाक्येऽपीश्वरतात्पर्यज्ञानं कारणम्। विसंवादिशुकवाक्ये तु शिक्षयितुरेव तात्पर्यज्ञानं कारणं वाच्यम्।"इति। यद्यन्यवाक्यतात्पर्यज्ञाने तदन्यवाक्याच्छाब्दबोधोऽनुभवविरुद्ध इत्युच्यते तदाऽपि तत्र स्थले उपस्थितवाक्यान्तरस्यैव करणत्वस्वीकारेणोक्तविरोधः परिहरणीयः। यद्यपि "शुकादिवाक्यादयमर्थः श्रुतः" इति सर्वानुभवो विरुध्येत, तथापि तद्वाक्यस्यापि शाब्दबोधप्रयोजकत्वस्वीकारेण तादृशविरोधोऽपाकरणीयः। "अत्र सैन्धवमानय" इत्यत्र लवणतात्पर्यग्रहेऽश्वबोधवारणाय तदर्थविषयकशाब्दबोधं प्रति तदन्यार्थतात्पर्यग्रहस्य प्रतिबन्धकत्वं स्वीकृत्य तादृशतात्पर्यग्रहाभावस्य प्रतिबन्धकाभावरूपतया कारणत्वं स्वीकार्यमिति कथनं तु तात्पर्यज्ञानस्य कारणत्वकल्पनापेक्षया तादृशतात्पर्यग्रहाभावस्य कल्पने गौरवादिति हेयमेवेति।

**वेदान्तिनस्तु** तदन्यमात्रार्थप्रतीतिजननेच्छयाऽनुच्चरितत्वे सति तदर्थप्रतीतिजननयोग्यत्वं तात्पर्यं स्वीकृत्य तज्ज्ञानस्य कारणत्वम्, शुकादिवाक्यस्थले तदन्यार्थप्रतीतिजननेच्छयोच्चरितत्वाभावेन न शाब्दबोधानुपपत्तिः, न वाऽश्वप्रतीतिजननेच्छयोच्चरितत्वज्ञाने जाते "सैन्धवमानय" इत्यत्र लवणविषयकशाब्दबोधापत्तिः। नापि वा लवणाश्वोभयप्रतीतीच्छायां सत्यां लवणशाब्दबोधानुपपत्तिः। योग्यता च शाब्दबोधनिष्ठजन्यतानिरूपितवाक्यनिष्ठजनकतावच्छेदिका शक्तिरेव। यत्र तदर्थप्रतीतिजननेच्छयोच्चरितत्वज्ञानमात्रं तत्रापि तदन्यार्थप्रतीतिजननेच्छयाऽनुच्चरितत्वज्ञानं कल्पनीयम्। मूर्खपठितवेदस्थले शुकपठितवाक्यस्थले च तात्पर्यज्ञानं विनाऽपि शाब्दबोधस्यानुभवसिद्धत्वाद्विशेषदर्शनेन तात्पर्यभ्रमासम्भवात्, शुके मूर्खशिक्षितत्वग्रहेऽपि मूर्खशिक्षकवाक्यतात्पर्यग्रहस्यासम्भवाच्च न तत्प्रतीतिजनकत्वप्रकारकेच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्य कारणत्वमिति वदन्ति।

**परञ्चैत**न्मते तदन्यमात्रार्थप्रतीतिजननेच्छयाऽनुच्चरितत्वे सति तदर्थप्रतीतिजननयोग्यत्वस्य तात्पर्यरूपत्वस्वीकारेण पूर्वोक्तयुक्त्या शाब्दानुपपत्तिरूपदोषवारणसम्भवेऽपि तत्प्रतीतिजनकत्वप्रकारकेच्छयोच्चरितत्वमात्रस्य तात्पर्यरूपतास्वीकारे लाघवमेव भवति। वेदस्य पौरुषेयत्ववादिनैयायिकमते वेदस्थल इव शुकादिवाक्यस्थलेऽपि लाघवादीश्वरतात्पर्यज्ञानकल्पने न काचित्क्षतिः। विसंवादिशुकवाक्यस्थले तु परमेश्वरेच्छायां विसंवादित्वाभावेऽपि शिक्षयितुरेव तात्पर्यज्ञानकल्पने न शाब्दानुपपत्तिः।

**भाट्टास्तु** शाब्दबोधे पदार्थतात्पर्यनिश्चयः संसर्गतात्पर्यनिश्चयश्च कारणम्। तात्पर्यसंदेहे शाब्दबोधानुदयान्न तत्संदेहः कारणम्। तात्पर्यभ्रमस्थले तु आहार्यशाब्दबोध एव जायते। वेदवाक्ये शुकवाक्ये चेश्वरतात्पर्यग्रहेणाध्यापकतात्पर्यग्रहेण वा शाब्दबोधः। अननुगतप्रकरणादीनां शाब्दबोधहेतुत्वे गौरवाल्लाघवात्तात्पर्यज्ञानमेव कारणमिति व्याहरन्ति। परञ्च शाब्दबोधस्यानुमितेश्चाहार्यत्वासम्भवात् तात्पर्यभ्रमादपि शाब्दबोधस्यानुभवसिद्धत्वाच्चोक्तमतं निर्युक्तिकमेवेति ध्येयम्।

**नागेशभट्टास्तु** तात्पर्यज्ञानं न शाब्दबोधे कारणम्, न वाऽन्यार्थतात्पर्यज्ञानं प्रतिबन्धकम्। श्लिष्टवाक्यस्थले उभयार्थ एव तात्पर्यस्य सत्त्वेनोभयबोधस्येष्टत्वात्। तत्र स्थले च वाक्यभेदभियोपमानोपमेयभावसम्बन्धेनैकमुख्यविशेष्यक एव बोधः। 'सैन्धवमानय' इत्यादौ सत्येकार्थतात्पर्यग्रहेऽन्यार्थस्यापि बोधसम्भवात्, अन्यथोपहासानुपपत्तेः, "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति" इति नियमस्याप्रामाणिकत्वात्। तात्पर्यग्रहस्योपयोगस्तु शाब्दबोधे प्रामाण्याप्रामाण्यावधारणे। तात्पर्यविषयार्थस्याबाधितया प्रामाण्यनिश्चयस्ततः प्रवृत्तिः, तात्पर्याविषयार्थस्य

बाधितयाऽप्रामाण्यनिश्चयस्ततो निवृत्तिरिति वदन्ति। उक्तञ्च तैरेव वैयाकरणसिद्धान्तमञ्जूषायाम् "तात्पर्यनिर्णयोपयोगस्तु तज्ज्ञाने ( शाब्दबोधे ) प्रामाण्यनिश्चयद्वारा प्रवृत्तौ। क्वचिदनेकपदार्थस्यान्वययोग्यत्वे कस्याध्याहार इत्यत्र चेति बोध्यम्" इति। परञ्च प्रवृत्तिं प्रति न तावत्प्रामाण्यनिश्चयस्य कारणत्वं किन्तु इष्टसाधनताज्ञानमात्रस्यैव कारणत्वमनुभवसिद्धम्। एवञ्च प्रवृत्तिं प्रति प्रामाण्यनिश्चयस्तं प्रति च तात्पर्यग्रह इति वदतां भट्टानां मतं न्यायसिद्धान्तविरुद्धमेवेति बोध्यम्। तथा चानुपूर्वीज्ञानस्य हेतुत्वमिव तात्पर्यज्ञानस्यापि हेतुत्वं सिध्यत्येवेति तु परमार्थः।

## अथ व्युत्पत्तिवादग्रन्थकर्तृ परिचयः

वङ्गलादेशान्तर्गतवगुडामण्डलान्तर्गतलक्ष्मीपाशाग्रामवास्तव्यश्रीशिवाचार्यगोस्वाम्यात्मजन्मानः श्रीगदाधरभट्टाचार्याः षडधिकैकसहस्रतमे ( १००६ ) वङ्गाऽब्दे जन्म लेभिरे। एतेषां पिता शिवाचार्यगोस्वामी महातान्त्रिको वाममार्गी कालिकोपासकश्चासीत्। स्वपितुः सकाशात्तान्त्रिकीं विद्यां सम्यगधिगत्य तेऽपि तन्त्रशास्त्रे पारङ्गता बभूवुः। तदानीं नवद्वीपं न्यायशास्त्राध्ययनार्थं परमोत्कृष्टं स्थानमासीदतश्च लक्ष्मीपाशाग्रामं परित्यज्य विद्याध्ययनार्थं नवद्वीपं समागताः। एतेषां गुरुः विश्रुतकीर्तिर्नवद्वीपनिवासिश्रीहरिरामतर्कवागीश आसीत्। तस्य समीपतः समग्रं न्यायशास्त्रमधीतवन्तः। गुरोर्जीवनावसानाद्गुरुपत्न्यादेशेन गुरोरेवाध्यापनालयेऽध्यापयितुं प्रावर्तिषत। ततस्तदीयमतिकठोरमध्यवसायं तत्राप्यध्यापनपाटवं तत्रापि विषयवस्त्वाविष्करणसामर्थ्यञ्च कर्णाकर्णिकया श्रुत्वा तत्रत्याः प्रबलगुणाकृष्टाश्छात्राऽहमहमिकयोत्सहैवैनान् भट्टाचार्यानिशिश्रयन्। एतेषाञ्छात्रसमृद्धिं दृष्ट्वा महाविद्वांसो श्रीजगदीशतर्कालङ्कारा अपि चकितचकिता बभूवुः। सप्तदशशताब्द्या मध्यभागः श्रीजगदीशतर्कालङ्कारगदाधरभट्टाचार्याणां जीवनकाल आसीत्, किन्तु श्रीजगदीशमहाभागा वयोवृद्धा भट्टाचार्यास्तु युवान एव आसन्। एतेषां विदुषां परस्परं वैमत्यं यत्र तत्र स्थलविशेषेषु दृश्यते। भट्टाचार्याणां पञ्च पुत्रा आसन्। रामतर्कालङ्कारः, कृष्णदेवविद्याभूषणः, रामदेवः, महादेवः, रघुदेवन्यायवागीशश्च। तत्र रामतर्कालङ्कारस्य पुत्रो महानैयायिको रघुनन्दनवाचस्पतिरासीत्। रघुनन्दनस्य द्वौ पुत्रावास्ताम्, गोविन्दन्यायपञ्चानन-रमाकान्तविद्यालङ्कारौ। गोविन्दन्यायपञ्चाननो महाशास्त्रार्थी आसीत्, तेन च शास्त्रार्थे कस्यचित्पण्डितस्य पराजयः कृतः; पराजितेन विदुषाऽभिशप्तः पञ्चाननः निःसन्ततिर्जातः।

भट्टाचार्याणां द्वितीयः पुत्रो यः कृष्णदेवविद्याविभूषणः सोऽपि निःसन्ततिरासीत्। तेन च स्वकनिष्ठभ्रातृ रामदेवस्य द्वितीयपुत्रो हरदेवतर्कसिद्धान्तनामा पुत्रत्वेनाङ्गीकृतः। म० म० मधुसूदनस्मृतिरत्नकृतस्य ऋग्वेदीयसन्ध्याप्रयोगस्यान्तिमे पृष्ठे—

हरदेव इति ख्यातः कृष्णचन्द्रो यदा नृपः।
जगन्नाथेन सह तद्विचारोऽभूदुपान्तिके॥
सन्तुष्टेन नृपेनास्मै हरदेवाय भूर्ददे।
स्वल्पायुरचिरात्स्वर्गं गतः॥

इति लिखितं विद्यते ( वङ्गे नव्यन्यायचर्चा )। हरदेवतर्कसिद्धान्तस्य पञ्च पुत्रा आसन्। तितुरामतर्कपञ्चाननः, कृपारामतर्कभूषणः; श्यामसार्वभौमः, गोपालविद्यावागीशः, कृष्णकान्तविद्यालङ्कारश्च। गोपालविद्यावागीशस्य पुत्रः श्रीकृष्णकान्ततर्कवागीशो गदाधरवंशेऽन्तिमः पण्डितः आसीत्। इत एव पण्डितपरम्परा तद्वंशे विलयं गता। गोपालविद्यावागीशो राज्ञः कृष्णचन्द्रस्य दानपात्रमासीत्। हरदेवतर्कसिद्धान्तस्य यः सर्वस्मात्कनिष्ठः पुत्रः कृष्णकान्तविद्यालङ्कारस्तस्य द्वौ शिष्यौ रघुमणिविद्याभूषणः श्रीरामशिरोमणिभट्टाचार्यश्चेत्यास्ताम्। कृष्णकान्तविद्यालङ्कारस्य महाप्रतिद्वन्दी शंकरनामा महापण्डित आसीत्। तस्य पुत्रः शिवनाथतर्कवागीशस्तस्य पुत्रौ श्रीरामशिरोमणिभट्टाचार्यो रघुमणिविद्याभूषणश्चास्ताम्। रामशिरोमणिर्द्वात्रिंशदधिकद्वादशशततमे ( १२२३ )

वङ्गाऽब्दे प्रसिद्धनैयायिककाशीनाथतर्कचूडामणिनामनः पण्डितस्य जीवनावसानान्नवद्वीपपाठशालायां प्रधानाचार्यपद-मलङ्कृतवान् । एकषष्ट्यधिकद्वादशशततमे ( १२६१ ) वङ्गाऽब्दे पक्षाघातरोगेण समाक्रान्तस्तत्पदं विहाय गृहे समयं यापयन् आषाढमासस्य चतुर्थेऽह्नि पञ्चाषष्ट्यधिकद्वादशशततमे वङ्गाऽब्दे पञ्चत्वं गतः । तन्मृत्युसमाचारः "सम्वादप्रभाकरपत्रे" प्रकाशितो जातः । तत्र च लिखितमासीत् "वयमसीमशोकसागरे निमग्नाः सन्तः समवेदनां प्रकटयामो यन्नवद्वीपनिवासिनः सुविख्याताः पूज्यवराः श्रीरामशिरोमणिमहाशया मायाविजगदिदं परित्यज्य योग्याय धाम्ने यात्रां कृतवन्तः । यद्यपि ते बहुशास्त्रज्ञा आसन् तथाप्यधुनातने काले तर्कशास्त्रेऽद्वितीयपण्डिता आसन् । एतादृशानां तेषामवसानं श्रुत्वा को नाम पण्डितो भवेत् यः शोकाकुलो न भवेदिति" इति । श्रीरामशिरोमणिः शास्त्रार्थेऽतिदक्ष आसीत् । रघुमणिविद्याविभूषणो मूलग्रन्थस्य साकल्येन महावेत्ता आसीत् । उभावपि भ्रातरौ तत्कालीनश्रेष्ठनैयायिकस्य मुर्शिदाबादमण्डलान्तर्गतव्यासपुरनिवासिनः कृष्णनाथपञ्चाननस्यच्छात्रावास्तामित्यपीति हासविदां मतम् । द्वौ च भ्रातरौ एकस्मिन्नेव विद्यालयेऽध्यापकावास्ताम् । श्रीरामशिरोमणेर्ज्येष्ठपुत्रः श्रीहरमोहन-तर्कचूडामणिर्द्विसप्तत्यधिकद्वादशशततमे ( १२६२ ) वङ्गाऽब्दे श्रीमाधवतर्कसिद्धान्तस्य जीवनावसानान्नवद्वीपविद्यालये प्राधान्यमलभत । षोडशवर्षपर्यन्तं प्रधानपदमध्यासीनोऽष्टाशीत्यधिकद्वादशशततमे ( १२८८ ) वङ्गाब्दे पञ्चत्वं गतः । श्रीहरमोहनतर्कचूडामणिजगदीश्याः सामान्यलक्षणायाष्टिप्पणीं पञ्चाशीत्यधिकसप्तदशशततमे शकाब्दे ( १६८५ ) रचयामास । श्रीहरमोहनस्य भ्राता महामहोपाध्यायः श्री मोहनविद्यारत्नः प्रतिभाशाली विख्यात-विद्वानासीत् । तेन च त्रयस्त्रिंशदधिकद्वादशशततमे वङ्गाब्दे ( १२३३ ) जन्म त्रयोदशशततमे (१३००) वङ्गाब्दे-पञ्चत्वं प्राप्तम् । रघुमणिविद्याभूषणस्य परश्शताश्छात्रा आसन् तेषु आलोकः, गोलोकः, रुद्रमङ्गलः, हरिः, गौरी चेति पञ्च प्रसिद्धाश्छात्रा आसन् । रघुमणिविद्याभूषणस्य पुत्रो नवद्वीपनिवासी द्वारकानाथविद्यावागीशः ( ७९ ) एकोनाशीतिवर्षपर्यन्तं जीवित्वा एकोनविंशत्यधिकत्रयोदशशततमे च वङ्गाब्दे (१३१९) पञ्चत्वं गतः । गदाधर भट्टाचार्याणां विद्यावंशपरम्परायां द्वारकानाथविद्यावागीशः पष्ठस्थानं परिगृहीतवान् ।

रामदेवो गदाधरभट्टाचार्याणां तृतीयः पुत्र आसीत् । तस्य षट् पुत्रा आसन् । तेषु हरिदेवो ज्येष्ठपुत्रस्तस्य रामरामसार्वभौमनामा महापण्डितः पुत्र आसीत् । गदाधरभट्टाचार्याणां चतुर्थः पुत्र महादेवनामा तस्य चत्वारः पुत्रा आसन् तस्य रतिदेवनाम्नः पुत्रस्य रामानन्दतर्कपञ्चाननो महापण्डितः पुत्र आसीत् ।

भट्टाचार्याणां कनिष्ठः पुत्रो रघुदेवन्यायवागीशस्तस्य पुत्रो हरिनारायणवाचस्पतिस्तस्य च त्रयः पुत्रा आसन् । गोपालसार्वभौमः, कृष्णजीवनन्यायालङ्कारः, कृष्णचन्द्रतर्कपञ्चाननश्च । एते त्रयो नवद्वीपेऽतिप्रसिद्धाः पण्डिता आसन् । गोपालसार्वभौमः, कृष्णजीवनन्यायालङ्कारश्च नव्यन्यायस्य क्रोडपत्रकारावास्ताम् ।

**एतन्निर्मिता ग्रन्थाः नामतो निर्दिश्यन्ते :—**

**( १ ) मूलतत्त्वचिन्तामणिटीका** (काञ्चीशास्त्रमुक्तावलीग्रन्थमालायां शब्दखण्डस्य खण्डितांश एव मिलति)

**( २ ) मूलानुमानखण्डटीका ।**

**( ३ ) शब्दमण्यालोकटीका ।** ( काञ्चीशास्त्रमुक्तावलीग्रन्थमालायाम् अपूर्ववादपर्यन्ता एव प्राप्यते )

**( ४ ) प्रत्यक्षालोकटीका ।** ( काञ्चीशास्त्रमुक्तावलीग्रन्थमालायां खण्डितांश एव मिलति )

**( ५ ) प्रामाण्यमिश्रभ० टीका ।** (नवद्वीपे प्राप्यते, तस्या वङ्गीयसाहित्यपरिषदा खण्डमेकं प्रकाशितम्)

**( ६ ) अनुमानालोकटीका ।** (मिश्रगादाधर्या अनुमानखण्डमत्यन्तं दुष्प्राप्यम्, नवद्वीपे अंशमात्रं प्राप्यते)

**( ७ ) प्रत्यक्षदीधितिटीका ।** ( काञ्चीशास्त्रमुक्तावलीग्रन्थमालायां ज्ञप्तिवादपर्यन्ता प्राप्यते, नवद्वीपे सम्पूर्णप्रतिलिपिः प्राप्यते, प्रथमं संस्करणं १९०१ ईशवीये वर्षे द्वितीयं संस्करणञ्च १९३० ईशवीये वर्षे जातम् )

**( ८ ) अनुमानदीधितिटीका ।** (एसियाटिकसोसायटीकलकत्ताद्वारांऽशतश्चौखम्बासंस्कृतसीरीजद्वारा सम्पूर्णा च प्रकाशिता )

( ९ ) नञ्वादः । ( एसियाटिकसोसायटीकलकत्तातः शब्दखण्डस्य परिशिष्टमूलेन सह मुद्रितः )

( १० ) बौद्धाधिकारदीधितिटीका । ( चौखम्वासंस्कृतसीरीजसंस्थातः कतिपये अंशाः प्रकाशिताः, बरौदातः पञ्चत्रिंशदधिकशतद्वयसंङ्ख्याकानि पत्राणि प्राप्यन्ते ।)

( ११ ) कुसुमाञ्जलिटीका । ( डा० कीलहर्नमहोदयो मध्यप्रदेशान्तर्गतचन्द्राग्रामवास्तव्यश्रीगणपतिशास्त्रिगेहे त्र्यशीतिसङ्ख्याकानि पत्राणि प्राप्तवान् । सम्पूर्णाऽधुनाऽप्राप्ता । )

( १२ ) व्युत्पत्तिवादः । ( भट्टाचार्यैः १६२५ ईशवीये लिखितः )

ग्रन्थस्यास्य सप्त टीकाः सम्प्रति उपलभ्यन्ते–

( १ ) जयानामिका म० म० जयदेवमिश्ररचिता,
( २ ) आदर्शनामिका पण्डितश्रीसुदर्शनशास्त्रिविरचिता,
( ३ ) गूढार्थतत्त्वालोकनामिका सर्वतन्त्रस्वतन्त्रश्रीधर्मदत्तझाविरचिता,
( ४ ) प्रकाशनामिका, श्रीलक्ष्मीनाथझाविरचिता,
( ५ ) नौकानामिका श्रीखुद्दीझाविरचिता,
( अभेदसंसर्गकशाब्दबोधप्रक्रिया पर्य्यन्ता )
( ६ ) शास्त्रार्थकलानामिका श्रीवेणीमाधवशुक्लशास्त्रिविरचिता,
( ७ ) दीपिकानामिका श्रीशिवदत्तमिश्रविरचिता,

( १३ ) शक्तिवादः । ग्रन्थस्यास्य पञ्च टीका उपलभ्यन्ते-
( १ ) विवृतिनामिका श्रीहरिनाथतर्कसिद्धान्तकृता;
( २ ) मञ्जूषानामिका श्रीकृष्णभट्टकृता,
( ३ ) माधवीनामिका श्रीमाधवतर्कसिद्धान्तविरचिता,
( ४ ) विनोदिनीनामिका गोस्वामिदामोदरशास्त्रिविरचिता,
( ५ ) आदर्शनामिका श्रीसुदर्शनशास्त्रिविरचिता,

( १४ ) मुक्तिवादः ( चौखम्वासंस्कृतसीरीजद्वारा प्रकाशितचन्द्रिकाख्यविवृतिसहितः संस्कृतसाहित्यपरिषद्द्वारा प्रकाशितः शिवरामटीकादिसहितश्च )

( १५ ) प्रामाण्यवादः ( हरिरामतर्कवागीशकृतः प्रामाण्यवादोऽन्यः, गदाधरभट्टाचार्यकृतश्चान्यः श्रीराजनारायणशुक्लकृतप्रभाव्याख्यासहितः )

( १६ ) विषयतावादः ( चौखम्वासंस्कृतसीरीजसंस्थातः प्रकाशितः श्रीढुण्ढिराजशास्त्रिकृतटिप्पणीसहितः )

( १७ ) काव्यप्रकाशश्चतुर्थोल्लासपर्य्यन्तः ( कलकताराजकीयसंस्कृतकालेजद्वारा सोसायटीकलकत्तातः प्रकाशितः )

( १८ ) एकपाणिवादवीचिः ।
( १९ ) विशिष्टवैशिष्ट्यबोधवादवीचिः ।
( २० ) संशयवादवीचिः ।
( २१ ) निर्विकल्पकस्मरणवादवीचिः ।
( २२ ) स्वर्गवादवीचिः ।
( २३ ) विष्णुप्रीतिवादवीचिः ।
( २४ ) कारणतावादवीचिः ।
( २५ ) अपेक्षाबुद्धिकारणतावादवीचिः ।
( २६ ) विषयतावादवीचिः ।

एता वीचयश्चौखम्बासंस्कृतसीरीजद्वारा प्रकाशितवादवारिधौ समुपलभ्यन्ते।

इतः परमपि एतन्निर्मिता ( १ ) रत्नकोषवादरहस्यम् ( २ ) आख्यातवादः ( ३ ) कारकवादः ( ४ ) विधिवादः ( ५ ) ऋग्वेदोक्तदशकर्मपद्धतिः ( ६ ) चण्डीटीका ( ७ ) मुक्तावलीटीका ( ८ ) स्मृतिसंस्कारवादश्चेति ग्रन्था वर्तन्त इति श्रूयत एव।

एतेषां महानुभावानां विषये बहुविधा किंवदन्ती श्रूयते। तथाहि हरिरामतर्कवागीशस्य गुरोर्जीवनावसानानन्तरं पूर्ववङ्गदेशोद्भवत्वात्प्रथितबुधवंशानुद्भूतत्वाच्च तत्रत्यैश्छात्रैः प्रतिभादिगुणसम्पन्ना अपि भट्टाचार्या न समादृता बभूवुः। ततश्च भट्टाचार्यैर्गुरोश्चतुष्पाठीं त्यक्त्वाऽन्या चटुष्पाठी आरामवाटिका च स्थापिता। कदाचित्कश्चिच्छात्रः कुसुमावचयार्थं तस्यामारामवाटिकायां समागतः कमपि वृक्षविशेषमुद्दिश्य पूर्वपक्षं समाधानञ्च कुर्वतो भट्टाचार्यान् सविस्मयमवलोकितवान्। ततश्चानेके शिष्याः तया प्रतिभया वशीभूता जाताः। एकदा तत्समकालीनानां जगदीशतर्कालङ्कारमहोदयानां समीपं कश्चिद्भट्टाचार्याणाञ्छात्रो गतः, तर्कालङ्कारैः स्थलविशेषव्याख्यानार्थं पृष्टः स छात्रो यथापठितं व्याख्यातवान्। तर्कालङ्कारास्तु अशुद्धमिदं न सम्यगिति गुरवे निवेदयेति तमादिष्टवन्तः। श्रुतवृत्तान्ता भट्टाचार्याः स्वप्रतिभयाऽसम्बद्धस्यापि तस्य स्वव्याख्यानुसारेण मूलपाठमपि संयोज्य लिखित्वा च पत्रमेकं कस्यचिद्धस्तेन प्रेषितवन्तः। तच्च पत्रं पठित्वा तर्कालङ्काराश्चकितचकिता बभूवुः।

भट्टाचार्येभ्यः कृष्णनगराधिपतिर्महाराजराघवेन्द्रः एकषष्ट्यधिकषोडशशततमे ( १६६१ ) ईशवीये वर्षे प्रभूतां भूमिं दत्तवान्। एकदा भट्टाचार्यद्वारा तिन्तिलीपत्रसंग्रहमवलोक्य राज्ञा राघवेण "अनेन पत्रसंग्रहेण भवन्तः किं करिष्यन्ति" इति पृष्टा भट्टाचार्याः प्रोचुः"अनेन पत्रसंग्रहेणैवास्माकं भोजनं सम्पद्यते, सुतरामेवास्माभिः संग्रहः क्रियते" इति। ततः श्रुतवता महाराजराघवेण यथा भट्टाचार्याणां भोजनादिचिन्ता न भवेदिति तथैव भूमिदानादिर्विहितमित्यमूलः प्रवादोऽपि वर्तते। किन्तु भट्टाचार्याणामगाधपाण्डित्यमनुभूयैव तेभ्यः प्रभूतां भूमिं दत्तवानिति तु सत्यं प्रतिभाति।

तेषां महानुभावानां जन्मादिविषयेऽस्ति विवादः। संस्कृतसाहित्यपरिषत्कलकत्ताद्वारा प्रकाशितस्य नवमुक्तिवादस्य श्रीकालिपदतर्काचार्यकृतभूमिकायां चतुःषष्टितमपृष्ठे "जीवनकालश्चास्य १००६ वङ्गाब्दात् तदीयजन्मकालात् १११० वङ्गाब्दस्तदीयमृत्युकालपर्य्यन्तः" इति लिखितं विद्यते।

राजेंद्रघोषकृताद्वैतसिद्धिभूमिकायाः प्रथमभागे चतुर्णवतितमपृष्ठे एकादशाधिकसहस्रतमे वङ्गाब्दे ( १०११ ) पौषमासे जन्म पञ्चदशाधिकैकादशशततमे वङ्गाब्दे ( १११५ ) फाल्गुनमासे ( दिसम्बरमासे १६०४ ईशवीये वर्षे ) फरवरीमासे १७०६ ईशवीये वर्षे अवसानञ्च जातमिति सूचितं विद्यते। इदञ्च प्रामाणिकमिति "वङ्गे नव्यन्यायचर्चा" इति ग्रन्थकृतामभिप्रायः।

## अथ गूढार्थतत्त्वालोककर्तृपरिचयः

मधुवनीमण्डलान्तर्गतनवानीग्रामवास्तव्यश्रीदुर्गादत्तझाशर्मात्मजन्मानः श्रीधर्मदत्तझाशर्माणः सप्तदशाधिकैकोनविंशतिशततमे वैक्रमेऽब्दे ( १९१७ ) चैत्रशुक्लनवम्यां जन्म लेभिरे। एतेषां बाल्यावस्थायां प्रेम्णा मातापितृभ्यां सङ्केतितम् "बच्चा झा" इत्यप्यपरं नामासीत्। एते च प्रारम्भिकमध्ययनं स्वगृहे एव परिसमाप्य श्रीविश्वनाथशर्मणां सकाशान्न्यायशास्त्रमध्येतुं मधुवनीमण्डलान्तर्गतान्धराठाढीनामग्राममगमन्। तत्काले श्रीविश्वनाथझाशर्माणो लब्धप्रतिष्ठा विद्वन्मूर्धन्या अश्रुतपराजया विद्वांस आसन्। श्रीधर्मदत्तझामहोदयानां न्यायशास्त्राध्ययनस्य श्रीगणेश एतेभ्य एव जातः। परञ्च कतिपयकारणवशात्तेभ्यो यथेच्छं समयमनासाद्यान्यत्रापिपठिषवोऽपि भवन्तो मधुवनीमण्डलान्तर्गतमङ्गरौनीनामग्रामं न्यायशास्त्रमध्येतुं गतवन्तः। तत्र पण्डितप्रवरश्रीबबुजनझाशर्मणां सकाशाद्मैथिलसम्प्रदायानुसारेण श्रमक्रमाभ्यां न्यायशास्त्रमध्यैषत। तत्पश्चाद्मीमांसावेदान्तादिदर्शनानामध्ययनं स्वामिश्रीविशुद्धानन्दसरस्वतीचरणानां सकाशाद्वाराणस्यामकार्षुः। भवन्तः सर्वाण्येव दर्शनानि सम्यगधीत्य मिथिलाप्राचीनपरम्परानुसारेण स्वग्राम एव

पाठशालां स्थापयामासुः। तामेव पाठशालामवितिष्ठतश्छात्रानध्यापयामासुः। भवतामुदग्रमुत्कटमध्यवसायं गभीरपाण्डित्यं शास्त्रविवेचनशैलीञ्च श्रुत्वा भारतवर्षस्य तत्तत्प्रदेशात्परश्शताश्छात्रास्तत्रागत्याध्यैषत। किं बहुनैतत्पाण्डित्यादिगुणैः प्रभाविता द्वारिकापीठाधीश्वरश्रीशङ्कराचार्यपादाः स्वयमेतेभ्यः पिपठिषवः स्वस्थान एवैनान् समाहूय न्यायादिशास्त्राध्ययनं चक्रुः। भवतां पितामहाः पण्डितप्रवरश्रीरत्नपाणिझाशर्माणो दरभङ्गाधीश्वरस्य श्रीमतो रुद्रसिंहस्य राजपण्डिता आसन्। भवतां पुत्रः श्रीजगदीशझामहोदयो महापण्डित आसीत्। श्रीजगदीशझामहोदयस्य पुत्रः श्रीरतीशझामहोदयो न्यायशास्त्रे पारङ्गतो महाशास्त्रार्थी लब्धप्रतिष्ठोऽधुना मिथिलायां चकास्ति।

श्रीधर्मदत्तझामहोदयाः स्वजीवनकालपर्यन्तं स्वकुलोचिते नित्यनैमित्तिके कर्मणि सम्पादयन्तोऽध्ययनाध्यापनयोर्ग्रन्थलेखने च संलग्नचित्ताः स्वस्मिन्नगाधपाण्डित्यं प्रावर्द्धयन्। भवन्तः प्रत्यहमेकादशसङ्ख्याकांश्छात्रान् भोजयित्वा स्वयमभुक्षत।

श्रीधर्मदत्तझामहोदयानां परश्शतेषुच्छात्रेषु स्वामी पूर्णानन्दः, स्वामी परमानन्दः, श्रीसहदेवझा, श्रीशशिनाथझा, श्रीकेशवझा, महामहोपाध्यायबालकृष्णमिश्रः, श्रीलक्ष्मीनाथझा, श्रीहरिनाथशास्त्री, श्रीषष्ठीनाथझा, श्रीगोप्तृनाथमिश्रश्चेतिप्रभृतयो विशिष्टा विद्वांस आसन्।

एतन्निर्मिताः प्रकाशिता ग्रन्थाः—

( १ ) जा० व्याप्तिपञ्चकस्य गूढार्थतत्त्वालोकटीका। ( वाराणस्यां १९२३ ई० प्रकाशिता )
( २ ) जा० सिद्धान्तलक्षणस्य गूढार्थतत्त्वालोकटीका। ( वाराणस्यां १९२३ ई० प्रकाशिता )
( ३ ) गा० सामान्यनिरुक्तेर्गूढार्थतत्त्वालोकटीका। ( वाराणस्यां १९३५ ई० प्रकाशिता )
( ४ ) सुलोचनामाधवचम्पूकाव्यम् ( दरभङ्गामिथिलाविद्यापीठतः प्रकाशितम् )।

सुलोचनामाधवचम्पूकाव्यस्यैकश्लोकः—

श्यामेयं सुषमेन्धनं सुरभिणा सन्धुक्षितं वायुना,
कुर्वन्तं जगदुज्ज्वलं प्रसृतया सज्ज्योत्स्नया धूम्यया।
सम्पाद्यातनुमग्निमुज्ज्वलविधुभ्राष्ट्रङ्कपालेऽम्बरप्राणान् भर्जत ऋक्षराजनिकरो यद्दृश्यते खण्डने॥ इति॥

( ५ ) न्यायकुसुमाञ्जलेर्या वर्द्धमानकृतप्रकाशनामिका टीका तदुपरि टिप्पणी।
( ६ ) गीतामधुसूदनीव्याख्याया गूढार्थतत्त्वालोकटीका। ( बाम्बे १९१२ ईशवीये प्रकाशिता )।
( ७ ) व्युपत्तिवादस्य गूढार्थतत्त्वालोकटीका। ( बाम्बे १९१२ ईशवीये प्रथमं संस्करणम्, वाराणस्यां "चौखम्बा अमरभारती प्रकाशनम्" इति संस्थातः १९७६ ईशवीये मदीयभूमिकया सह गूढार्थतत्त्वालोकटीकाया द्वितीयं संस्करणम् )।

एतन्निर्मिता अप्रकाशिता ग्रन्थाः—

( १ ) जा० अवच्छेदकत्वनिरुक्तिटीका।
( २ ) जा० व्याप्त्यनुगमटीका।
( ३ ) जा० पक्षतायाष्टिप्पणी।
( ४ ) गा० अवयवस्य टिप्पणी।
( ५ ) गा० सव्यभिचारस्य टिप्पणी।

(६) गां० सत्प्रतिपक्षस्य टिप्पणी।
(७) न्यायभाष्यटीका।
(८) न्यायवार्त्तिकतात्पर्यटीकायाष्टिप्पणी।
(९) आनन्दपुराणे ईश्वरानुमानस्य विपुलविवेचनम्।
(१०) शक्तिवादस्य टिप्पणी।
(११) खण्डनखण्डखाद्यस्य टिप्पणी।

खण्डनखण्डखाद्यस्य टिप्पण्यंशश्चौखम्बा संस्कृतसीरीजसंस्थातः प्रकाशितस्य खण्डनखण्डखाद्यस्य खण्डनरत्नमालिकानामटीकायामुद्धृतोऽस्ति। स च पञ्चमपृष्ठादारभ्य सप्तमपृष्ठं यावद्द्रष्टव्यः।

श्रीधर्मदत्तझाशर्माणो भृतकाध्यापनाद्वीतरागा अपि दरभङ्गानरेशस्य श्रीमतो रमेश्वरसिंहस्यातिशयानुरोधाद्विहारप्रान्तान्तर्गतमुजफ्फरपुरस्थश्रीधर्मसमाजसंस्कृतमहाविद्यालयस्य प्रधानाचार्यपदं स्वीचक्रुः। परञ्च वर्षाभ्यन्तर एव दैवदुर्विपाकादकस्मादेवाष्टासप्तत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्दे (१९७८) विद्वत्समाजस्य प्राणभूता भवन्तस्तत्समाजं पारिवारिकजनांश्छात्रांश्च विहाय त्रिदिवपथातिथयोऽभूवन्।

श्रीसुन्दरदासगुप्तेन श्रीमत्या शोभागुप्तया श्रीमत्या सुशीलागुप्तया श्रीमत्या आशागुप्तया चाधिकृतायाः "चौखम्बा अमरभारती प्रकाशनम्" इति संस्थाया व्यवस्थापकेभ्यो नानाविधदुर्लभग्रन्थप्रकाशनरसिकेभ्यः श्रीविट्ठलदासगुप्तमहोदयेभ्यः सहस्रं धन्यवादाः प्रदीयन्ते। येषां प्रेरणया प्रोत्साहितोऽहं गूढार्थतत्त्वालोकसनाथीकृतस्य व्युत्पत्तिवादग्रन्थरत्नस्य सम्पादनकर्मणि भूमिकालेखने च प्रावर्त्तिषि। बहुश्रमेण रचितया भूमिकया यदि गूढार्थतत्त्वालोकमहोदधिमुत्तितीर्षूणां न्यायरसिकानामल्पोऽप्युपकारो भवेत्तदा मंस्ये स्वपरिश्रमं सफलम्। आशासे चात्र कृतेऽपि बहुविधप्रयासे दृष्टिदोषात्सीसकाक्षरयोजनादोषाद्वा जाता यास्त्रुटयस्ताः।

"गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥"

इतिन्यायेन विपश्चिद्वरैरुदारचित्तैः क्षंस्यन्त इतिशम्।

विदुषां वशंवदः
कीर्त्यानन्द झा

ग्रा० पो० ज़रिसो,
जि० दरभङ्गा
(विहार)
विजयादशमी
वि० सं० २०३३

# व्युत्पत्तिवादः ।



## गूढार्थतत्वालोकव्याख्यासहितः ।

श्रीगणेशाय नमः ।

**शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते । स च क्वचिदभेदः ।**

---

व्याजस्वीकृतसेवया विधुरभूदग्रेसरः श्रीमतां मानव्याहतिकैतवावनमनादीशस्त्रिलोकीपतिः ।
संभिन्नाब्जकुलप्रसूतिविभवादम्भोजमब्जालयो यस्य श्रीगिरिजापदाम्बुजयुगं तत्स्यादभीष्टप्रदम् ॥ १ ॥
मैथिलान्वयजातेन धर्मदत्तेन धीमता । व्युत्पत्तिवादगूढार्थतत्त्वालोको वितन्यते ॥ २ ॥

अथ शब्दाकाङ्क्षाविज्ञानविशेषकार्यकारणभावविज्ञानरूपाया व्युत्पत्तेरनुकूलेऽन्तरा मतान्तरखण्डनगर्भत्वेऽपि तदुद्देशेनाप्रवृत्ततया जल्पव्यवहारायोग्ये व्युत्पत्तितत्त्वबुभुत्सयारम्भणीयत्वेन वादपदव्यवहार्ये चिकीर्षितसंदर्भे भेदाभेदान्वयविषयकत्वेन द्विविधे शाब्दबोधे सामान्यतो विशेषतश्चाकाङ्क्षाज्ञानस्य कार्यकारणभावमभेदान्वयबोधश्चेत्यादिना वक्ष्यति तत्प्रथममेव शाब्दद्वैविध्यप्रयोजकं संबन्धद्वैविध्यं वक्तुमुचितमिति क्वचिदभेदः क्वचिच्च तदतिरिक्त एवेति प्रथमत उक्तं, तावन्मात्रस्य च परिचायकसाकाङ्क्षत्वेन परिचायकाकाङ्क्षानिवृत्तये तदुक्तिरपेक्षिता, तत्र शाब्दबोधेऽपि संसर्गो भासते सचेत्येवमुक्तावविशेषेण वृत्त्युपस्थाप्याभेदादिसंसर्गस्यापि संगृहीतत्वेन तदन्वयबुद्धेराकाङ्क्षाज्ञानव्यभिचारितयाकाङ्क्षाज्ञानविशेषकार्यकारणभावबोधकस्याभेदान्वयबुद्धिसामान्यकार्यकारणभावबोधपर्यवसायिनोऽभेदान्वयबोधश्चेत्यादेरसंगतिः । एवमाकाङ्क्षाज्ञानप्रयोज्यतत्कार्यतावच्छेदककोटिनिविष्टविषयताश्रयाखिलसंसर्गासंग्राहकपरिचायकोक्तौ तदसंगृहीतसंसर्गविशेषविषयकशाब्दबुद्धावाकाङ्क्षाज्ञानकार्यकारणभावकथनमसंगतं स्यादनुपक्रान्तविषयकत्वादिति वृत्तिविषयसकलसंबन्धासंग्राहकमाकाङ्क्षाभास्यनिखिलसंबन्धसंग्राहकं परिचायकमाह—**शाब्दबोधेचेत्यादिना** । तस्य चैकपदार्थानुयोगिकापरपदार्थप्रतियोगिकः संसर्ग आकाङ्क्षाप्रयोज्यसंसर्गत्वाभिन्नशाब्दबोधनिरूपितविषयतावानित्यर्थः । **सचेति** । आकाङ्क्षाप्रयोज्यसांसर्गिकविषयतावांश्चेत्यर्थः । अत्रासति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य सर्वानुमततया एकपदार्थानुयोगिकापरपदार्थप्रतियोगिकसंसर्गत्वस्याकाङ्क्षाप्रयोज्यसांसर्गिकविषयत्वव्याप्यतालाभादुक्तसंसर्गत्वं वृत्तिविषयाखिलसंसर्गाद्व्यावर्तमानं साधकाभावादाकाङ्क्षाप्रयोज्यसंसर्गतां विनिवर्तयत्याकाङ्क्षाभास्यसकलसंसर्गे चानुवर्तमानमनुवर्तयतीति वृत्तिविषयसकलसंसर्गासंग्रह आकाङ्क्षाभास्यसकलसंसर्गसंग्रहश्च ।

अथैकं यत्पदं तदर्थ इत्यर्थः एकस्मिन्पदार्थ इतिवार्थः एकत्ववत्पदार्थतावच्छेदकावच्छिन्न इतिवार्थ एकपदार्थ इत्यस्य विवक्षितस्तत्र नाद्यः, आख्यातार्थकालकृत्योराकाङ्क्षाभास्यसंसर्गस्यासंग्राहकत्वात् । न द्वितीयः, आकाङ्क्षाभास्यतादात्म्यस्यासंग्राहकत्वात्तदनुयोगिप्रतियोगिनोर्भेदविरहात् । न तृतीयः, संपन्नो व्रीहिरित्यादौ पदार्थतावच्छेदकानवच्छिन्नव्रीहित्वैकत्वसंसर्गस्याकाङ्क्षाभासस्य संग्रहासंभवात् । नच व्रीहित्वेऽन्वयपक्षो न सिद्धान्त इति तृतीये न दोष इति वाच्यम्, चैत्रस्य गुरुकुलमित्यत्र गुरुत्वस्य सखण्डतयान्वयितावच्छेदकरूपेणोपस्थितिसंभवेन पदार्थतावच्छेदके तत्र पदार्थान्तरान्वयस्य संमततया तत्संसर्गासंग्रहात् । नच गुरुत्वस्यापि पदार्थतावच्छेदकत्वान्न दोष इति वाच्यम्, साक्षात्परम्परासाधारणावच्छेदकत्वस्य विवक्षणे लाङ्गूलत्वलोमत्वयोरपि पशुपदार्थतावच्छेदकतया तदवच्छिन्नयोरन्वयस्य वृत्तिविषयस्य संग्रहप्रसङ्गात् । यत्त्वेकत्वापरत्वयोरविशेषितयोः सर्वसाधारणत्वादुपादानवैफल्यं विशेषितयोरुपादानेऽननुगम इति तन्न, पदविशिष्टसांसर्गिकविषयत्वादिप्रवेशे दोषासंभवात् । वैशिष्ट्यं च स्वप्रयोज्यप्रकारताकत्वस्वभिन्नपदप्रयोज्यविशेष्यताकत्वोभयसंबन्धेन विवक्षितम् । एतेनैकस्यैव संसर्गस्य पदार्थतयाऽऽकाङ्क्षाभास्यतया च संग्रहो न दोषाधायकः । कृतिप्रकारतानिरूपितचैत्रादिविशेष्यताकसमवायनिष्ठसंसर्गतायाः पदविशिष्टत्वेऽपि घटत्वप्रकारतानिरूपितघटविशेष्यताकसमवायनिष्ठसंसर्गतायाः पदविशिष्टत्वासंभवेन तद्ग्रहणासंभवात् । नचैवं तृतीये स्वावच्छिन्नविशेष्यताकत्वस्वभिन्नधर्मावच्छिन्नप्रकारताकत्वोभयसंबन्धेन पदार्थतावच्छेदकविशिष्टत्वं धर्मविशिष्टत्वं वा प्रवेश्यं तदुभयमपि लोमस्वलाङ्गूलत्वयोर्लोमलाङ्गूलपदार्थतावच्छेदकत्वाद्धर्मत्वाच्च पशुपदार्थतावच्छेदकघटकलोमलाङ्गूलोभयसंसर्गत्वसंग्राहकत्वान्न संभवदुक्तिकम् । अत्र हि पदस्य विशिष्य प्रवेशो न संभव-

त्वेवेति वाच्यम् । वृत्तिज्ञानीयविषयताप्रयोज्योपस्थितीयमुख्यविशेष्यतानिरूपितप्रकारताविशिष्टत्वस्य संभवदुक्तिकत्वात्, स्वप्रयोज्यावच्छेदकताकप्रकारताकत्वस्वभिन्नतादृशप्रकारताप्रयोज्यावच्छेदकताकविशेष्यताकत्वोभयसंबन्धेन वैशिष्ट्यस्य च वाच्यत्वात् पशुत्वलोमत्वावच्छेदकत्वयोर्मुख्यविशेष्यतानिरूपितप्रकारत्वाप्रयोज्यत्वादुक्तसंसर्गत्वसंग्रहस्यासंभवात् । यदि चात्र षष्ठ्यर्थप्रतियोगित्वस्य स्वाश्रयगुरुत्वसंबन्धेनैकदेशान्वयभीत्या गुरावेवान्वयः स्वीक्रियत इति तृतीये न दोषः । नच गुरुत्वस्य सनिरूपकतया नित्यसाकाङ्क्षत्वेन निरूपकेणानन्वयो आकाङ्क्षाप्रशमादेकदेशान्वयोऽपि स्वीकार्यः । व्रीहित्वं च नैवं नित्यसाकाङ्क्षमिति तत्र स्वाश्रयव्रीहित्वसंबन्धेनान्वयेऽपि न क्षतिरिति वाच्यम् । संसर्गघटकतया निरूपकत्वज्ञानस्याप्याकाङ्क्षानिवर्तकत्वाभ्युपगमस्यैकदेशानन्वयनियमभङ्गापेक्षयाभ्यर्हितत्वादिति विभाव्यते । तदापीदं रजतमिति प्रत्यक्षसाधारणप्रवर्तकतावच्छेदकधर्मनिर्वाहायेदं रजतमिति वाक्यजज्ञान इदमर्थे स्वरूपतो रजतत्वभानस्य स्वीकृततया रजतत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताकसंसर्गतायाः संग्रहासंभवात् । एवं घटो नास्तीत्यादौ स्वरूपतो भासमानघटत्वस्यावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वयाभ्युपगमात्तत्संसर्गतया अप्यसंग्रहादिति चेत् ।

अत्र केचित् । एकपदार्थेऽपरपदार्थस्य संसर्ग इत्यस्योपस्थितीयविषयताविशिष्टसंसर्गतावानित्यर्थः । वैशिष्ट्यं च स्वप्रयोज्यप्रकारतानिरूपितत्वस्वानिरूपितविषयताप्रयोज्यविशेष्यताकत्वोभयसंबन्धेन वाच्यमत्र स्वानिरूपितेत्यत्र निरूपितत्वं साक्षात्परम्परासाधारणं विषयतात्वेनैव च प्रकारताविशेष्यतयोः प्रवेशः कार्य इत्यपि सुवचम् । प्रकारतात्वादिप्रवेशात् साक्षात्परम्परासाधारणनिरूपितत्वस्य प्रवेशाद्वोपस्थितीयसंसर्गतावच्छेदकत्वात्मकविषयताप्रयोज्यशाब्दबोधीयसंसर्गत्वावच्छेदकत्वात्मकविषयतानिरूपितत्वस्य साक्षात्तदनिरूपितविशेष्यत्वाद्यात्मकविषयताप्रयोज्यविषयतानिरूपितत्वस्य च वृत्तिप्रयोज्यसंसर्गतायां सत्त्वेऽपि न तत्संग्रह इति वदति तन्मन्दम् ।

नीलो घटः नीलः कलश इति द्विविधाकाङ्क्षाज्ञाने घटपदस्य घटे शक्तिग्रहे तदुत्तरविभक्तेरेकत्वे शक्तिग्रहे कलशपदस्यैकत्वविशिष्टघटे लक्षणाग्रहे चैको घटो नील इति शाब्दबोधे घटत्वघटविषयताया विनिगमकाभावेन वृत्तिद्वयज्ञानजन्योपस्थितीयद्विविधविषयताप्रयोज्यत्वेनोपस्थित्योरसमानाकारकतया तदीयविषयत्वयोः परस्परनिरूप्यनिरूपकभावासंभवेन चैकोपस्थितीयघटत्वविषयतावैशिष्ट्यस्य समवायनिष्ठसांसर्गिकविषयतायां वृत्तिप्रयोज्यायां सत्त्वेन तत्संग्रहप्रसङ्गात् । नच स्वानिरूपितत्वेत्यादिसंसर्गं विहाय स्वनिरूपितविषयत्वाप्रयोज्यविशेष्यताकत्वमेव संसर्गतयोपादेयम् । तथाच स्वानिरूपितविषयताप्रयोज्यत्वमिव स्वनिरूपितविषयताप्रयोज्यत्वमपि घटविशेष्यतायामस्तीति न दोषः । एकत्वप्रकारतानिरूपितसंसर्गतायां वृत्तिज्ञानीयविषयताप्रयोज्यत्वस्येवाकाङ्क्षाप्रयोज्यत्वस्यापि सत्त्वेन तत्संग्रहो न दोषायेति वाच्यम् । संयोगेनाभावो नास्तीति वाक्यजशाब्दबोधे नञर्थाभावेऽवच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावत्वस्यान्विततयाकाङ्क्षाप्रयोज्यायास्तत्संसर्गताया असंग्रहापत्तेः नञ्पदाभावपदजन्योपस्थित्योः समानाकारकत्वेन तदीयविषयतयोर्निरूप्यनिरूपकभावेनाभावत्वविषयतानिरूपितविषयताप्रयोज्यत्वस्यैवाभावविषयतायां सत्त्वात् ।

परे तु पदार्थत्वं च पदवृत्तिज्ञानीयविषयताप्रयोज्यविषयत्वं तद्घटकवृत्तिज्ञानीयविषयत्व एवैकत्वापरत्वयोरन्वयः, तथा सति संसर्गताविशिष्टसंसर्गत्वं पर्यवसितार्थः । वैशिष्ट्यंच स्वनिरूपकप्रकारताप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यविशेष्यताकत्वस्वतादात्म्योभयसंबन्धेन । एवंचाभावपदनञ्पदवृत्तिज्ञानयोरसमानाकारकतया नञ्पदप्रयोज्यविषयतायाः प्रतियोगित्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वस्यैवानुभवसिद्धत्वेनोभयपदवृत्तिज्ञानीयविषयतयोर्विनिगमकाभावेन प्रकारत्वविशेष्यत्वयोः प्रयोजकत्वस्य वक्तुमशक्यत्वान्नोक्तदोष इत्याहुस्तदपि तत्प्रयोज्यत्वस्य स्वप्रयोज्योपस्थितीयविषयताप्रयोज्यत्वानतिरिक्तत्व उपस्थितीयविषयतयोरनतिरिक्तयोक्तदोषतादवस्थ्याददतिरिक्तत्वेऽपि नञ्द्वयगर्भवाक्यस्थले वृत्तिज्ञानयोरपि समानाकारकत्वादभावत्वाभावयोर्भासमानावच्छिन्नप्रतियोगिताकत्वसंसर्गत्वासंग्राहकत्वादुपेक्षणीयम् । अत्र च स्वनिरूपकप्रकारताप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यत्वस्य संसर्गत्वे न कोऽपि दोषो यद्यपि संभवति तथापि तस्य तथात्वे वृत्त्यविषयसंसर्गः संसर्गमर्यादया भासते इत्यस्यैव लिखितुमुचितत्वेन तदुपेक्षाया निर्बीजत्वापत्तेस्तदुपेक्षणीयम् । नच तथैव कथं नोक्तमित्याशंकनीयम् शाब्दबोधविषयो हि संसर्गो द्विविधो वृत्तिभास्य आकाङ्क्षाभास्यश्च तत्रैकभेदेनापरो न लक्षणीयः विनिगमकाभावेन परस्परभेदस्य परस्परलक्षणत्वापत्त्या लक्षणकार्ये इतरेतराश्रयप्रसङ्गात्प्रागुपदर्शितस्य वृत्तिविषयस्याकाङ्क्षाभास्यसंसर्गस्यासंग्रहप्रसङ्गाच्च । तस्मादेकपदार्थे इत्यादेरन्यत्रैव तात्पर्यस्य वक्तव्यत्वादिति चेत् ।

अत्राहुः—पदार्थान्तरत्वव्यवहारो हि पदभेदप्रयुक्तो वृत्तिभेदप्रयुक्तश्च परिहर... इति तदुभयसाधारणमेवापरपदार्थत्वमत्र विवक्षितम् । तथा सति संसर्गताविशिष्टसंसर्गत्वं पर्यवसितार्थः, वैशिष्ट्यं च स्वतादात्म्यस्वनिरूपितप्रकारताविशिष्टविशेष्यताकत्वोभयसंबन्धेन । वैशिष्ट्यं च स्वप्रयोजकपदभिन्नपदप्रयोज्यत्वस्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वाप्रयोज्यत्वान्यतरसंबन्धेन । नञ्द्वयगर्भवाक्यस्थल एकनञ्पदार्थीभूताभावत्वनिष्ठप्रकारताविशिष्टापरनञ्पदार्थीभूताभावनिष्ठविशेष्यतायां सत्त्वात्तदुभयप्रयोजकपदयोर्भिन्नत्वात्तन्निरूपितसंसर्गताया नासंग्रहः । घटत्वप्रकारत्वघटविशेष्यत्वयोः प्रयोजकपदभेदाभा-

**क्वचिच्च तदतिरिक्त एवाधाराधेयप्रतियोग्यनुयोगिविषयविषयिभावादिः ।**

वात्तन्निरूपितसंसर्गताया न संग्रहः । नच घटोऽस्ति कलशोऽस्तीति द्विविधाकाङ्क्षासमूहालम्बनज्ञानोत्तरं घटकलशोभयपदवृत्तिज्ञानजन्यघटोपस्थितेर्घटशाब्दबुद्धौ घटत्वप्रकारत्वघटविशेष्यत्वयोर्विनिगमकाभावेन पदयोः प्रयोजकत्वात्तन्निरूपितसंसर्गत्वसंग्रहापत्तिः, स्वप्रयोजकपदसामान्यभिन्नत्वगर्भसंसर्गस्य स्वप्रयोजकपदाप्रयोज्यत्वस्य वा निवेशे नञ्द्वयगर्भवाक्यस्थलीयसंसर्गासंग्रह इति वाच्यम् स्वप्रयोजकपदनिष्ठाकाङ्क्षाज्ञानीयविषयतानिरूपितसांसर्गिकविषयतानिरूपितपदनिष्ठविषयताप्रयोज्यत्वसंसर्गस्यैव तेन विवक्षणात् घटपदकलशपदविषयतयोर्निरूप्यनिरूपकभावविरहात् न तत्र तत्संसर्गतासंग्रहः । नञ्द्वयगर्भवाक्यस्थले नञ्पदयोः साकाङ्क्षत्वात्तत्रत्यसंसर्गतासंग्रहः, स्वप्रयोजकविषयत्वं चेह स्वप्रयोजकवृत्तिज्ञानीयविषयतासमानाधिकरणं ग्राह्यम् । तेन कार्यतावच्छेदकघटकनिखिलविषयतानां कारणतावच्छेदककोटिप्रविष्टसकलपदविषयताप्रयोज्यत्वेऽपि न वृत्तिप्रयोज्यसंसर्गतासंग्रहप्रसङ्गः, एवं च स्वप्रयोज्यत्वमपि स्वसमानाधिकरणवृत्तिज्ञानीयविषयताप्रयोज्यत्वरूपमेव बोध्यम् । स्वप्रयोजकवृत्तिज्ञानीयविषयतासमानाधिकरणत्वेनाकाङ्क्षाज्ञानीयविषयत्वोपादानेऽपि स्वप्रयोजकत्वमुपादेयमन्यथाऽस्ति घटः कलशोऽस्तीत्यादावेकस्य तदुभयवाक्यज्ञानं घटपदकलशपदयोः घटे शक्तिग्रहोऽपरस्य घटपदकलशपदयोः समभिव्याहारज्ञानं घटपदस्य घटे कलशपदस्य कम्बुग्रीवादिमति वृत्तिज्ञानं तत्र घटघटत्वयोः संसर्गविषयत्वसंग्रहापत्तेः स्वप्रयोजकवृत्तिज्ञानीयेत्यादिसंबन्धप्रवेशादाख्यातैवकारादिस्थलीयसंसर्गतासंग्रहः । केचित्तु पदविशिष्टसंसर्गतायामेकपदार्थं इत्यादेस्तात्पर्यम् । पदवैशिष्ट्यं च स्वविशिष्टविशेष्यताकत्वस्वविशिष्टप्रकारताकत्वान्यतरसंबन्धेन । प्रथमसंबन्धघटकवैशिष्ट्यं स्ववृत्तिज्ञानीयविषयताप्रयोज्यत्वस्ववृत्तिज्ञानीयमुख्यविशेष्यताप्रयोज्यप्रकारताकत्वोभयसंबन्धेन । प्रथमसंबन्धकथनं तु एकपदार्थद्वयनिरूपितसंसर्गतामात्रस्य संग्राहकतया प्रथमसंबन्धोपन्यास इति सूचयितुं नचास्ति तत्फलमिति बोध्यम् । द्वितीयसंबन्धघटकवैशिष्ट्यं च स्ववृत्तिज्ञानीयविषयताप्रयोज्यत्वस्वभिन्नपदवृत्तिज्ञानीयविषयताप्रयोज्यविशेष्यताकत्वोभयसंबन्धेन तथाचाख्यातार्थद्वयनिरूपितसंसर्गतायाः पदद्वयार्थनिरूपितसंसर्गतायाः संग्रहः पदार्थपदार्थतावच्छेदकद्वयनिरूपितसंसर्गताया न संग्रह इति वदन्ति । तदप्येवकारार्थव्यवच्छेदनिरूपिताया अन्ययोगत्वनिरूपितायाश्चावच्छिन्नप्रतियोगिताकत्वसंसर्गताया आकाङ्क्षाप्रयोज्याया असंग्रहादुपेक्षणीयम् । अथवा सामान्यत आकाङ्क्षाज्ञानशाब्दबोधयोः कार्यकारणभावे सत्येवाकाङ्क्षाज्ञानविशेषशाब्दविशेषयोः कार्यकारणभावविचारात्मकोक्तग्रन्थप्रवृत्तिः संभवति नान्यथा, नच तत्कार्यकारणभावस्य संभवः । तथाहि एकत्वाविवक्षायां घट इति कर्तृकारकपदे प्रयुक्ते तस्माद्घटोपस्थितौ प्रमाणान्तरादस्तित्वादियोग्यक्रियायामुपस्थितायां विनैवाकाङ्क्षाज्ञानं घटोऽस्तीति शाब्दबुद्ध्युत्पत्तेः प्रभाकरसंमतत्वात् । पश्यतः श्वेतिमारूपं हेषाशब्दं च शृण्वतः । खुरविक्षेपशब्दं च श्वेतोश्वो धावतीति धीरिति शाब्दप्रकरणे भट्टोक्तेः श्वैत्यादिज्ञानस्य प्रत्यक्षादिजन्यत्वेऽपि विशिष्टज्ञानस्यालौकिकप्रत्यासत्त्यनङ्गीकर्तुस्तस्य मते प्रमाणपञ्चकाजन्यत्वेन शाब्दमतावन्तर्भावनीयत्वात्तस्याप्याकाङ्क्षाज्ञानंविनैवोत्पत्तेराकाङ्क्षाज्ञानस्य व्यतिरेकव्यभिचारादिति तत्समाधित्सयोक्तमतद्वयप्रतिक्षेपाय । शाब्दबुद्धित्वावच्छेदेनैकपदार्थप्रतियोगिकापरपदार्थानुयोगिकसंसर्गस्य विषयत्वं दर्शयति—शाब्दबोधेचेत्यादिना । अत्र चैकत्वमपरत्वं च पद एवान्वेति नास्ति कोऽपि तादृशशाब्दबोधो न यः पदद्वयार्थसंसर्गमवगाहते । उक्तज्ञानद्वयस्यालौकिकप्रत्यक्षत्वमेवाभ्युपेयत इति न व्यभिचारः पदार्थत्वं च पदवृत्त्युपस्थाप्यत्वरूपमिह विवक्षितमेव तेनोक्तोपस्थितिविषयत्वसंसर्गत्वयोरेककालत्वाभावाद् यदाकदाचिदुपस्थितिविषयत्वमादाय नोक्तस्थल उक्तसंसर्गविषयत्वप्रसङ्गः । एवं च सचेत्यवयुत्य शाब्दबोधविषयसंसर्गमाह तेनैकपदार्थद्वयसंसर्गासंग्रहनिबन्धनासङ्गतेर्न प्रसङ्गः इति शाब्दबोधे चेति चकारस्त्वर्थोऽनुमानादितो वैलक्षण्यमुपदर्शयति तच्चानुपपन्नं प्रयोजकविशेषमपेक्षमाणमाकाङ्क्षाज्ञानमेवोपक्षिपतीति तत्कार्यकारणभावदार्ढ्याय भवतीति सर्वमवदातम् ।

क्वचिच्च तदतिरिक्त एवेत्यनेनाभेदातिरिक्तसंबन्धानां तेषां सर्वेषां संग्रहेऽपि के ते संबन्धा इत्याकाङ्क्षाया अनिवृत्तत्वात्तन्निवृत्तये तद्विशेषानाह—**आधाराधेयेत्यादि** । अत्र द्वन्द्वान्ते श्रूयमाणस्य भावपदस्य प्रत्येकेणाभिसंबन्धादाधाराधेयभावादिलाभः । **विषयविषयिभावादिरिति** । अयं संबन्धो धात्वर्थस्य सन्नर्थेच्छादौ वेदितव्यः । आदिपदाज्जन्यजनकभावसमवायस्वरूपादिपरिग्रहः । अथाधाराधेयभावादीनां यत्संबन्धत्वोक्तिस्तत्किं मिलितयोराधारत्वाधेयत्वयोराहोस्विद्प्रत्येकस्योत वोभयसाधारणैकाखण्डोपाधिविशेषस्य । नाद्यः, उभयोरेकत्रावर्तमानत्वात् । न द्वितीयः, आधारत्वादीनां स्वसिद्धान्ते क्वापि संसर्गत्वादर्शनात् । न तृतीयः आधेयत्वादिनैव विशिष्टबुद्ध्युपपत्तौ तत्र मानाभावात् । नच संयोगादिप्रसिद्धसंबन्धानामुभयनिष्ठत्वदर्शनाद्विभक्त्यर्थकर्मत्वादौ प्रातिपदिकार्थस्य संसर्गतया भासमाने विवादाध्यासितसंसर्गेऽपि तथात्वमेवोचितमिति तत्सिद्धिरिति वाच्यम् । साधर्म्यस्य बलवत्प्रमाणपक्षपातं विनाऽभिमतार्थोपर्यवसायित्वादन्यथा संयोगस्य समवायेनोभयत्रासतः संसर्गत्वदर्शनादत्रापि तथा स्यात्तत्किं संबन्ध्यसंबद्धस्यैव संबन्धत्वं न तेन तेन संबन्धेन प्रतिनियतेन तत्तत्संबन्धिनि संबद्धस्य । अथ तर्हि कः प्रत्याख्येय इति चेदेकसंबन्धेन संबन्धिनोः संबद्धत्वं बलवत्तरप्रमाणाभावात् । एवं चाधेये स्वरूपेणाधारे निरूपकतया प्रत्यासन्नस्याधेयत्वस्य संसर्गत्वे न क्वापि हानिरिति चेन्न, प्राचीननवीनमतभेदेनाधारत्वाधेयत्वयोः

**अभेदश्च प्रातिपदिकार्थे स्वसमानविभक्तिकेन स्वाव्यवहितपूर्ववर्तिना च पदेनोपस्थापितस्यैव संसर्गमर्यादया भासते यथा नीलो घटो नीलघटमानयेत्यादौ घटादौ नीलादेः, नतु विरुद्धविभक्तिमत्पदार्थस्य । नीलस्य घट इत्यादौ नीलघटाभेदान्वयबोधस्य सर्वानुभवविरुद्धत्वात् । स्वसमानविभक्तिकत्वं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वम् । साजात्यं च विभक्तिविभाजकप्रथमात्वादिना नतु**

---

प्रत्येकं संबन्धत्वादुभयमतानुरोधेन पक्षपातपरित्यागेन तथोक्तेः । यद्वाधारतानिरूपिताधेयत्वप्रतियोगितानिरूपितानुयोगित्वादीनां संसर्गतामतमालम्ब्येयमुक्तिः । तत्र वह्नित्वावच्छिन्नत्वप्रतियोगित्वस्य संसर्गत्वे वह्नित्वावच्छिन्नत्वप्रतियोगित्वानां संसर्गत्वमिवाधारत्वाधेयत्वाद्योरुभयोः संसर्गत्वोपपत्तिरिति ध्येयम् ।

**अभेदश्च प्रातिपदिकार्थ इत्यादि ।** एतेन वह्निमत्येव धूम इत्यत्र वह्निव्याप्यत्वमिवाकाङ्क्षाप्रयोज्याभेदनिष्ठसांसर्गिकविषयतात्वस्य प्रातिपदिकविशिष्टत्वव्याप्यत्वं लभ्यते वैशिष्ट्यं च स्वप्रयोज्यविशेष्यताकत्वस्वविशिष्टप्रकारताकत्वोभयसंबन्धेन । स्ववैशिष्ट्यं च स्वप्रकृतिकविभक्तिसजातीयविभक्तिकत्वस्वाव्यवहितपूर्ववर्तित्वान्यतरसंबन्धेन स्वविशिष्टप्रातिपदिकप्रयोज्यत्वसम्बन्धेन । नच क्रियाविशेषणस्थले व्याप्यत्वहानिरिति वाच्यम्, अभेदः संसर्गः प्रातिपदिकार्थे स्वसमानविभक्तिकपदोपस्थापितार्थस्यैवेति हि न योजना किंतु प्रातिपदिकार्थेऽभेदसंसर्गस्तथाविधार्थस्यैवेति, तथासति प्रातिपदिकार्थानुयोगिकाभेदसंसर्गे स्वसमानविभक्तिकपदोपस्थाप्यार्थातिरिक्तप्रतियोगिकत्वव्यवच्छेदवति सांसर्गिकविषयत्वलाभेन प्रातिपदिकार्थनिष्ठविशेष्यतानिरूपिताकाङ्क्षाप्रयोज्यसांसर्गिकविषयतात्वस्य व्याप्यतालाभादुक्तदोषासंभवात्, अथैतद्व्यापकमर्धपिप्पल्यादिपूर्वपदार्थप्रधानसमासस्थले पिप्पलीपदलक्ष्यार्थपिप्पलीसंबन्धिप्रतियोगिकार्धपदार्थानुयोगिकसंसर्गनिष्ठविषयतायामवर्तमानं ततो व्याप्यं विनिवर्तयतीति प्रातिपदिकार्थयोरभेदान्वयनियमभङ्ग इतिचेन्न । पूर्वपदार्थप्रधानसमासस्थले उत्तरपदस्यैव पूर्वपदार्थघटितार्थे लक्षणास्वीकारेण पूर्वपदस्य तात्पर्यमात्रग्राहकतया तत्रत्यसांसर्गिकविषयतायां व्याप्यनिवृत्तेरिष्टत्वात् । पूर्वोत्तरपदार्थयोरन्वयपक्षे च स्वविशिष्टप्रातिपदिकप्रयोज्यत्वस्यैव संसर्गत्वं वाच्यम् । वैशिष्ट्यं च स्वाव्यवहितोत्तरत्वघटितान्यतमसंबन्धेन बोध्यम् । प्रातिपदिकत्वप्रवेशाच्च घटः पचति चैत्र इत्यादौ घटैकत्वसंसर्गविषयतायां चैत्रकृतिसंसर्गविषयतायां च न व्यापकसत्त्वप्रसङ्गः । नच तत्सत्त्वेऽपि का हानिरिति वाच्यम् । उक्तव्याप्यप्रयोजकान्तरस्य दुर्वचतया भेदएव संसर्गमर्यादया भासत इति समभिव्याहारकल्पनया वा तयोः परस्परव्याप्यव्यापकभावे पर्यवसानेनोक्तसांसर्गिकविषतायामभेदसंसर्गतात्वापत्तेरिति द्वितीयव्याप्यव्यापकभावश्च यत्र यत्र पदविशिष्टसांसर्गिकविषयतात्वं तत्राभेदसंसर्गतात्वमिति, वैशिष्ट्यं च स्वप्रयोज्यविशेष्यताकत्वस्वविशिष्टप्रातिपदिकप्रयोज्यप्रकारताकत्वोभयसंबन्धेन स्ववैशिष्ट्यमुक्तान्यतमसंबन्धेन ।

**नीलो घटो नीलघटमानयेत्यादि ।** अत्र प्रथमान्तपदघटितव्यस्तवाक्यमुदाहृत्य प्रथमान्तमेव समस्तवाक्यमुदाहर्तुमुचितं तत्परित्यागबीजं तु मृग्यम् । क्वचिच्च नीलं घटमानयेत्यादावित्येव पाठः । आदिपदाच्च तृतीयाद्यन्तपदघटितवाक्यसमस्तवाक्यपरिग्रहस्तत्र च नानुपपत्तिः । **विरुद्धविभक्तिमदिति ।** विरुद्धत्वं यद्यप्यसमानाधिकरणत्वमेव प्रसिद्धं तथापि विधर्मेत्यादाविवात्रापि विशब्दो विरुद्धवचनस्तथा च विरुद्धेन रुद्धो विरुद्धधर्मवानित्यर्थः विरुद्धशब्दस्य । विरोधप्रतियोगिधर्मश्च प्रथमात्वादिस्तत्र तत्र ग्राह्य इति तत्समानविभक्तिकत्वविपरीते पर्यवसन्नम् । **नीलस्य घट इत्यादाविति ।** सप्तम्याः प्रयोज्यत्वमर्थः । तथा च तादृशवाक्यप्रयोज्यत्वप्रकारकानुभवविषयत्वाभाववत्त्वात्तादृशबोधस्येति तात्पर्यार्थः । तेनोक्तप्रयोज्यत्वविशिष्टोक्तबोधस्याप्रसिद्धत्वेऽपि न क्षतिः । **विभक्तिविभाजकेति ।** अत्र विभक्तित्वेन न विभाज्यता अपितु सुप्त्वेन तथा सति विभक्तित्वव्याप्यत्वे सति विभक्तित्वव्याप्याव्याप्यत्वरूपस्य विभक्तित्वेन विभक्तिविभाजकत्वस्य प्रथमात्वेऽसंभवात्प्रथमात्वादिनेत्यस्यासङ्गत्यापत्तेः । सुप्त्वं च स्वाद्येकविंशतिविभक्तिसाधारणं संकेतविशेषसंबन्धेन सुप्पदवत्त्वमेव । न चैवंविधसुप्त्वज्ञानाभावकाले समानविभक्तिकत्वस्य दुर्ज्ञेयत्वादभेदान्वयबोधानुपपत्तिः । नहि समानविभक्तिकत्वं स्वरूपसदेव शाब्दबोधोपयोगि समानविभक्तिकस्थलेऽपि विरुद्धविभक्तिकत्वज्ञानदशायां शाब्दमतेरनुत्पादादिति वाच्यम्, उक्तसमानविभक्तिकत्वादीनां कारणतावच्छेदकघटकत्वानभ्युपगमाच्छिष्याणामवगतिसौलभ्याय तत्प्रदर्शनस्य शब्दानुगममात्रत्वात् एतेन प्रदर्श्यमाननियमेष्वपीदृशशङ्कानां नावकाशः । नच प्रथमात्वादिनेति व्यर्थं सुब्विभाजकत्वस्य तेष्वेव सत्त्वादिति वाच्यम् । तदुपादानादेव सुप्त्वेन विभाज्यतालाभात् । नच सुब्विभाजकधर्मेणेत्येव कुतो नोक्तमिति वाच्यम् । कोसौ सुब्विभाजको धर्म इत्याकाङ्क्षानिवृत्तये प्रथमात्वादिनेत्यस्य वक्तव्यत्वे विशेषाभावात् । वस्तुतः प्रथमात्वाद्यन्यतमपुरस्कारेणैव साजात्ये तात्पर्यम् तथाहि सुब्विभाजकत्वं सुप्त्वव्याप्यत्वे सति सुप्त्वव्याप्याव्याप्यत्वं विभक्तित्वस्य विभाजकत्ववारणाय सत्यन्तम् । तदपि स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपमेव वाच्यम् । तेन सुप्त्वस्य न विभाजकत्वप्रसक्तिः । अत्र सत्यन्तोपादानात्तिङ्त्वादिवारणम् । सुप्त्वादीनां विभाजकत्ववारणाय विशेष्यं तत्र सुप्त्वव्याप्यप्रथमात्वादिव्याप्यत्वस्य प्रथमात्वादौ व्यावृत्तये द्वितीयं व्याप्यत्वं न्यूनवृत्तित्वरूपमेव वक्तव्यम् । प्राथमिकं च व्याप्यत्वं लाघवात्सामानाधिकरण्याविशेषितं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपमुपादेयम् । तत्र सुप्त्वव्याप्यस्वमादि-

**समानानुपूर्वीकत्वं साजात्यम् । वेदाः प्रमाणं शतं ब्राह्मणा इत्यादावन्वयबोधानुपपत्तेः ।**

गतान्यतरत्वव्याप्यत्वस्य प्रथमत्वादौ वारणाय स्वव्याप्यं स्वाश्रयवृत्तित्वस्वानाश्रयवृत्तित्वोभयसंबन्धेन प्रथमत्वादिमदन्यत्वेन विशेषणीयं एवं च तिङ्त्वादिवारणाय सुप्त्वसामानाधिकरण्यं स्वमाद्यन्यतरत्ववारणाय प्रथमत्वादिमदन्यत्वं चोपादाय तदु-भयविशिष्टधर्मेण साजात्यं वाच्यम् सुत्वौत्वादिसंग्रहेऽपि क्षत्यभावादित्येतस्य लाघवादङ्गीकर्तव्यतायां प्रथमत्वादिमदन्य-त्वान्यतमघटितधर्मेण साजात्यापेक्षया लाघवेनोचितोपादेयभावस्य प्रथमत्वाद्यन्यतमधर्मेण साजात्यस्य वक्तव्यतापत्तावगत्या प्रथमत्वादिशब्देनोपादानेऽसंग्राह्यान्यतमत्वादिसंग्रहो माप्रसाङ्क्षीदित्युपरञ्जकतया सुविभाजकत्वं तत्त्वेन ताम्रिकव्यवहारवि-षयत्वलक्षणमुक्तमित्यस्य वक्तव्यतया प्रथमत्वाद्यन्यतमधर्मेण साजात्ये तात्पर्यमवधार्यत इति ।

**समानानुपूर्वीकत्वमिति** । तच्च स्ववृत्त्यानुपूर्वीसजातीयानुपूर्वीमत्त्वम् । आनुपूर्वी च वर्णानां पूर्वापरीभावः । अ-थानुपूर्व्याः केन रूपेण प्रवेशः । न तावत्तत्तद्वर्णोत्तरतत्तद्वर्णत्वेन अननुगमेन सामान्यस्यासंभवेन तन्निबन्धनव्यवहारस्य विलयप्रसङ्गात् । घटपदसमानानुपूर्वीकत्वस्य नीलघटपदे प्रसङ्गाच्च । तत्रापि घकारोत्तराकारोत्तरटकारोत्तरात्वस्य सत्त्वात् स्वघटकतानवच्छेदकावच्छिन्नाघटितत्वस्वघटकतानवच्छेदकावच्छिन्नाघटितत्वसंबन्धावच्छिन्नस्ववृत्तित्वोभयसंबन्धेन पदवि-शिष्टपदत्वस्यैव तत्त्वमित्यपि न वक्तुमुचितम्, लतातालपदयोः समानानुपूर्वीकत्वप्रसङ्गात् पदत्वस्याप्यनुगतत्वाभावाच्च । नचार्थबोधप्रयोजकतावच्छेदकधर्मत्वेन तत्प्रवेशः कार्यः तथाहि नाननुगमः सच घत्वं तदाश्रयविशेषः तदुत्तराकारोऽत्वं च घकारोत्तराकारोत्तरटकारः टत्वं तु तादृशटकारोत्तराकार इत्येते यावन्तः पदार्थास्तद्गतसमुदायत्वमिति वाच्यम्, निरर्थकयोः समानानुपूर्वीकत्वानुपपत्तेरिति चेत् यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नसमानानुपूर्वीकत्वं विवक्षितं विषयतया तद्धर्मसमनियत-ज्ञानीयविषयतात्वसमनियतज्ञानसमनियततद्धर्मत्वेन तत्प्रवेश इति गृहाण । ज्ञाने विषयतात्वसामनैयत्यं च स्वीयविषयतावत्त्व-संबन्धेन । विषयतावत्ता च स्वानवच्छेदकसंबन्धानवच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन । उक्तानवच्छिन्नत्वं च स्वनिरूपित-संसर्गतावच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्धर्मावच्छिन्नसंसर्गत्वानिरूपितत्वं । नातोऽव्यवहितोत्तरत्वयोर्भेदेऽपि वि-शेष्यत्वाद्यवच्छेदकसंबन्धाप्रसिद्धावपि समानानुपूर्वीकत्वानुपपत्तिः । नच वर्णविषयतयोरव्यवहितोत्तरत्वविषयतयोश्च न सामानाधिकरण्यमिति तत्परित्यज्य स्वावच्छेदकावच्छिन्नत्वमुपादेयं तस्य च घत्वादिनिष्ठनिरवच्छिन्नविषयतायामभावाद-नुपपत्तिरिति वाच्यम्, यथैकरूपेण विभिन्नविषयकज्ञानयोरपि समानाकारकत्वं तद्विषयतयोरेकधर्मावच्छिन्नयोरेकधर्मनि-ष्ठयोश्चैक्यं तदा तादात्म्यमात्रं संबन्धः । अन्यथोक्तसंबन्धानवच्छिन्नत्वस्वसामानाधिकरण्यस्वावच्छेदकावच्छिन्नत्वान्यतरत्व-त्वोभयस्य संबन्धता वाच्या यत्त्वं तत्त्वं चानुगतमिति नाननुगमः सार्थकपदयोः समानानुपूर्वीकत्वं च तद्धर्मस्यार्थबोधप्रयोजक-तावच्छेदकत्वेन निवेशनं विधाय यत्त्वतत्त्वयोरननुगतत्वेऽपि भवति कथंचित् निर्वाच्यम् धर्मसामनैयत्यघटकविषयतासंसर्ग-तान्या वाच्या । नातः संसर्गान्तर्भावेण व्यभिचारात्सामनैयत्यहानिः । ज्ञानं च मुख्यविशेष्यताद्वयशून्यत्वेन विशेषणीयं तेन तद्धर्माश्रययावत्पदार्थविषयकसमूहालम्बनमादाय न लतातालपदयोः समानानुपूर्वीकत्वप्रसङ्गः । यदि चाव्यवहितोत्तरत्व-घटितसमुदायभावेन पदत्वव्यवहारोऽर्थबोधप्रयोजकता चेष्यते तदा सामनैयत्यप्रतियोगितया तादृशसमुदायत्वमेवोपादेयं । विषयतायां संसर्गतान्यत्वं च न विशेषणीयं स्वत्वाघटितमप्यव्यवहितोत्तरत्वं स्ववृत्तिप्रागभावप्रतियोगित्वस्ववृत्तिकृतिमत्त्वो-भयसंबन्धेन स्वाश्रयत्वरूपं निरुक्तमस्तीत्युक्तप्रकारस्य न दुर्वचता । विशेषतश्च घटपदसमानानुपूर्वीकत्वं स्वनिष्ठघत्वावच्छिन्न-विषयतानिरूपितात्वावच्छिन्नविषयतानिरूपितटत्वावच्छिन्नविषयतानिरूपितात्वावच्छिन्नविषयत्वावच्छिन्नभेदप्रतियोगितावच्छे-दकविषयतात्वसमनियतज्ञानविषयतापर्याप्त्यवच्छेदकधर्मवत्त्वम् । सामनैयत्यं च स्वनिरूपितविषयतावत्त्वसंबन्धेन । एवंच तादृशो धर्मो निरुक्तसमुदायत्वात्मकघटपदत्वमेव नीलघटपदत्वात्मकसमुदायत्वस्य च तदनवच्छेदकतया तदवच्छिन्ने न घटपदसमानानुपूर्वीकत्वव्यवहारः, प्रकृते च सुत्वाद्येकविंशत्यानुपूर्वीरन्यतमत्वेनोपादाय स्ववृत्तितादृशान्यतमवत्त्वमपि स-मानानुपूर्वीकत्वमपि विवक्षायोग्यमित्यलम् ।

**अन्वयबोधानुपपत्तेरिति** । अथ सुन्दराभ्यां घटाभ्यामित्यादावेकविभक्तौ चतुर्थीत्वग्रहेऽपरत्र च तृतीयात्वग्रहे विभक्त्योः समानानुपूर्वीकत्वग्रहसंभवेनाभेदान्वयबोधप्रयोजकसत्त्वप्रसङ्गात्तदापत्तिः, प्रथमत्वादिना साजात्यपक्षे च न सा स्वप्रकृतिकविभक्तेः प्रथमात्वादिना सजातीयाया विभक्तेः प्रकृतित्वज्ञानस्यासंभवात् विशेष्यवाचकवदप्रकृतिकविभक्तिवृत्ति-धर्मविरुद्धप्रथमात्वाद्यन्यतमघटकधर्मस्य विशेषणवाचकपदप्रकृतिकविभक्तौ ग्रहादितिचेत् । अत्र केचित् । यावन्तो दोषाः संभवन्तीति न्यायेनैकस्योद्भावनीयत्वे आपत्त्यपेक्षयानुपपत्तेः प्रबलत्वेन तस्या एवोक्तत्वान्न न्यूनता । वस्तुतस्तूक्तविभक्ति-प्रकृतित्वेन ज्ञायमानपदोपस्थाप्यत्वमपि न प्रयोजकं प्रकृतित्वप्रथमत्वाद्यज्ञानेऽपि शाब्दबोधोदयादिति स्वरूपसदेव तादृशप्रकृतित्वं शाब्दबोधस्वरूपयोग्यतानिर्वाहकताघटकं वाच्यम् । भवत्येव च तृतीयान्तसुन्दरपदचतुर्थ्यन्तघटपदयोः सुन्दराभ्यां घटाभ्यामिति वाक्यघटकयोः शाब्दबोधस्वरूपयोग्यता सुन्दराभ्यामित्याकारकपदवृत्त्यानुपूर्वीप्रकारेण तादृशपदविशिष्टस्य घटाभ्यामित्येतादृशानुपूर्व्यवच्छिन्नस्य ज्ञानत्वेनैव कारणत्वात् । नच विरुद्धविभक्त्यन्तत्वग्रहे कथं शाब्दबोधाभावः आकाङ्क्षा-

ननु 'विंशत्याद्याः सदैकत्वे' इत्यनुशासनात् शतं ब्राह्मणा इत्यादेः साधुत्वेपि वेदाः प्रमाणमित्यादयः कथं प्रयोगाः, विशेष्यविशेषणवाचकपदयोरसति विशेषानुशासने समानवचनकत्वनियमात्। अन्यथा घटा नील इत्यादेरपि साधुताप्रसङ्गात्। समानलिङ्गकस्थले तथा नियमोपगमेन वेदाः प्रमाणमित्यादेः साधुत्वोपपादनेऽपि इति हेतुस्तदुद्भवे इति कारिकाया इति त्रयः समुदिता हेतुरिति काव्यप्रकाशव्याख्याया असंगतिर्दुर्वारैव। एवमसमानलिङ्गकस्थले विशेष्यवाचकपदासमानवचनस्यापि विशेषणपदस्य साधुत्वे तादृशस्थले औत्सर्गिकमेकवचनमेव सर्वत्र विशेषणपदानन्तरं प्रयोक्तुमुचितमिति प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि पितरो देवता इत्यादेरनुपपत्तिः। मैवम्, यत्र विशेष्यवाचकपदोत्तरवि-

---

ज्ञानस्य सत्त्वादितिवाच्यम् । विभक्त्योरानुपूर्वीसाम्ये विशेषणवाचकपदप्रकृतिकविभक्तौ विशेष्यवाचकपदप्रकृतिकविभक्तिवृत्तिचतुर्थीत्वविरुद्धतृतीयात्वग्रहो हि तृतीयार्थकरणत्वपरत्वज्ञानेनैवाधेयः तथासति अभेदान्वयपरत्वस्य दुर्ग्रहत्वात् करणत्वविशेषणत्वेन बुबोधयिषितस्य विशेषणस्याभेदेनान्यत्र बुबोधयिषितत्वासंभवादेकविशेषणत्वेनेत्यादिव्युत्पत्तेर्जागरूकत्वात्, करणत्वाद्यर्थपरत्वज्ञानं विनापि विरुद्धविभक्तित्वज्ञाने कथंचिदभ्युपगम्यमाने तत्र शाब्दबोधस्यानुपगमेच तादृशविभक्तित्वज्ञानस्य प्रतिबन्धकताया एवागत्या स्वीकरणीयत्वात्, सुन्दराभ्यामित्येतस्माच्छाब्दप्रसङ्गभीत्या सुन्दरपदाभ्यां पदसमभिहारज्ञानत्वेन न यदि कारणता किंतु सुन्दराभ्यामित्येतादृशानुपूर्वीज्ञानत्वेनैव तदाहि कैव कथा यस्य प्रथमात्वादेरज्ञानेऽपि शाब्दबोधोदयस्तद्घटितधर्मज्ञानत्वेन कारणतायामिति न समानानुपूर्वीकत्वेन साजात्यपक्षेप्यापत्त्यवकाश इति बोध्यम् ।

**नन्विति** । समुद्भावितायामनुपपत्तावाशेङ्क्येत्यर्थः । **विंशत्याद्या इति** । तथाच विंशत्याद्या इत्येतदनुशासनाच्छतं ब्राह्मणा इत्येतस्य साधुत्वे उक्तनियमशरीरेऽसति बाधक इत्युक्तावनुपपत्त्यभावः । वेदाः प्रमाणमित्येतस्य च साधुतैव नास्ति क्व तत्रानुपपत्तिरिति समानानुपूर्वीकत्वेन साजात्योक्तावेव न दोषः प्रत्युत विभक्तिविभाजकधर्मपुरस्कारेण साजात्योक्तौ नीला घट इत्यादावापत्तिरिति भावः । विंशत्याद्याश्शब्दास्संख्याविशिष्टपरा एकवचनान्ता भवन्ति संख्यापराश्च द्विवचनबहुवचनान्ता अपि । एकत्व इति द्विबहुत्व इति च संख्यायाः प्रातिपदिकार्थतापक्षे यथाश्रुतमेवैकत्वाद्यर्थका इत्यर्थकतया साध्वन्यथातु कथञ्चिदिति ।

**असति बाधक इति** । येषां पदानां नियतवचनत्वमनुशिष्टं तत्तद्भेदकूटविशिष्टप्रातिपदिकप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकत्वविशेषितत्तादृशभेदकूटवत्त्वं यत्र तत्र तत्तद्विशेष्यवाचकपदप्रकृतिकविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिप्रकृतित्वमिति फलितार्थः । **समानलिङ्गकस्थल इति** । समानलिङ्गकत्वं च स्ववृत्तिपुँल्लिङ्गत्वाद्यन्यतमवत्त्वम्, पुँल्लिङ्गत्वादिकं च अप्राणिसाधारणपुंस्त्वादिव्यवहारप्रयोजकसत्त्वादिगुणोपचयापचयस्य पुंस्त्वादिरूपत्वनये पुंस्त्वादिबोधकत्वमेव, स्वमते गुणत्रयानङ्गीकारात् सत्यां ब्राह्मण्यां ब्राह्मणो नास्ति ब्राह्मणे च सति ब्राह्मणी नास्तीति प्रतीत्योरुत्पादात् लिङ्गयोन्यादिमत्त्वलक्षणपुंस्त्वस्त्रीत्वादिप्रत्ययस्याङ्गीकरणीयत्वेऽपि तटस्तटीत्यादौ तत्प्रत्ययस्य बाधात्प्रयोजनाभावाच्चानङ्गीकरणीयत्वमेवेति न पुंस्त्वादिबोधकत्वं पुंलिङ्गत्वादिकम्, अपितु प्राण्यप्राणिप्रतिपादकसाधारणं । पदसंस्कारप्रयोजकं पुंलिङ्गत्वादिना परिभाषितत्वमेव पुंस्त्वादिबोधस्वरूपयोग्यत्वमेव पुंलिङ्गत्वादिकं तत्त्वं चानुगतं प्रातिपदिकवृत्त्यानुपूर्वीविशिष्टत्वानुपूर्वीकत्वं । वैशिष्ट्यं च स्वविशिष्टविषयतात्वव्यापकत्वसंबन्धेन । स्ववैशिष्ट्यं च स्वघटकवर्णावृत्तित्वस्वावच्छिन्नविषयताप्रयोज्यविशेष्यतानिरूपितपुंस्त्वादिप्रकारताप्रयोजकत्वोभयसम्बन्धेन । व्यापकता च स्वावच्छिन्नविषयताप्रयोज्यविशेष्यतानिरूपितसङ्ख्यानिष्ठप्रकारताप्रयोजकविषयतावच्छेदकावच्छिन्नत्वसंबन्धेन । तट इत्यादौ पुंस्त्वबोधाभावेऽपि ब्राह्मण इत्यादौ तद्बोधात् । तादृशबोधानुकूलाः ब्राह्मणादिपदघटकवर्णावृत्तयः स्वाद्येकविंशतिविभक्तिवृत्तयो यादृशधर्मावच्छिन्नविषयताः घट इत्यादौ संख्याबोधानुकूलास्तादृशधर्मावच्छिन्ना एव विभक्तिवृत्तयस्ता इति तत्र योग्यता न नदीशब्दादौ विभक्त्यानुपूर्वीभेदात् । येषां शब्दानां स्वप्रकृतिकाखिलविभक्तिसमानानुपूर्वीकाखिलविभक्तिप्रकृतिभूतः पुंस्त्वादिबोधोपधायकः शब्दो नास्ति तेषामानुपूर्वी विशिष्यैव योग्यताकुक्षावन्यतमत्वेन प्रवेशनीयेत्यपि कश्चिदिति ।

**इतिहेतुरिति** । शक्तिर्निपुणतालोककाव्यशास्त्राद्यवेक्षणात् काव्यज्ञशिक्षयाभ्यास इत्यादि । **इति त्रय इति** । शक्तिः कवित्वबीजभूतः संस्कारविशेषः प्रतिभाव्यपदेश्यः लोककाव्यशास्त्राद्यवेक्षणप्रयुक्तनिपुणताव्युत्पत्तिविशेषो काव्यज्ञशिक्षाप्रयुक्तोभ्यासः करणे योजने च पौनःपुन्येन प्रवृत्तिरिति त्रितयमितिशब्देन परामृश्यते । **औत्सर्गिकमिति** । नित्यद्विवचनबहुवचनसाकाङ्क्षविशेषणपदानामसमानलिङ्गकस्थलेऽपि नैकवचनान्तत्वमित्युपात्तम् ।

नियमसङ्कोचेन समाधत्ते **मैवमित्यादिना** । यत्रेति त्रल्प्रत्ययस्य घटकत्वमर्थस्तस्य विशेष्यवाचकपदेऽन्वयः यदिति विशेष्यविशेषणवाचकपदघटितं वाक्यमाह वाचकशब्दो बोधकपरस्तेन लाक्षणिकविशेष्यपदस्थले न नियमहानिः । **उत्तरविभक्तीति** ।

**भक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणपदयोः समानवचनक-**

---

अव्यवहितोत्तरत्वेनानुसंधीयमानविभक्तीत्यर्थः । तेन दध्यादिविशेष्यपदोत्तरविभक्त्यश्रवणेऽपि न क्षतिः । **विभक्तितात्पर्यविषयेति** । विभक्तिजन्यबोधविषयत्वेनेच्छाविषय इत्यर्थः । नातस्समूहालम्बनतात्पर्यमादायासमानवचनस्थले विशेषणपदोत्तरविभक्त्यर्थसंख्यासमानाधिकरणसंख्याया विशेष्यपदोत्तरविभक्तितात्पर्यविषयत्वप्रसङ्गः । तात्पर्यविषयसंख्याविरुद्धत्वं तादृशसंख्याऽसमानाधिकरणत्वं तात्पर्यविषयतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नभिन्नत्वं वा अविवक्षितत्वमित्यस्य विशेषणवाचकपदोत्तरविभक्त्येत्यादिः । तथाच तादृशविभक्तिजन्यबोधविषयत्वेनेच्छाविषयभिन्नत्वं तदर्थः तत्रेत्यस्य तद्घटकत्वमर्थः तस्य विशेष्यविशेषणपदयोरन्वयः । नियमो व्याप्तिः । तत्र सप्तम्यर्थाधेयत्वान्वयः । व्याप्यता च तादात्म्येन व्यापकं च समानवचनत्वं यद्यपि वचनशब्देन स्वघटितानामेकवचनद्विवचनबहुवचनानामवगतत्वे स्वोत्तरविभक्तिवृत्त्येकवचनत्वाद्यन्यतमवद्विभक्तिकत्वरूपं प्रतीयमानं प्रथमाद्वितीयान्तसाधारणमपि न क्षतिकरं विशेष्यविशेषणपदयोः समानविभक्तिकत्वनियमान्तरस्य सद्भावात्तथापि स्वोत्तरविभक्तिवृत्त्यानुपूर्वीमद्विभक्तिकत्वरूपमेव लाघवात्तदुपादेयम् नच नोपादेयं नियतासमानलिङ्गविशेषणपदस्थले विभक्त्यानुपूर्वीभेदादिति वाच्यम् । आदेशिनिष्ठानुपूर्वीमादायैव तत्रापि तत्संभवात् कथमन्यथा साजात्यं च विभक्तिविभाजकप्रथमात्वादिना नतु समानानुपूर्वीकत्वेनेत्यत्र वन्यौ हरी इत्यादावनुपपत्तिमनुद्भाव्यासमानवचनकस्थले तदुद्भावनं नासंगतं स्यात् एवञ्च यत्र यत्र यत्पदवत्त्वं तत्र तत्पदोत्तरविभक्तिवृत्त्युक्तधर्मवद्विभक्तिकत्वमिति नियमः पर्यवसितः विशेष्यपदवत्ता च स्वप्रयोज्यविशेष्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नप्रकारताप्रयोजकत्वस्वाव्यवहितोत्तरत्वेनानुसंधीयमानविभक्तिजन्यबोधविषयत्वप्रकारतानिरूपितेच्छीयविशेष्यतावच्छेदकसंख्यावृत्तिधर्मभिन्नधर्मावच्छिन्नसंख्यानिष्ठविषयताकबोधजनकत्वप्रकारतानिरूपितेच्छीयविशेष्यत्वाभाववद्विभक्तिकत्वोभयसम्बन्धेन । न चैवं यत्र वक्तुःसंख्याधर्मिकैवेच्छातत्र कागतिर्विभक्तेरिच्छाविशेष्यत्वविरहात्संख्यानिष्ठविशेष्यतानिरूपितेच्छीयप्रकारत्वोपादाने च विभक्तिधर्मिकेच्छास्थले दोषप्रसङ्ग इति वाच्यं विभक्तिप्रयोजकेच्छीयसंख्यानिष्ठविषयत्वावच्छेदकधर्मभिन्नधर्मावच्छिन्नविषयतानिरूपकेच्छाप्रयोज्यत्वाभाववद्विभक्तिकत्वस्यसंसर्गतया विवक्षितत्वेन स्थलद्वयेऽप्यदोषात् यद्यप्युक्तपदवत्त्वस्य व्याप्यत्वमेव यथाश्रुतग्रन्थतः प्रतीयते तथापि समानवचनत्वप्रयोजकान्तरस्याभावेनोक्तपदवत्त्व एव प्रयोजकत्वस्य वाच्यतया व्यापकत्वमपि स्वीकार्यमेव ।

अथ विभक्तित्वेनोपादानं किमर्थम् न च तदनुपादाने सुन्दरं दधि बहवो गुणा इत्यत्र सौन्दर्ये एकत्वविवक्षायां समानवचनत्वस्येष्टतया विशेष्यवाचकपदाव्यवहितोत्तरबहुपदार्थबहुत्वसंख्याविरुद्धैकत्वस्य विवक्षिततया प्रयोजकाभावात् समानवचनत्वानुपपत्तिरितिवाच्यम् उक्ताविवक्षितत्वस्योक्तग्रन्थतस्समानवचनत्वव्याप्यत्वस्यैव प्रतीतत्वेन व्यापकत्वमवलम्ब्यदोषस्यासम्भवात् न च प्रयोजकान्तराभावेन तस्य तथात्वमुचितमिति वाच्यम् पदान्तरप्रयोजकवक्तृबुबोधयिषादेर्विभक्त्यंशेऽपि प्रयोजकतया तस्य निराकाङ्क्ष्यनुदयेन तत्र तत्र समानासमानवचनत्वनिर्वाहकत्वादिति समानवचनत्वस्यार्थसमाजग्रस्तत्वेन तादृशप्रयोजकानपेक्षत्वात् कुत्राभेदान्वयप्रयोजकं समानवचनत्वं कुत्र च नेत्याकाङ्क्षानिवृत्तये शब्दानुगमसुखेन तत्प्रसञ्जकस्य व्याप्यस्यैव प्रदर्शनीयत्वाद्वेदाः प्रमाणमित्यादौ प्रसञ्जकाभावादेव तत्प्रसक्त्यसंभवात् व्याप्यविरहस्य च व्यापकविरहाप्रयोजकतयोक्तस्थले उक्ताविवक्षितत्वविरहेपि क्षत्यभावात् समानवचनत्वस्यैकत्वस्य विवक्षितत्वेन विभक्त्यन्तरोत्पत्त्यसंभवेन निर्वाह्यत्वात् । अस्तु वा व्यापकत्वमपि तावतापि न क्षतिः । तादृशस्थले विशेष्यवाचकपदाव्यवहितोत्तरविभक्तेरप्रसिद्धतयाऽव्यवहितोत्तरत्वेनानुसन्धीयमानत्वस्य विवक्षणीयत्वात्तथाविधविभक्तितात्पर्यविषयैकत्वविरुद्धत्वस्यैकत्वेऽसम्भवात् अत्र केचित् सम्पन्ना लता बह्वयः सम्पत्तय इत्यादौ सम्पत्तौ बहुत्वविवक्षायामसमानवचनकप्रयोगस्यापि साधुतया विभक्तित्वेनाप्रवेशे तदनुपपत्तिः स्मृतिविषयतया विभक्तेरिव प्रत्यक्षविषयतया बहुपदस्यापि लतापदोत्तरत्वेनानुसन्धीयमानत्वेन तत्तात्पर्यविषयबहुत्वविरुद्धत्वस्य बहुत्वेऽसंभवात् । नचावच्छेदकतानात्मकतात्पर्यविषयत्वविवक्षणे न दोष इति वाच्यमेकत्वपरपदाव्यवहितपूर्ववर्त्तिलुप्तबहुवचनान्तपदघटिते प्रमाणं वेदशाखा वाच्यं घट इत्यादावसमानवचनत्वानुपपत्तेरिति वदन्ति । परेतु स्तोकमत्त इत्यादौ समानवचनत्वप्रसङ्गवारणाय विशेष्यवाचकपदे प्रातिपदिकत्वप्रवेशापेक्षया विशेष्यवाचकपदाव्यवहितोत्तरपदे सुप्त्वप्रवेशे लाघवेन तस्यैवोपादेयतया विभक्तित्वेन प्रवेशे कथन्ताया नोन्मेष इत्याहुः ।

विभक्त्यर्थत्वेन संख्याप्रवेशमकृत्वा विभक्तितात्पर्यविषयत्वेन तत्प्रवेशनं वेदाःप्रमाणमित्यादौ यत्र जसि सुत्वभ्रमादेकत्वशक्तत्वभ्रमाद्वा शाब्दत्वमेकत्वस्य तत्रैकत्वस्य विभक्त्यर्थतयासमानवचनत्वप्रसङ्गवारणाय विभक्तिशक्यत्वरूपविभक्त्यर्थत्वप्रवेशे च लोके सुब्विभक्तेःसंख्यालाक्षणिकत्वविरहेण दोषाभावेऽपि ततो न लाघवम् । केचित्तु वेदगतबहुत्वतात्पर्येण वेदपदोत्तरं जसि प्रयोक्तव्ये दोषवशात्प्रयुक्तया सुविभक्त्या घटितस्य वेदःप्रमाणमिति प्रयोगस्य समानवचनत्वनिबन्धनमसाधुत्वमभ्युपगच्छन्ति वक्तृतात्पर्यविदो विशेषदर्शिनः तत्रैवं समानवचनत्वव्याप्यस्य सत्तया कथन्ताया अनिवृत्तिः स्यादिति तात्पर्यविषयत्वेनोपादानं संख्यायाः कृतमिति वदन्ति । तात्पर्यविषयसंख्यायास्संख्यात्वेन प्रवेशात्प्रमाणे वेदेषु द्वित्वान्यप्रमेयमित्यादौ वेदनिरूपिततादृशप्रमेयत्वावच्छिन्नाधेयत्वस्य विभक्तितात्पर्यविषयतयाधेयत्वस्याधेयरूपत्वे तादृशविषय-

त्वावच्छिन्नभेदस्यैकत्वेविरहात्समानवचनत्वापत्तेर्नावकाशः तन्निवेशे च तात्पर्यविषयतावच्छेदकसंख्यात्वव्याप्यधर्मावच्छिन्नभेदस्य विवक्षितत्वेन तात्पर्यविषयसंख्याभेदासत्त्वेऽपि न क्षतिः । विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धस्य संख्यात्वेन प्रवेशात्तादात्म्यस्यविशेषणविभक्त्यर्थतापक्षे विशेषणपदोत्तरविभक्त्या तादात्म्यस्य सर्वत्र विवक्षिततया विशेषणविभक्तिमात्रे तस्यासत्त्वेऽपि न क्षतिः ।

विशेषणवाचकपदोत्तरत्वेनानुसंन्धीयमानविभक्त्या अविवक्षितत्वदले अनुसन्धीयमानस्य विभक्तित्वेनाप्रवेशे तादृशानुसन्धीयमानयत्किंचिद्व्यक्त्याऽविवक्षितत्वप्रवेशे प्रकृष्टा मितिर्यस्मादिति विग्रहानुसारात्प्रमितिजनकार्थकेन प्रमितिपदेन तादृशजनकत्वांशे एकत्वतात्पर्यकस्यन्तेन घटितस्य वेदवाक्यानि प्रमितिजायन्त इति वाक्यस्य निराकाङ्क्षत्वप्रसङ्गः प्रमितिपदोत्तरत्वेन ज्ञायमानज्ञाधातुनाऽविवक्षितत्वस्यैकत्वे सत्त्वेन समानवचनत्वप्रसङ्गात् विशेषणपदाव्यवहितोत्तरत्वेनानुसन्धीयमानपदसामान्याविवक्षितत्वस्य प्रवेशे च यत्र विशेषणपदाव्यवहितोत्तरत्वेनैकविभक्तिव्यक्तिरेव ज्ञाता तत्र तद्विभक्तिव्यक्तिविवक्षितत्वस्य लघोरतिप्रसङ्गायनापादकस्य सत्तया तादृशाभावाप्रसिद्धिः स्यात्तादृशानुसन्धीयमानत्वमुपलक्षणीकृत्य तत्तद्व्यक्तिविवक्षितत्वाभावकूटनिवेशे च विभक्तित्वप्रवेशापेक्षया न लाघवम् अविवक्षितत्वस्य समानवचनत्वप्रयोजकत्वपक्षे समानवचनकविवक्षितसंख्याकसुबन्तविभक्त्यन्तविवक्षितविरुद्धसंख्याकपदपूर्ववर्तिविशेषणपदघटिते वाक्ये समानवचनत्वानुपपत्तिश्च स्यादिति विभक्तित्वेन प्रवेशः तत्र चानुसन्धीयमानत्वस्योपलक्षणत्वेऽपि न क्षतिः । तादृशविरुद्धसंख्याविवक्षाविषयत्वाभाववद्विभक्त्यव्यवहितपूर्वत्वेनानुसन्धीयमानत्वस्य विशेषणपदनिष्ठस्य तद्दलार्थत्वपक्षेऽपि विभक्तित्वेन प्रवेशस्यैवमेव फलमनुसन्धेयमिति ।

अथ विरुद्धान्तोपादानमफलमिति चेन्न उक्ताविवक्षितत्वस्य समानवचनत्वव्यापकत्वपक्षे वेदत्वसामान्य एकत्वविवक्षया प्रयुक्ते वेदः प्रमाणमिति वाक्ये समानवचनत्वानुपपत्तिवारणाय तत्सार्थक्यसम्भवात् तस्य समानवचनत्वव्यापकत्वाभावपक्षे च शाब्दप्रयोजकसमानवचनत्वस्य सौकर्येण शिष्याणां ज्ञानाय तद्व्याप्यस्यैवासमानवचनत्वस्यापि तथा ज्ञानाय तद्व्याप्यस्यापि वाच्यतया संख्याविवक्षामात्रस्य तथात्वासम्भवेन तादृशविरुद्धत्वविशेषितसंख्याविवक्षाया एव तद्व्याप्यत्वेनोपादानं कार्यमिति तत्र ग्रन्थगौरवप्रसङ्गस्स्यादिति तद्भयेनासतियाधके विशेषणविशेष्यपदत्वरूपप्रसञ्जकप्रसञ्जितस्य समानवचनत्वस्य वारणायावश्यविशेषणीये प्रसञ्जके समानवचनत्वव्याप्तावनुपयुक्तेनोपरञ्जकभूतेन विरुद्धत्वान्तेन घटितस्य विशेषणस्योपादानं तथा सत्यर्थत एवासमानवचनत्वव्याप्यस्यापि लाभेन तदुक्त्यपेक्षाविरहान्न ग्रन्थगौरवम् । दृश्यते चैवमुक्तिर्यद्विषयत्वेन लिङ्गज्ञानस्येत्यादौ, यत्तु स्तोकं पचतइत्यादौ समानवचनत्वप्रसङ्गवारणाय तदुपादानं तथासति विशेष्यवाचकपदाव्यवहितोत्तरत्वस्य विभक्तौ विरहान्न दोषः नच रामाणामित्यादौ प्रकृतिप्रत्यययोरागमेन व्यवहितत्वेनाव्यवहितोत्तरत्वं न स्यादिति यद्व्यवधानेन प्रकृतिप्रत्यययोरन्वयबोधौपयिकाकाङ्क्षा निर्वाह्यते तत्तद्भिन्नप्रकृत्युत्तरानुत्तरत्वे सति प्रकृत्युत्तरत्वस्यैव प्रकृत्यव्यवहितोत्तरत्वस्य वाच्यतयागमादेशविकरणादिव्यवधानेप्यव्यवहितोत्तरत्वं सम्भवत्येवेति न स्तोकम्पचत इत्यादौ तद्वारणमिवंस्तोकं मत्त इत्यादौ नास्त्येव व्यवधानमिति सुतरामिति वाच्यं विशेष्यान्वयित्वेन विभक्तितात्पर्यविषयत्वस्य विवक्षणे दोषाभावात् आख्यातार्थसंख्याया धात्वर्थेनान्वयादिति तदसत् विशेष्यान्वयित्वेन संख्याविषयकतात्पर्यविषयविभक्तिकविशेष्यपदसमभिव्याहृतत्वविशिष्टोक्ताविवक्षितत्वोपादानादेवोक्तदोषवारणसंभवे तादृशविरुद्धत्वोपादानकथन्ताया अनिवृत्तेः विशेष्यवाचकपदोत्तरसुप्समभिव्याहृतत्वोपादानादेव वोक्तदोषवारणसम्भवे विरुद्धत्वांशोपादानवैफल्यशङ्काया अनुद्धारात् । नच क्विबन्तप्रातिपदिकोत्तरसुविभक्तेः क्विपो लुप्तत्वेन धात्वव्यवहितोत्तरतया तत्र का गतिरिति वाच्यं विशेष्यवाचकपदप्रकृतिकत्वस्य विवक्षितत्वात् तत्वञ्च विशेष्यवाचकपदार्थशाब्दबुद्धित्वावच्छिन्नजन्यतानिरूपिता याव्यवहितोत्तरत्वसम्बन्धावच्छिन्नविशेष्यवाचकपदनिष्ठप्रकारत्वावच्छिन्नकारणता तदवच्छेदकविशेष्यतावत्त्वम् । नहि धात्वर्थशाब्दबोध आख्यातकृदादिविशेष्यकधातुप्रकारकनिश्चयमिव धातुप्रकारकसुप्तद्धितादिविशेष्यकनिश्चयमपिकदाचिदपेक्षते इति न धातुप्रकृतिकत्वस्य सुपि सम्भवः । आकाङ्क्षाज्ञानकारणतावच्छेदकशरीरे तत्र तत्रैतादृशप्रकृतिकत्वस्याप्रवेशनञ्च भट्टाचार्याणामेतदज्ञानकाले शाब्दानुपपत्तिभयेनैवेत्युक्तधर्मस्य कारणतावच्छेदकाघटकतया तत्रोक्तप्रकृतिकत्वस्य प्रवेशे नास्ति कापि क्षतिः । यद्वा तदव्यवहितोत्तरत्वं तदुत्तरत्वेनानुसन्धीयमानोत्तरत्वेनाननुसन्धीयमानत्वे सति तदुत्तरत्वेनानुसन्धीयमानत्वमिति धातूत्तरत्वेनानुसंधीयमानक्विप्प्रत्ययोत्तरत्वेनानुसन्धीयमानत्वस्यैव सुपि सत्त्वात् न धातुप्रकृतिकत्वस्य तत्र प्रसङ्गः । अथ विशेषणविभक्तेरभेदार्थकतापक्षे विशेष्यविशेषणपदत्वमोक्ताविवक्षितत्वस्य च नीलो घट इत्यादाविव प्रकृत्या चारव इत्यत्रापि सत्तया समानवचनत्वप्रसङ्गः । नच विशेष्यवाचकपदोत्तरविभक्तिवृत्तिसुब्विभाजकधर्मवत्त्वप्रवेशे नायं दोष इति वाच्यं, प्रकृत्या चारुभिरित्यत्र दोषादिति चेन्न विशेष्यवाचकपदोत्तरविभक्तिवृत्तिसुब्विभाजकधर्मशून्यविभक्तिप्रकृतिविशेष्यवाचकपदसमनानुपूर्वीकपदार्थधर्मिकाभेदबोधानुकूलाकाङ्क्षाघटकविशेषणवाचकपदसमानानुपूर्वीकपदप्रकृतिकवृत्तिसुब्विभाजकधर्मशून्यत्वस्य विवक्षितत्वात् नहि प्रकृत्या चारुभिरित्यादौ विशेषणविभक्तौ तादृशधर्मशून्यत्वसंभवः प्रकृत्या चारुभिरित्यत्रैव प्रकृत्या चारव इत्यत्राप्यभेदबोधोदयात् नीलो घट इत्यादौ च भवत्येव तत्संभवः नहि नीलो घटइत्यत्रेव जात्वपि नीलो घटायेत्यत्राऽभेदबोधः एवञ्चोक्तनिवेशस्य यथोक्तविरुद्धत्वान्तो-

पादानेप्यावश्यकत्वेन तावतैव स्तोकमत्त इत्यादेरपि वारणसंभवेन तद्विवक्षावैफल्यं दुर्वारम् । अथ शोभना रामदारा इत्यत्र समानवचनत्वानुपपत्तिः विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याया अप्रसिद्धत्वात् नच स्वतात्पर्यविषयसंख्या-विरुद्धसंख्याविवक्षाविषयत्वसंबन्धावच्छिन्नप्रतियोगिताकस्य विशेष्यवाचकपदोत्तरविभक्त्यभावस्य विवक्षितत्वान्नानुपपत्तिरिति वाच्यं रामदारा मैथिलीत्यत्रैकत्वविवक्षाविषयैकवचनान्ते मैथिलीति विशेषणवाचकपदे दारपदोत्तरविभक्त्यभावसत्वेन समानवचनत्वापत्तेरितिचेन्न स्वतात्पर्यविषयसंख्याऽविरुद्धत्वसम्बन्धावच्छिन्नप्रतियोगिताकविभक्त्यभाववत्संख्याविवक्षावि-षयत्वाभावस्य विवक्षितत्वादुक्तदोषाभावात् अथ दारपदस्य विशेषणपदत्वे मैथिली रामदारा इत्यादौ समानवचनत्वापत्ति-र्दारपदोत्तरविभक्त्या संख्याया अविवक्षितत्वात् नच संख्याविवक्षायोग्यविभक्तिकत्वं विवक्षणीयं दारपदोत्तरविभक्त्या कुत्रापि संख्याबोधस्यादर्शनेन दारपदे तादृशविभक्तिकत्वविरहाददोष इति वाच्यं संभवतिसार्थकत्वे निरर्थकत्वस्यान्याय्य-तया दारैकत्वस्थले योग्यताविरहेण बहुत्वस्य विवक्षितुमशक्यत्वेपि दारबहुत्वस्थले योग्यतया बहुत्वस्य विवक्षणीयत्वेन सर्वत्रैव दारपदोत्तरविभक्तौ संख्याविवक्षायोग्यत्वं विवक्षाविषयतावच्छेदकानुपूर्वीरूपमस्तीत्युक्तदोषस्य दुरुद्धरत्वात् अत एवोक्तमग्रे अबादिपदोत्तरबहुवचनमपि क्वचिन्निरर्थकमेवेत्यत्र क्वचिदितिचेन्नोक्तस्थलेह्रिप्राप्तमपि समानवचनत्वं दाराः पुंसि च भूम्न्येवेत्याद्यनुशासनेन बाधितमिति न प्रसज्यते नच व्यभिचारोऽसति बाधक इति व्याप्यशरीरे वक्तव्यत्वात् तथाच नियतवचनकान्यत्वविशेषिताविवक्षितत्वस्य व्याप्यत्वम्पर्यवसितं नियतवचनकत्वञ्च धर्मविशिष्टत्वं वैशिष्ट्यञ्च स्वा-वच्छिन्नपरत्वस्वविशिष्टशाब्दजनकतावच्छेदकविभक्तिनिष्ठविषयतानिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नविषयतावच्छेदका-नुपूर्वीमत्वोभयसम्बन्धेन विभक्तिविषयतायां स्ववैशिष्ट्यं च स्वावच्छिन्नविषयतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकविषयताव-त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्वसम्बन्धेन विषयतावत्वञ्च स्वसमानाधिकरणसुब्विभाजकधर्मसामानाधिकरण्य-स्वावच्छेदकानवच्छिन्नत्वस्वनिरूपिताव्यवहितोत्तरत्वसम्बन्धावच्छिन्नविषयतावच्छेदकावच्छिन्नविषयतानिरूपितत्वैतत्रितयसम्ब-न्धेन दारपदोत्तरजसादिविभक्तिविषयतायां दारसदृशाचरणकर्तृत्वावच्छिन्नविशेष्यतानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकदार-पदनिष्ठविषयतानिरूपितस्वादिनिष्ठविषयतावत्वसत्वेपि स्त्रीत्वावच्छिन्नपरदारशब्दस्य दारसदृशाचरणकर्तृत्वावच्छिन्नपरत्वाभा-वेन तद्धर्मस्यानुपादेयत्वाद्भवति नियतवचनकत्वं नच प्रथमसम्बन्धानुपादानेऽपि स्त्रीत्वरूपधर्ममादाय नियतवचनत्वं संभव-त्येवेति वाच्यं क्विबन्ताद्भ्विं निष्पन्नस्य दारपदस्यापि स्त्रीत्वरूपधर्ममादाय नियतवचनकत्वापत्त्या धर्मसामान्याभाववद्वि-भक्तिविषयताघटितस्यैव नियतवचनकत्वस्योपादेयत्वादन्यथापत्तिवारणायैवास्तु प्रथमसम्बन्धोपादानं दारपदोत्तरजसादिवि-षयतायां तादृशसंख्यानिष्ठविषयताप्रयोजकशसादिनिष्ठविषयतावत्ववारणाय त्रितयसंबन्धघटकप्रथमोपादानं जस्विषयतायां जसविषयतावत्त्ववारणाय द्वितीयस्योपादानं । स्त्र्यादिपदोत्तरस्वादिनिष्ठविषयतावत्त्ववारणाय तृतीयस्य च । अतएव शतं ब्राह्मणा इत्यत्रापि न समानवचनत्वप्रसङ्गः शतपदोत्तरविभक्त्या शतत्वावच्छिन्ने संख्यान्वयस्यादर्शनेन शतपदोत्तरविभक्ति-विषयतायाश्शतत्वरूपधर्मविशिष्टत्वेन नियतवचनकत्वस्य शतपदे सत्वात् । नच शतपदोत्तरविभक्त्यैकत्वस्य विवक्षित-त्वादेव न समानवचनत्वप्रसङ्ग इति वाच्यम् । तथासत्येकत्वाविवक्षायां शतानि ब्राह्मणा इत्यस्यापत्तेः । नचेष्टापत्तिः । विंशत्याद्याःसदैकत्व इत्यनुशासनविरोधात् तद्ध्येकत्वविवक्षौदासीन्येन नियतैकवचनान्तत्वं विंशत्यादिशब्दानामाह । विवक्षादरे तु तत एवैकवचनप्राप्तावनुशासनवैफल्यात् । किंच शतत्वएकत्वान्वये संख्यायाः विभक्त्यर्थसंख्यान्वयित्वरूपस्या-वश्यविवक्षणीयप्रधानत्वस्य सत्वेन शतशब्दस्य प्रधानीभूतसंख्यार्थकत्वरूपस्य संख्यार्थकत्वस्य सत्तया प्रातिपदिकान्तरस्य षष्ठ्यर्थद्वारकस्वार्थान्वयएव तत्र साकाङ्क्षत्वेन ब्राह्मणानां शतमित्येव स्यान्नतु शतं ब्राह्मणा इति । नच प्राधान्येन संख्याबो-धकमेव तदिति वाच्यम् । गवां शतं ददातीत्यस्यानुपपत्तेः । नचैवं ते शतानि वयं पञ्चेत्यादेः का गतिरिति वाच्यम् । तेषामार्षत्वे ततएव साधुत्वादुक्ताविवक्षितत्वस्य समानवचनत्वप्रयोजकत्वपक्षे तत्तद्भेदविशिष्टनियतवचनकत्वाभावस्य प्रवेश्यत्वात्तत्र समानवचनत्वोपपत्तेः । अतएवासंख्याताः सहस्राणि ये रुद्रा इति वैदिकप्रयोगेऽपि नानुपपत्तिः । ते शतानी-त्यादीनामनार्षत्वे त्वप्रामाण्यमेव । अथैकत्वाविवक्षया जात्येकत्वविवक्षया वा शतं ब्राह्मण इति कथं न प्रयोग इति चेन्न सार्थकत्वसंभवे निरर्थकतायास्त्वायत्ते शब्दप्रयोगे सार्थकं विहाय निरर्थकप्रयोगस्य चान्याय्यत्वाज्जात्येकत्वविवक्षाया एक-देशान्वयदुष्टतया सिद्धप्रयोगोपपादकत्वेऽपि स्वारसिकप्रयोगस्य तन्मूलताया वक्तुमशक्यत्वाच्च बहुत्वविवक्षया बहुवचन-प्रयोगस्यैव प्राप्तत्वादिति । विषयतावदन्यत्वं नियतवचनकत्वं विषयतावत्वं च स्वावच्छेदकावच्छिन्नपरत्वस्वनिरूपकबोध-जनकत्वप्रकारकतात्पर्यविषयतावच्छेदकानुपूर्वीमत्वस्वविशिष्टविषयताकबोधजनकत्वप्रकारकतात्पर्यविषयतावच्छेदकानुपूर्वीम-त्वैतत्रितयसंबन्धेन स्ववैशिष्ट्यं च स्वनिरूपितप्रकारतावच्छेदकसंख्यात्वव्याप्यधर्मातिरिक्तादृशधर्मावच्छिन्नप्रकारताकत्व-स्वावच्छेदकावच्छिन्नत्वोभयसंबन्धेन बोध्यमित्यपि कश्चित् ।

अथवा विशेष्यवाचकपदोत्तरविभक्त्यर्थसंख्यानिष्ठप्रकारतानिरूपितविशेष्यतावत्वमपि विशेषणवाचकपदे विशेषणम् । विशेष्यतावत्ता च स्वावच्छेदकावच्छिन्नपरत्वस्वनिरूपकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतावच्छेदकानुपूर्वीमत्वोभयसंबन्धेन । तथाच दारपदस्य विशेषणवाचकत्वे एकवचनान्ते विशेष्यवाचकपदे एकवचनार्थैकत्वनिष्ठप्रकारतानिरूपितस्य स्त्रीत्वावच्छिन्न-

२ व्युत्प०

त्वनियमः । अतएव पुरूरवोमाद्रवसौ विश्वेदेवा इत्यादौ द्वित्वविशिष्टयोः पुरूरवोमाद्रवःप्रभृत्यो-र्विशेषणतया विवक्षितत्वात्तद्वाचकस्य पदस्य द्विवचनान्तता । वेदाः प्रमाणमित्यत्र च विशेषणप-दोत्तरविभक्त्या बहुत्वविरुद्धमेकत्वं विवक्षितं तच्च प्रकृत्यर्थतावच्छेदके प्रमितिकरणत्वेऽन्वेति । शाब्दप्रमाकरणत्वं च शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमेकमेवेति नायोग्यता । नच पदार्थः पदार्थेना-

विशेष्यत्वस्य स्वनिरूपकबोधजनकत्वेन तात्पर्यविषयतावच्छेदकानुपूर्वीमत्वविरहात् । दारसदृशाचरणकर्तृत्वाद्यवच्छिन्नवि-शेष्यत्वस्य च स्वावच्छेदकावच्छिन्नपरत्वविरहान्न सत्वमिति न समानवचनत्वप्रसङ्गः । विशेष्यवाचकपदे बहुवचनान्ते विशेषणवाचकदारपदे उक्तविशेष्यत्वस्य सत्वाद्भवत्येव समानवचनत्वम् । दारपदस्य विशेष्यवाचकपदत्वे च शोभनादिवि-शेषणवाचकपदे तादृशविशेष्यतावत्वस्याविवक्षितसंख्याकविभक्तिकत्वस्य च सत्वात्समानवचनत्वम् । संख्याया विवक्षितत्वे-च तादृशविभक्तिकत्वाभावान्न समानवचनत्वम् । नच मैथिल्यादिपदोत्तरविभक्त्या यदा नैकत्वादिकं विवक्षितं तदा मैथिल्यो रामदाराः कुन्तीमाद्र्यः पाण्डुदारा इत्यादिप्रयोगापत्तिरिति वाच्यम् । प्रधानीभूतविशेष्यगतत्वेन प्राक्प्रयोक्तव्यविशेष्यवा-चकपदोत्तरविभक्त्या संख्यायाः सति योग्यत्वेऽवश्यविवक्षणीयतया तत्समानाधिकरणसंख्याया विशेषप्रतिपत्त्यनाधायक-त्वेन दुष्परिहरनिरर्थकक्लृप्तया विशेषणविभक्त्या विवक्षितत्वासंभवेऽपि यत्रायोग्यतया विशेष्यवाचकपदोत्तरविभक्त्या संख्या न विवक्षिता तत्र योग्यायास्संख्याया विशेषणविभक्तेर्निरर्थकत्ववारणायावश्यविवक्षणीयत्वात् । सार्थकप्रयोगसंभवे निरर्थकप्रयोगस्यान्याय्यत्वादुक्तस्थले एकत्वद्वित्वार्थकयोरेकवचनद्विवचनयोरेव प्रसक्तेः । नचैवं घटत्वादावेकत्वसंख्याया योग्याया विवक्षया सार्थकैकवचनप्रयोगसंभवे निरर्थकबहुवचनप्रयोगस्यान्याय्यतया एते घट इति प्रयोगापत्तिरिति वाच्यम् । एकदेशान्वयस्य व्युत्पत्तिविरुद्धत्वेन प्रामाणिकप्रयोगोपपत्त्यर्थं क्वचित्तद्विवक्षायास्संभवेऽपि स्वरसतस्तादृशविवक्षाया असं-भवेनागत्या निरर्थकस्यैव प्रयोक्तव्यत्वे समानवचनप्रयोगस्यैव न्याय्यत्वादितिदिक् ।

**पुरूरवोमाद्रवसौ विश्वेदेवा इति ।** अत्र पिशाचा राक्षसा यक्षा भूता नानाविधास्तथा । प्रतिलुम्पन्ति सहसा श्राद्धमारक्षवर्जितम् । तत्पालनाय विहिता विश्वेदेवाः स्वयंभुवा । इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः । नैमित्तिके कालकामौ काम्ये च धुरिलोचनौ । पुरूरवा माद्रवाश्च पार्वणे समुदाहृतौ । उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः । अय-मुच्चरणीयस्तैः श्लोकः श्रद्धासमन्वितैः । आगच्छन्तु महाभागा विश्वेदेवा महाबलाः । ये यत्र योजिताः श्राद्धे सावधाना भवन्तु ते इत्यस्ति वचनम् तत्र क्वचित्पुरूरवोमाद्रवसाविति पाठस्तदवलम्ब्यायं ग्रन्थः । इन्द्रस्य दुहिता ज्येष्ठा विषानाम महातपाः । तस्याः पुत्राः समुत्पन्ना विश्वेदेवास्त्रयोदश । इत्यादिवचनलिखनं कस्यचिन्नातिप्रामाणिकमिव प्रतिभाति । अमरटीकादौ आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृता इति दशत्वोक्तेः श्राद्धकल्पश्राद्धचिन्तामण्याद्युदाहृतवचनादपि दशत्वप्रतिपत्तेश्च अथ स्वयम्भुवा तत्पालनाय विहिता इति सन्निहितवाक्यार्थान्वितस्वार्थकत्वेन विश्वेदेवा इति पदस्य निराका-ङ्क्षत्वे पुरूरवोमाद्रवसावित्यनेनान्वयस्यासम्भवात् पुरूरवोमाद्रवसावित्यस्य च पार्वणे समुदाहृतावित्येतदर्थान्वितस्वार्थकतया पूर्णाकाङ्क्षत्वेन विश्वेदेवा इत्यनेनान्वयासम्भवाच्च पुरूरवोमाद्रवसौ विश्वेदेवा इति लिखनमसङ्गतमिति चेन्न । पार्वण इत्यस्य हि पुरूरवोमाद्रवसावित्यनेनान्वयः समुदाहृतावित्यनेन वा । नाद्यः साङ्गषट्पुरुषश्राद्धविशेषस्य घटकतायास्तत्प्रयोजकताया वा पुरूरवोमाद्रवस्त्वादिना विश्वेषां देवानामेतद्वचनार्थप्रतिपत्तिपूर्वं प्रत्येतुमशक्यत्वात् विधिमन्त्रलिङ्गादितो विश्वेदेवत्वेनैव कर्मणि देवतात्वप्रतिपत्तेः पार्वणे पुरूरवोमाद्रवसावित्यस्योद्देश्यसमर्पकत्वासंभवात् विश्वेदेवत्वेन देवतात्वप्रतिपत्तेरेव पार्वण इत्यस्य न विधेयत्वमपि । नापि द्वितीयः तावन्मात्रस्य साकाङ्क्षत्वेन वाक्यार्थापर्यवसानादध्याहारस्य दुष्टत्वात्तयोर्विश्वेदेव-त्वस्यानुभवसिद्धशाब्दत्वकस्यालाभप्रसङ्गाच्च । तस्माद्योसौ गणो विश्वेदेवपदनिर्देश्यस्तत्र क्रतुदक्षादियुग्मस्येष्टिश्राद्धादौ मु-ख्यत्व चिन्तनीयमित्येवंपरताया उक्तवचनस्य तान्त्रिकसिद्धाया निर्वाहाय च पार्वणे विश्वेदेवाः पुरूरवोमाद्रवसौ समुदाहृता-वित्येवमन्वयो वाच्यः तदर्थमुत्तरवाक्ये विश्वेदेवा इति पदमनुकर्षणीयं नचात्र मुख्यत्वेन चिन्तनीयपुरूरवःप्रभृतिघटि-तसमुदाये पुरूरवःप्रभृतिपदस्य लक्षणैव दोष इति वाच्यं प्राधान्येन व्यपदेशा भवन्तीति न्यायेन मुख्यत्वस्यानुष्ठानोपयो-गित्वेनावश्यकतया चिन्तनीयत्वस्य च सुग्रहतया प्रामाणिकत्वात् तत्र तात्पर्यस्य तदनुपपत्तेरुक्तलक्षणाया निर्दोषत्वादिति ॥

**द्वित्वविशिष्टयोः पुरूरवोमाद्रवःप्रभृत्योरिति ।** नच बहुत्वविशिष्टेषु कथं द्वित्वविशिष्टस्यान्वयस्तथासति द्वौ बहव इति प्रयोगापत्तेरिति वाच्यम् । विशेषणतयेत्यस्य परम्परया विशेषणत्वपरत्वेनादोषात् । प्रभृतिपदात्क्रतुदक्षादीनां सङ्ग्रहः पुरूरवः-प्रभृतिपदं पुरूरवःप्रभृतिघटितसमुदायपरम् माद्रवःप्रभृतिपदं च माद्रवःप्रभृतिघटितसमुदायपरं तादृशसमुदायत्वद्वये च द्वित्वा-न्वयो विवक्षित इति कश्चित् तन्न तादृशसमुदायत्वयोर्वैलक्षण्यासंभवेन द्वित्वान्वयासंभवात् । व्यक्तिभेदमादाय बहुत्वस्यापि योग्यतया सार्थकबहुवचनत्यागे बीजाभावात् द्वित्वविशिष्टयोरित्यादिग्रन्थे कुसृष्टिकल्पनापत्तेश्च । **शाब्दप्रमाकरणत्वं चेति ।** अथ किंतावच्छाब्दप्रमाकरणत्वं शाब्दत्वप्रमात्वोभयधर्मावच्छिन्नकार्यतानिरूपितकारणत्वम् । प्रमानिष्ठशाब्दत्वा-

वच्छिन्नकार्यतानिरूपितकारणत्वम् प्रमात्वन्यूनवृत्तिशाब्दत्वघटितधर्मावच्छिन्नकार्यतानिरूपितकारणत्वं वा । नाद्यः प्रमात्वस्यार्थसमाजग्रस्तत्वेन कार्यतानवच्छेदकत्वात् । न द्वितीयः शाब्दत्वावच्छिन्नं प्रति शब्दत्वेनकारणत्वस्य वह्निना सिञ्चतीतिवाक्येऽपि सत्वेन तत्रापि प्रमाणत्वव्यवहारापत्तेः । न तृतीयः तादृशकरणत्वस्यानेकत्वेनैकमेवेतिग्रन्थासङ्गतिरिति चेत् तृतीयकल्पाङ्गीकारे क्षतिविरहात् स एवाङ्गीकरणीयः । उक्तग्रन्थस्तु शाब्दत्वजातेरेकत्वेन भाक्तैकत्वव्यवहारपरत्वेनोपपादनीयः । सुबर्थैकत्वस्य शाब्दत्वजातावेवान्वयः एवंच करणत्वस्य करणस्वरूपत्वपक्षे व्यक्तिभेदेन भिन्नत्वेऽपि न क्षतिः । अतएव ध्वनिः प्रमाणं घटः कर्मत्वमित्यादि निराकाङ्क्षवाक्यं प्रमाणमित्यादीनां न प्रसङ्गः । प्रमां प्रति शब्दत्वेन स्वरूपयोग्यत्वस्यैव प्रमाणव्यवहारप्रयोजकत्वेऽविशेषेण वेदाः प्रमाणमितिवदुक्तप्रयोगाः प्रसज्येरन् । नचेष्टापत्तिः आप्तोपदेशः शब्दः प्रमाणं प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यः शब्दः प्रमाणमित्यादिना अयोग्यनिराकाङ्क्षध्वन्यादिव्यावृत्तस्यैव शब्दप्रमाणलक्षणस्य सिद्धान्तितत्वेन तस्यैव च व्यवहारौपयिकतया तच्छून्ये लक्ष्यव्यवहारस्यायुक्तत्वात् । किंच सर्वं हि वाक्यं सावधारणमित्यवलम्ब्य वेदाः प्रमाणमितिवल्लौकिकवाक्यानि प्रमाणमिति न व्यवहरन्ति तदपि शब्दत्वावच्छिन्नप्रमाकरणत्वस्य व्यवहारविषयत्वेनोपपद्यतेकस्मिंश्चिदपि लौकिकवाक्ये प्रमाणत्वाभावरूपस्याप्रमाणत्वस्यासंभवेन तद्व्यवच्छेदस्य तत्रापि संभवात् एवं वेदत्वावच्छेदेनेव लौकिकवाक्यत्वावच्छेदेनापि प्रमाणत्वस्योक्तस्य संभवेन सर्वे वेदाः प्रमाणमित्यस्येवावच्छेदकावच्छेदेनान्वयविवक्षया तत्समानार्थपर्यवसायिनो वेदाः प्रमाणमित्यस्येव वा सर्वाणि लौकिकवाक्यानि प्रमाणानीत्यस्य लौकिकवाक्यानि प्रमाणानीत्यस्य वापत्तिर्दुरुद्धरा । नचैवं शब्दत्वावच्छिन्नं यावच्छब्दनिष्ठमिति ग्रन्थस्य का गतिरिति वाच्यम् । शब्दत्वपदेन ज्ञापकासाधारणधर्मस्याकाङ्क्षारूपस्य शब्दपदेन च प्रमाणशब्दस्य शोधनीयत्वात् गत्यभावात् यथाश्रुतग्रन्थानुरोधिनस्तु उक्तप्रयोगयोर्वैलक्षण्यमनुभवसिद्धमपलपन्तो ध्वनिः प्रमाणमित्यादिप्रसङ्गमिष्टापत्त्या वारयन्तो यद्विशेषयोरिति न्यायेन कॢप्तं शाब्दत्वावच्छिन्नं प्रति शब्दत्वेन करणत्वमवलम्ब्य उक्तग्रन्थमव्याख्येयं मन्यन्ते । केचित्तु स्वतात्पर्यविषयप्रमानिष्ठशाब्दत्वावच्छिन्नकार्यतानिरूपितशब्दत्वावच्छिन्नकरणत्वरूपं शाब्दप्रमाकरणत्वं विवक्षितं तथाच ध्वनेर्निराकाङ्क्षस्य च तात्पर्याभावादयोग्यस्य स्वतात्पर्यविषयप्रमाया अप्रसिद्धेरुक्तदोषाणां नावकाशः । नच स्वत्वाननुगमेनैकत्वासंभव इति वाच्यम् । शब्दविशिष्टत्वस्यैव स्वतादात्म्यस्वतात्पर्यविषयप्रमानिष्ठशाब्दत्वावच्छिन्ननिरूपितकरणत्वोभयसंबन्धेन तद्रूपत्वात् । उक्तविशिष्टत्व एव चैकत्वान्वयः तत्परतयैव नोक्तग्रन्थो व्याख्येय इति वदन्ति । तत्र स्वतात्पर्यविषयप्रमाकरणत्वस्य संसर्गत्वेऽपि निर्वाहादतिरिक्तस्य वैफल्यम् न चेष्टापत्तिः प्रमाणपदस्य पारिभाषिकत्वापत्तेरिति चिन्तनीयम् ॥

**नचेति** एवमितिशेषः । **पदार्थः पदार्थेनान्वेतीति व्युत्पत्तिविरोध इति** । अत्र इतिशब्दस्यस्वरूपवचनस्य नाभेदेन व्युत्पत्तिपदार्थान्वितपरत्वं वाक्यस्य व्युत्पत्तिरूपत्वाभावादन्यथा व्युत्पन्नोऽयमिति व्यवहारानुपपत्तेः वाक्यस्य यथाकथंचित्पुरुषनिष्ठत्वेन तदुपपादने चार्थज्ञानविरहिणि व्युत्पन्न इति व्यवहारापत्तेः ग्रन्थे व्युत्पादकत्वव्यवहारानुपपत्तेश्च । अपि तु सन्निहितवाक्यस्वरूपवचनस्य लुप्तपञ्चमीकस्य व्युत्पत्त्यन्वितवाक्यप्रयोजकत्वपरत्वमेव तथाच पदार्थ इत्यादेरिति वाक्यादाप्तपुरुषपरम्पराऽधिगताज्जायमानस्य निर्धारितप्रमाणभावस्य तदर्थज्ञानस्य तदर्थान्यथानुपपत्त्या कल्पितस्य तादृशस्य कार्यकारणभावविशेषज्ञानस्य वा व्युत्पत्तेः विरोधः पदार्थतावच्छेदके पदार्थान्वयस्वीकारे वस्तुभूतेन तेन विषयतयाऽसामानाधिकरण्यमप्रमात्वपर्यवसितमित्यर्थः । स्यादिति शेषः । नच तदभ्युपगन्तुं शक्यमितिभावः । अथ कीदृश उक्तकार्यकारणभावः न तावद्विशेष्यतासंबन्धेन शाब्दबुद्धित्वेन मुख्यविशेष्यतासंबन्धेनोपस्थितित्वेन च सः पश्वादिपदशक्यतावच्छेदके लाङ्गूलादौ व्यभिचारात् नापि मुख्यविशेष्यतासंबन्धेन शाब्दबुद्धित्वेन वृत्तिग्रहामुख्यविशेष्ये शाब्दमतौ विशेषणतया भासमाने पदार्थान्तरान्वयप्रसङ्गात् नापि पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वेन पदार्थान्तरत्वस्याव्यावर्तकत्वादिति चेत् विशेष्यताविशिष्टविशेष्यतासंबन्धेन शाब्दबुद्धित्वेन कार्यत्वमिति गृहाण । वैशिष्ट्यं च स्वतादात्म्यस्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयत्वप्रयोज्यविषयतानिरूपितत्वोभयसंबन्धेन । नचैवं सत्यपि शोभनः पशुरित्यत्र शोभनपदजन्योपस्थितेः मुख्यविशेष्यतासंबन्धेन शोभनमात्रे सत्त्वेन लोमलाङ्गूलादावपि सत्तया तत्रैकत्वादिसंख्यान्वयप्रसङ्गः शोभनपदार्थान्वयप्रसङ्गश्च शोभनपदार्थस्य द्विधाभानानुपगमात् न सकृदुच्चरित इत्यादि व्युत्पत्तिविरोध इति वाच्यम् । विशेष्यताविशिष्टविशेष्यतात्वसंबन्धेन शाब्दबुद्धौ स्वीयमुख्यविशेष्यताप्रयोज्यत्वसंबन्धेनोपस्थितत्वेन कारणत्वस्य वाच्यत्वात् । वैशिष्ट्यं च स्वतादात्म्यस्वप्रयोजकवृत्तिज्ञानीयविषयताविशिष्टविषयतानिरूपितविषयत्वाप्रयोज्यविषयतानिरूपितविषयतावत्वोभयसंबन्धेन विषयतावैशिष्ट्यं च विषयतावत्ता च स्वावच्छेद्यत्वस्वतादात्म्यान्यतरसंबन्धेन बोध्यम् । नीलोघट इत्यादिशाब्दबोधीयघटत्वनिष्ठप्रकारतानिरूपितविशेष्यतायामप्युपस्थितेः सत्वेन तत्रोक्तसंबन्धेन शाब्दबोधस्यासत्वेनान्वयव्यभिचारःस्यादिति निरुक्तविषयत्वाप्रयोज्यविषयतानिरूपितत्वं विहाय निरूपितविषयतावत्वमुपात्तं तथासति तादृशघटत्वावच्छिन्नविषयतावत्वान्न व्यभिचारः लाङ्गूलत्वप्रकारतानिरूपितविशेष्यतायां स्वप्रयोजकवृत्तिज्ञानीयतादृशविषयतानिरूपितत्वस्य लाङ्गूलत्वविषयतायामेव सत्वेन लोमविषयतायास्तदनिरूपितत्वेन निरुक्तविषयत्वाप्रयोज्यतया तन्निरूपितलाङ्गूलत्वावच्छिन्नविषयतावत्वस्य सत्वेन तत्र व्यति-

न्वेतीति व्युत्पत्तिविरोधः, संपन्नोव्रीहिरित्यनेकव्रीहितात्पर्यकेप्येकवचनदर्शनेन तादृशव्युत्पत्तिसङ्को-

---

रेकव्यभिचार इति स्वप्रयोजकविषयताविशिष्टविषयतानिरूपितत्वमुपात्तमिति । यद्वा वृत्तिज्ञानीयविषयत्वाऽप्रयोज्यसांसर्गिकविषयतानिरूपितविषयताविशिष्टविशेष्यतासंबन्धेन शाब्दबुद्धित्वेन स बोध्यः । वैशिष्ट्यमुक्तान्यतरसंबन्धेन यद्यत्र विशेष्यतात्वं नोपादीयेत तदैकत्र विशेषणत्वेनोपस्थितस्येत्यादिव्युत्पत्तेरप्यत एवगतार्थत्वं नच पारतन्त्र्येण भासमाने प्रकारे तद्धर्मिणि च व्यतिरेकव्यभिचारः विषयताविशिष्टान्यत्वस्य विशेषणतयोपादानेन तद्विषयत्वस्य व्यावर्तनीयत्वात् वैशिष्ट्यं च स्वावच्छेद्यनिरूपितत्वस्वनिरूपितविषयत्वावच्छेद्यविषयतानिरूपितप्रकारतावत्वोभयसंबन्धेनेति । नन्वाप्तसाधारणापरिच्छिन्नदेशकालभूरिप्रयोगविषयत्वेन सिद्धप्रामाणिकपरंपराधिगमं संपन्नो व्रीहिरिति वाक्यं स्वायत्ते शब्दप्रयोगे निरर्थकप्रयोगस्यान्याय्यतया कल्पितविवक्षितार्थकताकस्वंतव्रीहिपदघटितमृते व्रीहित्वजातावेकत्वान्वयन्नप्रामाण्यमर्हतीति । नचैकत्वस्य व्रीहावेवान्वयः संभवति एकत्वविशिष्टे सम्पत्तिविशिष्टस्याभेदान्वयासंभवात् संपत्तेर्बहुत्वात्मकत्वात् स्वाश्रयावधिकान्तिकत्वग्रहविषयत्वाभावविशिष्टस्वाश्रयावधिकदूरत्वग्रहविषयत्वासामानाधिकरण्यस्वतादात्म्योभयसंबन्धेन संख्याविशिष्टानिर्धारितबहुत्वत्वान्यसंख्यात्वव्याप्यधर्मिका बहुत्वसंख्या हि व्रीह्यादिगता सम्पत्तिः व्रीहित्रयादिमति क्षेत्रे सम्पन्नो व्रीहिरिति व्यवहारवारणायानिर्धारितेत्यादि तत्र संख्यायास्त्रित्वत्वेनावधारितत्वात् । यद्वा संख्यात्वव्याप्येन यादृशयादृशधर्मेण संख्याग्रहे न सम्पन्नव्यवहारस्तत्तदवच्छिन्नभेदकूटवत्वं संख्याविशेषणम् । यत्रैकस्मिन्नेव क्षेत्रे कस्यचिदेकैकस्यान्तिके सर्वे व्रीहय इति बुद्धिः कस्यचित्तु दूरे व्रीहय इति तत्र तयोस्संपन्नत्वासंपन्नत्वव्यवहारयोरुपपत्त्यर्थं स्वाश्रयावधिकेत्यादि । यत्रान्तिकत्वग्रहविषयेऽपि व्यवहितापेक्षया दूरत्वग्रहस्तत्र संपन्नत्वव्यवहारोपपत्त्यर्थं तादृशाभावविशिष्टत्वं विषयत्वविशेषणतयोपात्तम् । वैशिष्ट्यं च स्वसमानाधिकरण्येन यत्र व्रीह्याद्यनेकजातीयाः सजातीयदूरवर्तिनो विजातीयान्तिकस्थास्तत्र सम्पन्नो व्रीहिरिति न व्यवहारोऽपितु सम्पन्नं शस्यमित्येव यदि प्रामाणिकस्तदानेकजातीयगतबहुत्वसंख्यामादायापत्तिवारणायोद्देश्यतावच्छेदकव्याप्यत्वमपि संख्याविशेषणतयोपादेयम् दूरान्तिकत्वग्रहश्च स्वप्रयोजकज्ञानसमानाधिकरणो ग्राह्यः सच विषयतायां विशेषणं तेन पुरुषान्तरीयग्रहमादाय कालान्तरीयग्रहमादाय च न दोषः । एवं च व्रीहित्वजातावेकत्वान्वयः सिद्धः । तथाचोक्तवाक्योक्तिर्व्युत्पत्त्योर्द्वयोरेव प्रामाणिकतया जातावेकत्वान्वयेन वाक्यस्यैव संकोचेन व्युत्पत्तेरपि प्रामाण्यमुपपाद्यं ततश्च प्रमाणत्वेऽप्येकत्वान्वयः संभवत्येव तत्प्रयोगस्यापि प्रामाणिकत्वेनावधृतत्वादित्याशयेनाह **सम्पन्नोव्रीहिरित्यादि** । परेतु विजातीयःसंयोगःसम्पत्तिः वैजात्यं च सम्पन्नत्वव्यवहारान्यथानुपपत्त्या कल्पनीयं सम्पन्नव्यवहारश्च परस्परसमासक्तेष्वेव व्रीहिषु न विरलेषु नचैकस्मिन्निति तादृशवैजात्यविशिष्टः संयोगो नैकत्वविशिष्टे व्रीहौ । नच तस्याव्यासज्यवृत्तितया कथं नैकत्वविशिष्टे संभव इति वाच्यम् । एकत्वस्य सजातीयद्वितीयराहित्यात्मकतया तद्विशिष्टे व्रीहौ सम्पन्नत्वव्यवहारविरहेण तन्निष्ठसंयोगे वैजात्याभावात्तस्माज्जातावेकत्वान्वयो वाच्यस्तथासति नियमसंकोच आवश्यक इति वदन्ति तन्मन्दम् । व्यवहारस्यान्यथाप्युपपन्नतया तादृशवैजात्ये मानाभावात् अभिघातत्वादिना सांकर्यात् । अभिघातत्वादिव्याप्यनानावैजात्यस्वीकारेऽनुगमकाभावेन सम्पन्नपदप्रवृत्तिनिमित्तत्वासंवात् परस्परमत्यन्तसन्निहितेष्वसंयुक्तेष्वपि सम्पत्तिव्यवहारदर्शनात् तादृशव्यवहारस्य कादाचित्कत्वानुपपत्तेश्च । मन्त्रादिपदवत्सम्पत्त्यादिपदमपि प्रामाणिकस्वव्यवहारविषयत्वप्रवृत्तिनिमित्तक एव तादृशविषयता चापेक्षाबुद्धिविशेषविषयत्ववद्व्यासज्यवृत्तिरिति न तस्यैकत्वविशिष्टेऽन्वयसंभव इत्यपि कश्चित् ॥

**व्युत्पत्तिसंकोचस्येति** । उक्तवाक्यात्प्रथमतो जायमानस्य सामान्यतः कार्यकारणभावज्ञानस्य व्युत्पत्तेरंशतो भ्रमत्वकल्पनस्येत्यर्थः । यद्वा आपाततो जायमाने प्राथमिकज्ञाने भ्रमत्वग्रहे तत्परत्वासंभवेन यद्यत्पदार्थपदार्थतावच्छेदकयोरन्वयः प्रामाणिकः तत्तद्भेदकूटविशेषितपदघटितवाक्यार्थे तात्पर्यस्य वक्तव्यतया तद्ग्रहाज्जायमानायाद्वितीयग्रहरूपव्युत्पत्तेः प्राथमिकज्ञानविषयत्वन्यूनवृत्तिविषयताकत्वस्येत्यर्थः । अथव्रीह्यादिपदभेदस्य व्रीहित्वादिपदार्थतावच्छेदकभेदस्य वोपादाने निरुक्तकार्यकारणभावे कार्यतावच्छेदकविशेष्यत्वसंबन्धे व्रीह्यादिपदाप्रयोज्यत्वस्य व्रीहित्वाद्यवृत्तित्वस्य वा विशेषणत्वे मुख्यविशेष्यताभिन्नस्वव्रीह्यादिपदाप्रयोज्यत्वोभयाभाववद्विषयत्वस्य कारणतावच्छेदकसंबन्धत्वे वा पर्यवसानं तथासति नित्योव्रीहिरित्यपि स्यात्तच्च सम्पन्नोव्रीहिरित्यादिवाक्यघटकव्रीह्यादिपदस्यैव तत्तद्व्यक्तित्वेन तत्र प्रवेश्यत्वान्न दोष इति वाच्यम् । तथापि नित्यः सम्पन्नो व्रीहिरिति वाक्यस्य प्रामाण्यापत्तेः तत्र व्रीहित्वे एकत्वान्वयानुरोधेन तद्व्रीहिपदाप्रयोज्यत्वादेर्विशेष्यत्वादौ विशेषणीयतया व्रीहित्वे एकत्वस्येव नित्यपदार्थस्याप्यन्वयसंभवेनायोग्यताया अभावादितिचेदुच्यते । उक्तवाक्याद्धि पदवृत्तिज्ञानीयमुख्यविशेष्यताप्रयोज्यविशेष्यतावति पदार्थे तादृशविषयतावदनुयोगिकभासमानसंसर्गप्रतियोगित्वं पदवृत्तिज्ञानीयधर्मितावच्छेदकताप्रयोज्यविषयतावद्रूपपदार्थतावच्छेदकनिष्ठानुयोगिताकसंसर्गप्रतियोगित्वाभावश्च न बोधयितुं शक्यः । पदार्थतावच्छेदके संसर्गभानाभानयोर्व्याघातादिति पदवृत्तिज्ञानीयमुख्यविशेष्यताप्रयोज्यप्रकारतानिरूपितसंसर्गतानिरूपितविशेष्यत्वे तादृशविशेष्यताप्रयोज्यत्वस्य पदवृत्तिज्ञानीयधर्मितावच्छेदकताप्रयोज्यत्वाभावस्य च बोधे उक्तवाक्यस्य तात्पर्यमङ्गीकरणीयम् । अतएव यत्र समवायादेः पदार्थतावच्छेदकतावच्छेदकताघटकसम्बन्धत्वं तत्र

पदार्थे पदार्थतावच्छेदकानुयोगिकसमवायरूपसंवन्धप्रतियोगित्वस्य समवायस्यैकत्वेन प्रतिषेद्धुमशक्यतया पदार्थतावच्छेदके
पदार्थान्तरान्वयप्रसङ्ग इत्यपि निरस्तम्। एवं च सङ्कोचे क्रियमाणे वाक्यार्थज्ञानस्य व्युत्पत्तिरूपतापक्षे तादृशविशेष्यत्वे स-
म्पन्नो व्रीहिरित्यादिवाक्यघटकस्वाद्यर्थैकत्वनिष्ठप्रकारतानिरूपितव्रीह्यादिपदार्थतावच्छेदकताप्रयोज्यविशेष्यत्वादिभेदकूटवत्ववृत्ति-
ज्ञानीयधर्मितावच्छेदकताप्रयोज्यत्वोभयाभावात्मकतादृशाप्रयोज्यत्वस्य वाक्यार्थघटकत्वं पर्यवस्यतीति न नित्यः सम्पन्नो-
व्रीहिरित्यस्य प्रसङ्गः। उक्तवाक्यार्थाक्षिप्तकार्यकारणभावज्ञानस्य व्युत्पत्तिरूपत्वपक्षे चोक्तकार्यकारणभावघटकमुख्यविशेष्यत्व-
स्थाने मुख्यविशेष्यत्वभिन्नत्वनिरुक्तवाक्यघटकस्वप्रयोज्यैकत्वनिष्ठप्रकारतानिरूपितव्रीहित्वनिष्ठविशेष्यताप्रयोजकविषयताभिन्न-
त्वोभयाभाववद्विषयत्वस्य प्रवेशो यद्यपि न संभवति समानाकारकज्ञानीयविषयतयोरैक्येनोक्तदोषतादवस्थ्यात् तथापि
कार्यतावच्छेदकसंवन्धघटकविषयतायां तादृशवाक्यघटकस्वादिप्रयोज्यैकत्वादिनिष्ठप्रकारताकविषयताभेदकूटवत्त्वस्य विशेषणत्वं
संभवत्येवेति नोक्तदोषप्रसङ्गः। व्रीहित्वे नित्यान्वयबोधस्यापाद्यत्वेनाभिमतस्योक्तसंवन्धस्य प्रसिद्धतया कारणीभूतो-
पस्थितेर्मुख्यविशेष्यतयाऽभावात् व्रीहित्वविशेष्यकैकत्वप्रकारकबोधस्योक्तसंबन्धस्याप्रसिद्धत्वेन तंप्रत्युक्तकारणविरहस्याकिंचि-
त्करत्वेन तत्संभवाच्च। अथोक्तरूपेण कार्यकारणभावो न प्रामाणिकः पदवृत्तिज्ञानाद्द्रव्यत्वादिना घटोपस्थितौ यथाकथंचित्
घटत्वोपस्थितौ च विनिगमकाभावेन घटत्वेन द्रव्यत्वेन च घटे पदार्थान्तरान्वयप्रसङ्गात् एवं निराकाङ्क्षपदाद्घटोपस्थितौ आका-
ङ्क्षाज्ञाने च सति शाब्दबोधप्रसङ्गात्। विशिष्यपदनिवेशे च पर्यायस्थले व्यतिरेकव्यभिचारप्रसङ्गात् पदार्थैकदेशे पदार्थान्तरान्व-
यप्रसङ्गवारणाय तत्तत्पदजन्यतत्तद्धर्मावच्छिन्नविषयकोपस्थित्यव्यवहितोत्तरवृत्तिज्ञानीयसांसर्गिकविषयत्वाप्रयोज्यसंसर्गतानिरूपि-
ततद्धर्मावच्छिन्नविषयताकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्तद्धर्मप्रकारतानिरूपित तत्तन्निष्ठमुख्यविशेष्यताकोपस्थितित्वेन कार्यका-
रणभावस्य वक्तव्यत्वात् तथासति न कथंचिदपि व्रीहित्वे पदार्थान्वयसंभवः नचोपस्थितिशाब्दबुद्ध्योस्तत्तद्धर्मावच्छिन्नविषयकत्व-
पदविशेषवृत्तिज्ञानजन्यत्वघटितधर्माभ्यां कार्यकारणभावस्य सिद्धान्तितत्वेन तत एवोक्तदोषवारणसंभवात् पदार्थतावच्छे-
दके पदार्थान्तरान्वयप्रसङ्गवारणायोक्तसामान्यकार्यकारणभाव एवाभ्युपेय इति वाच्यम्। उपस्थितिशाब्दबुद्ध्योरुक्तरीत्या कार्य-
कारणभावस्य निर्वचने फलद्वयसंपत्तौ कार्यकारणभावद्वयाङ्गीकारस्य निर्युक्तिकत्वात् आकाङ्क्षावहिर्भूतपदान्मुख्यविशेष्यतया
पदार्थतावच्छेदकोपस्थितावाकाङ्क्षाघटकपदाद्वा येन रूपेण पदार्थतावच्छेदकस्य शाब्दबुद्धौ प्रवेशः तद्धर्मविशिष्टावच्छिन्नो-
पस्थितौ रूपान्तरेण च मुख्यविशेष्यतयोपस्थितौ च तत्र पदार्थान्तरान्वयप्रसङ्गाच्च। नच व्रीहित्वनिष्ठविशेष्यताया निरवच्छिन्न-
त्वेन तन्निरूपकशाब्दबुद्धेः कार्यतावच्छेदकानाक्रान्तत्वेन तंप्रत्युक्तकारणविरहोऽकिंचित्कर इति वाच्यम्। एवमेव नित्यो
व्रीहिरित्यत्रापि व्रीहित्वे नित्यान्वयबुद्धिप्रसङ्गात् प्रसञ्जकसंवलनासंवलनयोरुभयत्रापि तुल्यत्वात् इतिचेदुच्यते। उपस्थिति-
कारणतया हि पदार्थभानं पदार्थद्वयसंसर्गभानं चाकाङ्क्षाज्ञानकारणतया निर्वाह्यमिति पदार्थः पदार्थेनेत्यादिनियमान्यथानु-
पपत्त्या पदयोः समभिव्याहारज्ञानं पदार्थयोरेवान्वयबुद्धौ कारणमिति। यत्तत्त्वेनानुगतेन पदपदार्थौ विषयीकृत्य तत्तत्पदयोः
समभिव्याहारज्ञानं तत्तत्पदार्थयोरेवान्वयबुद्धौ कारणमिति वा सामान्यत आकाङ्क्षाज्ञानकार्यकारणभावविज्ञानरूपैव प्रथमतो-
व्युत्पत्तिर्जायतेऽनन्तरं सम्पन्नो व्रीहिरित्यादिवाक्यानां प्रामाणिकत्व एकदेशान्वयतात्पर्ये चावधृते यत्र यत्र पदार्थतावच्छे-
दके पदार्थान्वयभानं प्रामाणिकं तत्र तादृशान्वयबुद्धावाकाङ्क्षाज्ञानस्य कारणत्वं नान्यत्रेति सङ्कोच्यते व्युत्पत्तिरिति नापत्त्यनु-
पपत्ती उपस्थितेराकाङ्क्षाज्ञानकारणतावच्छेदकसंसर्गघटकत्वमाकाङ्क्षाज्ञानसहकारित्वं वेत्यन्यदेतत्। तथाहि स्वघटकव्रीहि-
पदजन्यव्रीहित्वावच्छिन्नोपस्थितिमत्वस्वघटकस्वपदजन्यैकत्वत्वावच्छिन्नोपस्थितिमत्वोभयसंबन्धेन व्रीहिरित्याकारकानुपूर्वी-
ज्ञानविशिष्टायामेकत्वप्रकारतानिरूपितव्रीहित्वनिष्ठनिरवच्छिन्नविशेष्यत्वावच्छिन्नावच्छेदकताकविशेष्यतानिरूपितसम्पन्नत्वाव-
च्छिन्नप्रकारताकशाब्दबुद्धौ व्रीहिरित्याकारकानुपूर्वीज्ञानस्य स्वघटकसंपन्नत्वावच्छिन्नोपस्थितिमत्वसम्बन्धेनोक्तशाब्द-
बुद्धौ संपन्न इत्याकारकानुपूर्वीज्ञानस्य च कारणत्वं नित्यो व्रीहिरित्यस्याप्तसाधारणापरिच्छिन्नदेशकालभूरिप्रयोगाविषयत्वेनान-
वधृतप्रमाणभावतया व्रीहित्वे नित्यान्वये बीजाभावेन तत्र तात्पर्यस्यानवधृतत्वादुक्ताकाङ्क्षाज्ञानस्य नित्यनिष्ठप्रकारतानि-
रूपितव्रीहित्वनिष्ठविशेष्यत्वघटितधर्मावच्छिन्नं प्रति च न कारणत्वमिति प्रथमज्ञानस्यांशतो भ्रमत्वात्तदंशपरिहारेण
जायमानस्य द्वितीयज्ञानस्य न्यूनविषयकत्वाद्भवति संकुचितत्वमिति। कश्चित्तूक्तनियमान्यथानुपपत्त्या तद्धर्मिकेतरान्वयबुद्धौ
तत्तद्धर्मिकवृत्तिज्ञानजन्यतदुपस्थित्यभावविशिष्टतत्तद्धर्मावच्छिन्नधर्मिकवृत्तिज्ञानजन्यतत्तद्धर्मावच्छिन्नविषयकोपस्थितित्वेन प्रति-
बन्धकत्वमाक्षिप्यते। सति च नियमसङ्कोचे तत्तद्धर्मावच्छिन्नविषयकयद्यदुपस्थितिकाले तत्तद्धर्मिकेतरान्वयबोधः प्रामाणिक-
स्तत्तद्व्यक्तेरुत्तेजकत्वं च लभ्यते। तथाचैकदेशान्वयस्य नापत्त्यनुपपत्ती। अत्र च विशिष्यपदनिरूपितत्वं प्रथमवृ-
त्तिपदार्थे प्रवेशनीयं तेन वाक्यवहिर्भूतपदात्तद्धर्मस्य मुख्यविशेष्यतयोपस्थितावपि नैकदेशान्वयप्रसङ्ग इत्याह तच्चिन्त्यम्।
ननु संपन्नो व्रीहिरिति वाक्यस्यावधारितेन प्रामाण्येन सामान्यतस्सद्भूतेर्थे तात्पर्यमुन्नीयते तच्च व्रीहौ पर्याप्तिसंबन्धेनै-
कत्वान्वये बाधे गृहीते व्रीहित्वे च तदन्वये अनन्यगतिकत्वाभावेन दुष्टस्य पदार्थ इत्यादिनियमसङ्कोचस्य प्रसङ्गोऽर्थान्तरस्य
प्रकृतपदानभिधेयत्वेन विशिष्यतात्पर्यनिर्णयाभावादलक्ष्यत्वेन च प्रकृतपदार्थत्वाभावे च सिद्धे स्वाश्रयव्रीहित्ववत्वसंबन्धे-

**चस्यावश्यकत्वात् । यदि स्वाश्रयप्रकृत्यर्थतावच्छेदकवत्त्वसंबन्धेन प्रकृत्यर्थ एवैकत्वान्वयः, व्रीहित्व-जातेः स्वरूपत एव व्रीह्यादिपदशक्यतावच्छेदकतयान्वयितावच्छेदकरूपेणानुपस्थितेस्तत्र पदार्था-न्तरस्यान्वयानुपपत्तेरिति मन्यते, तदा प्रकृतेऽपीदृश्येव गतिः । यत्तु संपन्नो व्रीहिरित्यादावे-कवचनोपस्थितानि नानैकत्वानि प्रत्येकं नानाव्रीहिष्वन्वीयन्ते इत्युक्त्यैव सामञ्जस्ये जातावेकत्वभा-**

---

नैकत्वविशिष्टव्रीहिघटितार्थे पर्यवस्यतीति पदार्थ इत्यादि नियमसङ्कोचो नावश्यकः । नच विभक्त्यर्थसंख्यायाः प्रकृत्यर्थे पर्याप्तिसंबन्धेनैवान्वय इति गृहीतस्यान्वयव्यतिरेकाभ्यां नियमस्यात्रापि पक्षे सङ्कोचप्रसङ्गो दोष इतिवाच्यम् । वृत्तिज्ञानीयविषयत्वाप्रयोज्यसंसर्गतानिरूपितस्य स्वतन्त्रभासमाननिष्ठप्रकारत्वस्यापि विशेष्यत्वस्य चावच्छिन्नत्वनियमात्तत्संकोचदोषस्यापि तत्र प्रसङ्गान्नियमैकसंकोचदूषितोक्तपक्षस्य ततोऽभ्यर्हितत्वात् । नच परमःसुन्दर इत्यादौ परमपदार्थान्वयस्य सौन्दर्ये सखण्डपदार्थे विवक्षितत्वेन पदार्थैकदेशे सौन्दर्ये परमपदार्थान्वयपक्षे नियमसङ्कोचस्य परमपदलक्ष्यार्थस्य स्वाश्रयसौन्दर्यवत्त्वसंबन्धेन परमत्वविशिष्टस्य सुन्दरे अन्वयपक्षे च लक्षणाप्रसङ्गस्यैकैकस्यैव दोषस्य सद्भावादनध्यवसाय इति वाच्यम् । एकदेशानन्वयनियमसंकोचप्रसङ्गदोषस्य तात्पर्यग्रहपुरःस्फूर्तिकतया लक्ष्यार्थे एव तात्पर्यस्य गृहीतत्वाल्लक्षणायाः समूलत्वेनादोषत्वात् । नच विवक्षितैकत्वैकवचनघटिते महान् धान्यराशिरित्यादिवाक्ये का गतिः सखण्डवस्तुनि पदार्थतावच्छेदके धान्यराशित्वे एकत्वान्वये पदार्थ इत्यादिनियमसंकोचो दोषः स्वाश्रयपदार्थतावच्छेदकवत्त्वसंबन्धेन पदार्थ एवान्वये च पर्याप्तिसंबन्धेनान्वयनियमसंकोचो दोष इति पक्षयोरप्येकैकदोषस्यैव सद्भावेनानध्यवसायापत्तिरिति वाच्यम्, संपन्नो व्रीहिरित्यत्रोक्तयुक्त्या पर्याप्तिसंबन्धेनान्वयनियमस्यांशतो भ्रमविषयत्वे सिद्धेऽन्यांशेऽपि तस्यैव तथात्वौचित्यात्क्लृप्तानुसारित्वात्कल्पनायाः पदार्थ इत्यादिनियमस्य भ्रमविषयतायाः कुत्राप्यक्लृप्तत्वेन तस्य तथात्वस्य कल्पयितुमयुक्तत्वादित्याशयेनाह । **यदिचेत्यादि** । यदिचेति विवादप्रदर्शनाय । तथाह्याकाशपदात्स्वरूपत उपस्थितस्याकाशस्य शाब्दबोधविषयत्वेऽन्वयितावच्छेदकरूपेणान्वय्युपस्थितेरनपेक्षितत्वाद्व्रीहित्वएकत्वान्वये नियमद्वयसंकोचदोषस्यानवकाशात्तस्य व्रीहित्व एवान्वयः । शब्दाश्रयत्वादिनोपस्थितस्यैवाकाशस्य भानमितिपक्षे च व्रीहित्वजातावन्वये दोषद्वयप्रसंङ्गाद्व्रीहावेव तस्यान्वयोऽङ्गीकार्य इति ।

**अन्वयितावच्छेदकरूपेणानुपस्थितेरिति** । अथान्वयितायाः प्रकृताया अवच्छेदकत्वं विवक्षितमन्वयितामात्रस्य वा । नाद्यः । तथाह्यन्वयितायाःसंबन्धित्वरूपाया अवच्छेदकत्वं न तावदनतिप्रसक्तत्वनियतं प्रतियोगित्वादीनामिव संभवति । नीलो घट इत्यादौ नीलान्वयित्वविरहिणि पीतघटे वर्तमानस्य घटत्वस्य तत्त्वानुपपत्तेः घटविशेषत्वस्य तत्त्वापत्तेश्च । नचानतिरिक्तवृत्तित्वोदासीनं सर्वत्र तद्व्यवहारापत्तेरिति भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वात्मकप्रकारत्वविशेष्यत्वयोरन्वयित्वरूपतया तदवच्छेदकत्वस्यातिरिक्तप्रकारत्वविशेष्यत्वावच्छेदकत्वनियतस्य स्वरूपसंबन्धात्मकावच्छेदकत्वस्य वा तत्त्वं वाच्यम् । एवं च व्रीहित्वत्वावच्छिन्नेऽन्वयस्वीकारएव व्रीहित्वत्वस्यान्वयितावच्छेदकत्वं नच तत्स्वीक्रियत इति प्रकृतान्वयितावच्छेदकाप्रसिद्धेः । न द्वितीयः अन्वयितावच्छेदकेत्युक्तिवैफल्यादिति चेन्न शाब्दबोधविशेष्यत्वविशेषस्यावच्छिन्नत्वनियमेनैकत्वस्य व्रीहित्वेन्वयाङ्गीकारे व्रीहित्वत्वेनैव रूपेण सोऽङ्गीकरणीयो नच तत्संभवति व्रीहित्वत्वेनोपस्थितेस्तत्रापेक्षणीयतया तदभावाद्व्रीहिपदस्य स्वरूपतो व्रीहित्वविशिष्ट एव शक्तेः । नच लक्षणया तत्संभव उक्तलक्षणाया निरूढत्वाभावेनोक्तप्रयोगस्य स्वारसिकत्वानुपपत्तेरित्याशयादन्वयितावच्छेदकरूपेणेत्यस्यान्वयितावच्छेदकतया संभाव्यमानेन रूपेणेत्यर्थकत्वादिति । अथोक्तनियमनिर्वाहकं वक्तव्यमिति चेदत्र केचित् विशेष्यतात्वविशेषसम्बन्धेन प्रकारतात्वविशेषसंबन्धेन च शाब्दबुद्धिं प्रति स्वप्रकारावच्छिन्नत्वसंबन्धेनोपस्थितेः कारणत्वादुक्तनियमनिर्वाह इत्याहुः । वस्तुतस्तु शाब्दबोधविषयताद्वयी वृत्तिज्ञानीयविषयताप्रयोज्याकाङ्क्षाप्रयोज्या च । आद्याया नावच्छिन्नत्वनियमोऽन्त्यायास्त्वपरतन्त्रभासमानगतायास्तथात्वनियमस्स चाकाङ्क्षाज्ञानकार्यकारणभावेनैव निर्वाह्यः आकाङ्क्षाज्ञानमात्रस्य हि तत्तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्तत्संबन्धावच्छिन्नतत्तद्धर्मावच्छिन्नप्रकारताकशाब्दबोधं प्रत्येव कारणत्वं नहि कस्याप्यनवच्छिन्नविशेष्यताकबोधं प्रति । तथाच निर्विशेषस्य सामान्यस्याभावेन शाब्दविशेषसामग्रीं विना सामान्यसामग्रीतः कार्योत्पत्त्यसंभवेन विशेषसामग्र्या अपेक्षणीयतया तस्याश्च सर्वस्या अवच्छिन्नविशेष्यताकबोधकारणघटितत्वादनवच्छिन्नविशेष्यताकबोधस्यालीकत्वान्नियमनिर्वाह इति । प्रकृतेपि वेदाः प्रमाणमित्यादावपि तादृश्येव गतिः यथा स्वाश्रयव्रीहित्ववत्त्वसंबन्धेन व्रीहावेकत्वान्वयेन संपन्नो व्रीहिरित्यत्र प्रामाण्योपपत्तिरूपा गतिः तथा स्वाश्रयप्रमाणत्ववत्त्वसंबन्धेन प्रमाण एकत्वान्वयेन प्रामाण्योपपत्तिरूपैव गतिः । एकत्वस्यैकमात्रवृत्तिसंख्यात्वेन निरुक्तसम्पन्नत्वन्यूनवृत्तितयातदनुयोगितावच्छेदकत्वासंभवे जातावेकत्वभानाभ्युपगमोपष्टम्भकतां मन्यमानस्यैतद्देशविद्यमानव्रीहित्वसहितैकत्वजातीयस्यान्यूनानतिप्रसक्ततया तादृशावच्छेदकत्वमुपपाद्य जातावेकत्वभानस्य निरर्थकतां वदतः पक्षं दूषयितुमुपन्यस्यति यत्त्विति ।

**एकवचनोपस्थितानीति** । एकवचनस्यैकत्वत्वेनैकत्वशक्ततया तेन रूपेणानेकेषु एकत्वेषु शक्तिग्रह एकत्वानामुप-

**नोपगमो निरर्थक इति । तदसत् । यतः स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपंसजातीय-**

स्थितिसंभवात्तदभिप्रायेणेदम् । अथैकवचनोपस्थितानि नानैकत्वानीति नानैकत्वेषूपस्थितत्वोक्तिर्निरर्थिका शाब्दबुद्धावपूर्व-व्यक्तिभानायोपस्थितिशाब्दबुद्ध्योः समानप्रकारकत्वेनैव कार्यकारणभावस्य दीधितिकाराद्यनुमतत्वेनैकत्वत्वेन यत्किंचिदेक-त्वोपस्थितावपि शाब्दबुद्धौ योग्यानां नानैकत्वानां भानसंभवात् । स्मृत्यनुभवयोस्समानविषयकत्वेन कार्यकारणभावात् शाब्दबोधविषयव्रीहिगतस्य यदेकत्वस्य न प्रागनुभवस्तस्य नोपस्थितत्वसंभव इति सामान्यलक्षणानङ्गीकारपक्षे व्रीहिगतैक-त्वानामनुपस्थितत्वपरस्योक्तग्रन्थस्य नह्युक्तिरपि संभवति । नच शाब्दबोधविषयसकलव्रीहिष्वेकत्वभानं निष्प्रयोजनत्वान्न विवक्षितमिति वाच्यम् । एकोद्वाविति प्रयोगवारणाय भासमानसंख्यानुयोगितावच्छेदकतयैव संख्याभानस्य स्वीकरणीयतयो-क्तग्रन्थस्यैकत्वजातीयेषु सम्पन्नत्वानुयोगितावच्छेदकत्वोपादानपरत्वेन तथा भानस्यावश्योपेयत्वात् अन्यथा प्रत्येकं नानाव्री-हिष्वित्याद्युक्तिवैफल्यात् यत्किंचिद्व्रीहिव्यक्तौ यत्किंचिदेकत्वान्वयेनापि तदंशे प्रामाण्यस्याक्षतेरिति चेत्सत्यम् सामान्य-लक्षणाभ्युपगमपक्षीय एवोक्तग्रन्थः । तत्पक्षे च समानविषयतयोपस्थितिशाब्दबुद्ध्योः कार्यकारणभाव इति सकलैकत्वस्यो-पस्थितत्वापेक्षास्तीति नासङ्गतिः । वस्तुतस्तु शाब्दबोधविषयेष्वेकत्वेषु प्रचुरस्योपस्थिततया छत्रिन्यायेन भवति तथोक्तिः सङ्गता तथाच शाब्दबोधविषयसकलैकत्वानामनुपस्थितत्वालाभेन तत्प्रयोजनान्वेषणाया अपि नोन्मेषः धर्मधर्मिणोर्द्वयो-र्नानात्वेनोक्तेः सकलतादृशव्रीहिष्वेकत्वान्वयलाभः उपस्थितमित्युक्तौ तत्रापि जात्येकत्वविवक्षापत्तेः उपस्थितानीत्यादिबहु-वचनोक्तिः प्रत्येकमित्यनुक्तौ नानैकत्वानामेकैकव्रीह्यन्वयलाभः स्वरसतः स्यादिति तदुपात्तम् ।

**स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूपमिति** । अथात्र स्वपदेन कस्य प्रतीतिरभिमता न तावदेकत्वस्य तस्या व्युत्पत्तिसिद्धत्वेपि तत्तद्ग्रन्थपर्यालोचनया प्रकृत्यर्थस्यैव साजात्यप्रतियोगित्वप्रतिपत्तेः तद्विरुद्धत्वात् नापि प्रकृत्यर्थस्यैव स्वपदस्य स्वप्रयोजकबुद्धिविषयत्वे सति साक्षात्परम्परया वा यः स्वार्थस्य विशेष्यो यश्च समभिव्याहृतक्रिया-कारकपदार्थस्तदुभयत्र शक्तेः उक्तस्वपदघटितवाक्यजबुद्धौ प्रकृत्यर्थो हि न स्वार्थघटितार्थस्य विशेष्यः तद्बोधकपदाभावात् सजातीयद्वितीयराहित्यस्यैव विशेष्यतया भातत्वाच्च नह्यध्याहृतक्रियापदार्थकारकरूपोपि च सः । भवतीत्यादिक्रियापदानामेवाध्या-हर्तव्यतयोक्तराहित्यस्यैव तत्कारकतया प्रतीतेः । एवमत्र स्वपदेन हि प्रकृत्यर्थग्रहणे स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टेत्या-दावपि स्वपदेन तस्यैव ग्राह्यतया तस्य शब्दानात्मकत्वेन तत्समभिव्याहृतत्वाप्रसिद्धिश्च नच स्वसमभिव्याहृतेत्यादिग्रन्थदर्श-नेनात्र स्वपदेनैकवचनग्रहणं संभवति शक्त्युपाधिविरहात् साजात्यस्य प्रतियोग्यनुयोग्युभयवृत्तित्वनियमेनैकवचनावृत्तेर्वक्ष्य-माणधर्मस्य साजात्यरूपतानुपपत्तेश्चेति चेन्न प्रकृत्यर्थे वर्तमानेमित्येतावदध्याहृत्य प्रकृत्यर्थस्य स्वपदार्थत्वोपपादनसम्भवात् तस्य वर्तमानत्वरूपक्रियाकारकत्वात् । यत्तु संबन्धबोधकस्वसामानाधिकरण्यादिपदघटकस्वपदेन संबन्धिबोधनिर्वाहाय शक्त्यु-पाध्यन्तरस्य वक्तव्यतया तथैवात्रापि तद्विशेषोक्त्या निर्वाहइति तदसत् अन्वयपदस्य कृदन्ततया वैशिष्ट्यपदस्य च कृदन्त-निष्पन्नतया तद्घटकक्रियापदार्थकारकत्वादेव षष्ठ्यन्तप्रतियोगिबोधकपदार्थस्य स्वपदार्थतासम्भवात् । स्वसमभिव्याहृतेत्यादौ स्वपदार्थस्य प्रकृत्यर्थसंबन्धिनस्तादात्म्येन समभिव्याहृतपदार्थेन सहान्वयः तेन स्वपदार्थस्य शब्दरूपत्वेऽपि नक्षतिः स्वपदं संपातायातमितिकश्चित् समभिव्याहारश्च संबन्धिनमपेक्षमाणः प्रकृतिपदं प्रकृतिपदार्थश्च तथाभूतएकवचनं तत्वेन कल्पयतीति न काप्यनुपपत्तिः स्वपदमात्मीयपरं तथाच स्वबोधकशब्दलाभइत्यन्ये ।

अथ सजातीयनिष्ठभेदप्रतियोगित्वाभावस्यैव लाघवात्सजातीयद्वितीयराहित्यरूपत्वमुचितं नचोभयभेदप्रतियोगित्वमादा यासंभव इतिवाच्यम् भेदप्रतियोगितानवच्छेदकत्वविवक्षायामप्येकत्वद्वयगगनाद्युभयभेदमादायासंभवतादवस्थ्यात् । नच प्रति-योगितावच्छेदकतापर्याप्त्यनधिकरणत्वविवक्षयात्र नदोष इतिवाच्यम् पूर्वक्षणावच्छिन्नैकत्ववद्भेदस्यापरक्षणावच्छेदेनैकत्व-व्यक्तिमद्भेदस्य चोत्पत्तिकालावच्छेदेन स्वसजातीयनिष्ठत्वेनासम्भववारणाय निरवच्छिन्नविशेषणतयावृत्तित्वस्य प्रतियोग्यवृत्ति-त्वस्यवा भेदविशेषणत्वप्रसक्तौ लाघवात्प्रतियोग्यवृत्तित्वस्यैव हि तत्वमुचितं तावतैवोभयभेदस्यापि वारणेन तद्वारकान्तरानुपा-दानात् नच प्रतियोग्यवृत्तित्वस्याप्युभयाभावादिकमादाय दोषवारणाय परिष्करणीयतया नलाघवमिति वाच्यं निरवच्छिन्नत्व-स्याप्येवमेव परिष्करणीयत्वात् पर्याप्त्यंशविवक्षाया आधिक्यादिति । यत्तु प्रतियोगिताया अव्याप्यवृत्तित्वे सजातीयद्वितीयकेऽपि सामान्यधर्मावच्छेदेन तादृशप्रतियोगित्वाभावसत्वादापत्तिरिति तन्न एकत्वत्वावच्छेदेनतादृशावच्छेदकतापर्याप्त्यनधिकरणत्वस्य सजातीयद्वितीयवृत्त्येकत्वे सत्वेनापत्तेस्तुल्यत्वात् निरवच्छिन्नविशेषणतयोभयावृत्तिधर्मावच्छेदेनवा तादृशाभाववत्वस्य विवक्ष-या धारणस्यापि तुल्यत्वादिति चेदोमिति ब्रूमः अतएवैकवचनतुल्यैकपदशक्तिविचारे निरुक्तप्रतियोगित्वाभावस्यैव सजातीयद्वि-तीयराहित्यरूपतोक्ता इहतु तावद्दूरानुधावनं द्व्येकयोर्द्विवचनैकवचनइतिशक्तिग्राहकशास्त्रतः संख्यारूपद्वित्वसाहचर्यात्संख्यारूपैक-त्वएव शक्तिप्रतीतेस्तस्यास्सर्वथा बाधकल्पनापेक्षयांऽशतो बाधकल्पनस्य न्याय्यतया तदर्थमिति गृहाण । एकत्वमात्रमविशेषि-तैकत्वत्वावच्छिन्नमर्थतः पदार्थत्वेन गृहीतैकत्वव्याप्तिकत्वेन लिङ्गभूतात् अर्थान्तरप्रतिपत्त्यर्थमवश्यप्रयोक्तव्यपदार्थात् लाभात्

**द्वितीयरहितत्वमेकवचनार्थः न त्वेकत्वमात्रम् । तस्य वस्तुमात्रसाधारण्येनार्थत एव लाभात् । अनुपयोगाच्च । अतएव पशुना यजेत इत्यादौ पशुनिष्ठताहशैकत्वस्य विवक्षितत्वाद् अनेकपशुकरणकयागान्नादृष्टसिद्धिः । साजात्यं स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण ।**

---

ज्ञानात् तथाच प्रत्ययस्य प्रकृतिंविना प्रयोगानर्हत्वेन प्रकृतिपदस्यावश्यप्रयोक्तव्यतयोक्तयुक्त्या विलम्बेनापि ततस्तदर्थप्रत्यये संभवति तत्र शक्तिकल्पनमनुचितमतएवापूर्वादौ लिङादीनां शक्तिर्निराकृता सजातीयद्वितीयराहित्येन तु न प्रकृत्यर्थो नियत इति तस्यानन्यलभ्यतयैकवचनार्थतासंभव इति भावः । **अनुपयोगादिति** । अनेकव्यावृत्तिरेकत्वप्रतिपत्तेः फलं तच्चैकत्वमात्रप्रतिपत्तेर्न भवतीति विशेषस्य तदर्थतेतिभावः । **अतएव** विशिष्टैकत्वस्यैकवचनार्थत्वादेव । **पशुकरणकेति** । गौणमत्र करणत्वं तत्र कर्मणएव करणसंज्ञाविधानादेवं कर्मत्वमपि गौणमेव संप्रदानस्यकर्मसंज्ञानुशासनात् तथाचैकपशुनिष्ठरुद्रनिरूपितस्वत्वविषयको मन्त्रपूर्वकस्त्याग इष्टसाधनमितिवाक्यार्थस्तत्रानेकपशुकरणकयागस्यानन्तर्भावेणेष्टसाधनत्वेनादृष्टसाधनत्वाक्षेपस्यासंभवेनादृष्टसाधनतया अप्रामाणिकतया नततोऽदृष्टसिद्धिरिति भावः ।

**स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेणेति** । अथ समभिव्याहृतयत्किंचित्पदार्थसंसर्गित्वं विवक्षितं । यावत्ताहशपदार्थसंसर्गित्वं वा संसर्गोपि यःकश्चिदुपादेयः प्रकृतशाब्दबोधविषयो वा सोऽपि साक्षादेव प्रवेश्यः साक्षात्परंपरासाधारणोवा । तत्र नतावदाद्यः संभवदुक्तिकः नीलपीतोभयघटवत्तत्र नीलो घटोस्तीत्यस्य भोजनकर्तृशयनकर्तृब्राह्मणद्वयवत्तत्र ब्राह्मणोभुङ्क्ते इत्यस्य चानुपपत्तेः समभिव्याहृतपदार्थतद्देशवृत्तित्वसंसर्गित्वस्य पीतघटे शयनकर्तृब्राह्मणेच सत्त्वात् । नापि द्वितीयः समभिव्याहृतपदार्थनीलसंसर्गित्वताहशभोजनकर्तृत्वसंसर्गित्वयोः पीतघटशयनकर्तृब्राह्मणयोरभावेनोक्तदोषाप्रसक्तावप्यस्य संसर्गावलम्बिपक्षसत्वसापेक्षत्वेन तदसत्वोपपादनेन सुनिरासत्वात् तेषु न प्रथमः नीलादेरपि कालिकादिसंसर्गस्य पीतघटादौ सत्वात् । नापि द्वितीयः कालिकेननीलरूपवत्तत्र नीलोघटइत्यत्र कालिकस्यापि प्रकृतशाब्दबोधविषयत्वात् समभिव्याहृततत्तत्पदार्थनिष्ठविषयतानिरूपितशाब्दबोधीयसंसर्गत्वस्य विवक्षणेच निरूपितत्वस्य साक्षात्प्रवेशे साक्षात्संसर्गकल्पादरः स्यात्तत्र नीलघटेऽपि यावत्पदान्तर्गतेदमाद्यर्थनिष्ठविषयतासाक्षान्निरूपितसंसर्गतावन्निरूपितत्वानुयोगित्वाभावेन सजातीयाप्रसिद्धिः । परम्परासाधारणनिरूपितत्वप्रवेशेच कालिकस्याप्युक्तस्थले संग्रहप्रसङ्गात् । पीतघटवत्तत्र नीलो घट इत्यत्र पीतघटसंसर्गताया अपि नीलविषयतया परम्परानिरूपितत्वात् फलं भुङ्क्ते इत्यादौ फले भोजनसंसर्गित्वोपपत्त्यर्थं प्रतियोगित्वानुयोगित्वान्यतररूपस्यैव संसर्गित्वस्य प्रवेश्यत्वात् पीतघटस्यापि यावत्पदार्थसंसर्गित्वापत्त्या तदनुपपत्तिः स्यात् । एवमत्र ब्राह्मणो ब्राह्मणाय गां ददातीत्यत्र कर्तृभूतसंप्रदानीभूतब्राह्मणयोरेकत्वानुपपत्तिः समभिव्याहृतपदार्थदानादिक्रियया द्वयोरेव संबद्धत्वादिति चेदत्र केचित् एकवचनोपलक्षितमेकत्वमेकवचनार्थः । संबन्धश्च स्वप्रकृत्यर्थतावच्छेदकवत्वस्वविशिष्टसंसर्गतानिरूपकत्वोभयसंबन्धेन यत्स्वाधिकरणं तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वम् स्ववैशिष्ट्यं च स्वप्रयोज्यशाब्दबोधविषयत्वसामानाधिकरण्यस्वसमानाधिकरणप्रत्ययप्रयोज्यताहशविषयतासामानाधिकरण्यान्यतरसंबन्धेन । तथाचात्र नीलो घट इत्यत्रैतद्देशस्याधेयत्वं नीलघटनिष्ठमेव शाब्दबुद्धौ भासते ताहशाधेयत्वनिष्ठसंसर्गत्व एवच स्वसमानाधिकरणत्वप्रत्ययप्रयोज्यशाब्दविषयतासामानाधिकरण्यं नतु पीतघटनिष्ठाधेयत्वसंसर्गत्व इति न तत्रानुपपत्तिः एवं ब्राह्मणो भुङ्क्ते इत्यादौ भोजननिरूपितमेव कर्तृत्वं शाब्दबोधविषयो नतु शयनकर्तृत्वमिति तन्निष्ठसंसर्गताया नसंग्रहः प्रत्ययार्थनिष्ठत्वोपादाने च कर्तृत्वत्वेन तस्याप्याख्यातार्थतया तन्निष्ठसंसर्गताया अपि संग्रहः स्यादिति प्रत्ययप्रयोज्यशाब्दविषयतासामानाधिकरण्यमुपात्तम् द्वितीयादेरेकत्ववाचकत्वरक्षायै स्वप्रयोज्येत्यादिसंसर्गनिवेशः प्रथमाया एकत्ववाचकत्वोपपत्तये स्वसमानाधिकरणेत्यादिप्रवेशः सुप्तब्राह्मणेऽत्र ब्राह्मणो भुङ्क्ते इत्यत्र स्वघटितवाक्यघटकप्रत्ययप्रयोज्यशाब्दविषयत्वस्य शयनकर्तृत्वेपि सत्वेन स्वघटितवाक्यघटकत्वेनोपादानेऽनुपपत्तिः स्यादिति स्वसमानाधिकरणत्वेनोपादानं तत्वं च स्वप्रकृत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं ब्राह्मणो ब्राह्मणाय गां ददातीत्यत्र चतुर्थीसामानाधिकरण्यं न तिङः प्रथमार्थताच्च न संप्रदानत्वस्येति चतुर्थीप्रथमयोर्नैकत्ववाचकत्वानुपपत्तिः संसर्गतानिरूपकत्वं च प्रतियोगित्वानुयोगित्वान्यतरात्मकं वाच्यम् तिङर्थभूतसंसर्गप्रतियोगित्वस्य द्वितीयाद्यर्थसंसर्गानुयोगित्वस्य चैकवचनप्रकृत्यर्थेऽसंभवात्तथाच सर्वत्रानुपपत्तिवारणाय स्वप्रकृत्यर्थतावच्छेदकवत्त्वोपादानं नच तात्पर्यभ्रमादिजन्यशाब्दबुद्धिविषयत्वस्यात्र ब्राह्मणोभुङ्क्ते इत्यादावपि शयनकर्तृत्वादौ संभवादनुपपत्तिरितिवाच्यम् । तात्पर्यभ्रमाद्यनधीनस्वस्य शाब्दबुद्धौ विशेषणीयत्वात् स्वप्रयोजकतात्पर्यीयस्य स्वप्रयोज्यबोधविषयत्वेन विषयत्वस्य वा विवक्षणीयत्वात् अथ तत्तत्पशुषु तत्तद्यागकरणत्वानां शाब्दबोधविषयतया तत्रानुपपत्तिरितिचेन्न । यत्र समभिव्याहृतपदार्थे एकस्मिन्प्रकृत्यर्थस्य द्वयोर्विवक्षितसंबन्धेन संबद्धार्हत्वं तत्रैकत्वविवक्षायामेकवचनविशिष्टत्वमेकत्वे स्वविशिष्टनिरूपकताविशिष्टान्यत्वसंबन्धेन वाच्यं स्ववैशिष्ट्यं च स्वप्रकृत्यर्थतावच्छेदकसामानाधिकरण्यस्वविशिष्टसंसर्गताकत्वोभयसंबन्धेन संसर्गतायां स्ववैशिष्ट्यं च पूर्वोक्तसंबन्धेनविशिष्टान्यत्वघटकवैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्वनिरूपितसंसर्गताविशिष्टसंसर्गतानिरूपकत्वसामानाधिकरण्योभयसंबन्धेन संसर्गतावैशिष्ट्यं च

स्वावच्छेदकावच्छिन्नत्वस्वनिरूपकनिरूपितत्वोभयसंवन्धेन तथाच तद्यागकरणपशुनिष्ठैकत्वे यागान्तरकरणत्वनिरूपकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेऽपि तन्निरूपितसंसर्गताविशिष्टसंसर्गतानिरूपकत्वस्य पश्वन्तरे यागान्तरे च सत्वेन तत्सामानाधिकरण्यविरहेण विशिष्टान्यत्वसंभवाद्भवत्येकवचनार्थता पशुद्वयकरणकयागकरणपशुनिष्ठैकत्वे च पश्वन्तरनिष्ठकरणत्वनिरूपकत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य तादृशसंसर्गतानिरूपकयागनिरूपिततत्पशुनिष्ठकरणत्वसंसर्गतानिरूपकत्वसामानाधिकरण्यस्य च सत्वेन न विशिष्टान्यत्वसंभवः अन्यत्र तु प्रागुक्तैव रीतिरिति वदन्ति ॥

परेतु विशेष्यतावच्छेदकतत्कोटिप्रविष्टेषु परम्परयाऽपि प्रकारतावच्छेदकत्वस्य प्रकारतावच्छेदकतत्कोटिप्रविष्टेषु परम्परयाऽपिविशेष्यतावच्छेदकत्वस्य च न व्यवहारइति साक्षात्परम्परावच्छेदकत्वनिष्ठं प्रकारतावच्छेदकत्वव्यावृत्तं विशेष्यत्वस्य विशेष्यतावच्छेदकत्वव्यावृत्तं प्रकारत्वस्य च निरूपकत्वं निरूपितत्वं च विलक्षणमेव । अत एव तत्र तत्र विशेष्यत्वप्रकारत्वावच्छेदकत्वादीनां पर्याप्तिनिवेशनं प्रामाणिकानां संगच्छते ।

नन्वावैलक्षण्ये प्रकृते को दोष इति वाच्यम् । यत्र हि राजद्वयसम्बन्धिधनं गृहीत्वैकस्य राज्ञो दासो जिगमिषति तत्र राज्ञो धनं गृहीत्वा जिगमिषति दास इति प्रयोगो नोभयत्र राजगतैकत्वविवक्षायां प्रमाणभावमवलम्बते । निरूपितत्वाद्यवैलक्षण्ये तत्प्रामाण्यं दुरुद्धरं स्यात् राजगतैकत्वे वक्ष्यमाणस्य स्वप्रकृतिप्रयोज्यविषयताविशिष्टत्वस्य सत्वात् । स्वप्रकृतिप्रयोज्यायां राजनिष्ठावच्छेदकतायां प्रकारतानिरूपितत्वस्येव मुख्यविशेष्यतानिरूपितत्वस्यापि सत्वेन स्वाभिन्नमुख्यविशेष्यतावच्छेदकतावत्वसंवन्धेन स्वविशिष्टायां राजत्वनिष्ठनिरूपकत्वराजविशिष्टस्वत्वविशिष्टधनविशिष्टकर्मत्वविशिष्टग्रहणविशेष्योत्तरत्वविशिष्टजिगमिषाविशिष्टदासनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नसम्बन्धित्वसम्बन्धावच्छिन्नस्वत्वनिष्ठनिरूपकत्वाभ्यां निरूपितयोरधिकरणत्वयोः पर्याप्तं यद्द्वित्वं तदवच्छिन्नवद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वस्य सत्वात् । वैलक्षण्ये च राजनिष्ठावच्छेदकत्वाभिन्नत्वस्य प्रकारतावच्छेदकतायामेव सत्वेन तादृशप्रकारतावच्छेदकतावत्वसंवन्धेन स्वविशिष्टाभ्यां राजत्वनिष्ठनिरूपकत्वदासविशिष्टाश्रयत्वविशिष्टजिगमिषाविशिष्टोत्तरत्वविशिष्टगमनविशिष्टकर्मत्वविशिष्टधनविशिष्टस्वत्वनिष्ठनिरूपकत्वाभ्यां निरूपितयोरधिकरणत्वयोः पर्याप्तं यद्द्वित्वं तदवच्छिन्नवत्वस्य राजान्तरेऽपि सत्वेनैकत्वे तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वस्यैव सत्वात् प्रामाण्यं न प्रसज्यत इति । एवं च स्वप्रकृतिप्रयोज्यविषयताविशिष्टनिरूपकताकाधिकरणतात्वावच्छिन्नानुयोगिताकपर्याप्तिकसंख्यावच्छिन्नवद्वृत्तिभेदप्रतियोगितानवच्छेदकमेकत्वमेकवचनार्थः । निरूपकतायां वैशिष्ट्यं च स्वाभिन्नमुख्यविशेष्यतावत्वस्वाभिन्नमुख्यप्रकारतावच्छेदकतावत्वस्वाभिन्नमुख्यप्रकारतावत्व स्वाभिन्नतादृशविशेष्यतावच्छेदकतावत्वान्यतमसंबन्धेन । मुख्यविशेष्यतावत्ता च स्वसाक्षान्निरूपकावच्छेदकतावत्वस्वनिरूपितमुख्यप्रकारतावत्वान्यतरसंवन्धेन । अवच्छेदकतावत्ता च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसंवन्धेन । मुख्यप्रकारतावत्ता च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसंवन्धेन । स्वाभिन्नमुख्यप्रकारतावच्छेदकतावत्ता च स्वसाक्षान्निरूपकत्वस्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नत्वोभयसंवन्धेन स्वविशिष्टावच्छेदकतावत्वस्वाश्रयत्वान्यतरसंवन्धेन । अवच्छेदकतावत्ताच पूर्वोक्तचतुष्टयसम्बधेन स्वाश्रयत्वं च स्वावच्छेदकसंबन्धावच्छिन्नसंवन्धित्वसम्बन्धावच्छिन्नत्वस्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेदकावच्छिन्नत्व स्वविशिष्टविषयतात्वव्यापकत्वैतत्त्रितयसंवन्धेन । स्ववैशिष्ट्यं च स्वावच्छेद्यविषयतानिरूपितविषयत्वानवच्छिन्नत्वस्वनिरूपितत्वैतदुभयसंवन्धेन । व्यापकता च स्वनिरूपितावच्छेदकतावृत्तित्वसंवन्धेन । वृत्तित्वं च स्वावच्छेदकावच्छिन्नत्वस्वविशिष्टविशेष्यतानिरूपितप्रकारतावच्छेदकसम्वन्धावच्छिन्नसंवन्धित्वसंवन्धावच्छिन्नत्वोभयसंवन्धेन । स्ववैशिष्ट्यं च स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसंवन्धेनस्वाश्रयत्वस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतत्त्रितयसंवन्धेन । स्वावच्छेदकावच्छिन्नत्वं च स्वाभाववदवच्छेदकत्वानिरूपितत्वरूपं ग्राह्यम् । अभावप्रतियोगितावच्छेदकसंबन्धश्च स्वनिरूपितावच्छेदकतावत्वस्वावच्छेद्यप्रकारतानिरूपितविशेष्यतावत्वान्यतरात्मकः । अवच्छेदकतावत्वविशेष्यतावत्वे स्वसामानाधिकरण्यादिचतुष्टयेषु यस्य यस्योपादेयत्वं तैर्ग्राह्ये स्वाश्रयत्वनियामकत्रितयसम्बन्धघटकविशेष्यतावच्छेदकावच्छिन्नत्वमप्युक्तरूपमेव स्वाभिन्नमुख्यप्रकारतावत्वं च स्वनिरूपितावच्छेदकतावत्वस्वाश्रयत्वान्यतरसंम्वधेन । स्वाश्रयत्वं च स्वावच्छेदकसंवन्धावच्छिन्नसंवन्धित्वसंवन्धावच्छिन्नत्वस्वनिरूपितविशेष्यतावत्वोभयसंवन्धेन अवच्छेदकतावत्वविशेष्यतावत्वे च सामानाधिकरण्यादिभिः संबन्धैर्ग्राह्ये । स्वाभिन्नविशेष्यतावच्छेदकतावत्वं च स्वविशिष्टावच्छेदकतावत्वस्वाश्रयत्वान्यतरसंम्बन्धेन । वैशिष्ट्यावच्छेदकतावत्वे पूर्वोक्तसंवन्धैर्ग्राह्ये । स्वाश्रयत्वञ्च स्वावच्छेदकसंवन्धावच्छिन्नसंबन्धित्वसंबन्धावच्छिन्नत्वस्वनिरूपितस्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेद्यविषयतावच्छेदकावच्छिन्नत्वस्वनिरूपितमुख्यप्रकारतावदवच्छेकताकत्वस्वविशिष्टविषयतात्वव्यापकत्वैतच्चतुष्टयसंवन्धेन । मुख्यप्रकारतावत्वं च पूर्वोक्तसंवन्धैर्बोध्यम् ।

स्ववैशिष्ट्यं च स्वनिरूपितत्वस्वावच्छेद्यविशेष्यतानिरूपितविषयताभिन्नत्वस्वनिरूपितमुख्यप्रकारतावदन्यत्वैतत्त्रितयसंवन्धेन । प्रकारतावत्ता च स्वतादात्म्यस्वनिरूपितावच्छेदकतातादात्म्यान्यतरसंबन्धेन । व्यापकता च स्ववृत्तित्वस्वनिरू-

पितावच्छेदकतावृत्तित्वान्यतरसंवन्धेन । वृत्तित्वं च पूर्ववदेवग्राह्यम् । विशेष्यतावच्छेदकावच्छिन्नत्वं स्वाभाववदवच्छेदकत्वानिरूपितत्वरूपं ग्राह्यम् । अभावप्रतियोगिताच स्वनिरूपितावच्छेदकतावत्वस्वावच्छेद्यनिरूपितविषयतावत्वान्यतरसंवन्धेन ग्राह्या । अत्र स्वविशिष्टनिरूपकताकाधिकरणतावद्वृत्तित्वविवक्षणे प्रायश एकत्वमात्रस्य स्वविशिष्टप्रकृत्यर्थतावच्छेदकनिष्ठनिरूपकताकाधिकरणतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वमेव स्यादिति तादृशाधिकरणतात्वावच्छिन्नपर्याप्तिकसंख्यावच्छिन्नवद्वृत्तित्वपर्यन्तानुधावनम् । स्वाभिन्नमुख्यविशेष्यतावत्वसंवन्धश्च मुख्यविशेष्यगतैकत्वस्यैकवचनार्थतासम्पत्यर्थमुपात्तः । तथाहि यत्रैको विद्वान् परश्चाविद्वान् ब्राह्मणो भुङ्क्ते क्षत्रियश्च विद्वान् भुङ्क्ते ब्राह्मणश्च विद्वानन्यश्शेते तत्रात्र विद्वान् ब्राह्मणो भुङ्क्त इति तादृशब्राह्मणगतैकत्वविवक्षायां प्रयोगो जायते । तत्र मुख्यविशेष्यताविशिष्टानिरूपकताब्राह्मणत्वनिष्ठाविद्यावत्वनिष्ठा च तत्तदसाधारणधर्मावच्छिन्ना एतद्देशाधिकरणकभोजनकर्तृत्वत्वावच्छिन्ना च आद्ययोः स्वसाक्षान्निरूपकावच्छेदकतावत्त्वस्य अन्त्यायां स्वनिरूपितमुख्यप्रकारतावत्त्वस्य च सत्त्वादिति तन्निरूपिताधिकरणताकूटवत्त्वमेकत्वाश्रयीभूतब्राह्मण एव शयनकर्तुर्विद्यावत्वब्राह्मणत्वयोःसत्वेपितादृशभोजनकर्तृत्वविरहात् क्षत्रिये ब्राह्मणत्वस्याविदुषि विद्यावत्व च विरहादिति तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं तदेकत्वेऽस्तीति तस्यैकवचनार्थतासम्पत्तिः । अत्र घटोस्तीत्यादौ घटत्वनिष्ठनिरवच्छिन्नावच्छेदकतावत्वस्य पटत्वनिष्ठनिरवच्छिन्ननिरूपकतायामपि सत्वे निरुक्ताधिकरणताकूटवत्वस्याप्रसिद्ध्या एकवचनार्थतानुपपत्तिः स्यादिति तद्वारणायावच्छेदकतावत्वघटकसम्बन्धेषु स्वसामानाधिकरण्यस्य तद्घटानुयोगिकसमवायावच्छिन्नाया एतद्घटानुयोगिकसमवायावच्छिन्नायाश्च घटत्वनिष्ठनिरूपकताया घटत्वनिष्ठावच्छेदकताविशिष्टत्वे तथैवानुपपत्तिः स्यादिति

स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्य तद्रूपघटत्वोभयत्वावच्छिन्नाया एतद्रूपघटत्वोभयत्वावच्छिन्नायाश्च निरूपकताया घटत्वनिष्ठावच्छेदकताविशिष्टत्वे तथैवानुपपत्तिस्स्यादिति स्वानवच्छेदकानवच्छिन्नत्वस्य चोपादानम् । ऋद्धस्यौजस्विनो राज्ञः पुरुषोऽत्रास्ति वेश्मनीत्यादौ ऋद्धौजस्विराजस्वत्ववदेतद्गृहवृत्तिपुरुषनिष्ठभेदप्रतियोगितानवच्छेदकत्वेनैकत्वस्य शाब्दमतौ भासमानत्वेन तादृशानवच्छेदकत्वघटकस्वत्वनिष्ठनिरूपकतायां राज्ञऋद्धत्वौजस्वित्वाभ्यामेवावच्छेदकतया तादृशावच्छेदकताकनिरूपकतामात्रघटितनिरुक्तानवच्छेदकत्ववदेकत्वे लाघवाच्छक्त्ये एकवचनस्य शक्तिप्रतिपत्त्यर्थं निरुक्तपरिचायककोटौस्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन स्ववृत्तित्वस्योपादानं नहि तदनुपादाने काप्यापत्तिरनुपपत्तिर्वा । नच कथं न तत्र शक्तिप्रतिपत्तिरितिवाच्यं तत्रैकैकधर्मावच्छिन्नावच्छेदकताकनिरूपत्वस्याप्युक्तावच्छेदकताविशिष्टतया तावन्निरूपकत्वघटितोक्तानवच्छेदकत्वोपरागेण गुरुत्वादशक्यएवैकत्वे शक्तिग्रहप्रसङ्गा त्तदुपादाने च धर्मत्रयावच्छिन्नावच्छेदकताकनिरूपकतामात्रस्यावच्छेदकताविशिष्टत्वेन तन्मात्रघटितानवच्छेदकत्ववदेकत्व एव शक्तिग्रहसम्भवात् । स्वानवच्छेदकानवच्छिन्नत्वं च तत्र स्वनिरूपकतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वं विशिष्टान्यत्वं च सामानाधिकरण्यादिभिः तेन प्रमेयस्येदमस्तीत्यादौ स्वानवच्छेदकाप्रसिद्धावपि न क्षतिः । नच मुख्यविशेष्यतानिरूपितायास्तादृशस्वत्वनिष्ठावच्छेदकतायास्तादृशस्वत्वनिष्ठनिरूपकतानवच्छेदकपुरुषत्वनिष्ठावच्छेदकतानिरूपितत्वं विशेष्यताद्वारकमस्तीत्यनुपपत्तिरितिवाच्यम् । नहि राजत्वनिष्ठावच्छेदकत्वं राजावच्छिन्नत्वेन पुरुषत्वावच्छिन्नत्वेन च व्यवह्रियत इतिपरम्परयाप्यवच्छिन्नत्वव्यवहारोऽवच्छेदककोटिसन्निविष्टधर्मैरेव वाच्यो नत्ववच्छेद्यकोटिप्रविष्टैरुदासीनैर्वा । विशेषणं हि विशेष्यस्य परिचायकं निरूपकं विशेष्यंच परचेयं निरूप्यमित्युच्यत इति विशेषणनिष्ठावच्छेदकतानिरूपिकैव निरूपकनिष्ठत्वाद्विशेष्यनिष्ठा च निरूपितनिरूप्यनिष्ठत्वादवच्छिन्नत्वं चावच्छेदकतानिरूपितत्वमिति राजत्वनिष्ठावच्छेदकताया न राजावच्छिन्नत्वं नापि पुरुषत्वावच्छिन्नत्वं साक्षात्परम्परासाधारणावच्छेदकतानिरूपितत्वस्याप्युक्तयुक्तेर्विलक्षणत्वादिति वस्तुगतिः तथाच नोक्तानुपपत्तिः ।

अथवा स्वानवच्छेदकानवच्छिन्नत्वं परस्परनिरूप्यनिरूपकभावेऽपिस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतावदन्यत्वं वाच्यम् अवच्छेदकतावत्ताचस्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेद्यत्वसंवन्धेन । इदं चावच्छेद्यत्वं साक्षात्परम्परासाधारणम् । परम्परयाच तदवच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेद्यत्वेनैव स्वीक्रियतइति पुरुषत्वनिष्ठावच्छेदकत्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेद्यत्वं स्वत्वनिष्ठावच्छेदकतायां परम्परयापि नास्तीतिन कापि क्षतिः । स्वनिरूपितमुख्यप्रकारतावत्वोपादानञ्च भोजनकर्तृत्वनिष्ठनिरूपकतासंग्रहाय, तदसंग्रहे शयनकर्तृब्राह्मणेऽपि तादृशनिरूपकताकाधिकरणताकूटस्य सत्वेन तादृशभेदप्रतियोगितानवच्छेदकत्वस्यैकत्वेऽसम्भवः स्यात् । स्वावच्छेदकसंवन्धावच्छिन्नत्वं च एकत्वाश्रयाननुयोगिकसंवन्धावच्छिन्नतादृशकर्तृत्वनिष्ठनिरूपकतावारणायोपादेयम् । अधिकवारकपर्याप्तिनिवेशनं च द्वित्वाद्यवच्छिन्नतादृशकर्तृत्वनिष्ठनिरूपकतावारणाय । न्यूनवारकं च तदुक्तयुक्त्या शक्तिग्रहप्रतिपत्त्यर्थम् । फलं भुंक्ते चैत्र इत्यादौ स्वसमानाधिकरणान्नवृत्तित्वसम्बधेनफलविशिष्टकर्मत्वविशिष्टभोजनविशिष्टकृतिनिष्ठनिरूपकत्ववारणायस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वरूपमेव तदवच्छेदकावच्छिन्नत्वमुपादेयम् । स्वाभिन्नमुख्यप्रकारतानिरूपकावच्छेदकतावत्वं च प्रकारतावच्छेदकगतैकत्वस्यैकवचनार्थतासम्पत्यर्थं । तादृशप्रकारताकत्वं च साक्षात्परंपरासाधारणं, तेनेदं राज्ञ इत्यादिसाक्षात्प्रकारविशेषणगतैकत्वस्येव चैत्रः फलमत्रभुङ्क्ते ब्राह्मणो ब्राह्मणाय गां ददातीत्यादौ परम्परामुख्यप्रकारविशेषणफलब्राह्मणादिगतैकत्वस्याप्येकवचनार्थोपपत्तिः । तथाहि स्वप्र-

कृतिप्रयोज्यामुख्यप्रकारतानिरूपितावच्छेदकता यथा राजत्वावच्छिन्ननिरूपितत्वसंबन्धावच्छिन्ना तथाधेयत्वसंबन्धावच्छिन्नफलत्वावच्छिन्ना स्वनिष्ठानिरूपकतानिरूपितत्वसंबन्धावच्छिन्नब्राह्मणत्वावच्छिन्ना च यथाच राजत्वावच्छिन्नावच्छेदकताविशिष्टा स्वरूपसंबन्धावच्छिन्नराजत्वनिष्ठा इदमर्थविशिष्टस्वत्वनिष्ठानिरूपितत्वसंबन्धावच्छिन्ना तथा फलत्वावच्छिन्नावच्छेदकताविशिष्टा समवायावच्छिन्ना फलत्वनिष्ठा चैत्रविशिष्टकृतिविशिष्टैतद्देशाधिकरणकभोजनविशिष्टकर्मत्वनिष्ठाधेयत्वसम्बन्धावच्छिन्नसंबन्धित्वसंबन्धावच्छिन्ना च। एवं ब्राह्मणत्वावच्छिन्नावच्छेदकताविशिष्टा ब्राह्मणत्वनिष्ठा ब्राह्मणविशिष्टकृतिविशिष्टगोकर्मकदानविशिष्टस्वत्वविशिष्टनिरूपितत्वनिष्ठोक्तनिरूपितत्वसंबन्धावच्छिन्नसंबन्धित्वावच्छिन्ना च निरूपकता भवतीति तत्तन्निरूपिताधिकरणताकूटवत्वं विवक्षितैकत्वाश्रयेषु राजविशेषफलविशेषब्राह्मणविशेषेष्वेवेति तत्तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वं तत्तदेकत्वे वर्त्तत इति तत्संग्रहः। अत्र स्वविशिष्टावच्छेदकतावत्त्वोपादानं राजत्वादिनिष्ठनिरूपकतासंग्रहार्थं तदसंग्रहे इदमर्थस्य राजतदन्योभयस्वामिकत्व इदमर्थविशिष्टस्वत्वनिष्ठनिरूपकताकाधिकरणत्वस्य राजभिन्नेऽपि सत्त्वेनैकत्वस्य तादृशभेदप्रतियोगितानवच्छेदकत्वानुपपत्तिः स्यात्। विशेषणनिष्ठावच्छेदत्वमात्रस्य निरूपकत्वे स्वनिरूपकत्वेनैवावच्छेदकत्वमुपादेयमितरथा निरुक्तोभयसंबन्धेन स्वविशिष्टत्वेन, तेन फलनिष्ठावच्छेदकतानिरूपितकर्मत्वनिष्ठावच्छेदकताविशिष्टनिरूपकताकाधिकरणत्वस्य फले विरहेऽपि न क्षतिः।

अवच्छेदकतावत्वनियामकसंबन्धानामुपादाने प्रयोजनं प्राग्वदेव द्रष्टव्यं। स्वाश्रयत्वोपादानं च तादृशस्वत्वादिनिष्ठनिरूपकतासंग्रहार्थं, तदसंग्रहे राजत्वादिनिष्ठनिरूपकताकाधिकरणत्वस्य विवक्षितैकत्वानाश्रयेषु राजादिषु सत्वेनैकत्वस्य तादृशानवच्छेदकत्वानुपपत्तिः स्यात्। स्वाश्रयत्वनियामकसंबन्धेषु प्रथमस्यानुपादानं आश्रयत्वादिसंबन्धावच्छिन्नस्वत्वादिनिष्ठनिरूपकताया अपि स्वाश्रयत्वेन तन्निरूपिताधिकरणताघटितकूटवत्वस्याप्येकत्वाश्रयेऽप्यसत्वं स्यात्, स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वनिरूपितविषयत्वावच्छेदकसंबन्धावच्छिन्नत्वाद्युपादानेऽपि तदेव स्यादिति तदुपादेयं। नच तादृशस्वत्वस्य निरूपकतया तादृशकर्मत्वस्याश्रयतया राजफलादावेकत्वघटकत्वेन भासमानत्वात् कथं तत्तन्निष्ठनिरूपकतायामुक्तसंबन्धित्वसंबन्धावच्छिन्नत्वमिति वाच्यं निरूपितत्वसंबन्धावच्छिन्नसंबन्धित्वस्य निरूपकतात्मकत्वादाधेयत्वसंबन्धावच्छिन्नसंबन्धित्वस्य चाश्रयतारूपत्वात् तादृशसंबन्धित्वनिष्ठायाः कालिकादिघटितान्यतरत्वाद्यवच्छिन्नसंसर्गताया अवारणीयत्वेन तादृशसंबन्धित्वत्वावच्छिन्नत्वस्य संसर्गतायामनुपादेयत्वात्। अन्यतरत्वानवच्छिन्नतादृशसंसर्गताकनिरूपकताया अपि संगृहीतत्वेन तन्निरूपिताधिकरणताघटितकूटस्यैकत्वानाश्रये विरहात् विरुद्धोभयसंबन्धनिष्ठोभयत्वावच्छिन्नानिरूपकतानिरूपितसंसर्गता नास्त्येवेति तद्वारणायापि हि तस्य नोपादेयत्वम्। पर्वते वह्निं जानाति चैत्र इत्यादौ वह्निनिष्ठावच्छेदकताविशिष्टत्वस्य चैत्रविशिष्टाश्रयत्वविशिष्टज्ञाननिष्ठावच्छेदकतानिरूपिताधेयत्वसंबन्धावच्छिन्नसंबन्धित्वावच्छिन्नविशेष्यत्वनिष्ठनिरूपकत्वे वारणाय द्वितीयसंबन्धोपादानम्। चैत्रः फलं भुङ्क्ते इत्यादौ मैत्रकर्तृकभोजनकर्मत्वनिष्ठनिरूपकत्वे फलनिष्ठावच्छेदकताविशिष्टत्ववारणाय तृतीयसंबन्धोपादानम्। तथासति स्वविशिष्टचैत्रनिष्ठविषयत्वे निरुक्तनिरूपकत्वाभावाद्व्यापकत्वासंभवान्न विशिष्टत्वसंभवः स्ववैशिष्ट्यनियामकसंबन्धेषु प्रथमस्यानुपादाने चैत्रकर्तृकभोजनकर्मत्वनिष्ठनिरूपकत्वस्यासंग्रहः स्यात्। कर्मत्वनिष्ठावच्छेदकतात्मकविषयताया अपि स्वनिरूपितत्वात्तत्र निरुक्तनिरूपकत्वस्यासत्वात्तदुपादाने च तस्याः स्वविशिष्टत्वविरहान्नासंग्रहः। द्वितीयस्यानुपादाने तादृशनिरूपकतामात्रस्यासंग्रहः स्यादिति तदुपादानम्। नच विशेष्यत्वप्रकारत्वावच्छेदकत्वादिनिरूपितायास्तत्तदवच्छेद्यविशेष्यतानिरूपितविषयत्वानवच्छिन्नाया अवच्छेदकताया अपि स्वविशिष्टत्वात्तत्समानाधिकरणनिरूपकतावच्छेदकताया निरुक्तसंबन्धित्वसंबन्धानवच्छिन्नतया व्यापकत्वासंभवान्निरुक्तनिरूपकत्वासंग्रहस्तदवस्थ इति वाच्यम् निरुक्तावच्छेदकताया निरुक्तविषयतानिरूपकत्वस्यैवानुपदं व्यवस्थापितत्वात्। परंपरानिरूपितत्वमपिहि निरूपितनिरूपित एवाभ्युपेयते नतु निरूपितनिरूपकेऽपि। यदि च परस्परंनिरूप्यनिरूपकभावस्तदा स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसंबन्धेन स्वनिरूपितविषयताविशिष्टविशेष्यत्वावच्छेदकतावदन्यत्वघटितत्रितयसंबन्धेन वैशिष्ट्यमुपादेयं तथाच नोक्तदोषसंभवः।

यद्वा स्ववृत्तित्वघटितोभयसंबन्धेन वैशिष्ट्यं वाच्यम्। वृत्तित्वं च स्वावच्छेद्यत्वस्वतादात्म्यान्यतरसंबन्धेन स्वविशिष्टविशेष्यतानिरूपितप्रकारतावच्छेदकतावत्वसंबन्धेन। अवच्छेदकतावत्ताच स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसंबन्धेन तथाच चैत्रत्वादिनिष्ठधर्मितावच्छेदकतायाः स्वनिरूपितत्वेपि स्वावच्छेद्यविशेष्यत्वाप्रसिद्ध्या निरुक्तसंबन्धेन तस्य फलनिष्ठावच्छेदकत्वे वृत्तित्वाभावात्। ब्राह्मणाय गां ददातीत्यत्र स्वत्व एकत्र द्वयंरीत्या भासमानब्राह्मणनिरूपितत्वगोवृत्तित्वद्वयमध्ये ब्राह्मणनिष्ठावच्छेदकत्वस्य स्वपदार्थत्वे गोवृत्तित्वनिष्ठावच्छेदकताया गोनिष्ठावच्छेदकतायाः स्वपदार्थत्वे ब्राह्मणनिरूपितत्वनिष्ठावच्छेदकतायाश्च न स्वविशिष्टत्वसंभवः स्वत्वनिष्ठावच्छेदकताद्वारा स्वनिरूपितत्वसत्वेपि स्वस्मिन्तादृशावच्छेदकतावत्वविरहेण वृत्तित्वविरहात् वृत्तित्वनिष्ठविशेष्यतानिरूपितगोनिष्ठप्रकारतानिरूपितत्वस्य परंपरयापि ब्राह्मणनिष्ठावच्छेदकतायामसंभवात् स्वनिरूपितविषयत्वतादृशप्रकारतानिरूपितविषयत्वयोरवच्छेद्यावच्छेदकभावेन निरूप्यनिरूपकभावाभावात् चैत्रनिष्ठविशेष्यत्वकृतिनिष्ठप्रकारत्वदाननिष्ठावच्छेदकत्वादीनां ब्राह्मणगवादिनिष्ठावच्छेदकत्वनिरूपितत्वस्यैव तादृशावच्छेदकत्वयोस्तेषामपि वृत्तित्वात् चैत्रनिष्ठविशे-

ष्यतानिरूपितप्रकारतानिरूपितावच्छेदकतायास्तादात्म्यस्य स्वावच्छेद्यकृत्यादिनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितावच्छेदकताया अवच्छेद्यत्वस्य च सत्त्वात् कृत्यादौ परंपरया ब्राह्मणगवादिविशेषितस्य दानादेः प्रकारत्वात् । स्वनिरूपितावच्छेदकतावृत्तित्वनियामकसंबन्धयोराद्यस्यानुपादाने चैत्रोऽत्र फलं भुङ्क्ते मैत्रोऽन्नमित्यत्र फलनिष्ठावच्छेदकताविशिष्टत्वस्य समवायसंबन्धावच्छिन्नसंबन्धित्वसंबन्धावच्छिन्नमैत्रनिष्ठावच्छेदकतानिरूपिकायां मैत्रविशिष्टकृतिविशिष्टभोजनविशिष्टकर्मत्वनिष्ठनिरूपकतायामपि सत्वं स्यादिति स उपादेयः । द्वितीयस्यानुपादाने स्वसमानाधिकरणमैत्रवृत्तित्वसंबन्धावच्छिन्नचैत्रनिष्ठावच्छेदकताकतादृशकर्मत्वनिष्ठनिरूपकत्वस्यापि संग्रहः स्यादिति सोप्युपादेयः । तद्घटकस्ववैशिष्ट्यनियामकसंबन्धेषु प्रथमस्यानुपादाने मैत्रकृतिप्रकारकचैत्रविशेष्यकज्ञानीयचैत्रविशेष्यत्वस्यापि विशिष्टत्वं स्यादिति तदुपात्तम् । चैत्रनिष्ठविशेष्यत्वे स्ववैशिष्ट्यसंपत्तये स्वतादात्म्यस्य कृत्यादिनिष्ठविशेष्यत्वे तत्संपत्तयेच स्वावच्छेद्यत्वस्यच स्वाश्रयत्वनियामकतयाप्रवेशः । मैत्रकृतीयसंबन्धविशेषेणकृतिविशिष्टचैत्रस्य विशेष्यत्वे कृतिनिष्ठप्रकारतानिरूपितचैत्रत्वमात्रावच्छिन्नविशेष्यतायाः स्ववैशिष्ट्यवारणाय फलं भुञ्जानश्चैत्रो मैत्रीयसंबन्धविशेषेण कृतिमानित्यत्रपारतन्त्रीयकर्तृनिष्ठप्रकारतानिरूपितफलभोजनकर्तृचैत्रत्वोभयधर्मावच्छिन्नविशेष्यतावारणाय च स्ववृत्तित्वस्वानवच्छेदकानवच्छिन्नत्वयोः प्रवेशः कार्यः । स्वातन्त्रीयप्रकारतानिरूपितविशेष्यतामादाय दोषः स्वानवच्छेदकानवच्छिन्नत्वसंबन्धानुपादाने मृग्यः । यत्र चैत्रः फलमेकमन्नं च भुङ्क्ते तत्रान्नकर्मकभोजनकृतिसंबन्धित्वविशिष्टचैत्रविशिष्टकृतिविशिष्टभोजनविशिष्टकर्मत्वनिष्ठनिरूपकतायाश्चैत्रविशिष्टकृतिविशिष्टभोजनविशिष्टानुवृत्तित्वविशिष्टकर्मत्वनिष्ठनिरूपकतायाश्च वारणायावच्छेदकावच्छिन्नत्वस्य स्वाभाववदवच्छेदकत्वानिरूपितत्वरूपतोक्ता । प्रतियोगितावच्छेदकसंबन्धयोराद्यः चैत्रत्वकृतित्वादिनिष्ठावच्छेदकतासंग्रहार्थः द्वितीयश्च चैत्रकृत्यादिनिष्ठावच्छेदकत्वसंग्रहार्थः । एतेन न यत्र यस्य विशेषणत्वं तत्तन्निष्ठावच्छेदकताकतत्तन्निष्ठनिरूपकत्वावच्छेदकत्वादेरपि वारणम् ।

अत्र च वेदाः प्रमाणमित्यत्र प्रमाणत्वएकत्वान्वयेपि न क्षतिः तादृशैकत्वे स्वप्रकृतिप्रयोज्यप्रमाणत्वनिष्ठावच्छेदकताविशिष्टत्वस्य सत्वात् । पूर्वकल्पे तु प्रकृत्यर्थतावच्छेदके तस्मिन् प्रकृत्यर्थतावच्छेदकवत्वविरहात् प्रकृत्यर्थतावच्छेदकतत्वावच्छेदकसाधारणप्रकृत्यर्थतावच्छेदकत्वविवक्षणे प्रकृत्यर्थेपि निरुक्तसाजात्यस्य सत्वेन तत्र प्रकृत्यर्थतावच्छेदकगतैकत्ववद्भेदस्य सत्वात् । एवं प्रकृत्यर्थतावच्छेदकेपि निरुक्तप्रकृत्यर्थतावच्छेदकवत्वस्य समभिव्याहृतपदार्थसंसर्गित्वस्यच सत्वेन तत्र प्रकृत्यर्थगतैकत्ववद्भेदस्य सत्वात् तादृशैकत्वे तादृशानवच्छेदकत्वस्य प्रायशो न बहुस्थलेषु सम्भवः । अथ यत्र पदार्थानां विशेष्ये विशेषणमितिरीत्या शाब्दबुद्धौ भानं तत्र का गतिः विशिष्टस्य तत्राभासमानत्वेन तत्तत्पदार्थनिष्ठविषयतानां निरूप्यनिरूपकभावाभावादितिचेन्न विशिष्टस्याविषयत्वेन विशिष्टसंसर्गिणः सजातीयद्वितीयराहित्यस्याविवक्षिततया तत्तत्पदार्थनिष्ठविषयतानां निरूप्यनिरूपकभावाभावेपि क्षतिविरहात् । प्रकृत्यर्थस्य यत्र विशेषणत्वं तन्निष्ठविषयताप्रकृत्यर्थनिष्ठविषयतयोश्च निरूप्यनिरूपकभावसत्वात् तावन्मात्रसंसर्गित्वोपरागेण सजातीयद्वितीयराहित्यासम्भवे तादृशस्थले न भवत्येवैकत्वस्य विवक्षितत्वमिति तु विभावनीयम् ।

भेदप्रतियोगितावच्छेदकता च प्रकारतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या नतु पर्याप्तिसंबन्धावच्छिन्ना तेनव्रीहित्वगतैकत्वस्य स्वाश्रयव्रीहित्वसंबन्धेन व्रीहिपदार्थेऽन्वयपक्षेऽपि तस्य न तादृशानवच्छेदकत्वानुपपत्तिः । नच व्रीहावेवतादृशनिरूपकताकाधिकरणत्वसत्वेन तद्वृत्तिभेदप्रतियोगितानिरूपितनिरुक्तसंबन्धावच्छिन्नावच्छेदकत्वाप्रसिद्धिरिति वाच्यम् प्रकारतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नतादृशावच्छेदकत्वाभावस्यविवक्षितत्वात् । नच प्रकारतायाः केन रूपेण प्रवेश इति वाच्यं स्वप्रकृतिप्रयोज्यविषयताविशिष्टप्रकारतावच्छेदकत्वस्यैकवचनार्थत्वे निरुक्तपर्यनुयोगासंभवात् । वैशिष्ट्यं च प्रागुक्तान्यतमसंबन्धेन स्वविशिष्टनिरूपकताकाधिकरणतापर्याप्तिसंख्यावच्छिन्नवद्वृत्तिभेदप्रतियोगितानिरूपितावच्छेदकतावदन्यत्वसंबन्धेन । अवच्छेदकतावत्ता च स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन । यत्वतत्त्वयोः शब्दानुगमस्थले उपादेयत्वे येन संबन्धेन यदेकवचनार्थस्य शाब्दबुद्धौ प्रकारत्वं तत्संबन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकनिरुक्तावच्छेदकत्वाभाववत्वसंबन्धेन स्वप्रकृतिप्रयोज्यविषयताविशिष्टैकत्वं हि तदेकवचनार्थं इत्यपि वक्तुं शक्यम् । तृतीयसंबन्धानुपादाने पाण्डुदारा माद्रीत्यत्र माद्रीपदार्थस्य विधेयत्वे तद्गतैकत्वस्य तादृशभेदप्रतियोगितानवच्छेदकत्वं न स्यादिति स उपात्तः तथासति पाण्डुदारत्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्नसंबन्धित्वसंबन्धावच्छिन्नानिरूपकता माद्रीत्वनिष्ठा च निरूपकतास्वविशिष्टा भवतीति तदुभयनिरूपिताधिकरणतावत्वं मद्रजायां पाण्डुपत्न्यामेव वर्तत इति तादृशैकत्वस्य तादृशानवच्छेदकत्वसम्पत्तिः । तादृशनिरूपकताद्वयसंग्रहार्थं संबन्धद्वयोपादानमिति द्रष्टव्यम् । चतुर्थस्य चोपादानं राज्ञः पुरुषोऽत्रास्तीत्यादौ राजनिष्ठैकत्वस्य तादृशानवच्छेदकत्वसंपत्त्यर्थं संबन्धप्रयोजनं प्रागुक्तरीत्यानुसंधेयम् । संबन्धानामन्यतमत्वेनोपादानमविधाय स्वतादात्म्यापन्नमुख्यविशेष्यतावत्वादिप्रत्येकसंबन्धेन वैशिष्ट्यमविधाय व्युत्पत्तिचतुष्टयं वाच्यमिति वा प्रकार आदरणीयः । अथ पशुना रुद्रं यजेतेत्यत्र का गतिः इष्टसाधनीभूतयागकरणत्वपशुत्वाधिकरणत्वयोस्तत्तदेकत्वानाश्रयेषु तत्तत्पशुष्वपि सत्वेन पशुनिष्ठैकत्वमात्रस्य तादृशानवच्छेदकत्वासंभवादिति चेदुच्यते । यत्रैकस्मिन् समभिव्याहृतपदार्थे प्रकृत्यर्थयोः संबन्धव्यावृत्तय एकत्वं विवक्षितं

तत्र स्वाश्रयत्वसंबन्धघटकसंबन्धेषु प्रागुक्तात्किंचिदधिकमुपादेयं यथा स्वतादात्म्यापन्नमुख्यप्रकारतावच्छेदकतावत्वघटकस्वाश्रयत्वनियामकसंबन्धेषु स्वावच्छेद्यप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नत्वस्थले तादृशविशेष्यतावत्वं तन्नियामकसंबन्धश्च स्वावच्छेदकावच्छिन्नत्वस्वविशिष्टावच्छेदकताकत्वद्वयम् । वैशिष्ट्यं च स्वावच्छेद्यप्रकारतावच्छेदकसंबन्धावच्छिन्नसंबन्धित्वसंबन्धावच्छिन्नत्वस्वावच्छेद्यप्रकारतानिरूपितविशेष्यतासमानाधिकरणोभयावृत्तिधर्मावच्छिन्नत्वोभयसंबन्धेन । स्वविशिष्टविषयतात्वव्यापकत्वघटकसंबन्धतया च स्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वावच्छेद्यप्रकारतानिरूपितविशेष्यत्वानवच्छिन्नत्वमप्युपादेयं तथा सति स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसंबन्धेन निरुक्तनिरूपकताकाधिकरणतात्वव्याप्यानुयोगिताकपर्याप्तिकसंख्यावच्छिन्नविशिष्टैकत्वस्यैकवचनार्थत्वे भवत्येव पशुना यजेतेत्यादिस्थलीयैकत्वस्य संग्रहः । तथाहि पशुत्वाधिकरणत्वेष्टसाधनीभूतयागकरणत्वाधिकरणत्वद्वयत्वावच्छिन्नानुयोगिताया निरुक्तनिरूपकताकाधिकरणतात्वव्याप्यतया तन्निरूपकपर्याप्तिप्रतियोगितादृशाधिकरणतागतद्वित्वावच्छिन्नविशिष्टत्वं तत्तदेकत्वे वर्तते । यागस्य पशुद्वयकरणकत्वे च तद्यागकरणपशुनिष्ठैकत्वयोरेकस्यापि न तादृशसंख्यावच्छिन्नविशिष्टत्वस्य संभवः । चालनीन्यायेन तत्तदेकत्वद्वयस्य पशुत्वाधिकरणत्वतद्यागकरणत्वाधिकरणत्वद्वयसमानाधिकरणत्वात् । पशुत्वाधिकरणत्वतद्यागकरणत्वाधिकरणत्वतद्व्यक्तित्वाधिकरणत्वगतत्रित्वावच्छिन्नानुयोगितायाश्च तादृशाधिकरणतात्वाव्याप्यत्वात् । निरुक्तनिरूपकताकाधिकरणतात्वावच्छिन्नत्वप्रवेशे तत्तद्यागकरणत्वाधिकरणत्वघटितकूटत्वस्यैव तादृशसंख्यात्वेन तदवच्छिन्नत्वस्यैकत्वाश्रये कुत्रापि न संभव इति तत्परित्यज्य व्याप्यत्वोपादानं, तादृशसंख्यावच्छिन्नसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वं चैकत्वे न संभवति तत्तदेकत्वानाश्रयेऽपि तादृशसंख्यावच्छिन्नत्वस्य सत्वादिति तादृशसंख्यावच्छिन्नविशिष्टत्वमुपात्तम्, तत्तद्व्यक्तित्वावच्छिन्नावच्छेदकताकनिरूपकत्वसंग्रहाय तादृशविशेष्यतावच्छेदकावच्छिन्नत्वं विहाय तादृशविशेष्यतावत्वमुपात्तं, तादृशावच्छेदकतासमानाधिकरणविषयत्वे व्यभिचारवारणाय स्वविशिष्टविषयतात्वव्यापकत्वघटकवैशिष्ट्यनियामकतया चतुर्थसंबन्धस्य निवेशः कृतः इत्थमेव चान्यत्राप्यूहनीयः ।

अथ घटोऽस्तीत्यत्रैतद्देशवृत्तित्वाधिकरणत्वघटत्वाधिकरणत्वसमुदायत्वावच्छिन्नवद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वस्य लाघवेनैतद्देशवृत्तिघटवृत्तिभेदप्रतियोगितावच्छेदकतात्व एव कल्पनीयतया निरुक्तावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धिः । निरुक्ताधिकरणत्वस्योपलक्षणत्वे घटद्वयवत्यपि अत्र घटोऽस्तीति प्रयोगापत्तिरिति चेन्न निरुक्तसंख्यावृत्त्युभयावृत्तिधर्मविशिष्टावच्छिन्नवद्वृत्तिभेदप्रतियोगितावच्छेदकत्वाभावप्रवेशे दोषाभावात् निरुक्ताधिकरणत्वस्योपलक्षणत्वेऽपि तादृशावच्छेदकत्वाभावकूटस्य प्रवेश्यत्वेनादोषाच्च । अथ स्वरूपतो व्रीहित्वजातावेकत्वान्वयपक्षे कथं निरुक्तव्युत्पत्तिसङ्गतिः संपत्त्यवच्छिन्नव्रीहित्वावच्छिन्नसमवायसंबन्धावच्छिन्नाधेयत्वसंबन्धावच्छिन्ननिरूपकताकाधिकरणत्वस्यैव तथाविधत्वेन तस्य सत्वद्रव्यत्वादावपि सत्वात्तत्र व्रीहित्वगतैकत्वस्याभावात् व्रीहित्वनिष्ठाया निरवच्छिन्नधर्मितावच्छेदकतायाश्च स्वविशिष्टावच्छेदकतावत्वसंबन्धस्याप्रसिद्धत्वादितिचेत्, अत्रकेचित् । स्वाश्रयप्रतियोगिकस्वावच्छेदकसंबन्धावच्छिन्नसंबन्धित्वसंबन्धावच्छिन्नत्वस्य संबन्धतया प्रवेश्यत्वात् । स्वाभिन्ननिरवच्छिन्नावच्छेदकतासमानाधिकरणोभयावृत्तिधर्मावच्छिन्नत्वस्यापि तादात्म्यसंबन्धावच्छिन्नत्वविशेषितस्य संबन्धतया वा प्रवेश्यत्वात्, व्रीहित्वप्रतियोगिकसमवायसंबन्धावच्छिन्नसंबन्धित्वसंबन्धावच्छिन्ननिरूपकताकाधिकरणत्वं निरुक्तोभयावृत्तिधर्मावच्छिन्नाधिकरणत्वं वा व्रीहित्व एव हि वर्तते न सत्त्वादाविति न दोष इति वदन्ति ।

अन्येतु जात्येकत्वभानोपगमपक्षे यद्येकत्वमात्रमेकवचनार्थः तदा व्रीहावेकत्वस्वत्वेनैकत्वभानोपगमात् को विशेषः अर्थतो लाभस्योभयत्रापि तुल्यत्वात् । नच मास्तु विशेषस्तदभावे ह्यवसितार्थतात्पर्यकाशेषपदघटितप्रयोगप्रामाण्योपपत्तिमात्राय तस्य स्वीकरणीयतयाऽन्यत्र सजातीयद्वितीयराहित्यभानेऽपि प्रकृत्यर्थ एवैकत्वसामान्यस्य प्रक्तेते तदर्थं भानप्रसङ्गः विनिगमकाभावात्तथासति यत्त्वित्यादिग्रन्थसन्दर्भविरोधः । यदि च संपन्नव्रीहिवृत्तिव्रीहित्वनिष्ठभेदप्रतियोगितानवच्छेदकं स्वाश्रयव्रीहित्ववत्वसंबन्धेन संपन्नव्रीहिनिष्ठभेदप्रतियोगितानवच्छेदकं चैकत्वं निरुक्तस्थले भासते तथाच सामान्यतो गृहीतायाः सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्व एकवचनशक्तेरनुग्रहः सएवच विनिगमक इत्युच्यते तदापि तद्विवक्षायाः प्रयोजनप्रतिलम्भाभावेन स्ववृत्त्येकत्वत्वावच्छिन्नवत्वसंबन्धेनैकत्वान्वयेऽपि निरुक्तशक्त्यनुग्रहसंभवेन च विनिगमनाविरहस्तदवस्थः । नच लाघवं विनिगमकमिति वाच्यम् स्वाश्रयशाब्दत्वावच्छिन्नकार्यतानिरूपितकरणत्वसंबन्धेनैकत्वान्वयपेक्षया निरुक्तसंबन्धेनैकत्वान्वय एव लाघवसद्भावेन प्रमाणमित्यत्र तथापि तादृशान्वयानुपपत्तेरिति जातावेकत्वभानस्य विजातीये समभिव्याहृतपदार्थसंसर्गव्यावृत्तिबुद्धिः प्रयोजनं वाच्यम् । तथाच संपन्नो व्रीहिरिति वाक्यं तत्र प्रामाणिकमिष्यते यत्र व्रीहित्वरूपैकजात्यवच्छिन्नस्य संपत्तिः । यत्र तु नानाजात्यवच्छिन्नस्यैव सा तत्र संपन्नं सस्यमित्येव । एवं संयोगेन भूतले बहुपटसत्वदशायामत्र घटोस्तीति प्रयोगस्तत्रैव न यत्र घटविजातीयपटादीनां सत्वं । पटादिसत्वे तादृशप्रयोगश्चेत्प्रामाणिकः सर्वतीर्थेष्वयं विधिः ग्रहं संमार्ष्टि इत्यादिवदगत्याऽविवक्षितसंख्याकवचनघटित एवाभ्युपेयः । एवं च जातावेकत्वभानस्थले प्रकृत्यर्थतावच्छेदकेऽन्वयपक्षे स्वविशिष्टावच्छेदकतावत्त्वसंबन्धस्थाने स्वाश्रयवदन्यत्वनिष्ठत्वसंबन्धं स्वाश्रयवत्वनियामकसंबन्धेषु स्वविशिष्टावच्छे-

दकत्वानिरूपितत्वसंबन्धं च निवेश्य व्युत्पत्त्यन्तरं स्वीकरणीयम् । स्वाश्रयवत्ताच स्वभिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन । प्रकृत्यर्थ एवान्वयपक्षे च स्वविशिष्टावच्छेदकतावत्त्वसंसर्गाघटितव्युत्पत्त्यन्तरं वाच्यम् । व्युत्पत्तिभेदश्चैतादृशस्थले न दोषाय एकशब्दशक्तिविचारे शक्तिवादे भट्टाचार्येण तथोक्तत्वात् तथाचात्र संपन्नो व्रीहिरित्यत्रैतद्देशवृत्तिसम्पन्नवृत्तिव्रीहित्ववदन्यवृत्तिभेदप्रतियोगितानवच्छेदकैकत्वं व्रीहित्वे एतद्देशवृत्तिसंपन्नवृत्तिभेदप्रतियोगितानवच्छेदकैकत्वं वा व्रीहौ भासते तत्र तादृशानवच्छेदकत्वमेकत्वस्य तदैव संभवति यदि विजातीयस्य न सम्पत्तिस्तथासति व्रीहित्ववदन्यत्वस्यैतद्देशवृत्तिसम्पन्नवृत्तित्वस्य च व्रीहित्वविरुद्धजातावपि सत्वेन तत्र व्रीहित्वगतैकत्वस्य विरहात् एवमेतद्देशवृत्तिसंपन्नत्वस्य व्रीहिविजातीयेपि सत्वेन तत्र स्वाश्रयव्रीहित्ववत्वसम्बन्धेनैकत्वस्याभावात् यत्र व्रीहीणामन्यजातीयानां च सम्पत्तिस्तत्र समुदायत्वविशेषरूपसंपत्तेर्विभिन्नतया व्रीहिमात्रगतसम्पत्तेर्विवक्षितत्वमवलम्ब्य तामादाय तादृशानवच्छेदकत्वनिर्वाहो द्रष्टव्यः । यत्र नैकजातीयस्य संपत्तिरपितु नानाजातीयानां तत्र निरुक्तसंपत्तेरभावेन विवक्षितुमशक्यतया सजातीयविजातीयगतसंपत्तेरेव विवक्षणीयतया न तादृशानवच्छेदकत्वस्यैकत्वे संभवः । स्वाश्रयवदन्यत्वप्रवेशश्च सत्ताद्रव्यत्वमादायासम्भववारणाय एवमेवात्र घटोऽस्तीत्यादावपि संगमनीयः । इत्थं चोक्तव्यावृत्तिबुद्धिरूपप्रयोजनस्य निर्वाहः निरुक्तव्यावृत्तिं विनोक्तानवच्छेदकत्वस्यानुपपद्यमानत्वात् । नच बहुनीलघटसत्त्वदशायामत्र नीलो घटोस्तीत्येतद्देशेऽघटजातीयघटेष्वप्यनीलजातीयं व्यावर्त्तयितुं प्रयुज्यते तस्य कथं निर्वाहः एतद्देशे पीतघटसत्त्वेप्युक्तानवच्छेदकत्वानुपपत्त्यभावात् स्वाश्रयघटत्ववत्वसंबन्धेन पीतघटेऽप्येकत्वस्य सत्वादिति वाच्यं विशिष्टस्यातिरिक्तत्व एकत्वस्य नैल्यविशिष्टघटत्वेऽन्वयाङ्गीकारे क्षतिविरहात् तादृशैकत्वस्य पीतिमविशिष्टघटत्वेऽसत्त्वात् । अनतिरिक्तत्वे त्वगत्या घटपदस्य नैल्यघटत्वोभयनिरूपिताधिकरणतावति लक्षणाभ्युपगन्तव्या नीलपदस्य तात्पर्यग्राहकत्वात् । निरुक्ताधिकरणत्व एव चैकत्वान्वयस्वीकारात् तादृशस्थले प्रकृत्यर्थ एकत्वान्वयपक्षे चाकाङ्क्षावशात्स्वसमानाधिकरणनैल्यघटत्वोभयत्वावच्छिन्ननिरूपकताकाधिकरणत्वस्य संसर्गतया भानाभ्युपगमेनोक्तदोषस्य वारणीयत्वादिति प्राहुः । क्वचित्पुस्तके समर्थनीय इत्यनन्तरं नच दात्रेण च्छिनत्ति पशुना यजेतेत्यादौ एकत्वान्वयिनो दात्रपश्वादेर्न प्रकृतच्छिदायागादिकरणत्वप्रकारेण भानमपितु छिदा यागादेरेव दात्रपश्वादिकरणकत्वप्रकारेण तथाचैकत्वे प्रकारीभूतदात्रपशुत्वादिप्रकारेण सजातीयदात्रपश्वादौ सकलैकत्वविशिष्टभेदसत्त्वेनाप्रसिद्धिरेव सजातीयनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्येति वाच्यम् एकत्वान्वयिनि दात्रादौ तुल्यवित्तिवेद्यतया प्रकृतच्छिदाकरणत्वादेरपि प्रकारत्वात् यदि शाब्दबोधे तुल्यवित्तिवेद्यतया भानमप्रामाणिकं तदा प्रकृतशाब्दसमानाकारकप्रत्यक्षे एकत्वेन भासमाने नियमतः प्रकारीभूतो धर्म एव ग्राह्य इत्यस्ति पाठः न प्रकृतग्रन्थइव यद्यपि प्रतिभाति बहुषु पुस्तकेष्वनुपलम्भात् । संदर्भस्यान्यथादर्शनाच । तथापि स व्याख्यायते तत्प्रामाणिकत्वमभ्युपगच्छतां संतोषाय सुधियाम् । ननु समभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वमेकत्वान्वयिनि प्रकारतया भासमानाशेषधर्मवत्त्वमेव अन्यस्य दुर्वचत्वात् । तथाच स्वप्रकृतिप्रयोज्यविषयताविशिष्टमेकत्वमेकवचनार्थ इति पर्यवस्यति । वैशिष्ट्यंच स्वावच्छेद्यत्वस्वतादात्म्यान्यतरसंबन्धेन स्वविशिष्टविशेष्यतानिरूपितप्रकारताविशिष्टनिरूपकताकाधिकरणताकूटवद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वसंबन्धेन, प्रकारतावैशिष्ट्यंच स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वावच्छेदकतापर्याप्त्यनधिकरणधर्मपर्याप्तावच्छेदकताकान्यत्वोभयसंबन्धेन । एवञ्चात्र नीलोघटोत्राह्मणोत्र भुङ्क्ते इत्यादौ निरुक्ताधिकरणताकूटस्य पीतघटशयनकर्तृब्राह्मणादौ न सम्भव इति तन्निष्ठैकत्वे निरुक्तविषयताविशिष्टत्वसम्भवान्न तत्रानुपपत्तिशङ्केत्येतदुक्तनिरुक्ताभिप्रायेणाह-**नचेत्यादि तुल्यवित्तिवेद्यतयेति।** प्रकारविशेष्ययोर्भानाभ्युपगमादितिशेषः। वेद्यत्वं विषयत्वमात्रं नतु ज्ञानविषयत्वं वित्तिपदादेव ज्ञानलाभात् तुल्यत्वञ्च वेद्यत्वान्वयिस्ववृत्तिप्रकारतात्वविशेष्यतात्वान्यतरात्मकम् । तृतीयातु अभेदार्थिका भानं विषयत्वं तथाच प्रकारस्यविषयत्वं विशेष्यवृत्तिविषयतयास्ववृत्तिविशेष्यतात्वेन तुल्यं यद्विषयत्वं तद् भिन्नं विशेष्यस्यचविषयत्वं प्रकारवृत्तिविषयतया स्ववृत्तिप्रकारतात्वेनतुल्यंयद्विषयत्वं तदभिन्नं तस्याभ्युपगमादित्यर्थः । वस्तुतस्तु विषयताविशिष्टविषयत्वपर्यवसन्नं तुल्यवित्तिवेद्यत्वं । वैशिष्ट्यञ्च स्वनिरूपितत्वस्वविशिष्टविषयत्वावच्छिन्नत्वोभयसंबन्धेन स्ववैशिष्ट्यञ्च स्वसाजात्यस्वावच्छेद्यविशेष्यत्वप्रकारत्वान्यतरनिरूपितत्वोभयसंबन्धेन, साजात्यञ्च स्ववृत्तिप्रकारतात्वविशेष्यतात्वान्यतररूपेण संबन्धघटकवैशिष्ट्यनियामकद्वितीयसंबन्धप्रवेशात् स्वावच्छेद्यस्यान्यतरत्वेन प्रवेशाच्च कृतिनिष्ठविशेष्यतानिरूपितयागनिष्ठप्रकारत्वं तन्निरूपितपशुनिष्ठावच्छेदकत्वं चादायतुल्यवित्तिवेद्यतया भानाभावेऽपि न यागादेस्तत्प्रसङ्गः। प्रकारताविशिष्टविशेष्यत्वमेव वा तत्, वैशिष्ट्यंच स्वनिरूपितत्वस्वावच्छेद्यविशेष्यतानिरूपितप्रकारतात्वावच्छेद्यत्वोभयसंबन्धेन । एतच्च नीलो घट इत्यादौ नैल्यस्य घट इव घटस्य नैल्येपि भान एव निर्वहति नान्यथेति बोध्यम् । **अप्रामाणिकमिति।** प्रत्यक्षे सामग्र्योस्तुल्यकालंप्रयोजकसाम्यात्संपन्नतयातादृशभानसंभवेपि शाब्दबुद्धौप्रकारविशेष्याभावस्य प्रकृतिप्रत्ययौ सहार्थंब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यमुद्देश्यवचनं पूर्वमित्यादिव्युत्पत्तिविशेषनियन्त्रिततवेयुगपत् सामग्रीद्वयस्य संवलनासम्भवात्तादृशभानस्य न संभवइतिभावः । **शाब्दबोधसमानाकारकप्रत्यक्षइति ।** समानाकारकज्ञानीयविषयतयोरैक्ये नास्ति विषयतावैशिष्ट्यनियामकसबन्धे वैलक्षण्यं शाब्दबोधीयदात्रनिष्ठप्रकारतातः प्रत्यक्षीयतादृशप्रकारताया एवाभिन्नत्वेन तदवच्छेद्यत्वस्य छिदाकरणत्वप्रकारतानिरूपितविशेष्यतायां सत्वादन्यत्रासत्वाच्च । ऐक्याभावे तु स्वविशिष्टप्रत्यक्षविषयत्वावच्छेद्यविशेष्यत्वं

**अतोऽत्र घटोऽस्तीत्यादौ घटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वाप्रसिद्धावपि न क्षतिः। एतद्देशवि- द्यमानघटनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैव तत्र वोधादिति । तस्य च प्रसिद्धत्वात्। एतद्देशे बहुघटसत्त्वदशायां तादृशवाक्यप्रयोगस्तु जात्येकत्वादेव समर्थनीयः । यत्तु एकत्वाविवक्षायामपि भावाख्यातस्थले एकवचनस्य साधुत्वदर्शनात्संख्याया अविवक्षणेऽपि संपन्नो व्रीहिरित्यादावेक-**

---

संसर्गघटकं वाच्यम् । वैशिष्ट्यंच स्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्व स्वानवच्छेदकसंवन्धानवच्छिन्नत्वस्वनिरूपितविषयतात्व- व्यापकत्वैतच्चतुष्टयसंवन्धेन । व्यापकत्वं च स्वनिरूपितविषतात्वसंवधेन । विषयतावत्ता च स्वानवच्छेदकानवच्छिन्नत्वादित्रि- तयसंवन्धेन बोध्या । इदमत्रचिन्तनीयम् अलौकिकप्रत्यासत्त्यनङ्गीकारे अलौकिकार्थघटितवाक्यार्थस्थले शाब्दसमानाकार- कप्रत्यक्षाप्रसिद्ध्या व्युत्पत्तिग्रहासम्भवः निरुक्तप्रत्यक्षानुपस्थितौ व्युत्पत्तिग्रहो दुर्घटश्चेति ।

यद्यपि यद्यपितत्तद्व्यक्तित्वेन यागादेरित्यादिविभावनीयमित्यन्त ग्रन्थोपि क्वाचित्क एव नचासौ प्रामाणिकतयोपादेयः शव्दानुगमसंभवासंभवावगतिभ्यां व्याघातात् । उक्तरीत्या शव्दानुगमसंभवस्यावगतत्वे यद्यपीत्यादिशङ्काया एवानुन्मेषात् । अनवगतत्वे एकवचनार्थान्वयस्य वहुप्रकारत्वेनैकमात्रस्थले तत्प्रदर्शने कृतेऽपि सर्वत्र शिष्याणां व्युत्पत्तिग्रहासम्भवेन संदर्भप्रवृत्तिफलानुपपत्तेः शाव्दवुद्धौ सर्वत्र विशेषस्यैव भासमानतया स्वसजातीयनिष्ठेत्यादिग्रन्थस्याविचारितनिर्वाहार्थप्रवृत्ति- कतया न्यूनतापाताच्च । तथाप्येकविशेषप्रदर्शनेन साधर्म्यविशेषाद्विशेषान्तरप्रतिपत्तेः सूक्ष्ममतीनां संभवेन तन्मात्रोद्देश्यक- प्रवृत्तिकतया कथंचित्संगतत्वमवलम्ब्य व्याख्येयः तथापि स्वतादात्म्येत्यादि । इदमत्रबोध्यम् एषा रीतिर्यत्रैकस्मिन्समभि- व्याहृतपदार्थेऽनेकेषां संसर्गित्वसंभवस्तत्रैव नान्यत्र अन्यथा यत्र वहूनां भोजनकर्तृत्वं तत्राप्यत्र ब्राह्मणो भुङ्क्ते इति प्रयोगापत्तेः एकैकभोजनक्रियायां कर्तृद्वयासंभवेन तत्तदेकत्वे स्वाश्रयकर्तृकभोजनकर्तृनिष्ठभेदप्रतियोगितानवच्छेदकत्वसम्भ- वात्। **भेदप्रतियोगितेति** । प्रतियोगिताव्यासज्यवृत्तिधर्मानवच्छिन्ना प्रतियोग्यवृत्तिभेदनिरूपिता वा ग्राह्या नात उभय- भेदादिकमादाय दोषः । ननु कस्यचित्कुठारस्य कुठारान्तरकरणकच्छेदनक्रियाकरणस्यैकस्यैव यत्र छेदनकरणत्वं तत्र कुठारेण च्छिनत्तीत्यस्यानुपपत्तिः तत्राप्युक्तरीत्यैवैकत्वस्यैकवचनार्थताया वाच्यतया तदसंभवात् तत्कुठारनिष्ठैकत्वस्य स्वाश्रयकरण- कच्छेदनकरणकुठारनिष्ठभेदप्रतियोगितावच्छेदकत्वात् इत्यतः कल्पान्तरमाह—**अथवेति** । तथासत्यस्या एव रीतेः कुठारेण च्छिनत्तीत्यत्राप्यनुसर्तव्यत्वेन नानुपत्तिः तत्रत्यच्छेदनस्य स्वानाश्रयकुठाराकरणकत्वादिति । ननु देवतोद्देशेन द्रव्यत्यागस्यैव यागत्वेनैकयागत्वावान्तरधर्माश्रयस्य प्रत्येकेणोभयकरणकत्वेऽपि तत्तद्व्यक्तौ स्वानाश्रयपशुकरणकत्वसत्त्वेवाधकाभाव इति चेन्न स्वानाश्रयपशुकरणकावृत्तियागत्वावान्तरधर्मवत्वस्यैव संसर्गत्वात् । अनेकपशुकरणके तन्त्रेणानुष्ठेये यागविशेषादौ नैकपशुक- रणकत्वप्रसङ्गः फलविशेषजनकतावच्छेदकावान्तरधर्मस्य तत्तत्यागेष्वेकत्वादिति । अथैकत्वस्य पशावनन्वये प्रत्ययस्य प्रकृत्य- र्थान्वितस्वार्थबोधकताव्युत्पत्तिभङ्गः नचाधेयतया पशोरेकत्वे तस्य च यागेऽन्वय इति न व्युत्पत्तिभङ्गः । एवंचैकत्वे विशेष- णतयान्वितस्य करणत्वे विशेषणत्वासंभवादगत्या करणविभक्तेः करणत्वसंसर्गतात्पर्यनिर्वाहकत्वमेव वाच्यं । तथासति पदार्थ- विधया वक्ष्यमाणरीतेः पशुकरणत्वभानस्यावश्यकतया स्वाश्रयपशुकरणकत्वसंसर्गस्य वैफल्यमिति शङ्कापि निरस्तेति वाच्यम् । सुवर्थसंख्यायाः प्रकृत्यर्थविशेषणत्वनियमस्य तथापि बाधप्रसङ्गादिति चेन्न अगत्या पदार्थः पदार्थेनेत्यादिनियमसङ्कोचस्ये- वोक्तानियमसंकोचस्याप्यदोषत्वात् । अथवोक्तदोषभयेनैव तादृशविधिजन्यबोधस्य विशिष्टवैशिष्ट्यबोधात्मकतयेत्यादिना कल्पान्तरं वक्ष्यति तत्रैकत्वस्य पशावन्वये विशिष्टवैशिष्ट्यभानमर्यादावशाद्व्युत्पत्तिवैचित्र्याङ्गीकारेण धर्मिपारतन्त्र्यात्परम्परया यागक्रि- यायामन्वयस्वीकारात् नह्युक्तव्युत्पत्त्योर्भङ्गः । नचैवं स्वाश्रयपशुकरणकत्वस्य संसर्गत्वोक्तिवैफल्यमिति वाच्यं तस्य संपाता- यातत्वात् । स्वाश्रयकरणकत्वमात्रसंसर्गत्वेऽपि दोषाभावेन पशुत्वेनाश्रयप्रवेशस्य संपातायाततायाः सर्वथैव वक्तव्यतया समस्तस्यापि तथात्वे क्षत्यभावात् स्वानाश्रयपशुकरणकत्वसंसर्गे च पशुत्वस्याप्रवेशे यागस्य पशुकरणकत्ववन्मन्त्रकरणकत्व- वत्तया स्वानाश्रयाकरणकत्वस्यासंभवः स्यादिति तदुपादेयमेव । इदन्तुचिन्तनीयं । स्वतादात्म्यस्वानाश्रयपश्वकरणकप्रकृतवाक्य- तात्पर्यविषययागकरणकत्वोभयसंवन्धेनैकत्वविशिष्टैकत्वस्य पशावन्वयेऽपि न क्षतिः । एतस्या एव रीतेः कुठारेण च्छिनत्ती- त्यत्राप्यवलम्बनीयतया तात्पर्यविषयच्छेदनक्रियायास्तत्कुठारनिष्ठैकत्वानाश्रयकुठाराकरणकत्वात् । कुठारद्वयकरणकच्छेदनक्रि- यायास्तात्पर्यविषयत्वे च तस्यास्तादृशाकरणकत्वस्यासंभवादनुपपत्तेरापत्तेश्चासंभवात् तथासति सुवर्थसंख्याधात्वर्थयोरन्वयावल- म्बिपक्षावलम्बनं किमर्थमिति ।

**अप्रसिद्धमिति** । नच पश्वकरणकयागादौ तत्प्रसिद्धेरसङ्गतिरितिवाच्यम् पशुकरणकयागइत्यस्य पूरणीयत्वात् तथाचाप्र- सिद्धमित्यविद्यमानमितिपर्यवसितार्थः । अथावच्छिन्नप्रतियोगिताकेत्यत्रावच्छिन्नत्वं यद्यवच्छेदकतानिरूपितत्वमात्रं तदै- कत्ववद्घटोभयभेदस्यैकत्वाश्रयेऽपि सत्वेनानुपपत्तिः । यदि स्वभिन्नावच्छेदकत्वानिरूपितत्वविशेषितं तदा स्वत्वप्रवेशे ऽननुगमः अप्रवेशे च तादृशानिरूपितत्वाप्रसिद्धिरितिचेत् विलक्षणमेवावच्छिन्नत्वमनवस्थाभयेन स्वीकरणीयं तदेव च प्रकृते प्रवेश्यमिति नानुपपत्तिरिति गृहाण । प्रतियोगित्वनिष्ठावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितभेदनिष्ठा-

वचनोपपत्तेरलं जात्येकत्वपरतया तत्र समर्थनेनेति । तदप्यकिंचित्करम् । भावाख्यातस्थले गत्यन्तरविरहेण विभक्तेर्निरर्थकत्वोपगमात् । तत्र च सार्थकत्वोपगमसंभवे तत्परित्यागस्यानुचितत्वात् । सति तात्पर्ये तद्बोधस्यानुभविकत्वाच्चेति । एवं त्रयः समुदिता हेतुरित्यत्र हेतुपदं कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरं तादृशसमुदायत्वान्वितमेकत्वं एकवचनार्थः । अत एव द्वा-

---

वच्छेदकताभिन्नपशुत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितपशुत्वावच्छिन्नावच्छेदकताभिन्नकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावत्वेनोक्ताभावः प्रवेद्यः तेन तत्पशुवृत्तिभेदवत्पश्वकरणकत्वं भेदवत्तत्पश्वकरणकत्वं तादृशभेदवत्पशुकरणकत्वघटोभयाभावं चादाय नोभयपशुकरणकयागसङ्ग्रहप्रसङ्गः ।

**अनुभवविरुद्धत्वेत्विति** । अत्र च धात्वर्थीभूतस्य सुबर्थे विशेषणतया ह्यन्वयोऽनुभवविरुद्धः । नच सुबर्थघटकीभूतस्य धातुविशेषसमभिव्याहारेण तादृशार्थे पदवृत्तेः सुग्रहतया ततस्तथाभानेआकाङ्क्षाविरहस्याकिंचित्करत्वादिति चिन्त्यम् । एवं सुबर्थघटकतया भानाङ्गीकारेपि स्वकरणपशुवृत्तित्वसंबन्धप्रवेशफलं चिन्त्यमेव । कश्चित्तु स्वकरणपशुनिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वाभाववत्वमेव निरुक्तानवच्छेदकत्वमन्यथा स्वत्वप्रवेशेऽननुगमः अप्रवेशे च करणीभूतपशुनिष्ठभेदप्रतियोगितानवच्छेदकत्वोपरागेणैवतादृशानवच्छेदकत्वस्य संसर्गताया वाच्यतया तेन रूपेण तस्यैकत्वमात्रावृत्तितया गुणे संयोगस्य द्रव्यसंसर्गताया इवैकत्वे निरुक्तस्य यागसंसर्गताया अप्यसंभवः । एवञ्च पश्वकरणकयागवैशिष्ट्यस्योभयपशुकरणकयागकरणपशुनिष्ठैकत्वे संभवः स्यादिति स्वाकरणपशुवृत्तित्वसंसर्ग उपादेय इत्याह तन्नातिमनोरमं । संसर्गसंसर्गभानाभावपक्षे उक्तरीतेः संभवेऽपि कल्पान्तरे तदसंभवात्तथाहि उक्तानवच्छेदकत्वस्यान्यत्र प्रसिद्धस्य यागविशिष्टबुद्धौ रूपविशिष्टबुद्धौ समवायस्य रूपप्रतियोगिकत्वेनेव यागप्रतियोगिकत्वेनैव संसर्गतया भानमङ्गीकरणीयं तथासत्येकत्वे न तस्यासंभव इति स्वाभाववत्वस्य संसर्गरूपताङ्गीकारस्य निर्बीजत्वात् । कथमन्यथा पशुत्वतत्तद्व्यक्तित्वाद्यवच्छिन्नप्रतियोगिताकभेदस्याप्याश्रयनिष्ठतया तमादायैवाश्रयनिष्ठभेदप्रतियोगिपश्वकरणकत्वस्य यागकरणपशावविद्यमानत्वोक्तिसंभवे विशिष्टभेदद्वित्ववद्भेदपर्यन्तानुधावनं । नच प्रतियोग्यवृत्तित्वविशेषणेन विशिष्टभेदादिव्यावृत्तिसंभवे तत्कल्पपरित्यागोऽनुचित इति वाच्यं प्रतियोग्यवृत्तित्वस्यापि विलक्षणावच्छिन्नत्वमन्तरेण दुर्वचतया तद्घटितकल्पानुसरणस्यैव युक्तत्वात् । यत्तु स्वाभाववत्वप्रवेशेऽपि स्वत्वप्रवेशाप्रवेशविकल्पेन दोष इति तन्न स्ववृत्युभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव प्रवेश्यत्वात्तत्र स्वत्वाप्रवेशेऽपि क्षतिविरहादिति । **अथवेति** । वाकारोऽनास्थायामानुभविकस्यैकत्वबोधस्यापलापप्रसङ्गादिति । **गत्यन्तरविरहेणेति** । अविवक्षातिरिक्तगतिविरहेणेत्यर्थः । विशेष्यतया आख्यातार्थसंख्याप्रकारकान्वयबोधे प्रथमान्तपदोपस्थाप्यत्वस्य तन्त्रत्वेन चैत्रेणस्थीयत इत्यादौ चैत्रादेः प्रथमान्तपदानुपस्थाप्यत्वेन तत्र संख्यान्वयासंभवात् । सार्थकत्वानुरोधेन व्युत्पत्तिवैचित्र्येणाप्यन्वयस्य चैत्रमैत्राभ्यांस्थीयत इत्यादौ द्वित्वावरुद्धे कर्तर्यसंभवात् कर्तृगतसंख्याभिधाने तृतीयानुपपत्तेश्च धात्वर्थवहुत्वेप्येकवचनस्यैव दर्शनात्तत्रापि वाधितत्वेनान्वयासंभवाद्धात्वर्थे द्वित्ववहुत्वयोरपियोग्यत्वेन तद्विवक्षायां द्विवचनवहुवचनयोरप्यापत्तेः धात्वर्थे संख्यान्वये आख्यातस्य निराकाङ्क्षत्वस्यैवाभ्युपेयत्वाच्च न विवक्षासंभव इति भावः । **निरर्थकत्वोपगमादिति** । नच तेप्रभृतेः कर्माख्यातादिस्थले संख्याप्रत्ययोत्पादात् तादृशानुपूर्वीप्रकारेणैकत्वादिशक्तेरावश्यकत्वात् संख्यार्थकत्वमेवास्ति भावाख्यातस्यापीति कथं निरर्थकत्वसंभवः । यत्तु भावाख्यातस्थलेऽपि कालस्य प्रतीतेः कथं निरर्थकत्वसंभव इति तन्न संख्यारूपार्थराहित्यस्यैव निरर्थकत्वपदेन प्रकरणमहिम्ना लभ्यत्वादिति वाच्यम् संख्यातात्पर्यरहितत्वस्यैव तद्रूपत्वात् नहि संभवति तत्र संख्यायां व्युत्पन्नस्य वक्तुस्तात्पर्यं प्रागुक्तयुक्त्या तद्विषयासंभवस्य निर्णयादिति तत्र संख्याविवक्षाविरहोऽभ्युपगन्तुं शक्य इति । **सार्थकत्वसंभव इति** । संख्यातात्पर्यविषयत्वसंभव इत्यर्थः । भावाख्यातस्थलइवात्रचाविवक्षाकारणाभावात् द्वयं ह्यविवक्षाकारणं विवक्षणीयासंभवनिर्णयः तत्प्रयोजनत्वाप्रतिसन्धानञ्च तत्र च प्रकृते व्युत्पन्नस्याद्यस्य न संभवः स्वायत्ते शब्दप्रयोगइत्यादिन्यायस्य जागरूकतयोक्तातिप्रतिसन्धानंच न कल्पनार्हमित्यविवक्षितत्वं नाभ्युपेयमिति भावः । अथ सम्पन्नव्रीहिमात्रबुबोधयिषया प्रयोक्तव्ये वाक्ये न केवलं प्रकृतिरित्यादि न्यायेनावर्जनीयतयाऽवश्यप्रयोक्तव्यो विभक्त्यंशः प्रकृत्यंशश्च तत्र प्रकृतिभागोऽर्थविशेषबुबोधयिषानुसाराद्व्रीह्यादिविशेषपदात्मा विभक्त्यर्थस्याबुबोधयिषिततया यस्मिन् कस्मिंश्चित्प्रयोक्तव्ये औत्सर्गिकत्वात्प्रथमैकवचनात्मक एव विभक्त्यंशः । एवं हि न तदवलम्बनेन स्वायत्तइत्यादि न्यायोऽवतरितुमीष्टे तथासत्येकदेशानन्वयव्युत्पत्तिभङ्गोऽपि न मर्षणीय इति भवत्येवैकत्वस्याविवक्षितत्वं दुर्वारमित्यत आह—**सतितात्पर्य इति** । सत्यं न स्वायत्त इत्यादिन्यायानुरोधादुक्तप्रयोगादिषुसर्वत्र संख्यायाविवक्षितत्वं परन्तु यत्र व्रीहित्वेनैकजातीयेषु संपत्तिप्रतिपत्तिः प्रयोजनत्वेन प्रतिपन्ना तत्र भवत्येव तादृशप्रतिपत्तिविषयताव्याप्तासपरम्परावक्तुः प्रकरणादितस्तज्ज्ञानाच्च व्युत्पन्नानामप्रतिपत्तिः अनुव्यवसीयमाना च सा भवति जातावेकत्वान्वये प्रमाणं तस्य च प्रामाणिकत्वे प्रयोगानुसारलब्धविषयप्रसरोक्तनियमभङ्गोऽपि न दोषस्तन्नियमस्य संकोच्यत्वादिति भावः । **कार्योत्पादप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरमिति** ।

त्यादीनां त्रयाणां तृणारणिमणिन्यायेन हेतुत्वशङ्कानिरासः । तथा सत्येषामेकैकसमवधानदशायामपि कार्योत्पत्तेरावश्यकतया तन्त्रितयपर्याप्तसमुदायत्वस्य कार्योत्पत्तिप्रयोजकतानवच्छेदकतया तेषां त्रयाणां तथाविधैकसमुदायत्वाश्रयत्वानुपपत्तेः । एवं जात्याकृतिव्यक्तयः पदार्थ इत्यत्र त्रितयनिष्ठस्य पदशक्तिरूपपदार्थत्वस्यैकत्वं विवक्षितमिति तन्न विशेष्यपदस्य बहुवचनान्तत्वेऽपि विशेषणपदस्यैकवचनान्ततोपपत्तिः प्रत्यक्षानुमानेत्यादिसूत्रे प्रमाकरणत्वरूपप्रकृत्यर्थतावच्छेदकस्य प्रत्यक्षानुमानादिनिष्ठस्यैकताया बाधितत्वेनाविवक्षितत्वात्प्रमाणपदस्य बहुवचनान्ततेति । एवं पितरो देवता इत्यत्रापि पितृपितामहादीनां सहितानामेकरूपेण देवतात्वविरहेण पितृत्वपितामहत्वादिना पृथगेव त्यागोद्देश्यत्वरूपदेवतात्वम् । उद्देश्यतावच्छेदकभेदेनैव उद्देश्यताभेदात् । तत्र एकत्वस्याविवक्षया देवतापदस्य बहुवचनान्ततेति दिक् । स्वप्रकृतिकत्वं च स्वाव्यवहितोत्तरत्वेन प्रतिसन्धीयमानत्वम् । तेन दधि सुन्दरमित्यादौ विशेष्यपदानन्तरं विभक्तेरसत्त्वेऽपि न क्षतिः । तत्र विभक्तेरनुसन्धानं विना शाब्दबोधानुपगमात् । एवं तादृशविभक्तिसजातीयविभक्तिकत्वमपि तथाविधविभक्त्यव्यवहितपूर्ववर्तितया प्रतिसन्धीयमानत्वम् । तेन इदं दधीत्यादौ विशेषणपदानन्तरं विभक्तेरसत्त्वेऽपि न क्षतिः । अथ नीलस्य घट इत्यादावपि पदार्थोपस्थित्यादिकारणसमवधानसंभवात् कथं न नीलघटयोरभेदान्वयबोधः । सामग्र्या कार्यजनने उक्तनियमभङ्गप्रसङ्गरूपबाधकस्याकिंचित्करत्वादिति चेत् । तथाविधान्वयबोधौपयिकाकाङ्क्षाविरहात् । तथा हि । तादृशान्वयबोधे प्रथमाविभक्त्यन्त-

---

ननु हेतुपदस्य निरुक्तधर्मावच्छिन्नेलक्षणानुसरणं व्यर्थं शक्त्युपस्थापिते हेतुत्वेप्येकत्वान्वयस्य संभवात् । नच कथं हेतुत्व-एकत्वान्वयस्य संभवः तदेकत्वस्यावच्छेदकैक्यायत्तत्वेनावच्छेदकतया संभाव्यमानानां शक्तित्वादीनामनेकत्वादिति वाच्यम् समुदायत्वेनैकहेतुत्वस्य संभवात् । अत एव समुदिता इति सार्थकं, समुदायत्वविशिष्टहेतुत्वान्वये समुदायत्वेन हेतुत्वस्य लभ्यत्वात् । इत्थमप्येकैकस्मात्कार्योत्पत्तिव्यतिरेकलाभेनैकत्वविवक्षाया नानर्थक्यमिति चेन्न एकस्याः प्रत्यासत्तेर्दुर्लभतया समुदायत्वस्यैकविशिष्टापरत्वरूपत्वेन विशेष्यविशेषणभावे विनिगमनाविरहाद्दुरुत्तरानेककारणत्वप्रसङ्गेन च दण्डचक्रादीनां समुदायत्वेन हेतुत्वमनभ्युपेत्य प्रत्येकरूपेण हेतुत्वानां सहकारिवादेऽभ्युपगतत्वाच्छक्त्यादीनामपि समुदायत्वेन हेतुत्वस्य सहकारिवादे तथैवानभ्युपेयत्वात् । नच समुदिता इत्यस्य वैयर्थ्यं हेतुपदस्य निरुक्तसमुदायत्वावच्छिन्नत्वलक्षणायां तात्पर्यग्राहकत्वात् । कार्योत्पादेतिपर्यवसितकथनं ननु तदन्तर्भावेण हेतुपदार्थता तदुद्भवइत्यस्यान्वयादेवतल्लाभात् काव्योद्भवनिरूपितप्रयोजकत्वञ्च काव्योत्पत्तिसमानाधिकरणाभावाप्रतियोगित्वं तादृशोत्पत्तिव्यतिरेकनियतव्यतिरेकप्रतियोगित्वमतिरिक्तपदार्थोवेत्यन्यदेतत् । सर्वैव शक्त्यादिष्वेकैकस्मात्कार्योत्पत्तौ शक्त्यादिसमुदायव्यतिरेकस्य काव्योत्पत्तिसदेशत्वेन निरुक्तसमुदायत्वस्य प्रयोजकतावच्छेदकत्वाद्भव इति तेषां सहकारित्वमेवाभ्युपेयमित्येकत्वविवक्षाप्रयोजननिर्वाहः ।

**तृणारणिमणिन्यायेनेति** । तृणारणिमणीनधिकृत्य प्रवृत्तो न्यायस्तृणारणिमणिन्यायः सचान्यतमत्वादिना गृहीतान्वयव्यतिरेकेष्वेकैकशो दृष्टव्यभिचारेषु परस्परनैरपेक्ष्येण प्रत्येकधर्मपुरस्कारेण कारणत्वसाधिका युक्तिस्तयेत्यर्थः । तृतीयार्थस्य हेतुत्वेन्वयः ।

**पदशक्तिरूपपदार्थत्वस्यैकत्वमिति** । नचेच्छारूपायाः शक्तेरेकत्वेन यद्येकपदार्थत्वव्यवहारस्तदा घटपटादीनामपि स्यात् यदिचेच्छाविषयत्वस्यैकत्वनिबन्धनस्तदा जात्याकृत्यग्निनिष्ठविषयताया नानात्वेन जात्यादिष्वप्येकशक्तेरसंभव इतिवाच्यं पदजन्यबोधविषयत्वनिष्ठप्रकारतैवहि शक्तिस्तन्नियामकसंबन्धश्च स्वनिरूपितविशेष्यत्वस्वावच्छेद्यनिरूपितावच्छेद्यत्वनिष्ठविषयतानिरूपितावच्छेदकत्वनिष्ठविषयतावत्वान्यतरात्मकः विषयतावत्वञ्च स्वनिरूपिताधेयत्वसंबन्धावच्छिन्नावच्छेदकत्वावत्स्वनिरूपितसंसर्गत्वनिष्ठविषयतानिरूपितविषयतावत्वान्यतरसंबन्धेन बोध्यमिति न काप्यनुपपत्तिः । **एकताया बाधितत्वेनेति** । नच प्रमाणत्वस्य प्रमाजनकत्वरूपतया प्रमात्वएकत्वान्वयसंभवात्तद्विवक्षया कथन्न सार्थकैकवचनप्रयोगः कृत इति प्रमात्वस्यैक्याभावादसंभवान्न तथान्वय इतितु न वाच्यम् प्रमानुगतव्यवहारानुरोधेन कथञ्चिदनुगतप्रमात्वस्य वाच्यत्वादिति वाच्यम् प्रमाणत्वस्य प्रमात्वन्यूनवृत्तिधर्मघटितधर्मावच्छिन्नजनकत्वरूपतया प्रथमधर्म एव चैकत्वान्वये प्रमाणपदोत्तरस्वादेः साकाङ्क्षत्वात्तादृशैकधर्मावच्छिन्नजनकत्वस्य प्रत्यक्षादिचतुष्टयेबाधितत्वादिति भावः । **अनुपगमादिति** । एतद्बीजंमग्रे वक्ष्यते । **प्रथमाविभक्त्यन्तेति** । प्रथमात्वेन विभक्तेर्नाकाङ्क्षाशरीरे प्रवेशः प्रथमात्वाज्ञानेऽपि शाब्दबोधोदयात् । नापि स्वत्वादिना घटइत्याद्यानुपूर्वीमात्रज्ञानेऽपि शाब्दबोधोदयात् किन्तु घटइत्यादेरानुपूर्वीप्रकारेणैवाकाङ्क्षाशरीरे प्रवेशः कार्यः आनुपूर्वीविशेषा-

**घटादिपदसमभिव्याहृतप्रथमान्तनीलादिपदत्वमेवासमस्तनीलघटपदाद्याकाङ्क्षा । समासस्थले च घटपदाद्यव्यवहितपूर्ववर्तिनीलादिपदत्वं नीलादिपदाव्यवहितोत्तरवर्तिघटादिपदत्वं वा आकाङ्क्षा ।**

---

वच्छिन्नयोरेव समभिव्याहाररूपाया आकाङ्क्षाया ज्ञानं कारणमुक्तग्रन्थस्तु शिष्यव्युत्पादनार्थः । वस्तुतस्तु समभिव्याहाररूपाकाङ्क्षा न शाब्दबोधोपयोगिनी अग्रे समभिव्याहाररूपाकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वादित्यादिना तस्या अतद्रूपत्वोक्तेस्तथासति यथाकारणत्वं तथा तत्रैव वक्ष्यामः । नच ह्यो बहुगुडः सुन्दरः पाठकदेशीयः पाठकतरः पाठककल्पः पाठकरूप इत्यादौ कथमुक्ताकाङ्क्षा विशेष्यवाचकपाठकपदस्याप्रथमान्तत्वादितिवाच्यं नचैवमप्युपकुम्भमर्धपिप्पल्यादीत्यादिसन्दर्भेणोत्तरस्य ग्रन्थकृतैव करिष्यमाणप्रायत्वात् ॥

**समासस्थलेचेत्यादि ।** अथ समासस्थले नीलपदाव्यवहितोत्तरघटपदत्वादेरेवाकाङ्क्षात्वे पदार्थोपस्थित्यादिकारणसङ्घाते नीलघटेत्येतन्मात्रज्ञाने च सति शाब्दबोधापत्तिरितिचेन्न अनुमिताविव शाब्दबुद्धावपि विधेयताया नियमेन समासस्थले नीलमात्रप्रकारकस्य शाब्दबोधस्यासंभवादुपसर्जनीभूतनीलादिपदप्रयोज्यविषयताया विधेयत्वासंभवात् विधेयीभवदेकत्वादिप्रकारकनीलघटशाब्दबोधादेरेव समासोत्तरं प्रसिद्धतया तत्सामग्र्या विभक्त्यन्तनीलघटादिपदज्ञानघटितत्वेन निरुक्तस्थले तदभावेनापत्त्यसंभवात् । विधेयीभवन्नीलादिप्रकारकस्य च नीलघटशाब्दबोधस्य व्यासस्थल एव प्रसिद्धत्वेन तत्सामग्र्याअप्युक्तस्थलेऽभावात् । नच नीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वस्याकाङ्क्षाज्ञानजन्यतावच्छेदकत्वेन योग्यताज्ञानादिजन्यतावच्छेदकत्वेन च निरुक्तसमासस्थलीयाकाङ्क्षाज्ञानादिघटितसामग्रीसत्वे कुतो नोक्तापत्तिः घटत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दत्वस्य जन्यतानवच्छेदकत्वेन तदवच्छिन्नापत्तितो वैलक्षण्यादिति वाच्यम् निर्विशेषस्य सामान्यस्याभावेन व्याप्यीभूतयत्किंचिद्धर्मावच्छिन्नोत्पादकसामग्रीं विना व्यापकधर्मावच्छिन्नोत्पत्त्यसंभवात् व्याप्यभूतश्च धर्मः नीलघटइत्यादिज्ञानाव्यवहितोत्तरनीलघटादिविशेष्यकैकत्वादिप्रकारकशाब्दबुद्धित्वादिः व्यापकश्च नीलघटपदज्ञानाव्यवहितोत्तरनीलप्रकारकघटविशेष्यकबुद्धित्वं, कार्यतावच्छेदकत्वञ्च तस्य यद्विशेषयोरित्यादिन्यायप्रामाण्यात्, उक्तसामान्यकार्यकारणभावाभावेऽपि च न क्षतिः कार्यतावच्छेदकघटकप्रयोजकतायाः कारणतावच्छेदकघटके न्याय्यतया नीलप्रकारतानिरूपितघटविशेष्यत्वरूपकार्यतावच्छेदकघटकं प्रति कारणतावच्छेदकघटकनीलपदाव्यवहितोत्तरघटपदत्वस्यैव प्रयोजकत्वादाकाङ्क्षाघटकतादृशांशस्याकाङ्क्षात्वोक्तेरसङ्गतत्वविरहात् । यत्तु न केवलंप्रकृतिः प्रयोक्तव्या-नापिचप्रत्यय इति व्युत्पत्त्यनुसारेण सामान्यतः प्रकृतिजन्यशाब्दबुद्धौ प्रत्ययजन्यशाब्दबुद्धौ च परस्परसमभिव्याहारज्ञानस्य कारणत्वेन व्यापकधर्मावच्छिन्नसामग्रीविरहादेव नोक्तापत्तिरिति तन्न निरुक्तकार्यकारणभावे मानाभावात् प्रकृतित्वाद्यज्ञानेऽपि शाब्दबोधोदयाच्चोक्तव्युत्पत्तेःविशेषकार्यकारणभावमूलकतादृशवस्तुप्रतिपत्तिमात्रफलकत्वात् । केचित्तु स्वाद्यन्तनीलघटादिपदज्ञानोत्तरतादृशशाब्दबोधे स्वाद्यन्तनीलघटपदत्वादिज्ञानत्वेन कारणत्वमिति नोक्तापत्तिः नीलपदाव्यवहितोत्तरघटपदत्वस्याकाङ्क्षात्वकथनं तु निरुक्ताकाङ्क्षाशरीरे स्वाद्यन्तत्वप्रवेशस्य निर्विभक्तिकपदप्रयोगाव्युत्पन्नत्वनिबन्धनत्वेनाभेदान्वयबोधप्रयोजकत्वस्य निरुक्तपदत्वमात्रपर्यवसितप्रायत्वात् । व्यासस्थले च निर्विभक्तिकत्वपरिहारस्य पदयोर्विजातीयविभक्त्यवरुद्धत्वेऽपि संभवेन सजातीयविभक्तिगर्भस्यैवाभेदान्वयप्रयोजकत्वस्याभ्युपेयत्वात् तत्र च तथैवोक्तम् । नचैवं नीलघटरूपमित्यादिस्थले शाब्दबोधानुपपत्तिः घटपदस्यस्वाद्यन्तत्वविरहात् स्वादिपूर्ववर्तितामात्रस्य तथात्वे नीलघटोऽस्तिचैत्र इत्यत्रापि तदापत्तेरिति वाच्यम् स्वपूर्ववर्तिसमासाघटकपदपूर्ववर्तित्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्वविशेषितस्वपूर्ववर्तित्वसंबन्धेन स्वादिमत्त्वस्य वाच्यत्वात् । नच नीलघटपदस्य निर्विभक्तिकस्य विभक्त्यन्तसमासघटकपदपूर्ववर्तिनः तादृशपदेनैकवाक्यताविरहनिश्चयेऽपि निरुक्तस्वादिमत्वसंभवेन शाब्दबोधापत्तिरिति वाच्यम् स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्पदानुत्तरत्वसंबन्धेन स्ववृत्तित्वस्यैवाभावान्तार्थत्वान्निरुक्तस्य च संसर्गतया तज्ज्ञानं च न दुरुपपादम्, स्वप्रयोज्यविषयताया अपि स्वप्रयोज्यविषयतानिरूपितत्वं परम्परयाऽस्तीति नीलघट इत्यादौ नानुपपत्तिः स्वादीनाञ्च सुप्त्वादिनैव प्रवेशः कार्यकारणभावबाहुल्यं चेष्यत एवेत्याहुस्तदसत् नीलघटरूपमित्यादौ रूपपदमात्रेऽपि स्वन्तत्वादिग्रहे शाब्दबोधोदयात्कथमन्यथानुपदवक्ष्यमाणायाः समासव्याससाधारणानुगताकाङ्क्षायाः खण्डनं संगच्छेत तत्रापि स्वोत्तरस्वभिन्नपदानुत्तरत्वे सति स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदभिन्नपदानुत्तरसुपूर्वत्वसंबन्धेन नीलपदवद्घटपदत्वस्याकाङ्क्षारूपतोयावक्तुं शक्यत्वात् । नीलोघटरूपमित्यादौ घटादौ नीलाद्यन्वये निराकाङ्क्षे घटादिविषयताया वस्तुतो नीलादिविषयतानिरूपितत्वविरहेण तत्राप्युक्ताकाङ्क्षाया अप्रसक्तेः उक्तनिरूपितत्वस्य संसर्गघटकत्वाच्चोक्तविषयतयोरनिरूपितत्वग्रहे आकाङ्क्षाविरहग्रह आकाङ्क्षाविरहग्रहे चोक्तविषयतयोरनिरूपितत्वग्रह इत्यन्योन्याश्रयस्य निरुक्ताकाङ्क्षाज्ञानकारणताग्रहे न प्रसङ्गः । वस्तुनि तथाविधान्योन्याश्रयप्रसङ्गदोषापलापः सर्वत्र तादृशज्ञानकल्पनं चोभयत्रापि समानं नीलघटरूपमित्याद्यानुपूर्वीज्ञानानां नीलाभिन्नघटीयरूपशाब्दबोधे हेतुत्वस्य क्लृप्तया तावतैव तत्र नीलाभेदबोधसंपत्तेस्तदनुरोधेन तत्र समासस्थलीयाकाङ्क्षानिर्वचनप्रयासो नोपादेय एवेति तु स्यादेवोपादेयः अतएव समासघटकपदार्थस्य विधेयत्वाभ्युपगमपक्षेऽपि न क्षतिरिति ।

**उक्तस्थले च तादृश्या एकस्या अप्याकाङ्क्षाया विरहान्नापत्तिः। कार्यतावच्छेदककोटावव्यवहितो-त्तरत्वनिवेशान्नोक्ताकाङ्क्षाज्ञानयोः परस्परबोधे व्यभिचारः। यत्तु समासव्याससाधारणं विशेषण-**

---

**नोक्ताकाङ्क्षाज्ञानयोरिति।** इदमुपलक्षणम् व्यासस्थले समासस्थलेऽपि च पर्यायपदघटितत्वेनाकाङ्क्षाया नानात्वात्तेषामपि परस्परजन्यबोधे व्यभिचारवारणायाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकघटकत्वं बोध्यम्॥

**कार्यतावच्छेदककोटाविति।** अथानेनाव्यवहितोत्तरत्वातिरिक्तस्यापि कार्यतावच्छेदकत्वं ज्ञायते अन्यथा कार्यताव-च्छेदकतयेत्येवोच्येत तत्किमित्यभ्युपेयं व्यभिचाराद्यभावादितिचेन्न नीलो घटः नीलः पट इति ज्ञानं यत्र पटपदे नीला-द्यव्यवहितोत्तरत्वस्याप्रामाण्यज्ञानास्कन्दितं तत्र नीलघटशाब्दबोधो जायते नतु नीलपटशाब्दबोधः तदनुरोधेनाप्रामाण्यज्ञानाभा-वस्य कारणतावच्छेदकघटकत्वं वाच्यमेवं सति कार्यतावच्छेदककोटौ विषयताविशेषस्याप्रवेशे तत्रैव व्यतिरेकव्यभिचारः स्यादिति विषयताविशेषस्याप्रामाण्यज्ञानास्कन्दित आकाङ्क्षाज्ञानेऽनुमितिसामग्र्यां च नीलोघट इत्यनुमितेरुत्पत्तेस्तत्र व्यतिरेक-व्यभिचारवारणाय शाब्दत्वस्य च प्रवेश्यत्वात्। नच नीलोघटः नीलः कलशः इतिद्विविधाकाङ्क्षाज्ञाने कलशपदांशे प्रामाण्य-ज्ञानास्कन्दिते सति नीलघटान्वयबुद्धिरुत्पद्यते तत्र व्यतिरेकव्यभिचारः स्याद्विषयत्वादीनां कार्यतावच्छेदककोटौ प्रवेशेऽपीति कार्यतावच्छेदककोटावप्रामाण्यज्ञानानास्कन्दितत्वमवश्यमुपादेयं तथाचोक्तव्यभिचारयोरभावाद्विषयत्वादिप्रवेशो व्यर्थ इति वाच्य-मप्रामाण्यज्ञानेऽप्रामाण्यज्ञानस्य तत्राप्यप्रामाण्यज्ञानस्याभावः प्रवेश्य इत्यनवस्थिताप्रामाण्यज्ञानाभावानां कार्यतावच्छेदककोटौ प्रवेशापेक्षया तत्तद्व्यक्तित्वेनाप्रामाण्यज्ञानाभावानां कारणतावच्छेदककोटौ प्रवेशस्य युक्तत्वात्, तथासति पर्यायस्थलीयाप्रामा-ण्यज्ञानव्यक्तेरभावस्याप्रयोजनत्वेन परित्यक्ततया कार्यतावच्छेदककोटावप्रामाण्यज्ञानाभावस्याप्रवेश्यत्वात्, इष्टतावच्छेदकाव-च्छिन्नसाधनताज्ञानस्य प्रवृत्त्याद्युपयोगित्वेन नीलघटान्वयबुद्धित्वेन प्रयोजनत्वप्रतिसन्धाने तदवच्छिन्नसाधनत्वग्रहस्यैवापेक्ष-णीयतया विषयित्वादीनां कार्यतानवच्छेदकत्वे तदसंभवेन तदर्थं नीलो घट इत्यादिवाक्यप्रवृत्तिर्नस्यात् नीलघटान्वयबुद्धित्वेन तादृशान्वयबुद्धीनामभावस्य कारणाभावानुमेयत्वमपि न स्यादिति विषयत्वादेः कार्यतावच्छेदकतया प्रवेशस्य तथाप्यावश्यक-त्वाच्चेति विभावनीयम्। अथाकाङ्क्षाज्ञानानां स्वस्वाव्यवहितोत्तरत्वघटितधर्मावच्छिन्नं प्रति जनकत्वे यद्यपि योग्यताज्ञानत्वा-वच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्स्वावच्छिन्नकत्वरूपं योग्यताज्ञानसहकृतत्वमाकाङ्क्षाज्ञानस्यास्त्येवैकस्मादप्याका-ङ्क्षाज्ञानाद्विना योग्यताज्ञानं फलानुत्पत्तेरिति योग्यताज्ञानविगमदशायामाकाङ्क्षाज्ञानाच्छाब्दापत्तिर्न संभवति तथापि योग्यताज्ञानस्य तत्तदाकाङ्क्षाज्ञानविरहदशायामाकाङ्क्षान्तरज्ञानसद्भावेन फलजनकतया कारणतावच्छेदकीभूताकाङ्क्षाज्ञानविशेषत्वावच्छिन्नासमव-धानप्रयुक्तफलोपधायकत्वाभाववत्स्वावच्छिन्नकत्वरूपाकाङ्क्षाज्ञानसहकृतत्वविरहादाकाङ्क्षाज्ञानविगमकाले केवलयोग्यताज्ञानाच्छा-ब्दापत्तिर्दुर्वारेति चेदुपस्थितेः शाब्दकारणत्वस्य तत्रतत्रोक्तत्वेनोपस्थितेराकाङ्क्षाज्ञानादिसहकृतत्वस्योक्तरूपस्यासंभवेन केवलाया उपस्थितेः शाब्दापत्तिमतिपत्य को विशेषः प्रसङ्ग इदानीमीदृशापत्तिवाचोयुक्तेः, हन्त कोयमुत्तरप्रकारः नह्येकदा दूषणानभि-धानमन्यदोद्भावितदूषणपरिहारभावं वोढुमीष्टे, अथाप्रसिद्धोत्तरं दूषणमुद्भाव्यमानं सद्योत्तरत्वेन दूषणान्तरप्रतिकूलमप्य-बोधविलसितेनातथाभूतमित्युच्यते प्रतिविधानम्। तथाहि नहि सहकारिनियमः सामग्रीव्याप्तेर्भिद्यते इति सहकारिवादेऽभ्युप-गम्यत एव सामग्रीव्याप्तिः तस्याञ्च सामग्र्या एकधर्मावच्छिन्नकार्यतानिरूपितकारणत्वावच्छिन्नानुयोगिकपर्याप्ति-प्रतियोगिकूटत्वेन न प्रवेशस्तथासति व्याप्यकार्योत्पत्तौ व्यापकधर्मावच्छिन्नसामग्र्या अनपेक्षितत्वप्रसङ्गात्, गौरवात्, व्यापक-धर्मावच्छिन्नसामग्रीत्वस्य तद्धर्मावच्छिन्ननियतपूर्ववर्त्तित्वघटितत्वेन तृतीयान्यथासिद्धिनिरूपकत्वाच्च तादृशसामग्रीत्वस्य कारण-तानवच्छेदकत्वात्, किंतु तत्तद्धर्मावच्छिन्नकार्यव्याप्यतायां तद्धर्मव्यापकाशेषधर्मावच्छिन्नकारणकूटविशिष्टत्वे सति स्वावच्छि-न्नकारणकूटविशिष्टत्वसंबन्धेन तद्धर्मव्याप्यधर्मविशिष्टत्वे च सति तत्तद्धर्मावच्छिन्नकारणकूटत्वेन, एवं च व्यापकसामग्रीविशिष्टाया एव सामग्र्या यथाफलोपधायकत्वेन तद्विरहदशायां न कार्योत्पत्तिः तथा व्याप्यीभूतयत्किंचिद्धर्मावच्छिन्नसामग्रीविशिष्टाया एवोक्तनियमेन फलोपधायकतया तद्विरहेऽपि न कार्योत्पत्तिरिति योग्यताज्ञानकार्यतावच्छेदकव्याप्यीभूततत्तदाकाङ्क्षाज्ञानाव्यव-हितोत्तरशाब्दत्वावच्छिन्नकारणतत्तदाकाङ्क्षाज्ञानघटितसामग्र्यभावे नापत्तिसंभवस्तत्तद्धर्मव्याप्यत्वं च तद्धर्मन्यूनवृत्तित्वम्, सामग्री-व्याप्तौ व्यापकसामग्रीवैशिष्ट्यनिवेशे यथाव्यापकधर्मरहितव्याप्यासंभवो मूलं तथा निर्विशेषस्य सामान्यस्यासंभवो व्याप्य-धर्मविशिष्टत्वप्रवेशे मूलमवसेयम्। अतएव ज्ञानविशेषप्रत्यक्षादिसामग्रीविरहकाले त्वङ्मनोयोगमात्राज्ज्ञानस्य सद्विशेषद्रव्यादि-सामग्रीविरहकाले द्रव्यमात्राज्जन्यसत्वावच्छिन्नस्य नापत्तिः। नच प्रत्यक्षादिसामग्र्यभावे संभाव्यमानं ज्ञानमनुभवबाधनात्मकत्वेन स्वरूपमलभमानं नोत्पत्तुमीष्ट इति वाच्यम् तदुत्पत्तेः प्रामाणिकत्वे ज्ञानप्रकारान्तरस्यैवानुसरणीयत्वाद्घटानयनापसरणस्थल-घटाभावस्य विशिष्टाभावस्य च प्रामाणिकस्य कूटाभावानन्तर्गतत्वे तुरीयत्वस्य व्यवस्थापितत्वात्, यद्धर्मापेक्षया कार्यताच्छे-दको व्यापकधर्मो नास्ति तद्धर्मावच्छिन्नव्याप्तौ सामग्र्यां व्यापकधर्मावच्छिन्नसामग्रीवैशिष्ट्यं यदपेक्षया व्याप्यीभूत. कार्य-तावच्छेदकधर्मो नास्ति तदवच्छिन्नव्याप्तौ च सामग्र्यां व्याप्यधर्मविशिष्टत्वं च नोपादेयमतो न व्याप्याप्रसिद्धिर्दोषः। व्याप्य-सामग्रीत्वादिनात्र कारणत्वास्वीकारात् सामग्रीत्वशरीरनिर्वचनोपक्रमेण गौरवान्यथासिद्ध्याद्युद्भावनमपि न दोषभावमवलम्बते।

पदस्य विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वरूपं विरुद्धविभक्तिराहित्यमेव तादृशान्वयबोधौपयिकाकाङ्क्षा । विशेष्यवाचकपदनिष्ठविशेषणवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वं च न तथा, नीलघटमानयेत्यादावसंभवादिति । तदसत् । विशेष्यवाचकपदाप्रकृतिकत्वस्य तादृशपदानुत्तरत्वस्य तदुत्तरत्वेनाप्रतिसन्धीयमानत्वरूपस्य वा नीलो घट इत्यादौ नीलादिपदसमभिव्याहृतविभक्तौ घटपदसमभिव्याहृतविभक्तिभिन्नतया सत्त्वात् । अथ विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्य विवक्षणान्न दोष इति चेत्तर्हि विभक्तित्वादिकमजानतः पुरुषस्य तादृशधर्मज्ञानासंभवाच्छाब्दबोधानुपपत्तिः । नीलो घट इत्यादावपि सुपदस्याम्पदत्वादिभ्रमदशायां तादृशबोधस्यानुदयात् । नीलस्य घट इत्यादावपि षष्ठ्यादेः सुपदत्वादिभ्रमदशायां शाब्दबोधोत्पत्त्या स्वरूपतो विरुद्धविभक्तिराहित्यस्याप्रयोजकत्वात् । अथ नीलो घट नीलघट इत्यादिद्विविधबोधसाधारणं

---

एवञ्च योग्यताज्ञानाकाङ्क्षाज्ञानादीनां परस्परसहकारित्वसंपत्तये एकधर्मावच्छिन्नं प्रति कारणत्वसंपादनक्लेशः केषांचिदनादेय एव एकधर्मावच्छिन्नकार्यतानिरूपितकारणत्वस्यासहकारित्वरूपत्वात् । अन्यथा साधारणधर्मवत्ताज्ञानस्य प्रत्येककोटिसाहचर्यावच्छिन्नप्रकारताकज्ञानत्वेनोपस्थितिद्वारा कारणत्वपक्षे द्वयोः सहकारित्वकथनं ग्रन्थकृतो विरुध्येत असाधारणधर्मवत्ताज्ञानजन्यसंशये व्यभिचारवारणाय स्वस्वाव्यवहितोत्तरसंशयत्वावच्छिन्नं प्रत्येव कारणत्वस्योक्तत्वेन द्वयोरेकधर्मावच्छिन्नं प्रत्यकारणत्वात् व्यापकसामग्र्याः सहकारित्वानुपपत्तेश्च । नच तत्राप्येकज्ञानाव्यवहितोत्तरसंशयं प्रत्येवापरज्ञानस्यापरज्ञानाव्यवहितोत्तरसंशये चैकज्ञानस्य कारणत्वकल्पने न सहकारित्वहानिरिति निर्मूलस्तत्परित्यागो नादरणीयो ग्रन्थकृतामिति वाच्यम् सामग्रीव्याप्त्यभ्युपगमेन सर्वसामञ्जस्ये अनन्तकार्यकारणभावकल्पनागौरवस्यैव तदुपेक्षाबीजत्वात् । तथाहि नीलोघट इत्याद्याकाङ्क्षाज्ञानाव्यवहितोत्तरत्वावच्छिन्नं प्रत्येव योग्यताज्ञानस्य नीलादिपदजन्योपस्थित्यादेश्च कारणत्वे यत्रैकं योग्यताज्ञानमेकमुपस्थितेस्तत्र तयोरनन्तं कारणत्वं स्यात् पर्यायशब्दघटिताकाङ्क्षाज्ञानाव्यवहितोत्तरत्वरूपकार्यतावच्छेदकानन्त्येन निरूपकीभूतकार्यताया आनन्त्यात्। नच सामग्रीव्याप्तौ स्वीकृतायामनर्थकः कार्यकारणभाव इति वाच्यम् कार्यकारणभावमूलत्वात्सामग्रीव्याप्तेरन्यथा व्याप्यतावच्छेदकसमुदायत्वस्य दुरधिगमत्वप्रसङ्गात्, कारणाकारणविभागाभावे सत्येकशेषस्य कर्तुमशक्यत्वात्, पौर्वापर्यनियमात्मककार्यकारणभावस्यान्वयव्यतिरेकाभ्यां सप्रमाणत्वेनापह्नोतुमशक्यत्वाच्च । यत्तु आकाङ्क्षाज्ञानाव्यवहितोत्तरत्वावच्छिन्नं प्रति योग्यताज्ञानादिविशिष्टाकाङ्क्षाज्ञानत्वेन कारणत्वं वाच्यम् इति न केवलयोग्यताज्ञानाच्छाब्दबोध इति तन्न एककारणपरिशेषापत्त्या सहकारिवादभङ्गप्रसङ्गात् विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नानां प्रत्येककारणतासमसङ्ख्याककारणतानामापत्तेः ग्राहकेणान्वयव्यतिरेकेण योग्यताज्ञानस्य गृहीतायाः कारणताया अपह्नोतुमशक्यत्वाच्च । अथास्त्वाकाङ्क्षाज्ञाननिष्ठान्यतमत्वमखण्डोपाधिरूपमेव कारणतावच्छेदकं लाघवादिति चेन्न कार्यानुपलब्धिलिङ्गकानुमानभङ्गप्रसङ्गात् तृणारणिमणीनां फूत्कारनिर्मन्थनतरणिकिरणसंयोगरूपनियतसहकारिसहकृतानामन्यतमत्वेन कारणत्वे सहकारिनियमानुपपत्तेश्चान्यतमत्वस्य कारणतावच्छेदकताया दूषितत्वादेकत्र निर्णीतशास्त्रार्थस्यान्यत्रापि प्रसरात् । नच तत्तत्सहकारिविशिष्टस्यान्यतमत्वेन कारणत्वे नानुपपत्तिरिति वाच्यं तथाविधान्यतमत्वस्य केवलेपि सत्त्वेन सहकारिरहितादपि कार्यापत्तेः; प्रपञ्चितमेतन्न्यायकुसुमाञ्जलिप्रकाश इत्यलम् ।

**विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यस्येति ।** अथ विशेष्यवाचकघटादिपदानां तत्तद्विभक्तित्वेन प्रवेशो घटपदत्वेन वा । नाद्यः नीलोघट इत्यादीनामप्येकाकाङ्क्षाऽसंभवप्रसङ्गात् । एवमाद्यपक्षे तादृशधर्मवयत्किंचिद्विभक्तिराहित्यं प्रवेद्यते तादृशधर्मवद्विभक्तिसामान्याभावो वा । आद्ये नीलस्यघट इत्यत्राप्याकाङ्क्षापत्तेः द्वितीये प्रथमाभिन्नविभक्तित्वस्यातिप्रसञ्जनापादकस्य संभवेन गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेऽभावाप्रसिद्धेः तादृशविभक्तिव्यक्त्यभावकूटस्य प्रवेशे च कूटत्वस्यैकविशिष्टापरत्वरूपतया भावव्यक्तीनामानन्त्येन कारणतावच्छेदकानन्त्यप्रसङ्गात् । न द्वितीयः तत्र घटपदोत्तरत्ववद्यत्किंचिन्निरूपितवृत्तित्वाभावो निवेश्यते घटपदोत्तरत्वनिरूपितवृत्तित्वसामान्याभावो वा । आद्ये नीलोघट इत्यत्रापि घटपदत्वादिना घटपदाव्यवहितोत्तरद्वितीयादिनिरूपितवृत्तित्वाभाववत्त्वस्य प्रथमात्वेऽपि सत्त्वेनाकाङ्क्षानापत्तेः द्वितीये नीलस्य घट इत्यत्राप्यापत्तेः ङस्त्वादिष्वपि घटपदाव्यवहितोत्तरनिरूपितवृत्तित्वसामान्याभावविरहात् ङसादिविभक्तेरपि घटप्रातिपदिकादुत्पत्तेरिति चेदुच्यते नीलोघटो नीलघटः नीलंघटं नीलघटमित्यादीनां दिशः समासव्याससाधारणं पृथगेव घटपदोत्तरस्वाद्यवृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यमाकाङ्क्षा एवंसति घटपदत्वेन प्रवेशेपि न क्षतिः घटपदोत्तरस्वाद्यवृत्तित्वस्य द्वितीयात्वादौ सत्त्वात् नीलादिपदोत्तरस्वाद्यवृत्तिविभक्तिविभाजकधर्मवद्विभक्तिराहित्यं तु स्वाद्यन्तनीलादिपदसमभिव्याहृतत्वविशेषितमेवाकाङ्क्षारूपं वाच्यमन्यथा नीलस्य घट इत्यत्राप्याकाङ्क्षापत्तेः तच्च न समाससाधारणं यत्र समासघटकविशेषणपदस्य विशेषणविभक्त्यन्तत्वं न केनापि प्रति संनिहितं तत्र स्वाद्यन्तनीलादिपदसमभिव्याहृतत्व-

**स्वोत्तरसुपदभिन्नपदानुत्तरत्वविशिष्टस्वोत्तरत्वादिरूपस्वाव्यवहितोत्तरत्वसंबन्धेन नीलादिपदवत्सु-**

---

विरहात्, प्रतिसंधानस्थलेऽपि कर्मधारयविग्रहस्थपदस्य प्रथमान्ततायाः एव स्वीकृतत्वेन नीलघटमित्यत्रासंभवात् । नच विशेषणपदनिष्ठस्योक्तरूपस्याकाङ्क्षात्वेऽपि नीलोघटस्येत्यादावतिप्रसंगः स्वाद्यन्तघटादिपदम्मभिव्याहृतत्वस्य विशेषणात् । नचैवं नीलघटरूपमित्यत्र समासासाधारण्यरूपदोषसंभवे तदुपेक्षाया निर्बीजत्वमिति वाच्यम् आकाङ्क्षाज्ञानानुपपत्तिलक्षणदोषस्य सार्वत्रिकत्वेनैतद्दोषापेक्षया प्रबलत्वात् । यत्तु नीलघटरूपमित्यत्र प्रथमतो नीलसुघटंस्वित्यनयोस्समासोत्तरं नीलघटङसरूप-स्वित्यनयोस्समासादन्ततः सर्वत्रेश्वरप्रतिसंधानमादायाकाङ्क्षासम्भवात्तदुपेक्षणम् विभक्तिराहित्यांशे च विभक्त्यव्यवहितपूर्वत्वस्यैवा-भावस्य प्रवेशो नानुसंधानस्य समासवदेव दधि प्रमेयमित्यादावप्याकाङ्क्षासंभवात् । एवं चेश्वरप्रतिसन्धानमादाय नीलघट-मित्यत्र नाकाङ्क्षानुपपत्तिः दधिप्रमेयस्येत्यत्रनिरुक्ताकाङ्क्षासत्त्वेऽपि दध्यादिपदानां विभक्त्यन्तत्वप्रतिसंधानस्यैव सर्वत्राभ्युपगततया तज्ज्ञानासंभवेन शाब्दाद्यापत्तिविरहादिति तन्नातिसमञ्जसम् शाब्दस्यापत्तिविरहेऽपि निराकाङ्क्ष आकाङ्क्षापत्तिदोषस्य सत्त्वतायां बीजाभावात् दधिप्रमेयस्येत्यस्य समासरूपत्वेन कदाचिदिष्टापत्तावपि प्रमेयस्य दधीत्यत्र तदसंभवात् । यद्वा थलतत्ववत्स्व-त्वस्याप्यनुगतत्वेसत्यननुगतकार्यकारितामवलम्ब्य नीलादिपदानां स्वसमभिव्याहृतघटादिपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्वि-भक्तिराहित्यस्याकाङ्क्षात्वं वाच्यं तत्र च नकोऽपिदोषः । अत एव सामान्यविशेषपरयोः समासव्याससाधारणमित्यादिनीलोघटोनील घटइत्यादिग्रन्थयोर्न सन्दर्भविरुद्धता । वस्तुतस्तु नीलादिपदानां घटादिपदवत्त्वस्यैवाकाङ्क्षात्वं पदवत्ताच स्वाभाववत्त्वसंबन्धेन अभावश्च स्वोत्तरत्ववन्निरूपितवृत्तित्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद्विभक्तिविभाजकधर्मवत्वसम्बन्धावच्छिन्नप्रतियोगि-ताको बोध्यः । धर्मवत्ता च स्वावच्छिन्नाव्यहितपूर्वत्वसम्बन्धेन तथाच नाननुगमः । नचैवं विभक्तित्वादिकमजानतइत्यादिदो-पासङ्गतिः अज्ञातस्यापि संसर्गतयाभानाभ्युपगमादितरथान्वयशक्तिखण्डनस्यासंगत्यापत्तेरितिवाच्यम् विभक्तित्वादिज्ञानाभाव-स्योक्ताकाङ्क्षाज्ञानाभावं प्रति हि न कारणाभावत्वेन प्रयोजकत्वमभिप्रेतमपितुविशेषाभावम्प्रति सामान्याभावत्वेन तथाच यत्र घटादिपदेऽव्यवहितोत्तरत्वमात्रेण नीलादिपदवत्वं गृहीतं तत्रापि शाब्दबोधस्यानुभविकत्वेन तदनुपपत्तौ पर्यवसानम् सर्वत्रनिरुक्तपारिभाषिकसमभिव्याहृतत्वसंसर्गेण नीलादिपदे घटादिज्ञानकल्पना, निरुक्तपरिष्कारस्य निर्दोषतया तदुपेक्षाया निर्बीजत्वापत्तेर्वक्तुमशक्यैव निरुक्ता च वाचोभङ्गी विभक्तित्वादिज्ञानविरहनिबन्धन एव निरुक्ताकाङ्क्षाज्ञानाभावो नत्वव्यवहितो-त्तरत्वादिसंसर्गभानविरहनिबन्धन इत्यस्य सिद्धान्तपक्षनिर्दोषतापादकस्य सूचनायेतिदिक् ।

विशेष्यवाचकपदोत्तरावृत्तित्वेन धर्मस्य प्रवेशे नीलादिपदोत्तरस्वादिनिष्ठतद्व्यक्तित्वादिकमादाय नीलोघटइत्यत्राप्याकाङ्क्षानुपपत्तिः स्यादितिविभक्तिविभाजकत्वेन तत्प्रवेशः । यत्तु विशेष्यवाचकपदविशिष्टश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवदप्रकृतिकत्वं विव-क्षणीयं वैशिष्ट्यं च स्वावृत्तित्वस्वाव्यवहितोत्तरावृत्तित्वोभयसंबन्धेन । एवं च नीलघट इत्यत्र घटपदवैशिष्ट्यस्य स्वाव्यवहितो-त्तरावृत्तित्वविरहात्सुत्वे स्वावृत्तित्वविरहाद् घटपदत्वे च श्रावणप्रत्यक्षविषयतावच्छेदके विरहात्तत्संग्रहः । विभक्तित्वाद्यप्रवेशाच तदज्ञानदशायां न शाब्दानुपपत्तिरिति कश्चिदाह तन्न नीलोघट इत्यत्र सुपदयोस्तारमन्दरूपत्वे श्रावणप्रत्यक्षविषयतावच्छे-दकतारत्वजातिमादायाकाङ्क्षानुपपत्तेः । विभक्तिमात्रवृत्तितथाविधधर्मेतरधर्मवारकं हि विभक्तिविभाजकत्वमुपादेयमन्यद्वेति न कश्चिद्विशेषः ज्ञाततयोपयोगाभावस्य समानत्वात् । अथ विशेष्यवाचकपदोत्तरावृत्तिनिष्ठा या विभक्तिविभाजकत्वसमानाधिकर-णविषयता तन्निरूपितविभक्तिनिष्ठविषयतानिरूपिताभावनिष्ठविषयतानिरूपितविशेषणवाचकपदनिष्ठविषयताकज्ञानत्वेन कारणत्वे विभक्तित्वाज्ञानेपि न दोष इतिचेन्न केवलानुपूर्वीतदवच्छिन्नज्ञानेऽभावाद्यज्ञानेपि शाब्दबोधोदयात् । अतएव विभक्तित्वा-दिकमित्यत्रादिपदमुपात्तं किंच विशेष्यवाचकपदोत्तरावृत्तियत्किंचिद्धर्मवद्विभक्त्यभावस्तादृशधर्मसामान्यवद्विभक्त्यभावोवा विशेष्यवाचकपदोत्तरावृत्तिविभक्तिविभाजकधर्मवद्विभक्त्यभावो वा निरुक्तविषयतया कारणतावच्छेदकत्वेन प्रवेश्यते । नाद्यः नीलं घट इत्यत्रापि टात्वादिधर्मवद्विभक्तिराहित्यसत्वेनाकाङ्क्षापत्तेः न द्वितीयः नीलोघट इत्यत्रापि घटपदोत्तरस्वाद्यवृत्तिनीलपदा-व्यवहितोत्तरसुत्वादिमद्विभक्तिमत्वस्यैव सत्वेनाकाङ्क्षानापत्तेः न तृतीयः विभक्तिविभाजकत्वस्य विशेषणत्व एव तथाविधाभावः कारणतावच्छेदककोटौ निविशते तथासति विभक्तिविभाजकत्वविषयतायाः कारणतावच्छेदकघटकताध्रौव्यमिति विभक्ति-विभाजकत्वाज्ञाने शाब्दानुपपत्तितादवस्थ्यादिति ।

**स्वोत्तरस्वादिभिन्नेत्यादि** । अथ घटो नील इत्यत्राकाङ्क्षाभावप्रसङ्गभयेन स्वोत्तरत्वविशेषितस्य निरुक्तपदानुत्तरत्वस्य विवक्षितुमशक्यतया घटस्य नील इत्यत्राप्याकाङ्क्षापत्तिः नीलपदोत्तरं ङस्भिन्नपदानुत्तरत्वे सति ङसव्यवहितपूर्वत्वस्य घटपदे विवक्षितत्वमिति चेर्त्तर्हि समाससाधारण्यसंपादनेन कः सत्वात् । अथ नीलोघट इत्यादिव्यासमात्रसाधारणाकाङ्क्षाया एव प्रकृते विवक्षितत्वमिति चेर्त्तर्हि समाससाधारण्यसंपादनेन कः पुरुषार्थः आकाङ्क्षाधिक्यस्य विद्यमानत्वात् । नच घटोनील इत्यत्रापि नीलोघट इत्यादिसमभिव्याहारकल्पनयैव शाब्दबोध इतिवाच्यं नीलादेर्विधेयतया बुबोधयिषितत्वे उद्देश्यवचनं पूर्वमित्यादि न्यायानुसारेण घटादिपदस्य नीलादिपदपूर्ववर्त्तितया ज्ञानस्यैव शाब्दबोधानुगुणत्वात् । अतएव पर्वतो वह्निमानित्यादिकमेव प्रतिज्ञावाक्यमभियुक्ताः प्रयुञ्जते । किञ्चनीलोऽस्ति घट

**स्वन्तघटादिपदत्वमेव तथास्त्विति चेन्न । नीलघटरूपमित्यादिवाक्यसाधारण्यानुरोधेनान्यादृश्या**

इत्यत्र शाब्दबोधानुपपत्तिः आकाङ्क्षाविरहात् । नीलादिपदोत्तरसुभिन्नास्त्यादिपदाव्यवहितोत्तरत्वस्यैव घटादिपदे सत्वात् नीलादिपदाव्यवहितोत्तरसुभिन्नपदानुत्तरत्वस्य नीलोघट इत्यादावप्रसिद्ध्या विवक्षितुमशक्यत्वादिति चेन्न व्यासस्थलेऽप्युक्तदोषभयेनान्यादृश्याकाङ्क्षाया उपगन्तव्यतया साधारणाकाङ्क्षानुशरणाप्रयोजकत्वस्यान्यत्र दोषतयोपलक्षणीयत्वात् समाससाधारणीकरणस्यैवपूर्वपक्ष्यभिप्रेतत्वं मनसि निधाय समासस्थले समाससाधारण्यस्य प्रबलदोषत्वमभिसन्धाय तावन्मात्रोक्तेरदुष्टत्वात् । अनुपपत्तिर्हि स्वाव्यवहितोत्तरस्वादिभिन्नविभक्त्यव्यवहितोत्तरत्वसंबन्धावच्छिन्नस्वाभावस्य संसर्गत्वमभ्युपेत्य वारणीया । वृत्त्यनियामकस्याभावप्रतियोगितानवच्छेदकत्वे निरुक्तसंबन्धावच्छिन्नस्वनिष्ठप्रकारतानिरूपितविशेष्यत्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य तत्वं विवक्षणीयम् । यत्तु नीलोस्तिघटइत्यत्रापि नीलोघटोस्तीत्यादिसमभिव्याहारकल्पनयैव शाब्दबोध इति तन्न अव्यवधानेन पदार्थोपस्थितेरेवासति रूपताया व्यवस्थापिततया अभ्रान्तस्याश्रुततादृशसमभिव्याहारस्याप्युक्तवाक्याद्बाधकाभावेन शाब्दानुभवोत्पादस्यानुभवसिद्धत्वात् । अथवा निरुक्ताभाववत्त्वस्वाव्यवहितोत्तरविभक्त्यवृत्तिसुत्वावच्छिन्नाव्यवहितपूर्वत्वसंबन्धावच्छिन्नस्वाभाववत्वोभयसंबन्धेन नीलादिपदवत्त्वे सति स्वन्तघटपदत्वमाकाङ्क्षारूपतया विवक्षणीयम् एवञ्च घटस्य नील इत्यादौ नीलपदाव्यवहितोत्तरविभक्त्यवृत्तिङस्पदत्वावच्छिन्नाव्यवहितपूर्वत्वसंबन्धेन नीलपदवत्वस्यैव सत्वेन तदभावविरहात् स्वत्वघटितनिरुक्तसंबन्धेन नीलपदाभावसत्वेऽपि घटपदे स्वाव्यवहितपूर्वत्वविरहान्नापत्तिः स्वाव्यवहितोत्तरस्य विभक्तित्वेन प्रवेशान्नीलघट इत्यत्र नानुपपत्तिः स्वाव्यवहितोत्तरविभक्त्यप्रसिद्ध्या निरुक्तसंबन्धस्य तन्नीलपदव्यधिकरणत्वात्, स्वाद्यव्यवहितपूर्वत्वप्रवेशाच्च नीलो घटस्येत्यादौ नापत्तिः । नचैवं घटोनीलरूपमित्यत्राकाङ्क्षापत्तिरिति वाच्यम् ऋद्धस्यराजमातङ्गा इत्यस्य विभक्त्यनुसन्धानपक्षे समासासाधुत्वेनाप्रयोक्तव्यत्वमिवोक्तप्रयोगस्यापि ततएवह्यप्रयोक्तव्यत्वमित्यभ्युपगमात् । यद्वा स्वाव्यवहितोत्तरघटपदभिन्नपदावृत्तिसुत्वावच्छिन्नाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नाभावस्यैव प्रवेशः कार्यः नीलघट इत्यत्र तावतैवाकाङ्क्षासम्पत्तेः । तथाच घटोनीलरूपमित्यत्र नापत्तिः नीलपदाव्यवहितोत्तरघटपदभिन्नावृत्तिसुत्वावच्छिन्नाव्यवहितपूर्वत्वस्यैव घटपदे सत्वात् घटपदासमस्तत्वविभक्त्यप्रकृतिकत्वोभयाभाववत्वं वा नीलपदे विशेषणमित्यपिकश्चित् । परेतु स्वोत्तरत्वस्वोत्तरसुभिन्नपदानुत्तरत्वोभयसंबन्धेन नीलपदविशिष्टस्वन्तघटपदवत्वमाकाङ्क्षा । तादृशघटपदवत्वं च स्वतादात्म्यस्वाश्रयत्वान्यतरसंबन्धेन । स्वाश्रयत्वं च स्वप्रकृतिकविभक्तिवृत्त्यानुपूर्व्यवच्छिन्नप्रकृतिघटपदत्वस्वसमभिव्याहृतनीलपदप्रकृतिकविभक्तिवृत्यानुपूर्व्यवच्छिन्नप्रकृतिनीलपदसमभिव्याहृतत्वोभयसंबन्धेन । तथाचनीलपदविशिष्टस्वन्तघटपदं नीलघट इत्येतद्वाक्यीयं नीलोघटइत्येतद्वाक्यीयंच तत्रसमासे प्रथमघटपदविशिष्टत्वं व्यासमात्रेच द्वितीयघटपदविशिष्टत्वम् नीलोघटः नीलोस्तिघटः घटोनील इत्यादौ सर्वत्र नचतादृशपदवत्वम् घटस्यनीलः घटोनीलरूपं नीलरूपंघट इत्यादौ कुत्रापीतिवदन्ति तच्चिन्त्यम् । अन्यतरत्वादेः कारणताकुक्षिप्रवेशे समासव्यासान्यतरत्वेनोक्तधर्मापेक्षया लघुभूतेनैव कारणत्वप्रसङ्गात् अत्राप्यन्यतरत्वस्य संसर्गकोटौ प्रवेशयितुं शक्यत्वादिति ।

**नीलघटरूपमित्यादीति** । किमत्र नीलश्चासौघटोनीलघटः नीलघटस्य रूपमिति विग्रहोऽभिप्रेत आहोस्वित् घटस्यरूपं घटरूपं नीलञ्च तद्घटरूपमितिवाविग्रहः । तत्राद्ये घटशब्दस्य घटीये लक्षणायामवश्याभ्युपेयायामेकदेशान्वयभयेन नीलघटएव लक्षणोपगन्तव्येति न दोषसंभवः द्वितीये च विशेष्यवाचकपदस्य स्वन्तत्वात्सुतरां तथा । यत्तु द्वितीयविग्रहे नीलघटरूपयोर्नाभेदान्वयसंभवः घटरूपपदस्य समस्ततया वृत्त्यभावेन विशेष्यवाचकत्वाभावात् । वास्तविकविशेष्यवाचकरूपपदस्य स्वोत्तरसुभिन्नघटपदोत्तरत्वस्यैव सत्वादिति तन्न नीलोघटोनीलघटइत्यादावप्युक्तरीत्या दोषसंभवेन तेनसह समानपरिहारत्वात् । तथाहि घटपदत्वं यदि घकारोत्तराकारोत्तरटकारोत्तरात्वरूपं तदा तदाश्रयस्य स्वन्तत्वसत्वेऽपि नीलपदोत्तरसुभिन्नटकाराव्यवहितोत्तरत्वस्यैव सत्त्वेनाकाङ्क्षानुपपत्तिः । यद्यकाराव्यवहितपूर्ववर्त्तिटकाराव्यवहितपूर्ववर्त्यकाराव्यहितपूर्ववर्त्तिघकारत्वरूपं तदा तदाश्रयस्य स्वन्तत्वविरहादाकाङ्क्षानुपपत्तिरिति घटत्वमात्रावच्छिन्नप्रकृतविशेष्यतानिरूपितविलक्षणप्रयोजकतापर्याप्त्यनुयोगितावच्छेदकवर्णसमुदायत्वं घटपदत्वं वाच्यं । विलक्षणप्रयोजकत्वंच स्वप्रयोजकवृत्तिज्ञानीयविषयतासमानाधिकरणाकाङ्क्षाज्ञानविषयत्वाश्रयनिष्ठं, प्रयोजकत्वं, तथाच तत्सामानाधिकरण्येन स्वन्तत्वं स्वोत्तरसुभिन्नपदानुत्तरत्वंच विवक्षणीयमतो नाकाङ्क्षानुपपत्तिः । विशेष्यतायां प्रकृतत्वनिवेशात्पटंनीलं घटोरक्तइति पदसमुदायघटके नीलंघटइत्यादौ नाकाङ्क्षाप्रसक्तिरन्यथा पीतोघटइत्यादिस्थलीयशाब्दबोधीयविशेष्यताया अपि घटत्वमात्रावच्छिन्नतया तत्प्रयोजकताया अपि निरुक्तप्रयोजकतात्वेन संगृहीततया तत्पर्याप्त्यनुयोगितावच्छेदकसमुदायत्वस्य निरुक्तघटपदद्वयवृत्तितया तदाश्रये पीतोघटइति वाक्यघटकघकारे नीलपदोत्तरसुभिन्नपदानुत्तरत्वस्य सत्वात्तादृशसमुदायत्वाश्रयरूपाया नीलघटाभेदान्वयबोधौपयिकाकाङ्क्षाया नीलं घटइत्यत्र दुर्वारतास्यात् । निरुक्तवैलक्षण्यप्रवेशाच्च शोभनंचैत्रः पश्यतीत्यादौ शोभनचैत्राभेदान्वयबोधप्रयोजकाकाङ्क्षायाः शोभनंचैत्रइति भागे नप्रसङ्गः । अन्यथा चैत्रत्वमात्रावच्छिन्नप्रकृतविशेष्यताप्रयोजकत्वस्याकाङ्क्षाघटकतयोक्तवाक्यघटकसकलपदेषु सत्वेन तत्पर्याप्त्यनुयोगितावच्छेदकनिरुक्तवाक्यगतसमुदायत्वस्य शोभनपदावच्छेदेन शोभनपदोत्तरसुभिन्नपदानुत्तरत्वसामानाधिकर-

अपि आकाङ्क्षायाः समासस्थले उपगन्तव्यतया उपदर्शितसमासव्यासाधारणानुगताकाङ्क्षानुसरणस्याप्रयोजकत्वादिति । अथ नीलं घटमानयेत्यादौ नीलादेर्घटादावन्वयोपगमे नीलादिपदोत्तरविभक्त्यर्थकर्मत्वादेः कुत्रान्वय इति चेन्न कुत्रापि। विभक्तिपदं साधुत्वार्थमेव प्रयुज्यते। अभेद एव वा विशेषणविभक्तेरर्थः अभेदस्य संसर्गमर्यादया भानं तु समासस्थलएव। तत्र लुप्तविभक्त्यनुसंधानं विनापि शाब्दबुद्धेरानुभविकत्वादित्यपि वदन्ति। अथैतन्मते अभेदो यदि भेदत्वावच्छिन्नाभावस्तदाऽप्रसिद्धिः, यदि च भेदप्रतियोगिकोऽभावस्तदा नीलं जलमित्यादिवाक्यस्यापि प्रामाण्यापत्तिः। जले द्वित्वादिना नीलभेदाद्यभावस्य सत्त्वात् । नीलभेदत्वावच्छिन्नाभावस्य विभक्त्यर्थत्वेन नीलादिपदार्थानन्वयप्रसङ्गः। नच भेदप्रतियोगिकाभाव एव विभक्त्यर्थः नीलपदसमभिव्याहारान्नी-

---

ण्यस्य चैत्रपदावच्छेदेन खन्तत्वसामानाधिकरण्यस्यच सत्वादुक्ताकाङ्क्षाप्रसक्तिः स्यात्। शब्दानुगममात्रमेतत्। वस्तुतस्तु विशेष्यवाचकपदत्वेनाभिमततत्पदघटकवर्णसमुदायत्वं विशिष्योपादाय तत्सामानाधिकरण्येन निरुक्तानुत्तरत्वंखन्तत्वञ्चाकाङ्क्षाघटकं वाच्यमिति नकश्चिद्दोषः । एवंच नीलघटरूपमित्यत्राप्युक्तरीत्या घटीयत्वरूपत्वोभयधर्ममात्रावच्छिन्नप्रकृतविशेष्यताप्रयोजकतापर्याप्त्यनुयोगितावच्छेदकघटरूपपदत्वगतसमुदायत्वसामानाधिकरण्येन नीलपदोत्तरसुभिन्नपदानुत्तरत्वखन्तत्वसामानाधिकरण्ययोः सत्वेन नाकाङ्क्षानुपपत्तिः किंवा नीलपदोत्तरसुभिन्नपदानुत्तरघकारोत्तरटकारोत्तररूकारोत्तरखन्तपकारत्वमाकाङ्क्षारूपं वाच्यमिति नानुपपत्तिरिति चेदुच्यते । स्तोकनम्रेत्यादावित्रात्राप्येकदेशान्वयस्य प्रामाणिकत्वे निरर्थकत्वप्रायस्य तात्पर्यग्राहकत्वस्य नीलपदेऽङ्गीकारो नोचितइति संभवत्येव तत्रदोषः । यद्वा घटीयत्वलाक्षणिकघटपदेन नीलपदस्य कर्मधारयं कृत्वा तेनसह रूपपदस्य कर्मधारयस्थलएव दोषे ग्रन्थकृतस्तात्पर्यमवधारणीयम् । अथ खन्तत्वं सुभिन्नव्यक्त्यव्यवहितपूर्वत्वाभावरूपं वाच्यं तावतैव नीलोघटमित्यस्यवारणात् । तथाच नीलघटरूपमित्यत्र नानुपपत्तिरिति चेन्न नीलोघटरूपमित्यत्राकाङ्क्षापत्तेः सुन्दरस्य दधीत्यत्र स्वाद्यप्रतिसंधानदशायामाकाङ्क्षापत्तेः ज्ञायमानाज्ञायमानकारणताविकल्पेन पूर्ववद्दोषस्य जागरूकत्वाच्च । अत्र सर्वत्रैवाव्यवहितोत्तरत्वमात्रसंसर्गेण घटपदे नीलपदवत्ताज्ञाने शाब्दबोधस्यानुभविकस्यापलापप्रसङ्गरूपं मुख्यं दोषमुपेक्ष्य सौकर्यात् समासासाधारण्यदोष उपात्तइति बोध्यम् ।

नन्वनुशासनान्तराभावाद्विशेषणपदोत्तरद्वितीयादेः कारकविभक्तित्वस्यैव वाच्यतया कारकविभक्तेश्च क्रियापदसाकाङ्क्षत्वेन विशेषणपदोत्तरविभक्त्यर्थकारकशक्तेरपि क्रिययैवान्वयः विभक्त्यर्थस्यच प्रधानत्वात्तत्परवशतयैव प्रकृत्यर्थोऽवतिष्ठते भेदभानन्तु विशेषणविशेष्ययोः पार्ष्ठिकमेवेति मीमांसकमतप्रतिक्षेपायाशङ्कते । अथेत्यादि कुत्रान्वयइति। प्रकृत्यर्थान्वितस्यैव प्रत्ययार्थस्य भानात् केवलकर्मत्वस्य भानासंभवात् नीलघटयोरभेदान्वयस्य शाब्दताया अपलपितुमशक्यतया प्रकृत्यर्थस्य नीलस्य घटेनान्वये कर्मत्वेनान्वयायोगात् सकृदुच्चरितस्य सकृदेवार्थप्रत्यायकत्वेन नीलस्य कर्मत्वेनापि सममन्वयइत्यस्य वक्तुमशक्यत्वात् निरर्थकपदप्रयोगस्य चान्याय्यतया विभक्तेः कर्मत्वपरताया आवश्यकतया नीलपदोत्तरविभक्त्यर्थीभूतस्य कर्मत्वस्य क्रियायां नान्वयसंभवः संख्यातिरिक्तप्रत्ययार्थस्य प्रकृत्यर्थविशेषणताया अव्युत्पन्नत्वेन नीलेपिच न तदन्वयसम्भवइति कुत्रान्वयइत्यर्थः। तथाचागत्या भेदान्वयस्य पार्ष्ठिकत्वमेवाभ्युपेयमिति मीमांसकमतमेव ज्यायइतिभावः । पदसाधुत्वार्थकतयापि विभक्तेः सप्रयोजनत्वसंभवे कर्मत्वपरताया अनावश्यकत्वात्सर्वानुभवसाक्षिकमभेदान्वयस्यशाब्दत्वं नापलपनीयं। नापि चानुभवविरुद्धं कर्मत्वद्वयभानमङ्गीकरणीयम् आप्तानुभवानुसारित्वाद्वस्तुस्थितेस्तदनतिक्रमप्रयासस्यैव कर्तव्यत्वात् कर्मीभवद्घटादिपरिच्छेदकतयैव नीलादेर्बुबोधयिषितत्वात्। आश्रयांशोहि व्युत्पत्त्यवर्जनीयतया भासते। नच नकेवलं प्रकृतिरित्यनुसाराद्विभक्तेस्तत्रावश्यकत्वे औत्सर्गिकी प्रथमैव किमिति नप्रयुज्यतइति वाच्यम् अन्वयव्यतिरेकाभ्यामभेदान्वये समानविभक्तिकपदज्ञानस्य कारणत्वे सिद्धे तन्मूलकबुबोधयिषातो वाक्ये प्रयोक्तव्ये द्वितीयाया अवर्जनीयत्वात्। सैषाच विशेषणविभक्तिर्न श्रुतानुशासनेन सिद्धा किन्तु कल्पितेनैव क्रियाविशेषणद्वितीयादिवदिति न्यायमतस्यापि संभवति निर्वाहइत्याशयेनाह । **न कुत्रापीति** । पदसाधुत्वार्थकत्वस्यापि निरर्थकप्रायत्वात्कल्पान्तरमाह । **अभेदएवेति विभक्त्यनुसंधानं विनापीति**। तथाचाभेदोपस्थापकविभक्तेः प्रतिसंधानमेवनास्ति प्रतिसंहितप्रातिपदिकात्लक्षणया ह्युपस्थितोप्यभेदः नामार्थतया नामान्तरार्थे नान्वययोग्यइति समासस्थले नाभेदप्रकारकशाब्दबोधसंभव इतिभावः। **भेदत्वावच्छिन्नाभावइति**। भेदत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावइत्यर्थः । तेन नीलभेदाद्यभावस्य भेदत्वावच्छिन्नप्रतियोगिताकस्य प्रसिद्धत्वेऽपि नक्षतिः। **जलेद्वित्वादिनेति**। इदंच भेदप्रतियोगिताकाभावस्य विभक्त्यर्थत्वे भेदत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य तथात्वेतु पृथिवीवृत्तित्वविशिष्टभेदाभावं भेदजलोभयाभावं चादाय दोषोबोध्यः। **नीलपदार्थान्वयप्रसंग इति**। नच शक्त्यानन्त्यप्रसंगः उपलक्षणीभूतेन प्रकृत्यर्थतावच्छेदकत्वेन धर्माननुगमय्यसर्वनामवच्छक्त्यैक्यस्योपपादनीयत्वात्। नीलभेदत्वावच्छिन्नाभावत्वेनच नीलपदादिसमभिव्याहारात्प्रतीतिः। नच भेदत्वसमानाधिकरणोभयावृत्तित्वेन भेदनिष्ठतद्व्यक्तित्वान्यनुगमय्य

लभेदत्वावच्छिन्नाभावः प्रतीयते इति वाच्यम् । पदार्थद्वयसंसर्गभानस्यैवाकाङ्क्षानियम्यत्वान्नील भेदत्वावच्छिन्नप्रतियोगितान्तर्भावेण वृत्तिं विना भेदरूपपदार्थतावच्छेदकस्याभावे तादृशसंबन्धेन भानासंभवात्, मैवम् । भेदोऽभावश्च विशेषणविभक्तेरर्थः विशिष्टलाभस्त्वाकाङ्क्षादिवशात् । एतेन भेदे नीलादिपदार्थान्वये एकदेशान्वयप्रसङ्ग इति निरस्तम् । नच विशेषणविभक्तेरभेदार्थकत्वे नीलं घट इत्यादावप्यभेदान्वयबोधापत्तिर्धान्येन धनवानित्यादौ तृतीयया अभेदबोधनाद् अभेदप्रकारक-बोधे विरुद्धविभक्तिराहित्यस्यानपेक्षणादिति वाच्यम् । द्वितीयादिनाऽभेदबोधने द्वितीयाद्यन्तवि-शेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वमित्युपगमात् । अथ प्रमेयो घट इत्यादौ प्रमेयत्वावच्छि-

---

तत्पर्याप्तावच्छेदकताकप्रतियोगिताकाभावत्वेन विभक्त्यर्थतास्तु तथासति नाप्रसिद्धिर्नवा नीलत्वावच्छिन्नप्रतियोगिताकभेदवृत्ति-त्वेन तद्व्यक्तित्वे नीलादिपदार्थान्वयादनन्वयप्रसङ्गः । नवा नीलं जलमित्यादिप्रयोगापत्तिरिति वाच्यं नीलत्वावच्छिन्नप्रतियोगिता-कभेदत्वरूपानुयोगित्वातिरिक्तस्य तद्व्यक्तित्वस्याभावेनानन्वयतादवस्थ्यात् एकदेशान्वयदोषस्यात्रसत्वाच्च । एतेनावच्छिन्नप्रति-योगिताकत्वनिष्ठावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावत्वेन विशेषणविभक्त्यर्थतायां प्रतियोगित्वांशे धर्मांशे वा नीलस्य स्ववृत्तित्वेन स्ववृत्तिनीलत्वतादात्म्येन वान्वये नानन्वयप्रसङ्गादिर्दोषइति निरस्तम् । भेदा-भावश्चेत्यादिवक्ष्यमाणकल्पापेक्षयात्रगौरवस्य दोषत्वाच्च । **भेदप्रतियोगिताकाभावएवेति** । प्रतियोगितासंबन्धेन भेदविशिष्टाभावएवेत्यर्थः। तेन भेदरूपपदार्थतावच्छेदकस्येत्यादिग्रन्थस्य नासंगतिः । **नीलपदसमभिव्याहारादिति** । नील-पदार्थस्य भेदे नीलत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वये तादृशभेदस्य संसर्गविधया शाब्दे भासमाना सामान्यतः प्रति-योगितात्वेनोपस्थितापि प्रतियोगिता समभिव्याहारमाहात्म्यात् नीलभेदत्वावच्छिन्नप्रतियोगित्वरूपविशेषात्मतामवलम्बते । तथाच नानन्वयो न वा नीलं जलमित्यादिप्रयोगापत्तिरिति भावः । **पदार्थद्वयेति** । विभिन्नशक्त्युपस्थापितार्थद्वयेत्यर्थः । अनन्विततयोप-स्थितार्थद्वयेति यावत् । अनन्वितयोरन्वयभाने प्रभवत्याकाङ्क्षा नह्यन्विततयोपस्थितयोस्तत्र पदस्यैव प्रभुत्वात् । तथाचाकाङ्क्षा-यास्तादृशपदार्थयोः सामान्यतः संसर्गभानएवासामर्थ्ये किमु वक्तव्यं विशेषात्मतया तद्भासनव्यापृताविति यथोपस्थित्यैव प्रतियोगित्वं शाब्दबुद्धावपि भासते उपस्थितौ च प्रतियोगितात्वेन द्वित्वाद्यवच्छिन्नापि प्रतियोगिता संसर्गतया भास-तएव शक्त्यानन्त्यभयेन नीलभेदत्वावच्छिन्नप्रतियोगितात्वेन प्रतियोगित्वमन्तर्भाव्य शक्तेर्वक्तुमशक्यत्वादिति नीलं जलमि-त्यादिप्रयोगस्य न वारणमिति भावः ।

**भेदोऽभावश्चेति** । तथाच तयोः संसर्गस्य पदानुपस्थितत्वेनाकाङ्क्षाभास्यताया एव वक्तव्यतया नीलत्वावच्छिन्नप्रतियो-गितासंबन्धेन नीलपदार्थान्वितभेदस्य नीलपदसमभिव्याहारवशात्तादृशभेदत्वावच्छिन्नप्रतियोगितासंबन्धेनैवाभावेऽन्वयस्य वाच्यत्वान्नापत्तिरिति भावः । अत्र भेदस्याव्याप्यवृत्तित्वे कपिसंयोगवान् वृक्ष इत्यत्र भेदस्यैव सत्वेनाभेदानुपपत्तिरिति तद्वारणाय यत्स्वप्रतियोगित्वसामानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवद्वृत्तित्वविशिष्टभेदत्वेन विशेषणविभक्त्यर्थता वाच्या तथाच तादृशः कपिसंयोगवद्भेदो न वृक्षादाविति नानुपपत्तिरिति वचनं तदविचारमूलकमेवाभेदस्य तत्र तादृशभेदाभाव-रूपतया तस्याप्यव्याप्यवृत्तित्वेन वृक्षेसत्वादनुपपत्तेरेवाभावात् । अथ कालिकादिना घटादावपि नीलादिभेदस्य सत्वेन विशेष-णत्वसंबन्धावच्छिन्नप्रतियोगित्वस्य संसर्गत्वं वाच्यं तथाच वह्न्यभाववान् पर्वत इत्यस्यापत्तिः वह्न्यभाववद्भेदस्य वह्निस्वरूपतया विशेषणतया तस्यासत्वेन तदभावस्य पर्वते सत्वादिति चेन्न स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नप्रतियोगि-त्वस्यैव संसर्गताया विवक्षितत्वात् । तथाच भावविशेषणतास्थले स्वरूपसंबन्धावच्छिन्नप्रतियोगित्वस्याभावविशेषणतास्थले संयोगाद्यवच्छिन्नप्रतियोगित्वस्य संसर्गत्वे पर्यवसानमिति न कश्चिद्दोषः ।

**नच विशेषणविभक्तेरभेदार्थकत्व इति** । अनेनाभेदस्य संसर्गतामते नेयमापत्तिरिति सूचितम् अतोनैतदुक्तेर्वैयर्थ्य-शङ्कावकाशः । नचाभेदस्य संसर्गतामते धान्येन धनवानित्यादावप्यभेदसंसर्गकबोधस्यैवाङ्गीकर्तव्यत्वेन संसर्गतामतेप्यापत्ते-स्तुल्यत्वाद्विशेषणविभक्तेरभेदार्थकत्व इत्युक्तिर्निरर्थिकैवेति वाच्यम् विशेषणविभक्तेरभेदरूपार्थे प्रत्यक्षवचनानुशिष्टत्वाभावाद्वचने कल्पनीयेऽभेदबोधोपयोग्याकाङ्क्षानिर्वाहकतया तद्विधायकमेव हि वचनं कल्पनीयं शक्यकल्पनालाघवात् प्रकृत्यादिशब्दाद्धि तृतीया प्रत्यक्षवचनेन विहिता प्रत्यक्षं च वचनमशब्दसंस्कारकमर्थविशेषसङ्केतं ग्राहयदेव विधायकं दृष्टं यथा कर्मत्वादौ सङ्केतं ग्राहयद्द्वितीयादिविधायकं कर्मणि द्वितीयेत्यादि तथाच प्रकृत्यादिभ्य उपसंख्यानमित्यपि तृतीयाविधायकमर्थान्तरायो-ग्यत्वगौरवादिज्ञानसाचिव्यादभेदे सङ्केतग्राहकमङ्गीकरणीयमिति द्वितीयाद्यर्थकर्मत्वादेरिव तृतीयार्थाभेदस्यापि प्रकारत्वमे-वोचितमुपस्थितत्वस्य तुल्यत्वात् । नच विभक्त्यर्थप्रकारतामतेऽभेदस्यापि प्रकारत्वमेवाङ्गीक्रियते इति न भ्रमितव्यं तत्तद्ग्रन्थप-र्यालोचनया तन्मतेऽप्यभेदस्य संसर्गताभ्युपगमप्रतीतेरित्यभिप्रायाद्विशेषणविभक्तीत्याद्युक्तिसङ्गतिरिति ।

**द्वितीयादिनेति** । अथादिपदात्तृतीया परिगृह्येत चेद्धान्येन धनवान् प्रकृत्या चारुरित्यादावभेदान्वयबोधानुपपत्तिः, न

न्नभेदाप्रसिद्ध्या लघुधर्मसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमान् घट इत्यादावपि कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या विशेषणविभक्तेरभेदार्थकत्वासम्भवः। एवं नीलपटादिपरनीलादिपदघटितस्य नीलो घट इत्यादिवाक्यस्यापि प्रामाण्यापत्तिः। नीलत्वादिना पटादेर्भेदाभावस्य नीलघटादौ सत्त्वात्। एतेन विशेषणतावच्छेदकीभूतनीलत्वप्रमेयत्वादिकमेव विशेषणविभक्त्यर्थः नीलत्वादेर्नीलत्वावच्छिन्नभेदाभावरूपतयाऽभेदार्थकत्वप्रवादोपपत्तिरित्यपि निरस्तम्। नीलत्वादौ नीलत्वादिमतः स्ववृत्तित्वसंबन्धेनान्वये आकाङ्क्षाविरहाच्च। यथाहि तद्विशिष्टे अधिकरणे आश्रयतया तदधिकरणतया तदन्वयोऽनुभवविरुद्धः; तथा तद्धर्मे आधेयतया तद्धर्मवदन्वयोऽपि। अत एव कर्मं गच्छतीति वाक्यस्य निराकाङ्क्षता। नचैवं संसर्गतामतेप्यनिस्तारः नीलो घट इत्यादौ स्ववृत्तिनीलत्वादेः संसर्गतास्वीकारे उक्तस्थले प्रामाण्यापत्तेर्दुर्वारत्वादिति वाच्यम् स्ववृत्तिनीलत्वादेः स्वस्मिन्संबन्धतोपगमेन पटादिवृत्तिनीलत्वादेर्घटादौ पटादिसंबन्धताविरहेण तादृशातिप्रसङ्गाभावात्। वस्तुतस्तु तत्तद्व्यक्तित्वावच्छिन्नभेदाभाव एव नीलत्वादि प्रकारेण भासमानानां तत्तद्व्यक्तीनां स्वस्मिन् संबन्धतया भासते इति न काप्यनुपपत्तिः। संबन्धता च तस्य भेदप्रतियोगिताकाभावत्वेन तत्तद्व्यक्तिभेदप्रतियोगिताकाभावत्वेन वेत्यन्यदेतत्। नचैवं विशे-

---

परिगृह्येत सुन्दरेण घट इत्यादावप्यभेदान्वयबोधापत्तिरिति। नन्वभेदे तृतीयायाः प्रकृत्यादिभ्य इत्यनेनानुशिष्टत्वे घटे सुन्दरपदार्थभेदस्याबाधितत्वे च सुन्दरेण घट इति प्रयोगः कथं नेष्यते। नचाभेदेपि प्रकृत्यादिशब्देभ्य एव तृतीयानुशिष्टेति न सुन्दरादिपदात्तृतीयासम्भव इति वाच्यम् अभेदेन व्यावर्तकरूपे भेदके विद्यमानाच्छब्दात्तृतीयाया व्याकरणान्तरेऽनुशिष्टतया तत्संवादात्प्रकृत्यादिगणपाठाभावाच्च प्रकृत्यादि शब्दस्य भेदकाद्युपलक्षकताया एव पर्यवसानेन सुन्दरेणेति तृतीयाया दुर्वारत्वादिति चेन्न आकृतिगणोयमिति मनोरमादर्शनात्सूत्रेण यत्र तृतीया न प्राप्ता प्रयोगश्च प्रामाणिकोऽवधृतस्तत्र कात्यायनेन तृतीयासाधुत्वार्थं वार्तिकस्योपनिबद्धतया प्रयोगप्रामाण्यावधार्ये प्रकृत्यादिगणत्वमिति हि विज्ञायते सुन्दरेण घट इति न प्रामाणिकः प्रयोग इति तृतीयायास्तत्रासंभवात्। एवं यथायोगं सर्वविभक्त्यपवाद इति शब्दरत्नदर्शनात्प्रकृत्या चारुरित्यत्र षष्ठ्याः, समेनैति विषमेणैति सुखेन यातीत्यादौ द्वितीयाया गोत्रेण गार्ग्य इत्यत्र प्रथमाया बाधिका तृतीयेति ग्रन्थान्तरार्थपर्यालोचनात्प्रकृतेश्चारुर्गोत्रोगार्ग्यः सुखमेतीत्यादि प्रकृतिश्चारुरित्यादि प्रयोगादर्शनाच्च प्रकृत्यादिगणशब्दायत्र तृतीया न तत्र विभक्त्यन्तरस्य संभव इत्यवधार्यते दृश्यते च सुन्दरो घट इति सुन्दरशब्दस्य तत्प्रयोगस्थस्य प्रकृत्यादिगणीयत्वाभावोऽवसीयत इति नहि तत्र तृतीयासम्भवः। यत्त्वनेन वार्तिकेण विहितायाः प्रकृत्या चारुः नाम्ना सुतीक्ष्णः धान्येन धनवान् गोत्रेण गार्ग्यः समेनैति सुखेन यातीत्यादौ सर्वत्रैवैकदेशान्विताभेदार्थं एव तृतीयाया दर्शनाच्च सुन्दरेण घट इति प्रयोगसंभव इति तन्न धान्येन धनमिति मुग्धबोधटीकायां मुख्यार्थेऽप्यन्वये प्रयोगदर्शनादेतावता परमेण सुन्दर इति प्रयोगस्य साधुत्वासाधुत्वयोरेकशेषस्यासम्भवाच्च। व्याकरणान्तरमपि पाणिनीयसंवादाच्छब्दविशेषात्तृतीयानुशासकमेवाङ्गीकार्यमिति चेदुच्यते। प्रकृत्यादिशब्दोत्तरतृतीयातिरिक्ता तृतीयादिपदात्परिग्राह्येति न कोपि दोष इति। **एतेनेति**। उक्तवाक्यप्रामाण्यप्रसङ्गेनेत्यर्थः। अथात्र घटपदसमानाधिकरणस्य नीलपदस्य गुणिपरत्वेन नीलरूपात्मकमेव नीलत्वं विशेषणविभक्तेरर्थस्तच्च घटपटयोर्नैकमिति कथमुक्तप्रयोगस्य प्रामाण्यापत्तिरितिचेन्न नीलत्वजात्यवच्छिन्नाधिकरणत्वमेवानुगतमिह हि नीलत्वं तद्विशिष्टपटपरमेव च नीलपदमित्युक्तप्रयोगप्रामाण्यापत्तिसङ्गतिरिति। नचाधेयतयापटविशिष्टं नीलत्वं न घट इति कथमापत्तिसंभव इति वाच्यं विशेष्ये विशेषणमितिरीत्या जायमानायां शाब्दमतौ प्रामाण्यापत्तावेव तात्पर्यात्। **अभेदार्थकत्वोपपत्तिरिति**। नच प्रमेयत्वावच्छिन्नभेदाप्रसिद्ध्या प्रमेयत्वस्याभेदानात्मकतया प्रमेयोघट इत्यादिस्थलीयविशेषणविभक्तेः कथमभेदार्थकत्वोपपत्तिरिति वाच्यं क्वचिन्मुख्यार्थे संभवति तदसंभवादितरत्र गौणस्तदर्थ इति हि वक्तुं शक्यं यथा ग्रामं गच्छतीत्यत्र द्वितीयाया मुख्ये कर्मत्वरूपार्थे सत्येव घटंजानातीत्यादौ तदसंभवाद्विषयत्वलक्षणगौणकर्मत्वार्थकत्वं तथेहापि नीलोघट इत्यत्र विशेषणविभक्तेरभेदरूपमुख्यार्थत्वसंभवात् प्रमेयो घट इत्यत्र गौणाभेदरूपप्रमेयत्वाद्यर्थकत्वमित्याशयात्।

**स्वस्मिन्संबन्धतोपगमेनेति**। तथाचाधेयत्वं तत्र विशेषणमेव नोपलक्षणमिति भावः। भेदाभावस्याभेदस्य तत्त्वेनैव रूपेण संसर्गतामाह—**वस्तुतस्त्विति**। **अन्यदेतदिति**। अविचारणीयं भेदप्रतियोगिताकाभावत्वेन तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन वा संसर्गत्वमित्यर्थः। पक्षद्वयेप्युक्तप्रयोगप्रामाण्यापत्तिवारणसंभवात्। पक्षद्वयान्यतरसत्त्वासत्त्वफलकविचारस्य प्रकृतानुपयुक्तत्वादिति भावः। नच भेदत्वावच्छिन्नाभावत्वस्याप्रसिद्धत्वाद्भेदप्रतियोगिताकाभावत्वस्य च तद्व्यक्तिभेदघटोभयाभावादिसाधारणतयोक्तरूपेण संसर्गत्वे निरुक्तोभयाभावस्यापि संयोगेन वह्नेः साध्यतायां संसर्ग-

षणविभक्तेरभेदार्थकत्वमतेऽपि तत्तद्व्यक्तित्वावच्छिन्नाभेद एव विभक्त्यर्थो वक्तव्य इति वाच्यम् तथा सत्यपूर्वव्यक्तिनिष्ठतत्तद्व्यक्तित्वस्य कथं चिदपि भानासंभवेन तदवच्छिन्नभेदाभावे शक्तिग्रहासंभवेनापूर्वव्यक्तीनामभेदान्वयबोधानुपपत्तेः । संसर्गज्ञानस्य विशिष्टबुद्धावहेतुत्वेनानुपस्थितस्यापि संसर्गतया भानसंभवेन संसर्गतामतेऽनुपपत्त्यभावात् । न च विभक्त्यर्थेऽपि भेदे तत्तद्व्यक्तित्वावच्छि-

---

तावच्छेदकीभूतसंयोगत्वस्य सत्तया घटादिसंयोगानां साध्यतावच्छेदकसंसर्गत्वस्येव निरुक्तसंसर्गत्वस्यापत्त्योक्तप्रयोगप्रामाण्यस्य दुरुद्धरत्वमिति वाच्यं, प्रकृतसंसर्गता हि विषयतात्मिका नच प्रतियोगित्वादिनिरूपितसंसर्गतावदतिरिक्ता विषयतायाश्चातिप्रसक्तोऽपि भवत्यवच्छेदक इति भेदप्रतियोगिताकाभावत्वावच्छिन्नापि संसर्गता तत्तद्व्यक्तिभेदत्वावच्छिन्नाभावनिष्ठैवेत्यङ्गीक्रियत इति न प्रामाण्यापत्तितादवस्थ्यमित्यभिप्रायः । ननु प्रकारताविशिष्टप्रकारताकत्वमेव प्रामाण्यं वैशिष्ट्यं च तत्र स्वतादात्म्यस्वविशिष्टनिरूपकताकाधिकरणतावन्निष्ठविशेष्यताकत्वोभयसंबन्धेन । स्ववैशिष्ट्यं च स्वानवच्छेदकानवच्छिन्नत्वादिप्रसिद्धचतुष्टयसंबन्धेनान्यत्र प्रपञ्चितमस्ति । एवं सत्युक्तस्थले प्रामाण्यं दुर्वारमेव नीलत्वावच्छिन्नपटनिष्ठप्रकारतावैशिष्ट्यस्योक्तोभयाभावनिष्ठया भेदप्रतियोगिताकाभावत्वावच्छिन्नसंसर्गतया निरूपितायां नीलत्वावच्छिन्ननिरूपकतायां सत्वेन तन्निरूपिताधिकरणत्वस्य घटे सत्त्वादिति चेन्न स्वनिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकसंसर्गतानिरूपकत्वं नचतुष्टयसंबन्धघटकमपितु स्वनिरूपितसंसर्गताव्याप्यसंसर्गताकत्वमिति पटनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नाभावत्वावच्छिन्नसंसर्गतानिरूपितनिरूपकताकाधिकरणत्वमेव वैशिष्ट्यघटकमिति न प्रामाण्यप्रसङ्गः । अथ नीलपटपरनीलादिपदघटितस्य नीलो घट इतिवाक्यस्याप्रमाणत्वे नञ्घटितस्य तस्य प्रमाणत्वं युक्तं नच तत्संभवति नीलत्वेन पटभेदस्य सामान्यरूपेण विशेषाभावाद्यनङ्गीकारेऽप्रसिद्धेः अङ्गीकारेऽपि वा नीलोनघट इत्यत्रोक्ताभावप्रत्ययो हि न व्युत्पत्तिसिद्धः, प्रतियोगिविशेषवाचकपदान्तरघटितस्य वह्नित्वेन महानसीयवह्निर्नास्तीत्यादिवाक्यस्यैव तदभिलापकत्वदर्शनात्, अन्यथा पर्वते वह्निर्नास्तीत्यादिरपि स्वारसिकः प्रयोगः स्यात् । नीलत्वावच्छिन्नसामान्यभेदस्य नीलघटेऽसंभवात् सामान्यधर्मावच्छिन्नाया एकविशेषमात्रनिष्ठायाः संसर्गतायाः प्रतियोगित्वनिरूपितायाः स्वारसिकप्रत्ययागोचरत्वेनाप्रामाणिकतया भेदप्रतियोगिताकाभावत्वावच्छिन्नपटनिष्ठतद्व्यक्तित्वावच्छिन्नभेदाभावमात्रनिष्ठसंसर्गताकप्रतियोगिताकाभावस्याप्यलीकत्वात् । उक्तसंसर्गतायाः प्रामाणिकत्वे कथं न संयोगेन पर्वते वह्निर्नास्तीत्यादिप्रत्ययः स्वरसतो लोकानामिति चेत्स्वरूत्युभयावृत्तिधर्मत्वेनानुगतरूपेणाभेदस्य संसर्गत्वपक्षेप्युक्तप्रयोगस्योक्तरीत्या प्रामाण्योपपादनस्य दुःशकतया घटत्वेन पटोऽस्ति घटत्वेनपटोऽस्ति घटत्वेन पटो नास्तीति प्रयोगद्वयवदुक्तप्रयोगद्वयस्याप्यप्रामाण्यमेवाङ्गीकार्यम् । यथावा वह्नित्वेन महानसीयवह्निपरपदघटितस्य संयोगत्वेन संयोगमात्रसंसर्गकप्रत्ययोपधायकस्य संयोगेन पर्वते वह्निरिति वाक्यस्याप्रामाण्ये नञ्घटितस्य तस्य प्रामाण्यमुचितमिति वक्तुमनर्हं कथंचिदप्यसंभवात्तथेदमपीति बोध्यम् । नीलो न घट इति वाक्यप्रामाण्यस्यानुभविकत्वे सामान्यधर्मावच्छिन्नविशेषमात्रनिष्ठसंसर्गत्वस्याभेदस्थले प्रामाणिकत्वमभ्युपेत्य प्रामाण्योपपादनमप्युभयत्र समानम् । नच तत्तद्व्यक्तिभेदत्वावच्छिन्नाभावत्वेन संसर्गतामते अनुभवकदर्थनाभाव एव विशेष इति वाच्यं तत्रापि दोषस्य वक्ष्यमाणत्वेन तदुद्धारप्रयासे अनुभवकदर्थीकरणप्रसंगस्य समानत्वात् । अथ तत्तद्व्यक्तिभेदत्वावच्छिन्नाभावत्वेन संसर्गत्वे संसर्गताभेदात्प्रकारत्वविशेष्यत्वयोरपि भिन्नत्वान्नीलाघटा इत्यस्यैकवाक्यत्वानुपपत्तिः निरूप्यनिरूपकभावानापन्नानेकविषयताकबोधजनकत्वादिति चेत्संशयसमुच्चयवैलक्षण्यानुरोधेन तदीयविषयत्वयोरवच्छेद्यावच्छेदकभाव इव नीलत्वनिष्ठावच्छेदकत्वाख्यविषयतायाः सकलतत्प्रकारतानिरूपिताया ऐक्यमवच्छेद्यावच्छेदकभावो वाङ्गीक्रियताम् तथाच नैकवाक्यताभङ्ग इति । नचैवमपि वक्ष्यमाणरीत्या नीला न घटा इत्यस्य प्रामाण्यप्रसङ्ग इति वाच्यं यथाहि सामान्याभावानङ्गीकर्तृभिर्वह्निर्नास्तीत्यादिप्रतीतौ विशेषाभावकूटावगाहित्वमङ्गीक्रियते तथोक्तस्थलेपि नीलभेदकूटावगाहित्वमेवोररीक्रियते कूटत्वेनैव तस्य विषयत्वान्नैकवाक्यताभङ्गः, नञ्पदस्य तादृशभेदकूटत्वावच्छिन्ने लक्षणा नीलपदं च तात्पर्यग्राहकमथवैकदेशान्वयास्वीकारे धात्वादिशक्ययोः फलव्यापारयोरिव लक्ष्यार्थशक्यार्थयोरभावकूटत्वयोरप्यन्वयोऽगत्याङ्गीकरणीयः नीलान्वितानां सर्वेषामेवाभावानां कूटत्वेऽन्वये तादृशाकाङ्क्षायाः प्रयोजकत्वं चाङ्गीकरणीयमिति विभावनीयम् । अग्रिमग्रन्थस्तु कूटत्वस्य तथाविधस्यानुगतानुयोगितावच्छेदकधर्मंविना दुर्ग्रहत्वात् तदग्रहेऽप्युक्तप्रयोगात् गतिसंभवे निरर्थकत्वप्रायस्य तात्पर्यग्राहकत्वस्य वक्तुमनुचितत्वात् । एकपदलक्ष्यार्थशक्यार्थयोरन्वयस्यापि व्युत्पत्तिमार्गापेतत्वादुक्तरीतिर्न साधीयसीति वस्तुगतिमनुरुध्योक्त इतिदिक् ।

**संसर्गतामतेऽनुपपत्त्यभावादिति** । अथान्विताभिधानपक्षस्य निराकृतत्वेन पदादन्वयोपस्थितेरनपेक्षितत्वेपि तात्पर्यग्रहार्थमवश्यमन्वयोपस्थितिरपेक्षणीया । नच ज्ञानांशे विषयतया विशिष्टवाक्यार्थमवगाहमानैव तात्पर्यमतिः शाब्दबोधोपयोगिनीति संसर्गस्य विशेष्यविशेषणभावादिविधुरस्वरूपेण भासमानतया तदुपस्थितेर्नापेक्षेति वाच्यम् अपूर्ववाक्यार्थस्थले शाब्दबोधात् प्राक् तस्य ज्ञातुमशक्यत्वेन ज्ञानविशेषणत्वासंभवादितिनिरूप्यनिरूपकभावापन्नतत्तद्विषयताकत्वविशिष्टज्ञानविषयकत्वमेव तात्पर्यबुद्धेर्वाच्यमिति संसर्गिकविषयत्वविशेषणघटकतया तद्व्यक्तित्वोपस्थितेरावश्यकत्वात् संसर्गतामतेप्यनुपपत्ति-

न्नप्रतियोगिताकत्वसंबन्धेन नीलत्वादिना तत्तद्व्यक्तीनामन्वयः, तादृशभेदानामपि तत्तद्व्यक्तिभेदत्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनाभावेऽन्वय उपेयते, तावतैव तत्तद्व्यक्तित्वावच्छिन्नाभेदलाभ इति न किंचिदनुपपन्नमिति वाच्यम्। विशेषणतावच्छेदकावच्छिन्नाया एव प्रतियोगिताया अभावे प्रतियोगिनः संबन्धतया भानात्। अन्यथा विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेः। प्रतियोगिविशेषिताभावज्ञानं च विशिष्टवैशिष्ट्यबोधमर्यादामतिशेत इति दर्शनात्केवलं विशेष्ये विशेषणमिति रीत्या न

---

तादवस्थ्यमितिचेन्न स्वनिरूपितसांसर्गिकविषयतानिरूपितघटादिविषयताकत्वसंसर्गेण नीलादिविषयताविशिष्टज्ञानविषयकत्वस्यैव तात्पर्यबुद्धौ स्वीकारात्सांसर्गिकविषयत्वस्य प्रकारताविरहेणानुपपत्त्यभावादिति ध्येयम्।

**विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेरिति।** विशिष्टवैशिष्ट्यावगाहिबोधत्वं च विशेषणविशेषणतावच्छेदकोभयसंबन्धावगाहिबोधत्वं तत्राभावस्थले प्रतियोग्यंशे भासमानस्य विशेषणत्वं विशेषणतावच्छेदकस्य च तस्य स्वावच्छिन्नप्रतियोगित्वंसंसर्गः विशेषणस्य च प्रतियोगित्वमभावबुद्धा नियमेनावगाह्यत इति चाङ्गीकरणीयमन्यथा स्वसमानाधिकरणप्रतियोगित्वादेः विशेषणतावच्छेदकसंसर्गत्वे पर्वतेपि वह्निर्नास्तीत्यादि प्रत्ययापत्तेः द्वित्वाद्यवच्छिन्नप्रतियोगितासंसर्गेण वह्निविशिष्टाभावस्य स्वसमानाधिकरणतादृशप्रतियोगितासंसर्गेण वह्नित्वविशिष्टतया तस्य पर्वते सत्वात् प्रतियोग्यंशे भासमानस्योपलक्षणत्वे च तस्याभावांशे भानासंभवादुक्तप्रत्ययापत्तेः दुरुद्धरत्वात्। एवं चैकाभावस्योभयविधप्रतियोगितासंबन्धित्वविरहेणान्यधर्मावच्छिन्नप्रतियोगित्वस्य प्रतियोगिसंसर्गत्वे विशेषणतावच्छेदकसंबन्धबाधापत्त्या तस्योपलक्षणता स्यादित्यगत्या विशेषणतावच्छेदकावच्छिन्नैव प्रतियोगिता प्रतियोगिनःसंसर्गत्वेनाङ्गीकरणीया। तथाच निरुक्तस्थले तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्य संसर्गत्वे नीलस्य विशेषणत्वासंभवेनाभावबुद्धेरुपलक्षितवैशिष्ट्यावगाहित्वं स्यादिति भावः। अथोक्तनियमद्वयस्य सार्वत्रिकत्वं न संभवति घटाभावादिपक्षकवह्न्यादिसाध्यकानुमितेः महानसीयवह्न्यभावादिपक्षकवह्न्यादिसाध्यकानुमितेश्च तदभिलापकवाक्यजन्यशाब्दबुद्धेश्चाभावप्रत्ययात्मकतया विशेषणस्य सामानाधिकरण्यस्वनिष्ठप्रतियोगित्वादिसंबन्धेनाभावांशेऽवगाहितत्वादिति नञ्पदघटितवाक्याभिलप्याभावप्रत्ययस्थल एवोक्तनियमद्वयमङ्गीकरणीयं तथाच प्रत्ययाद्युपस्थिते विधेयभावानालिङ्गिते भेदादौ तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेन नीलादेः स्वसमानाधिकरणतादृशप्रतियोगितासंबन्धेन नीलत्वादेश्चान्वये को दोषः तादृशसंबन्धेनान्वय एव च तादृशविभक्त्यादिसमभिव्याहारस्याकाङ्क्षात्वोपगमात् संबन्धान्तरमादाय नानिष्टप्रयोगप्रसङ्गस्याप्यवसरः। अथवा यत्र प्रतियोगित्वेन साक्षात्संबन्धेनाभावे कस्यचिद्विशेषणत्वं तत्रैव विशेषणतावच्छेदकस्य धर्मिपारतन्त्र्येण स्वावच्छिन्नप्रतियोगित्वं संबन्धः यत्र च स्वनिष्ठप्रतियोगिताकत्वादिपरम्परासंबन्धेन तत्र विशेषणतावच्छेदकस्य न निरुक्तप्रतियोगित्वं संसर्गः। अतएव स्वनिष्ठप्रतियोगिताकत्वसंबन्धेन वह्निविशिष्टमहानसीयवह्न्यभावादेर्लक्षणया पदात्प्रतीतिर्नच तत्र वह्नित्वस्य स्वावच्छिन्नप्रतियोगित्वसंबन्धेन भानम्, एवंच प्रत्ययार्थे भेदे प्रकृत्यर्थस्य स्वनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैवान्वये प्रकृतिप्रत्ययसमभिव्याहारस्याकाङ्क्षात्वोपगमे न कश्चिद्दोष इति चेत्सत्यं। घटोनास्ति घटोनेत्यादिप्रत्ययवद्घटाभाववान् घटभेदवानित्यादयोऽपि प्रत्ययाः प्रतियोगिविधया घटमवगाहमानाः स्वरसतः शुद्धप्रतियोगित्वमेव संसर्गतयावगाहन्ते। अतएव घटवद्भूतलविषयको भूतलं घटाभाववदित्यादि प्रयोगो न स्वरसतो विशेषदर्शिनामिति प्रतियोगिविधया विशेषणस्याभाववसंबन्धः प्रतीयमानः शुद्धप्रतियोगित्वात्मक एव स्वारसिक इति निर्णीयते। तत्परित्यागश्च न बलवत्तरकारणमृतेऽर्हत्यौचितिम्। एवंच नीलोघट इत्यादिवाक्यस्यान्यथाप्युपपत्तिसंभवे सर्वलोकस्वरससिद्धां प्रतियोगिभूतविशेषणसंबन्धस्य शुद्धप्रतियोगित्वात्मकतामतिक्रम्य संबन्धान्तरात्मतया तद्भानोपयोग्याकाङ्क्षात्वकल्पनं समभिव्याहारविशेषस्यानुचितमिति तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्य शुद्धप्रतियोगितात्वेन संसर्गत्वे विशेषणतावच्छेदकनीलत्वादेरुपलक्षणत्वस्य प्रतियोगितानवच्छेदकत्वलक्षणस्य संभवः विशेषणत्वे च शुद्धप्रतियोगित्वसंसर्गभाने विशेषणतावच्छेदकस्य स्वावच्छिन्नप्रतियोगित्वसंसर्गभाननियमेन तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्य संसर्गत्वासंभव इत्यभिप्रायोऽनुचिन्तनीयो निरुक्तग्रन्थस्येति।

**केवलं विशेष्ये विशेषणमितिरीत्येति।** विशेष्यसंबन्धिनि तद्द्वारान्यसंबद्धत्वमिहकैवल्यमभावप्रत्ययस्थले तन्नास्तीत्यर्थः। एवंचाभावस्थले प्रतियोगिप्रकारस्योपलक्षणत्वव्यावृत्तिरनुदर्शिता भवति तेनहि गन्धप्रागभाववान्नास्ति रक्तदण्डो नास्तीत्यादौ गन्धप्रागभावरक्तत्वादेः प्रतियोगिप्रकारस्याप्युपलक्षणत्वमुक्तं न विरुध्यते उपलक्षणस्यापि तस्य स्वावच्छिन्नप्रतियोगित्वसंबन्धेनाभावेऽन्वयस्याभ्युपगतत्वेन कैवल्यविरहात्। अतएवाभावबोधो हि विशिष्टवैशिष्ट्यावगाह्येव भवतीत्यनभिधाय तत्र तत्राभावबोधो हि विशिष्टवैशिष्ट्यावगाहिमर्यादांनातिशेत इत्युक्तिः, विशिष्टवैशिष्ट्यावगाहिनो रीतिं विशेषणविशेष्योभयसंबन्धावगाहित्वलक्षणांनातिक्रामतीति तु तदर्थः। प्रतियोगिप्रकारस्य विशेषत्वोपलक्षणत्वे प्रत्ययकालसत्वासत्वनिबन्धने, न तु विशेष्यसंबन्धिसम्बद्धत्वासंबद्धत्वप्रयुक्ते ताभ्यामवच्छेदकत्ववैलक्षण्यस्याङ्गीकारादभावयोर्नोवैलक्षण्यमिति बोध्यम्।

कश्चिदभ्युपैतीति चेत् । सत्यम् । अभेदस्तादात्म्यम् । तच्च स्ववृत्त्यसाधारणो धर्मः । असाधारण्यं च एकमात्रवृत्तित्वम् । तच्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येकमात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थः । वृत्तिश्च तत्र प्रकृत्यर्थस्य संसर्गमर्यादया भासते । तादृशधर्मस्तत्तद्व्यक्तित्वादिरूप एव । अपूर्वव्यक्तिनिष्ठतादृशधर्मस्य विशिष्यज्ञातुमशक्यत्वेऽप्येकमात्रवृत्तिधर्मत्वादिना सामान्यप्रत्यासत्तितः सुग्रहत्वमेव । अभेदस्य संसर्गतामतेऽप्येतादृशानुगताभेदस्यैव तथात्वमुचितम् । तत्तद्व्यक्तित्वावच्छिन्नभेदाभावकूटस्य विशिष्य तथात्वे घटो न नील

---

तच्च स्वसामानाधिकरण्येत्यादि । उभयत्र वृत्तित्वं स्वरूपेण बोध्यम् । न चैवं द्रव्यत्वादीनामप्यसाधारण्यप्रसङ्ग इति वाच्यम् स्वरूपसंबन्धावच्छिन्नाधेयत्वस्यैव प्रकृत्यर्थसंबन्धत्वस्वीकारेण स्वरूपेण द्रव्यत्वस्यासाधारण्येपि शाब्दबोधविषयत्वस्यासंभवात्, स्वरूपेण वृत्तिमानसाधारणो धर्म एव वा विभक्त्यर्थो वाच्यः तथापि द्रव्यत्वादिवारणसंभवात्, स्वनिरूपितप्रतियोगितावन्निरूपितवृत्तितानवच्छेदकानुयोगिताविशिष्टान्यत्वमेव च प्रकृते विवक्षणीयम् तेन घटभेदाभावनिष्ठतद्व्यक्तित्वस्य घटभेदात्मकघटभेदाभावाभावनिरूपितप्रतियोगितावद्वृत्तित्वेऽपि नासाधारण्यहानिः तत्तद्भेदनिरूपितप्रतियोगित्ववत्तत्तद्भेदनिष्ठानुयोगित्वमप्यखण्डोपाधिरूपं भिन्नमेव तस्यैव परिग्रहणं न घटभेदाभावाभावत्वरूपानुयोगित्वादेर्भवत्वित्येतदर्थं स्वनिरूपितेत्याद्यनुयोगिताविशेषणतयोपात्तम् । वैशिष्ट्यं च स्वावच्छिन्नवद्वृत्तित्वस्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगितासामानाधिकरण्योभयसंबन्धेन बोध्यम् । नच स्वनिरूपितप्रतियोगितासामानाधिकरण्यमेव कुतो नोक्तमिति वाच्यम् घटभेदत्वाभावनिष्ठतद्व्यक्तित्वेऽसाधारण्यानुपपत्तेः घटभेदत्वरूपानुयोगित्वात्मकघटभेदत्वाभावाभावनिरूपितप्रतियोगित्वस्य घटभेदत्वाभावे सत्त्वादुक्तरूपेण प्रवेशे च घटभेदत्वेन घटभेदत्वाभावनिष्ठप्रतियोगित्वेन निरूप्यनिरूपकभावविरहेण दोषासंभवात् । यद्वा स्वनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपितोभयसंबन्धेन स्वविशिष्टप्रतियोगितासामानाधिकरण्यं संसर्गः तथापि नोक्तदोषः भेदत्वस्य तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वरूपत्वेऽपि नान्योन्याश्रयः तद्व्यक्तित्वमप्यखण्डोपाधिरेव नातो वृत्तितावच्छेदकसंबन्धविकल्पप्रयुक्तदोषस्यावकाशः । यत्तु नीलादिनिष्ठतद्व्यक्तित्वं तत्तन्नीलादिवृत्तित्वविशिष्टनीलत्वादिकमेव नच तस्य स्वरूपेण वृत्तित्वमपि च विशिष्टस्यानतिरिक्ततया पटपरस्य नीलोघट इति वाक्यस्य प्रामाण्यवारणमतो भेदत्वविशिष्टान्यरूपावच्छिन्नवत्त्वमेवासाधारण्यं वाच्यम् । वैशिष्ट्यं च स्वावच्छिन्नवद्वृत्तितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्वविशिष्टप्रतियोगितावन्निरूपितवृत्तितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धेन । वृत्तिता च स्वरूपसमवायान्यतरसंबन्धेन ग्राह्या । तथा च नीलत्वत्वगतैकत्वस्य भेदत्वविशिष्टान्यत्वविरहेण तद्विशिष्टनीलत्वत्वेन नासाधारण्यमपितु तद्व्यक्तिवृत्तित्ववैशिष्ट्यनीलत्वत्वगतद्वित्वस्य भेदत्वविशिष्टान्यतया तदवच्छिन्नतादृशवृत्तित्ववैशिष्ट्यनीलत्वत्वोभयरूपेणैव तेन च रूपेण तत्सत्त्वं न तद्व्यक्तिभिन्न इति न कोपि दोष इति तन्न मनोरमम् । तद्व्यक्तित्वं च तादात्म्येन सैव व्यक्तिरिति पक्षे गगनपरमाण्वादिरूपतद्व्यक्तित्वस्य समवायस्वरूपान्यतरेणावृत्तितया तस्य शाब्दबोधविषयत्वानुपपत्तेः अवयवद्व्यवृत्तिघटाद्यात्मकतद्व्यक्तित्वस्य समवायेनोभयवृत्तितया तस्य शाब्दबुद्धावभानापत्तेः घटाभावाद्यात्मकतद्व्यक्तित्वस्यापि स्वरूपेणोभयवृत्तितया तस्यापि शाब्दबुद्धावभानापत्तेश्च तादात्म्यसंबन्धावच्छिन्नत्वं ह्यन्योन्याश्रयभयेनाप्रवेश्यं तत्तन्नीलादिवृत्तित्वविशिष्टनीलत्वादीनां तद्व्यक्तित्वरूपतापक्षे नीलत्वादीनां संग्राहकत्वाच्च तस्मादखण्डोपाधिरूपतामेव तद्व्यक्तित्वस्यावलम्ब्य पूर्वोक्तरीतिरेवादर्तव्या । तद्व्यक्तित्वस्य विशिष्टनीलत्वादिरूपत्वपक्षेऽपि भेदत्वादिकमखण्डोपाधिरूपमेवावलम्ब्यासाधारण्यस्य निर्वाच्यतया तद्व्यक्तित्वस्य कुतपदान्तर्भावाग्रहस्य दुराग्रहत्वाच्च सामान्यतोऽसाधारण्यपरिष्कारश्चास्मत्कृतसिद्धान्तलक्षणटिप्पण्यामालोचनीयः । अथाधेयत्वविशिष्टधर्मस्यैव लघुभूतस्य विभक्त्यर्थत्वं वक्तुमुचितम् आधेयत्वांशे प्रकृत्यर्थान्वये पटादिनिरूपितवृत्तित्वविशिष्टधर्माधिकरणत्वलाभात्तस्य घटे विरहेण पटादिपरस्य नीलोघट इति वाक्यस्य प्रामाण्यवारणसंभवादिति चेन्न एकदेशान्वयभयेनाधेयत्वे धर्मे च खण्डशक्तेः स्वीकरणीयतया विशेष्येविशेषणमितिरीत्या प्रमाशाब्दबुद्धेः निरुक्तस्थले दुरुद्धरत्वप्रसङ्गादिति ।

अथैकमात्रवृत्तित्वस्य स्वसामानाधिकरण्यस्वावच्छिन्नभेदसामानाधिकरण्योभयसंबन्धेनैकत्वविशिष्टान्यत्वं यथाश्रुतार्थपरिष्काररूपं भवतीति तत्कथं परित्यक्तम् । अनुयोगितापर्यन्तनिवेशस्यानावश्यकतया भेदविशिष्टान्यत्वनिवेशापेक्षया लाघवमप्यस्ति तत्रेति चेन्न संख्यारूपस्यैकत्वस्य गुणादावभावेन तद्गततद्व्यक्तित्वस्यैव तद्गतजातेरप्यसाधारण्यप्रसङ्गादपेक्षाबुद्धिविशेषविषयत्वस्य चानुगमकाभावात्तस्य परित्याज्यत्वात् । नचानुयोगित्वपर्यन्तानिवेशात्तत्र लाघवमपि समनियताभावानामैक्यपक्षे घटभेदस्य घटभेदाभावनिष्ठैकत्ववदभावस्यैकतया घटभेदाभावनिष्ठव्यक्तित्वासंग्रहभयेन स्वावच्छिन्नप्रतियोगिताविशिष्टभेदत्वव्याप्यानुयोगित्वावच्छिन्नसामानाधिकरण्यस्यैव वाच्यत्वाल्लाघवाभावात् । नच धर्मविशिष्टान्यत्वादिकमेवास्तुतत्, धर्मत्वेन तदनुगमने

इत्यादिवाक्यजन्यबोधे प्रतियोग्यभावान्वयौ च तुल्ययोगक्षेमाविति न्यायेन तादृशाननुगतसंबन्धावच्छिन्नप्रतियोगिताकाननुगताभावा एव भासेरन् नतु नीलवृत्तिरेकोऽभावः तथा सतियत्किंचित्तादृशाभावतात्पर्येण प्रयुक्तस्य नीलेऽपि न नील इत्यादिवाक्यस्य प्रामाण्यं स्यात् । इदंतु बोध्यम् । विशेषणविभक्तेरभेदार्थकत्वे घटो न नील इत्यादौ नञा नीलाद्यभेदाभाव एव प्रत्याययिष्यते नतु नीलादिभेदः । यादृशसमभिव्याहारस्थले येन संबन्धेन यत्रधर्मिणि येन रूपेण यद्वत्त्वं नञसत्त्वे प्रतीयते तादृशस्थले नञा तद्धर्मिणि तादृशसंबन्धावच्छिन्नतादृशधर्मावच्छिन्नप्रतियोगिताकतदभावबोधस्य व्युत्पत्तिसिद्धत्वात् । प्रतियोग्यभावान्वयौचेत्यादेरप्ययमेवार्थः । एवं च नञो भेदबोधकत्वं न कुत्रापि संभवति । अनीलं घटमानयेत्यादौ घटपदसामानाधिकरण्यानुरोधेनानीलपदस्य नीलभिन्नपरतया नञो भेदवत्येव लक्षणाया उपगन्तव्यत्वात् । इदं तु तत्त्वम् । असमस्तनीलो घट इत्यादिस्थलेऽभेदस्य संसर्गतोपगमेऽपि

---

क्षत्यभावादिति वाच्यम् धर्मत्वेन तत्प्रवेशे यथाश्रुतार्थताहानेर्दुर्वारत्वादिति । **तुल्ययोगक्षेमाविति** । योगः प्राप्तिः क्षेमो लब्धपरिरक्षणम् तुल्यौ योगक्षेमौ यस्येति व्युत्पत्तिः । प्रकृते च येन संबन्धेन यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नान्वयो नञोऽसमभिव्याहारे प्रतीयते तद्धर्मावच्छिन्ने तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावान्वय एव नञ्समभिव्याहारे प्रतीयते इत्येवांर्थोऽस्य प्रकृतोपयोगीपर्यवसितो वेदितव्यस्तथैवग्रन्थकारेण वक्ष्यमाणत्वात् । शब्दार्थघटनात्वेवं कार्या प्राप्तिरत्र ज्ञानं तद्वयोस्तुल्यं तुल्यता च तुल्यसामग्रीप्रभवत्वतुल्यविषयकत्वाभ्यां, सामग्र्याः साम्यं नञ्तदर्थविषयकत्वपरिहारेणाकाङ्क्षादेस्सर्वस्य सर्वथैकरूपता विषयत्वांशेऽपि साम्यं नञर्थतत्संसर्गपरिहारेण सर्वथैकविषयत्वं, लब्धस्य ज्ञातस्य परिरक्षणमबाधनम् । तदप्यनाप्तोक्तत्वाद्यज्ञानप्रत्यक्षबाधाद्यभावेन तुल्यमिति ।

**तादृशाननुगतसंबन्धेति** । अथ नीलत्वादिप्रकारेण यावतां शाब्दबुद्धौ भानं तत्तद्व्यक्तित्वावच्छिन्नभेदकूटत्वावच्छिन्नाभाव एक एवास्तु संसर्गः । नह्येवमेकवाक्यतासमर्थनक्लेशलेशोपि संसर्गताया एकत्वेन प्रकारत्वादिभेदाप्रसक्तेः कूटत्वं चापेक्षाबुद्धिविशेषविषयत्वात्मकमेकमेव तत्र तत्र प्रतियोगितावच्छेदकमिति संसर्गभेदविरहात्, कूटत्वस्यैकविशिष्टापरत्वरूपत्वपक्षेऽपि समनियताभावानामेकत्वेनैक एवाभावः संसर्गः । नच संसर्गतावच्छेदकतादृशाभावत्वस्य भेदात्संसर्गताभेद इति वाच्यं स्वरूपत एव तादृशाभावस्य संसर्गत्वाङ्गीकारात् सखण्डस्यापि संसर्गविधया स्वरूपतो भानस्य तत्र तत्र स्वीकारात् । अथवा स्ववृत्तितद्व्यक्तिरेवास्तु संसर्गः तद्व्यक्तिश्च निरुक्ताभावरूपा नीलत्वादिप्रकारेण पटादिभाने पटवृत्तित्वोपलक्षिताया अपि पटादिगततद्व्यक्तित्वावच्छिन्नभेदकूटाभावात्मकव्यक्तेर्न घटे सत्त्वमिति न नीलोघट इत्यस्य प्रामाण्यप्रसंगः । एवं च घटो न नील इत्यत्राप्यनुगताभावस्यैव भासमानतया न तस्य प्रामाण्यप्रसंग इति चेन्न पट्सु घटेषु षण्णां नीलानां तादात्म्यावगाहने तत्तद्व्यक्तिभेदषट्काभावस्य नीला घटा इत्याकाङ्क्षयैव संसर्गतया भानमभ्युपेयते । तादृशश्चसंसर्गस्तादृशाकाङ्क्षया तादृशपदघटकघटत्रयेऽपि स्वानात्मकनीलत्रयभाने सति तात्पर्ये भासेत तथासति हि तादृशतात्पर्येणोच्चरितस्यापि नीला घटा इत्यस्य प्रामाण्यं स्यादिति । **नतु नीलादिभेद इति** । नीलादिभेदत्वेन नीलादिभेद इत्यर्थः तेन समनियताभावानामैक्येऽपि न क्षतिः । अभेदस्य संसर्गतोपपादिकां युक्तिमाह । **इदंतुतत्त्वमित्यादिना** । अथ नीलो घट इत्यादिस्थल इत्याद्युक्तावेव सामञ्जस्ये ऽसमास इत्युक्तिः कथमिति चेदुच्यते, संसर्गतया भानन्तु समासस्थल एवेत्यादिना समासस्थले सर्वथैवाभेदस्य संसर्गतया भानस्य प्रागुक्तत्वेन तत्साधारण्येनात्राभेदस्य संसर्गत्वोपपादने संदर्भाशुद्धिः स्यात्, समासे विशेषणविभक्तेरभावेन तत्र विशेषणविभक्तेर्वृत्तिकल्पनमनुचितमिति ग्रन्थासङ्गतिश्च स्यादिति नीलोघट इत्यादिस्थल इत्यत्रादिपदेनाभेदान्वयबोधकवाक्यत्वरूपसामान्यधर्मं पुरस्कृत्य समासवाक्यबोधो मा प्रसाङ्क्षीदित्यसमास इति विशेषणोपादानम् । किंवा समासस्थल एवेत्यादिप्रागुक्तग्रन्थप्रतिपक्षत्वमेतद्ग्रन्थस्याभिद्योतयितुमसमास इत्युक्तम् । अपिच तत्रानुकर्षणीयः । अथवा असमास इत्येव विशेष्यं तत्रावच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वेन विरुद्धविभक्त्यवरुद्धवाक्ये विशेषणविभक्तिविरहेण तत्र विशेषणविभक्तेरित्यादिसंदर्भविरोधः स्यादिति नीलोघट इत्यादिस्थल इति विशेषणोपादानमिति । **अभेदस्य संसर्गतोपगमेऽपीति** । अभेदवृत्तिकल्पनागौरवातिरिक्तगौरवविरहो यथाऽभेदप्रकारतापक्षे तथाऽभेदस्य संसर्गतापक्षेपीत्ययमर्थोऽपिना सूचितः । उपयुज्यते चायं वृत्तिकल्पनानौचित्यपरिपोषे संसर्गतापक्षे यदि ततोऽतिरिक्तं गौरवं स्याद्वृत्तिकल्पनाया अनौचित्यन्न स्यात् यथा च संसर्गतापक्षे पराशयस्थस्य गौरवस्य विरहस्तथानुपदमेवोपपादयिष्यते । एवंचापिशब्दवैयर्थ्यशङ्कायाः प्रकारतामते वृत्तिकल्पनागौरवस्य सद्भावादसङ्गतेश्च निरासः । अथ प्रागभेदस्य संसर्गत्वमाश्रित्य विशेषणविभक्तेः पदसाधुत्वार्थकत्वमभिधाय निरर्थकत्वप्रायस्य तस्य दुष्टत्वं मनसि निधाय च विशेषणविभक्तेरभेदार्थकत्वमभिहितं नतु लाघवादित इत्युक्तदूषणपरिहारमनभिधायाभेदस्य संसर्गत्वोपगमः संदर्भविरुद्धतामवलम्बत इति चेद्विकरणादेः सर्वमत एव पदसाधुत्वमात्रार्थकत्वस्य क्लृप्ततया विशेषणविभक्तौ तद्दृष्टान्तेन तस्या यत्किंचिदर्थोपस्थापकत्वाभावेऽपि प्रतिपित्सितार्थ-

गौरवविरहात् तत्र विशेषणविभक्तेर्वृत्तिकल्पनमनुचितम् । न च यत्राभेदे विशेषणविभक्तेः शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र सर्वमतएवाभेदप्रकारकबोधस्य नीलोघट इत्यादि-वाक्यादुत्पत्त्या तादृशसमभिव्याहारज्ञानस्य द्विविधबोधे हेतुताद्वयं कल्पनीयम् अभेदस्य संसर्ग-

---

प्रतिपत्त्यनुपपत्तिरहितवाक्यघटकत्वेसत्यवर्जनीयप्रयोगत्वेन हेतुना निर्दुष्टेन साधनीयस्य निरर्थकत्वस्य प्रामाणिकतया न दोषत्वमित्यत्र तात्पर्यान्न संदर्भविरोध इति गृहाण । हेतुप्रसिद्धिश्च यथा तथानुपदमेव व्यक्तीभविष्यति । नच विवादाध्यासिता विशेषणविभक्तिरर्थवती विभक्तित्वादितरविभक्तिवदित्यनेन सत्प्रतिपक्ष इति वाच्यं पक्षएव व्यभिचारसन्देहेना-तुल्यबलत्वात् । नच स्थापनानुमानेऽपि सोस्तीति वाच्यं वृत्त्यकल्पनालाघवतर्केण प्रतिरोधकशक्तिविगमादिति ध्येयम् ।

**गौरवविरहादिति** । इदं च भिन्नविषयकप्रत्यक्षंप्रति भिन्नविषयकशाब्दसामग्रीप्रतिवन्धकतालाघवं वक्ष्यमाणमव्यवहितो-त्तरत्वस्य प्रतिबध्यतावच्छेदककोटौ प्रवेशमादृत्य शाब्दसामग्रीमदन्यप्रत्यक्षंप्रति शाब्दसामग्र्याः सामान्यतः प्रतिवन्धकता-कल्पनेन तिरस्कुर्वतो मतेनोक्तमिति बोध्यम् । अग्रेचाव्यवहितोत्तरत्वस्य प्रतिबन्धकाभावकार्यतावच्छेदककोटौ प्रवेशस्य निर्युक्तिकत्वमाकलय्याभेदस्य प्रकारत्वं स्वीकुर्वतो मतेन विशेषणविभक्तेरभेदार्थकत्वमतेऽपियद्यप्युक्तरीत्या लाघवं सम्भवती-त्याद्युक्तिरिति वेदितव्यम् । नचाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकाघटकत्वे न किमपि मानं कार्यतावच्छेदकघटकत्वे तु लाघवमेव तदिति वाच्यं सर्वस्य कार्यकारणभावस्य प्रवृत्तिनिवृत्तिफलकत्वेनाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकघटकत्वस्थले तत्तत्कारणफलविशेषस्यानिर्णयेनेष्टविशेषसाधनत्वज्ञानस्यासंभवात्तदधीनप्रवृत्त्यनुपपत्तेरेव तत्र मानत्वात् । अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकघटकत्वं तु तत्रैव यत्र गत्यन्तरविरहः अतएव वैजात्येन संभवत्कार्यभावस्य वह्नेर्न तृणाद्यव्यवहितोत्तरत्वा-दिना कूटेन कार्यत्वं । नचैवमाकाङ्क्षाज्ञानाद्यव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वं न स्यादिति वाच्यं तत्र वैजात्येन साङ्कर्यबा-धितेन गतेरसंभवात् । साङ्कर्यं चाकाङ्क्षाद्वयज्ञानाव्यवहितोत्तरशाब्दबोधे सामानाधिकरण्यस्यैकैकाकाङ्क्षाज्ञानोत्तरशाब्दबोधे परस्परव्यावृत्तत्वस्य सत्वेन बोध्यमितिदिक् ।

**द्विविधबोधे हेतुताद्वयं कल्पनीयमिति** । ननु पर्यायघटितवाक्यजन्यबोधे व्यभिचारवारणाय कारणानन्तर्यस्य कार्यतावच्छेदकत्वमवश्यं वाच्यं तथा च सति विषयत्वस्य तथात्वे प्रयोजनाभावोऽतएव भेदान्वयबोधविचारप्रसङ्गे उक्ता-भेदान्वयबोधे तथाविधानुपूर्व्यात्यादिवक्ष्यमाणमपि संगच्छत इति कथं कारणत्वद्वैविध्यमिति । नचोपस्थितिविशिष्टज्ञानत्वेन तत्रत्यसकलाकाङ्क्षाज्ञानानामेकरूपेणैव कारणत्वं लाघवादुपेयं वैशिष्ट्यं च स्वविशिष्टस्वत्वावच्छिन्नविषयतानिरूपितविषयताकत्व-संबन्धेन । वैशिष्ट्यं च स्वीयनीलत्वावच्छिन्नविषयताप्रयोजकवृत्तिनिष्ठविषयतानिरूपितविषयतावच्छेदकतापर्याप्त्यधिकरणानुपूर्व्य-वच्छिन्नविषयतानिरूपितस्वत्वावच्छिन्नविषयतानिरूपितत्वस्वकालीनोपस्थितीयघटत्वावच्छिन्नविषयताप्रयोजकवृत्तिनिष्ठविषयता-निरूपितविषयतावच्छेदकतापर्याप्त्यधिकरणानुपूर्व्यवच्छिन्नत्वोभयसंबन्धेन बोध्यम् । तथासति कारणानन्तर्यस्य कार्यतावच्छे-दकत्वाभ्युपगमे प्रयोजनाभावात् कार्यद्वैविध्येन दुर्वारमेव कारणताद्वैविध्यमिति वाच्यं तत्तद्वर्णत्वेन पदार्थान्तरावगाहि-वृत्तिज्ञानीयविषयतावच्छेदकत्वस्य भ्रमात्मकाकाङ्क्षाज्ञानविषयत्वावेच्छदकत्वस्य च विशिष्टानुपूर्व्यामभावात् यत्किंचिदेकधर्मा-वच्छिन्नविषयताकत्वस्याकारणज्ञानेपि सत्वात् साक्षात्परम्परासाधारणनिरूप्यनिरूपकभावानभ्युपगमे वृत्तिविषयतानिरूपितव-र्णत्वव्याप्यधर्मावच्छिन्नत्वप्रयोजकविषयतात्वव्यापकस्वत्वावच्छिन्नविषयताकत्वादिसंसर्गस्याप्युक्तेरसम्भवात् स्वावच्छेदकावच्छिन्न-त्वसंबन्धेन स्वनिरूपितविषयतावत्वस्य व्यापकताघटकसंसर्गस्यासंभवात् नीलपटवान् घट इति समभिव्याहारज्ञानस्य कार-णत्ववारणाय सामनैयत्योपादाने च तादृशनिरूप्यनिरूपकभावाभ्युपगमेऽपि घटादिपदघटकवर्णविषयतान्तर्भावेण व्यभिचार-प्रसङ्गेन संसर्गासंभवात् कथंचिन्निवेशस्य संभवेप्यप्रामाण्यज्ञानाभावनिवेशानुरोधेन कारणतावच्छेदकभेदस्योपेयत्वात् नील-त्वावच्छिन्नविषयतानिरूपिततादात्म्यत्वावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयताकत्वस्यैकस्य कार्यतावच्छेदकत्वस्यापि च संभवात् । नचैवं कालिकेन तादात्म्ये नीलावगाहिशाब्दबोधस्यापत्तिस्तस्याप्युक्तरूपवत्वादाधेयत्वसंबन्धावच्छिन्नत्वोपादाने तादात्म्यसंसर्गकबोधासंग्रह इति वाच्यम् तादात्म्यत्वावच्छिन्नविषयतायामाधेयत्वसंबन्धातिरिक्तसंबन्धानवच्छिन्ननीलत्वावच्छि-न्नविषयत्वानिरूपितत्वतादात्म्यसंबन्धातिरिक्तसंबन्धानवच्छिन्नतादृशविषयत्वानिरूपितत्वोभयाभावस्य विवक्षितत्वात् नीलत्वा-वच्छिन्नविषयतायामेव वाधेयत्वसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वतादात्म्यत्वावच्छिन्नसंसर्गत्वानिरूपितत्वोभयाभावस्य विवक्षि-तत्वात्, स्वरूपसंबन्धातिरिक्तसंबन्धानवच्छिन्नत्वस्य तादात्म्यविषयतायां निवेशेनच कालिकेन तादात्म्यप्रकारकबोधश्च वारणीयः । यत्तु स्वस्वरूपिस्वरूपादिपरम्परासंबन्धघटकाद्यस्वरूपसंसर्गतायाः स्वरूपत्वमात्रावच्छिन्नत्वे तत्संसर्गकबोधसंग्रह-प्रसङ्गः तादात्म्यत्वावच्छिन्नविषयतानिरूपितस्वरूपत्वावच्छिन्नविषयतानिरूपितघटत्वावच्छिन्नविषयत्वोपादाने च तादा-त्म्यसंसर्गकबोधासंग्रह इति तन्न तादात्म्यविषयतायां घटत्वावच्छिन्नविषयतानिरूपितस्वरूपत्वावच्छिन्नसंसर्गत्वानिरूपितत्व-तादात्म्यत्वावच्छिन्नसंसर्गताभिन्नत्वोभयाभावस्यापि विशेषणीयत्वात् । परम्परासंसर्गस्थले चैकसंसर्गत्वस्य प्रकारत्वविशेष्यत्वो-भयानिरूपितत्वादिति चेन्न कारणानन्तर्यमात्रस्य कार्यतावच्छेदकतायाः प्रागेव निराकरणात् विषयत्वस्यावच्छेदकत्वे च

तावादिनेति गौरवम्। एवं तादृशसमभिव्याहारज्ञानघटितसामग्र्या भिन्नयोग्यताज्ञानघटितत्वेन द्वैविध्यमिति भिन्नविषयकप्रत्यक्षादिकं प्रति तादृशशाब्दसामग्रीप्रतिबन्धकतायाः अप्याधिक्यमिति वाच्यम् अभेदस्य संसर्गतावादिनोक्तस्थलेपि तत्संसर्गकबोधस्यैवोपगमादिति दिक्। स्तोकं पचति

---

द्वैविध्यस्य दुष्परिहरत्वात् उक्तप्रकारेण कार्यकारणयोरनुगमकधर्मस्य कथंचित्सम्भवेप्यन्वयव्यतिरेकतानवच्छेदकस्य तस्यान्य-
तमत्वादिवत्तादृशधर्मान्तरेणाकार्यकारणाभिमतानुगमसंभावनाप्रयोजकत्वेन कार्यानुपलब्धिलिङ्गकानुमानभङ्गभीत्यन्यथासिद्धिनि-
रूपकत्वस्यैव स्वीकरणीयत्वात्। यद्वोक्तक्रमेण द्वैविध्यासंभवं मनसि निधायैवमित्यादिना दूषणान्तरस्योपक्रमः यथा च कारणा-
नन्तर्यमात्रकार्यतावच्छेदकत्वपक्षस्य यथा कथंचिन्निर्वाहस्तथाग्रे वक्ष्यते।

**उक्तस्थलेपि तत्संसर्गकबोधस्यैवोपगमादिति।** अथाभेदस्य बुबोधयिषितस्य प्रकारतयाभानप्रयोजकतया क्लृप्तमस्ति
चेत्साकाङ्क्षपदवृत्तिज्ञानजन्योपस्थितिविषयत्वं कथं संसर्गतया भानमभ्युपेयं तस्य वृत्तिज्ञानस्य हि प्रमात्वं वाचकादपि शक्ति-
भ्रमादर्थप्रत्ययदर्शनान्नापेक्षणीयं येन विशेषणविभक्तेः शक्तिज्ञानस्याप्रमात्वे तत्कृतः कश्चिद्विशेषः स्यात् नहि कस्यचिदभ्युपगमः
कश्चित्सामग्र्यां सत्यां कार्यस्योत्पत्तिं रोद्धुमीष्टेऽतएवोक्तं प्राक् सर्वमत एवेत्यादिशङ्काग्रन्थे। नच वाच्यमभेदसंसर्गकशाब्दं
प्रत्येवोक्तसमभिव्याहारज्ञानस्य कारणत्वमित्याकाङ्क्षाज्ञानविरहात्सामग्र्येवनास्तीति फलस्वरूपानिर्णये प्रागेव द्रागेव तस्य गृहीतुम-
शक्यत्वात् विपरीते विनिगमकाभावाच्च संसर्गसंसर्गविषयत्वप्रयुक्तं लाघवमेव फलस्वरूपनिर्णयमुखेन विनिगमकमित्यपि न
वाच्यं तथासति ततोऽपि लाघवात्समवायेन नीलप्रकारकबोधे संयोगेन वह्निप्रकारकबोधे च नीलोघटः संयोगेन वह्निमान्पर्वत
इत्यादिसमभिव्याहारज्ञानानां कारणत्वप्रसङ्गात् प्रवृत्त्याद्यर्थं बुबोधयिषितस्य घटे नैल्यस्य पर्वते वह्नेश्च तावतैवहि प्रतिपत्तेर्निर्वाहः।
तादृशकारणविरहादेव चान्यत्रापत्तेरभावात् नीलपदाश्रयस्य मतुपः संयोगस्योपस्थितत्वेपि तस्याकिञ्चित्करीकरणात्
नच व्युत्पत्तीनां विरोध इति शक्यं लाघवसहकृतग्राहकेणोक्तकार्यकारणभावे सिद्धे तदनुसारेणैव व्युत्पत्तेर्निर्वाच्यत्वात् कथ-
मन्यथा न नामार्थेत्यादिव्युत्पत्तिविरोधमुद्भाव्यैव विभक्त्यर्थसंसर्गत्वखण्डने निर्वृत्तो भवति प्रकारतावादीति प्रामाणिकमर्थमन्य-
थाकर्तुं न शक्नोति व्युत्पत्तिसहस्रमपीत्यभ्युपेयमिति चेदुच्यते, वाक्येनैकेन हि धर्मान्तरसंबद्धत्वेन व्यावृत्तो धर्म्येको भवति
प्रतिपिपादयिषित इति व्यावर्त्तकश्च धर्मिधर्मान्तरसंबन्धोऽपि तथा, सच यावद्भिरेव पदैः शक्यप्रतिपादनस्तावत्स्वेव पदेषु
व्यापृतो भवत्येव प्रतिपादयिता यतो न्यूनमधिकं च प्रतिपादयन् भवति गर्हितः, धर्मान्तरसंबन्धश्च प्रसिद्धानेकधर्मधर्मि-
तादात्म्यमुखेन कथंचिदनेकधर्मप्रतिपत्तिरूपफलप्रतिसंधानेन स्वरसतो वा क्वचित्प्रतिपिपादयिषितः क्वचिच्चार्थान्तरद्वारा यत-
स्सर्पत्वसंबद्धं पुरोवर्तिनं नैल्यसंबद्धं घटादिकं वह्निसंबद्धं पर्वतादिकं च प्रतिपिपादयिषन् व्यावर्तकसर्पत्वादिसंबन्धप्रतिपत्ति-
रूपमुख्यफलायोगं परिहरन् वाक्यं प्रयुङ्क्ते व्युत्पन्नसमाजः सर्पोयं नीलोघटः वह्निमान्पर्वत इति कदाचिदस्मिन् सर्पत्वं घटे
नैल्यं पर्वते वह्निरित्यादिकं न जात्वपि सर्पत्वमयं नैल्यं घटो वह्निः पर्वत इति न वा सर्पमयं नीलंघटइत्यादि नापिच सर्पायं
घटोनीलेत्यादि नच रज्जुरियं सर्पःस पीतो घटः नीलः पट इत्यादि तत्र च कारणगवेषणे क्रियमाणे सर्पत्वादेराश्रयासंसृष्टस्य
सर्पादिशब्देन संबन्धाग्रहःसाश्रयस्योपस्थितस्य तस्याश्रयापेक्षस्याश्रयातिरिक्तानपेक्षस्य चोपस्थिताश्रयपरित्यागेनाश्रयान्तरेणान्येन
वा संबन्धानौचित्यम्। संबन्धस्य च कस्यचित्तत्वेनाभाने बोधस्य समूहालम्बनवैलक्षण्यानुपपत्तिर्यावत्पर्यन्तस्य भानाभ्युपग-
मेनानुपपत्तिपरिहारो बुभुत्सितसंप्रतिपत्तिश्च तदधिकभानाभ्युपगमे गौरवंचकारणमुन्नीयते यथा पुरोवर्त्तिनि सर्पत्वसंबन्धो
बुबोधयिषितः सर्प इति शब्दे प्रयुक्ते ततश्चोपस्थितस्य साश्रयस्य सर्पत्वस्य निराकाङ्क्षतया स्वतस्तत्र समवायेन भानासंभवादा-
श्रयस्य च लब्धधर्मकतयाऽनाकाङ्क्षितधर्मयोगस्य तादात्म्येन तत्र भाने बाधकाभावात् तावन्मात्रभानेनापि जातनिर्वाहो न
तादात्म्यप्रतियोगिकस्वरूपसंबन्धभानमपेक्षते इति तद्भानाभ्युपगमे गौरवम्। एवं सर्पादिशब्दात्स्वतन्त्रोपस्थितस्य सर्पत्वस्य
वह्नेश्च यदि पदार्थान्तरभानमनपेक्ष्य पुरोवर्त्यादिना स्वतः समवायादिभिर्भवेत् संसृष्टतया भानं सर्पत्वमयं वह्निः पर्वत
इत्यादावपि[illegible]त्संबन्धभानस्योपस्थापकपदानपेक्षस्यैवाभ्युपेयत्वादुपस्थितस्योपस्थितान्तरविशेषकाभावेन संबन्धभानप्रसङ्गे तदर्थ-
मपिपदस्यापेक्षितत्वेऽनवस्थापातात्। उपस्थापकापेक्षाया आवश्यकत्वे वान्योपस्थापननियोगोवैरिता प्रथमैव हि स्यात्तथा,
नहि किञ्चिद्विशेष उपलभ्यते येन तादात्म्यस्य सास्यात्तथानान्येषां संबन्धानां, तादात्म्यस्यासंसर्गत्वपक्ष एव स्याद्विशेषोपलम्भ-
स्तस्य च संसर्गाभावान्योन्याभाववैलक्षण्यानुपपत्त्यानिरस्तत्वात्। असंसर्गत्वे तस्य तत्वेन भानासंभवेन तत्संसर्गान्तरोपस्था-
पकपदापेक्षाप्रसंगापाताच्च पदार्थान्तरभानापेक्षायां चाधेयत्वरूपस्याश्रयतादात्म्यरूपस्य वा तस्योपस्थापकानपेक्षस्य भाने
ह्युक्तस्थलेऽपि स्यादेव भानमन्यस्य चोपस्थापकविशेषस्याकल्पने तूक्तरीत्याप्रथमैव स्यात्तथेतिसर्पत्वमयमित्याद्यप्रयोगबीजं
दुर्लभं स्यादतउक्ततादात्म्यभानान्यथोपपत्तिबहिष्कृततादात्म्यभानाश्रयोपस्थापकतया मतुबाधेयत्वोपस्थापकतया सप्तम्येवावापो-
द्वापाभ्यां भवति सिद्धा तथासति तदभावाद्बुभुत्सितार्थप्रतिपत्त्यसंभवादुक्तवाक्यानामप्रयोगः, पर्वतो वह्निमान् पर्वते वह्नि-
रित्यादीनां प्रयोगस्तत्सद्भावेन बोधसंभवादुपपद्यते इत्येतदपि बीजम् एवं यदि तादात्म्योपस्थापने विनियोगो भवेद्विशेषण-
विभक्तेस्तदा ततस्सैव तत्र विनिवर्तेत न या स्यात्तत्र शक्ता गृहीतशक्तिश्च स्यात्तेन तेनासाधारणेन सुत्वादिरूपेण प्रथमा-

मृदु पचतीत्यादौ विरुद्धविभक्त्यवरुद्धपदोपस्थापितस्यापि स्तोकमृद्वादेर्धात्वर्थपाकादावभेदान्वयोऽपिव्युत्पत्तिसिद्धः, तदनुरोधेन च द्वितीयान्तपदधातुपदयोः समभिव्याहारस्याप्यभेदान्वयबोधौपयिकाकाङ्क्षात्वमुपगम्यते क्रियाविशेषणस्थले च न द्वितीयातिरिक्तविभक्तिरुत्पद्यते, क्रियाविशेषणानां कर्मत्वमित्यनुशासनेन तत्र कर्मत्वातिदेशात् । न चैवं स्तोकः पाक इत्यादावपि द्वितीयाप्रसङ्गस्तत्रापि स्तोकादेः क्रियायामेव विशेषणत्वात् । भावकृतां प्रयोगसाधुत्वमात्रार्थकतया धातुनैव तत्र पाकादि प्रतिपादनादिति वाच्यम् । क्रियापदस्य तत्र सार्थकप्रत्ययान्तधातूपस्थाप्यार्थपरत्वात् । स्तोकं क्षीयते इत्यादौ आख्यातस्यापि वर्तमानत्वार्थकतया सार्थकत्वात् । न च वर्त्तमानत्वाद्यविवक्षायां द्वितीयानुपपत्तिरिति वाच्यम् । वर्त्तमानत्वादिविवक्षास्थलइव अर्थबोधस्वरूपयोग्यताप्रयोजिकाकाङ्क्षाशालित्वेनैव तदवि-

---

दिस्सर्वा एव विभक्तिस्तत्र तत्रेति, नीलं घट इत्याद्यप्रयोगवीजस्य दुर्लभत्वं स्यात् द्वितीययापि तादात्म्योपस्थापनेन बुभुत्सितप्रतिपत्तिसंपादनस्य संभवात्तस्मान्निर्विभक्तिकप्रयोगस्यासाधुत्वादर्थविशेषस्य चानुपस्थापनीयत्वात्प्राप्तासु सर्वासु विभक्तिषु सर्वेषु वचनेष्वर्थविशेषप्रतिपादनानुवद्धप्रयोक्तव्यभावविशेष्यवाचकपदोत्तरविभक्तिविशेषस्योपस्थिततया विशेषान्तरस्य चानुपस्थिततया विशेषणवाचकपदोत्तरमपि स एव प्रयोक्तव्यतया बुद्धौ विपरिवर्तते इति विशेष्यपदविभक्तिपरतन्त्रा विशेषणविभक्तिस्थितिर्नार्थोपस्थापनपरतन्त्रा विकरणागमादिवदित्यपि च बीजम् । एवं सर्पाद्युपस्थापकानामावश्यकत्वं रज्ज्वादिपदानां चातथात्वमप्येवंच क्वचिद्विकरणादितो जायमानाप्युपस्थितिरन्यथासिद्धतया यथा विज्ञायते तथैव विशेषणविभक्तिजन्यापि क्वाचित्की तादात्म्योपस्थितिरपीतिसमभिव्याहारबहिर्भूतपदजन्योपस्थितिवत्तदुपस्थितेरपि न प्रकारतया भानप्रयोजकत्वमनन्यथासिद्धतया गृहीतस्य चोपस्थित्यन्तरस्य चासंसर्गतया भानप्रयोजकत्वमिति नानियमप्रसंग उपस्थितस्यापि संसर्गतया भानाभ्युपगम इत्यलम् ।

**इतिदिगिति** । एतदुक्तेरभिप्रायस्तु न नो विद्वेष इति पङ्क्तिव्याख्यानावसरे स्फुटीभविष्यति । **कर्मत्वातिदेशादिति** । धात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वस्य बाधितत्वादितिभावः । नच तादात्म्यफलतावच्छेदकान्यतरसम्बन्धेनधात्वर्थतावच्छेदकफलान्वयित्वमेवास्तु कर्मत्वं तच्च स्तोकादावप्यस्त्येवेति इत्थमेव द्वितीयां तत्रोपपादयन्ति प्राचीनवैयाकरणा इति वाच्यम् स्तोकं तिष्ठतीत्यादौ धात्वर्थतावच्छेदकफलस्यैवाभावात् सर्वत्र फलमन्तर्भाव्य धात्वर्थनिर्वचने सकर्मकत्वासकर्मकत्वयोः फलव्यापारयोरविरोधसामानाधिकरण्याभ्यां कथंचिन्निर्वाच्यत्वसंभवेऽपि गौरवस्यैव बाधकत्वात् निरुक्तकर्मत्वस्यैव तत्रापि स्वीकारे स्तोकादेः कारकत्वापत्त्या तत्र लकारापत्तेः स्तोकः पच्यते सुखमास्यते इत्याद्यपि स्यादिति भावः । **अर्थबोधस्वरूपयोग्यताप्रयोजिकाकाङ्क्षाशालित्वेनैवेति** । करणाद्यर्थबोधकतयार्थावोधकपचादिसमभिव्याहृतघञः घञ्त्वेनाविसंवादिन्यां भगवदिच्छायां विषयत्वासंभवेन शक्तिमत्त्वरूपसार्थकत्वस्य तत्रेवार्थाबोधकाविवक्षास्थलीयाख्यातस्यापि वर्तमानत्वादिबोधजनकतयाख्यातत्वादिना विसंवादभयेन भगवदिच्छायामविषयत्वस्यैव वाच्यतयाऽसत्वप्रसंगात् भगवदिच्छीयविलक्षणविषयतावच्छेदकवत्त्वम् शक्तिमद्वृत्तिप्रत्ययत्वव्याप्यधर्मवत्वं वा, यदि सार्थकप्रत्ययत्वमुच्येत घञोपि करणाधिकरणादिष्वनुशिष्टत्वेन सार्थकत्वं स्यादित्युक्ताकाङ्क्षापर्यन्तानुधावनं कृतं, तथाचाकर्तरि च कारके संज्ञायामित्यस्यैव करणादिषु घञोऽनुशासनत्वेन पाकादिशब्दानामसंज्ञात्वेन पचधातुसमभिव्याहृतघञ्पदत्वस्याकाङ्क्षात्वविरहात् न पचधातूत्तरसमभिव्याहृतघञः सार्थकत्वम् रागादिशब्दानां संज्ञात्वेन धर्मविशेषावच्छिन्नरञ्जनकरणाद्यर्थप्रत्यायकतया एकत्वाद्यन्वितताद्दशार्थबोधस्वरूपयोग्यतायां स्वादिपदघञन्तसमुदायसमभिव्याहारस्यैवाकाङ्क्षात्वेन तत्रापि घञो न सार्थकत्वसम्भवः यदि तस्य योगरूढत्वं तदा कर्मानुशिष्टक्तादिवत्सार्थकत्वमिष्टमेव । यत्तु रूढ्यर्थपदार्थान्तरान्वयप्रयोजकाकाङ्क्षयैव योगार्थभानस्यापि स्वीकारे क्षतिविरहेणाकाङ्क्षान्तरकल्पने गौरवात्तत्रापि नास्त्येव सार्थकत्वम् अतएव शोभनं पङ्कजेनेत्यादयो न प्रयोगा इति तन्न शोभनं गतेनेत्यादिवत्तस्याप्यङ्गीकरणीयत्वात् । अत्र हि गमनप्रकारतानिरूपितकर्मत्वविषयताकशाब्दबुद्धित्वावच्छिन्नं प्रति गमधातुक्तप्रत्ययसमभिव्याहारज्ञानत्वेन कारणत्वस्य पदार्थोपस्थितितात्पर्यज्ञानादिकारणकलापे निर्विभक्तिकगतादिपदादव्युत्पन्नानां शाब्दबोधप्रसङ्गभयेन वक्तुमशक्यत्वात् एकत्वाद्यन्वितगमनकर्मादिशाब्दबोधकारणतावच्छेदकविषयितानिरूपकश्च समभिव्याहारः क्तान्तसमुदायस्वाद्योरेव तस्य च क्तप्रत्यये विरहात् साधुगतो ग्राम इत्याद्यपि न स्यात् तस्मादाकाङ्क्षाज्ञानजनकतावच्छेदकविषयितानिरूपकत्वेनार्थबोधस्वरूपयोग्यताप्रयोजकत्वमुक्तग्रन्थतात्पर्यविषयो नाङ्गीकरणीयः किंतु तत्तत्पदार्थबोधस्वरूपयोग्यतायां शक्तिप्रयोजिका यद्यत्पदार्थयोः परस्परमन्वयोऽन्वितत्तत्तदर्थबोधस्वरूपयोग्यतायां तत्तत्पदसमभिव्याहारः प्रयोजक इत्यनुभवसाक्षिकप्रयोज्यप्रयोजकभावान्तरमवलम्ब्यैवार्थबोधस्वरूपयोग्यतेत्याद्युक्तिरित्येव स्वीकरणीयं तथा च पङ्कजादिपदस्थले धात्वर्थडप्रत्ययार्थयोरन्वये तयोः समभिव्याहारस्यापि तादृशस्वरूपयोग्यताप्रयोजकतयोक्तप्रयोगस्य दुर्वारत्वम् यदि चोक्तप्रयोजकत्वपक्षेपि रूढिस्थले अवयवद्वयसमभिव्याहारस्य प्रयोजकत्वं नानुभविकं किंतु केवलयौगिकस्थल एवेति चेदांग्रहस्तदा मास्तूक्तप्रयोगस्येष्टता । किंच सामान्यतो घञो निरर्थकताग्रहो दुराग्रह एव संज्ञायामिति प्रायिकं तेन लाभोलब्ध इत्यादिप्रयोगदर्शनादित्यादिग्रन्थपर्यालोचनया

वक्षास्थलेऽपि भावाख्यातस्यार्थवत्त्वात्। केचित्तु धातोरिवघञन्तस्यापि पाकादौ शक्तिरुपेयते।

---

केवलयौगिककरणाद्यर्थकघञन्तशब्दसाधुत्वावगमादिति। अत्र च भावक्तान्तगम्यादिधात्वर्थविशेषणस्तोकादिपदोत्तरं द्वितीयैव, गम्यादिधातुसमभिव्याहृतक्तप्रत्ययस्य कालकर्तृकर्माद्यर्थकताया दृष्टत्वात् तत्समभिव्याहारस्योक्तयोग्यताप्रयोजकत्वादकर्मकधातुसमभिव्याहृतक्तप्रत्ययस्यापि न भावमात्रविहितत्वम् अतीतकालाद्यर्थस्य तत्रापि सत्वादिति तस्याप्यस्त्येव निरुक्तसार्थकत्वं भावविहितल्युडादीनामपि करणाद्यर्थकतत्प्रत्ययसमानानुपूर्वीकत्वाद्भवति सार्थकत्वमेव क्तिनप्रभृतेर्भावमात्रविहितस्य नास्त्येव कथंचिदपि सार्थकत्वमिति बोध्यम्। अथ पाकाद्यन्वितैकत्वाद्यर्थविषयकशाब्दबोधस्वरूपयोग्यतां प्रति घञन्तसमुदायनिष्ठत्वादिसमभिव्याहारस्य प्रयोजकतया तस्य समुदायानतिरिक्ते घञ्प्रत्ययेऽपि सत्त्वेन घञः सार्थकत्वं दुर्वारमेवेति चेन्न यद्रूपावच्छिन्ने यद्रूपावच्छिन्नाव्यवहितोत्तरत्वमर्थबोधस्वरूपयोग्यताप्रयोजकं तद्रूपावच्छिन्नान्तत्वं तद्रूपावच्छिन्नस्य सार्थकप्रत्ययान्तत्वमित्यस्य विवक्षितत्वात्। नच सुत्वावच्छिन्ने पच्यव्यवहितोत्तरघञव्यवहितोत्तरत्वस्योक्तस्वरूपयोग्यताप्रयोजकत्वे तद्घटकतया घञ्प्रत्यये पच्यव्यवहितोत्तरत्वस्यापि प्रयोजकत्वं दुर्वारमित्युक्तदोषतादवस्थ्यमिति वाच्यम् विशिष्टनिष्ठप्रयोजकताया विशेषणे प्रयोजनविरहेणास्वीकारात् प्रयोजकत्वान्तरस्य चाकल्पनादुक्तदोषविरहात्। यत्त्वव्यवहितोत्तरत्वसंबन्धावच्छिन्नयद्रूपावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयत्वं विशिष्टार्थबोधस्वरूपयोग्यतात्मकजनकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नस्य तद्रूपावच्छिन्नान्तत्वं सार्थकप्रत्ययान्तत्वं तथाच पच्धातुत्वावच्छिन्नविषयतानिरूपितघञ्त्वावच्छिन्नविषयताया एकत्वान्वितपाकार्थबोधस्वरूपायोग्ये स्वाद्यविषयकज्ञानेपि सत्वाद् पाकाद्यर्थबोधस्वरूपयोग्यतानतिरिक्तवृत्तित्वेऽपि तस्याः पाकरूपार्थस्य विशिष्टानात्मकत्वात्। वैशिष्ट्यस्य विशिष्टघटकस्याकाङ्क्षाप्रयोज्यस्य विवक्षितत्वात् नोक्तदोषसंभव इति तन्न, गमनान्वितकर्मत्वबोधे गमधातुक्तप्रत्ययसमभिव्याहारज्ञानत्वेन कारणत्वस्यानुपदनिराकृततया गतादिशब्दस्य सार्थकप्रत्ययान्तत्वाभावप्रसंगात्। यदि च व्यभिचारवारणाय गतइत्याद्यानुपूर्वीज्ञानस्य तादृशज्ञानाव्यवहितोत्तरत्वमेव कार्यतावच्छेदकं तदा स्वाद्यविषयकगतादिशब्दज्ञानान्नोक्तशाब्दबोधापत्तिः निरुक्तानुपूर्व्यादिज्ञानानुत्तरोक्तशाब्दबोधस्यालीकत्वात्तदुत्तरस्य च तादृशज्ञानरूपकारणविरहेणापत्त्यसंभवात्। नचोक्तानुपूर्वीज्ञानस्य कारणत्वे उक्तकार्यकारणभावे मानाभाव इति वाच्यम् विशेषकार्यकारणभावसत्त्वेऽपि शाब्दत्वावच्छिन्नं प्रति शब्दत्वेन घटशाब्दत्वावच्छिन्नं प्रति घटोपस्थापकपदत्वादिना सामान्यतः प्रवृत्त्याद्यर्थं कार्यकारणभावो यथाह्युरीक्रियते तथैवोक्तस्याप्यङ्गीकरणीयत्वादिति विभाव्यते तदैषापि रीतिः संभाव्यत एव। वस्तुतस्तु यद्रूपावच्छिन्नाव्यवहितोत्तरत्वसंबन्धावच्छिन्नविषयतानिरूपितयद्रूपावच्छिन्नविषयत्वे स्वावच्छेदकधर्मावच्छिन्ननिरूपितवृत्तिज्ञानजन्योपस्थित्यभावप्रयुक्तफलोपधायकत्वाभावसमानाधिकरणं तादृशोपस्थितिघटितसंबन्धावच्छिन्नं वा यदर्थबोधजनकत्वं तदवच्छेदकत्वमस्ति तद्रूपावच्छिन्नस्य तद्रूपावच्छिन्नान्तत्वं सार्थकप्रत्ययान्तत्वमित्युक्तौ न कोऽपि दोषः। अत्र च पक्षे न प्रथमपक्षवदनतिप्रामाणिकप्रयोज्यप्रयोजकभावकल्पनाया अपि प्रसङ्ग इति। यत्तु भावाख्यातस्यैव विवक्षास्थले अर्थबोधकत्वमविवक्षायां तदभावः ल्युट्प्रत्ययादीनां भावविहितानां न कुत्रापि कस्याप्यर्थबोधकत्वं किंतु करणाद्यनुशिष्टानां तथाच भावल्युडाद्यन्तस्थलस्य भावाख्यातविलक्षणत्वेन तद्वत्तत्र क्रियाविशेषणपदाद्द्वितीया नाभ्युपेयेति तत्रोक्तसार्थकप्रत्ययान्तत्वप्रसङ्गो दोष एवेति। अत एव शब्दशक्तिप्रकाशिकायां सहभावाख्यातेन भावस्थलेऽपि कालबोधकेन क्तप्रत्ययेन घटिताः साधु गतं चकितं हसितमित्यादि प्रयोगा एवोदाहृता इति तन्नोक्तदोषस्य द्वितीयान्तविशेषणघटितप्रयोगसद्भावेऽभ्युपगमपराहतत्वात् अनभ्युपगमे तु स्वोत्तरवर्तिप्रत्ययसजातीयप्रत्ययप्रयोज्यविषयतानिरूपितस्वार्थविषयताकशाब्दबोधजनकतावच्छेदकाकाङ्क्षाश्रयप्रत्ययान्तत्वमेव सार्थकप्रत्ययान्तत्वं साजात्यं च स्ववृत्त्यानुपूर्वीविशिष्टं यद्भावविहितत्वं तत्तदभावश्चैतदन्यतररूपेण तथा च स्वाद्युत्तरभावाख्यातसजातीयविवक्षास्थलीयभावाख्यातार्थवर्तमानत्वविषयतानिरूपितस्वार्थविषयताकबोधजनकत्वावच्छेदकानुपूर्वीमत्प्रत्ययान्तत्वस्य स्थाप्रभृतौ सत्वाद्द्वितीयोपपत्तिः गम्याद्युत्तरभावल्युडादिसजातीयभावल्युडादिप्रयोज्यविषयत्वाप्रसिद्ध्या न तत्र गमिप्रभृतेः सार्थकप्रत्ययान्तत्वसंभवः कर्मकर्त्राद्यर्थकक्तादिप्रत्ययान्तानामस्त्येवोक्तसार्थकप्रत्ययान्तत्वमिति तत्र द्वितीयासंभवः। भावविहितत्वं तु सूत्रविशेषादिबोधितसाधुत्वाश्रयत्वं नतु धात्वर्थस्वरूपबोधकत्वमिदानींतदनभ्युपगमात्। अथवा भावविहितत्वेन प्रतिसंधीयमानवृत्तित्वविशिष्टार्थबोधप्रयोजकाकाङ्क्षाशून्यत्व किंचिदर्थनिष्ठविषयत्वाप्रयोजकत्वोभयाभावस्य सार्थकत्वात्मकत्वं वाच्यं भावाख्यातस्थले विवक्षायां सत्वात्तुभयोरभावादविवक्षायां तादृशाकाङ्क्षाशून्यत्वस्याभावादुभयाभावः भ्वम्भृतां ल्युडादीनां भावविहितत्वेन प्रतिसंहितत्वे ततोर्थबोधानुपधानाद्धातुल्युट्समभिव्याहाररूपाकाङ्क्षया अर्थबोधाप्रयोजकत्वादिति भावविहितत्वेन प्रतिसंधीयमानवृत्तित्वविशिष्टार्थबोधप्रयोजिकाकाङ्क्षाभावविहितत्वग्रहेप्यर्थबोधप्रयोजके भावाख्यातक्तप्रभृतावेव वर्तते न ल्युडादाविति तत्रोभयस्यैव सत्वान्न सार्थकत्वं कर्मकर्त्राद्यर्थकानां तत्तदर्थविषयत्वाप्रयोजकत्वविरहादुभयाभावसत्वात्सार्थकत्वसंभव इत्येषा दिक्।

अन्यथा सुब्विभक्त्यर्थसंख्याकर्मत्वादीनां तत्र पाकादावन्वयानुपपत्तेः। प्रकृत्यर्थान्वितस्वार्थबोधकत्वं

---

**अन्यथा सुब्विभक्त्यर्थेति।** तिङर्थकर्तृत्वादेरपि प्रथमाप्रकृत्यर्थ एवान्वयस्य व्युत्पन्नत्वेन धात्वर्थे पाकादौ तदन्वयोऽपि न भवेदेव घञन्तसमुदायशक्त्यस्वीकार इति सुबिति तिङोऽप्युपलक्षकं वाच्यम्. कर्मत्वादीनामिति पाकादाविति च षष्ठीसप्तम्यौ निरूपितत्वमात्रपरे नत्वन्यत्रेव प्रतियोगित्वानुयोगित्वबोधिके तेन कर्मत्वप्रतियोगिकपाकाद्यनुयोगिकान्वयस्य शाब्दबोधाविषयत्वेऽपि न क्षतिः। **प्रकृत्यर्थान्वितस्वार्थेति** । प्रत्ययानां स्वप्रकृत्यर्थान्वितार्थबोधकत्वमित्यर्थः। तेन धातोर्घञन्तप्रकृतित्वेपि न क्षतिः। अथ किन्नाम स्वनिरूपितप्रकृतित्वम् न तावत्स्वाव्यवहितपूर्वत्वम् आगमविकरणादिना प्रत्ययव्यवहितयोः प्रातिपदिकधात्वोः सुप्तिङादिप्रकृतित्वानुपपत्तेः नापि स्वपूर्वत्वे सति आगमादिभिन्नस्वपूर्वपूर्ववर्तित्वशून्यत्वम् स्वाव्यवहितोत्तरवर्तिनि प्रत्ययान्तरप्रकृतावतिप्रसङ्गवारणाय सत्यन्तमिति विभक्तिप्रकृतित्वस्यैव तादृशस्य निर्वाच्यत्वसंभवेपि निरुक्तव्युत्पत्तेः प्रत्ययमात्रविषयकत्वेन तस्य तद्ग्रहानुपयुक्तत्वात्। नचोक्तप्रकृतित्वं प्रत्ययसामान्यनिरूपितं संभवति प्रकृतिप्रागविहितबहुजादिप्रकृतावसंभवात् नापि स्वाव्यवहितपूर्वत्वस्वाव्यवहितोत्तरत्वान्यतरवत्वम् चैत्रः पचतीत्यादौ पचधातोरपि स्वादिप्रकृतित्वापत्तेरिति। यत्तु व्युत्पत्तिद्वयमङ्गीकरणीयं प्रकृतिपूर्वत्वेन विहितप्रत्ययनिरूपितं स्वाव्यवहितोत्तरत्वगर्भमुत्तरतया विहितप्रत्ययनिरूपितमव्यवहितपूर्वत्वगर्भमिति तदपि क्विबन्तप्रातिपदिकप्रकृतिकविभक्तिप्रकृतित्वस्य धातोरापत्तेः क्विपो लुप्तत्वान्न मनोरमम्। नचाव्यहितपूर्वत्वेन प्रतिसन्धीयमानाव्यवहितपूर्वत्वशून्यत्वगर्भस्योपादाने नोक्तदोष इति वाच्यम् क्विपोऽप्रतिसंधानदशायां धातौ सुप्प्रकृतित्वापत्तेरिति चेदुच्यते शाब्दबोधानुपधायके व्युत्पत्त्यप्रवृत्तेः तत्प्रवृत्तिसमये च व्युत्पन्नानामुक्तस्थले क्विप्प्रतिसन्धाननियमाद्धातोः सुप्प्रकृतित्वविरहान्न सुपो धात्वर्थान्वितस्वार्थबोधकत्वप्रसङ्गः । यद्वा स्वविधायकशास्त्रजन्यबोधीयस्वनिष्ठविषयतानिरूपिताव्यवहितोत्तरत्वाव्यवहितपूर्वत्वान्यतरविषयतानिरूपितविषयताश्रयत्वमेव स्वप्रकृतित्वं प्रातिपदिकादेव च सुपोविधानात्प्रातिपदिकत्वस्योक्तस्थले प्रतिसंहितक्विबन्तएव सत्वान्न निरुक्तविषयतोक्तस्थले धातावस्तीति नोक्तदोषः । वस्तुतस्तु स्वनिष्ठविधेयतानिरूपितोद्देश्यत्वमेव स्वप्रकृतित्वं विशेष्यविशेषणभाववैपरीत्येप्यन्तराव्यवहितोत्तरत्वादेर्विषयत्वेऽपि च विलक्षणानुभवसाक्षिकस्योद्देश्यविधेयभावस्य सर्वत्र प्रकृतिप्रत्यययोरेव सत्वान्न कोऽपि दोषः । अतएव सर्वनामाव्ययसंबन्धिस्व्यव्यवहितपूर्वविहिताकच्प्रत्ययनिरूपितप्रकृतित्वस्य न तयोरनुपपत्तिः । नचैवमपि घटपदोत्तरविभक्तिप्रकृतित्वं पटपदे दुर्वारं स्वनिष्ठसुप्त्वावच्छिन्नविधेयतानिरूपितप्रातिपदिकत्वावच्छिन्नोद्देश्यतायास्तत्र सत्त्वादिति वाच्यं स्ववृत्तित्वविशिष्टविधेयतात्वावच्छिन्ननिरूपकतानिरूपितनिरूप्यत्वोपरागेणोद्देश्यत्वस्य तत्तत्प्रत्ययप्रकृतावेव सत्त्वोपगमात्तस्यैव च विवक्षितत्वात् । स्वविधायकशास्त्रजन्यबोधप्रयोज्यप्रयोगप्रयोजकबोधीयस्वनिष्ठविधेयतानिरूपितोद्देश्यत्वस्य विवक्षितत्वाद्वा प्रातिपदिकात्कर्मणिद्वितीयेत्यादिशास्त्रजन्यबोधप्रयोज्यं प्रयोगात्प्राक् घटपदात्कर्मणिद्वितीयेत्यादिविशेषार्थोपरक्तज्ञानं सर्वत्राभ्युपेयमित्युक्तोद्देश्यत्वस्य पटपदे प्रसक्त्यभावात् । अनुवादस्थले च वक्तृपुरुषीयतादृशज्ञानमादायैव तत्संगमनीयं यद्वाऽभियुक्तपुरुषीयप्रकृतिव्यवहारविषयत्वमेव तत् व्यवहारस्यास्येयं प्रकृतिरित्याकारकत्वेनैव प्रवेशोऽतो नान्योन्याश्रय इति शब्दशक्त्यायुक्तप्रकृतित्वस्य तत्तत्प्रत्ययनिरूपितत्वाभावेन प्रकृते नोपयोग इति दिक्। अथ किंनाम प्रकृत्यर्थत्वं यदि प्रकृतिवृत्त्युपस्थाप्यत्वं तदा कर्तृकर्माद्यर्थकक्रदन्तनाम्नां वृत्तिविरहेण तत्रोक्तव्युत्पत्त्यप्रवृत्तिः स्यात्। नच भावकृदन्तानामिव समुदायशक्तिः कुतस्तेषां नोपेयत इति वाच्यम् एकैककृत्समभिव्याहृतानन्तधातुघटितकृदन्तसमुदायानुपूर्वीणामनन्तत्वेन तदवच्छिन्नानामनन्तशक्तिकल्पने गौरवाल्लाघवेन कृदन्तस्थलेऽपि धात्वर्थभागभानस्य कृप्तशक्तिकधातुत एव स्वीकरणीयत्वात् । शक्त्यनुशासकशास्त्रानतिक्रमेण कर्त्रादौ कृतां शक्तेरभ्युपगमाच्च पाचकादिपदात्पाककर्त्राद्यर्थबोधनिर्वाहात्समुदायशक्त्यनभ्युपगमात् । नचैवमनुशासनानतिक्रमेण भावविहितकृतामपि भावरूपोऽर्थः कुतो नाभ्युपेयते लाघवस्य तुल्यत्वादिति वाच्यम् भावशब्दो हि धात्वर्थपरिभाषितः। धात्वर्थश्च धातुत एव लभ्यते इत्यनन्यलभ्योहि शब्दार्थ इत्यनुसाराद्धात्वर्थतावच्छेदकरूपेणोपस्थितयोर्विरूपोपस्थितत्वविरहेणान्वयासंभवाच्चानुशासनस्य यथाश्रुतार्थताया अतिक्रमणीयत्वात्। अनुगतानतिप्रसक्तस्य स्वतादात्म्यातिरिक्तस्य स्वरूपत्वादेर्दुर्वचतया तेन रूपेण भावस्य कृदर्थताया वक्तुमशक्यत्वाच्च घटस्वरूपं पटस्वरूपमित्यादिस्वरूपांशानुगताकारप्रत्ययानुरोधात् स्वरूपत्वमनुगतानतिप्रसक्तमखण्डोपाधिरूपमुरीकृत्य तत्र तत्र ग्रन्थेऽन्येषां स्वरूपस्य भावप्रत्ययार्थत्वोक्तिः संगमनीया। यद्वा प्रागुक्तानुगततादात्म्यविशिष्टे प्रमेयत्वपदार्थत्वादिविशिष्ट एव वा भावकृतामस्ति शक्तिः पाकादिपदात् पाकस्वरूपत्वेन पाकात्मकपदार्थत्वेन वा भावप्रतीतिस्तथापि कृतां भावार्थकत्वबोधकानुशासनानां यथाश्रुतार्थेनाप्रामाण्यप्रसक्तिः कृदन्तसमुदायस्य शक्त्यभ्युपगमस्तु तत्रैव न यत्र रूढ्यर्थे योगसमवाय इत्यभिप्रायः स्वरूपार्थकत्ववादिनां समुदायशक्तिमतापेक्षया लाघवस्यात्र व्यक्तत्वाद्युक्तत्वमाकलय्य वदन्तीत्यत्रोक्तसमुदायशक्तिमतेऽस्वरससूचनायेत्यवधेयम् । प्रकृतमनुसरामः यथाकथञ्चित्प्रकृतिप्रयोज्यशाब्दबोधविषयत्वं तत् तदाकाङ्क्षासंपादकतया पचन्तावेत्यादौ शत्रन्तसमुदायप्रयोज्यविषयत्वस्य धात्वर्थेऽपि सत्त्वेन तस्यापि प्रकृत्यर्थत्वापत्तिरितिचेदुच्यते नहि प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकव्याप्यधर्माव-

**प्रत्ययानामिति व्युत्पत्तेर्धातूनां च सुब्विभक्त्यप्रकृतित्वात् प्रकृत्येकदेशार्थेऽपि प्रत्ययार्थान्वयोपगमे पचन्तं पश्यतीत्यादितः पचमानं पश्यतीत्यादितश्च पाकादौ द्वितीयाद्यर्थकर्मत्वाद्यन्वयबोधप्रसङ्गात् । एकत्रविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वेनान्वयस्याव्युत्पन्नतया तत्र प्रत्ययार्थविशेषणपाकादेर्न**

---

च्छिन्ननिरूपितवृत्तिप्रयोज्यविषयत्वमिह विवक्षितं येन तादृशोद्देश्यतावच्छेदकप्रातिपदिकत्वव्याप्यपाचकपदाद्यानुपूर्वीविशेषा-
वच्छिन्ननिरूपितवृत्तेरप्रसिध्या भवेदुक्तदोषः । किन्तु निरुक्तोद्देश्यतासमानाधिकरणनिरूपकतानिरूपितनिरूप्यतावद्वृत्तिप्रयो-
ज्यविषयत्वमेव पाचकादिपदे तादृशी निरूपकता कृत्त्वव्याप्यधर्मावच्छिन्नैव तन्निरूपितनिरूप्यतावद्वृत्तिप्रयोज्यविषयत्वस्य कर्तरि
सत्त्वे पाककर्तर्यपि सत्त्वाद्विशिष्टस्यानतिरेकान्न दोषः घञन्तादिस्थले च तादृशी निरूपकता घञन्तसमुदायत्वावच्छिन्नैवेति
तत्रापि सङ्गतिः धातुवृत्तिनिष्ठनिरूपकतानिरूपितनिरूपकतायास्तादृशोद्देश्यतासामानाधिकरण्यविरहान्नातिप्रसक्तिरिति । **प्रकृ-
त्येकदेशार्थेपीति** । घञन्तसमुदायस्य शक्तिमनभ्युपगम्योक्तव्युत्पत्तिघटकप्रकृत्यर्थत्वं प्रकृतितदेकदेशार्थसाधारणं निरुच्य
तदाश्रयेण प्रत्ययार्थान्वयाभ्युपगम इत्यर्थः ।

**एकत्रविशेषणत्वेनोपस्थितस्येति** । एकत्रेति सप्तम्यास्त्रलोवा विशेष्यत्वमर्थः तस्य विशेषणत्वेन्वयः तृतीयार्थस्तादात्म्यं
तस्योपस्थितत्वेऽन्वयः तथाचैकनिष्ठविशेष्यतानिरूपितविशेषणत्वाभिन्नोपस्थितिविषयतावतो नापरनिष्ठविशेष्यतानिरूपितवि-
शेषणत्वयोगोभवतीत्यर्थः । स च न चारुः पचमानादिशब्दानां विशिष्टशक्तेर्विरहेण पाकादीनामन्यत्र विशेषणत्वेनोपस्थित-
त्वविरहात् । अपि तु वैशिष्ट्यं तृतीयार्थः तस्य चोपस्थितपदार्थेन्वयः । एवंचोक्तविशेषणत्वोपस्थितिविषयत्वयोः प्रयोज्य-
प्रयोजकभावलाभेन निरुक्तविशेषणत्वप्रयोजकोपस्थितिविषयतावतः अन्यनिष्ठविशेष्यतानिरूपितविशेषणत्वयोगो न भवती-
त्यर्थः तथाचोक्तव्युत्पत्तेर्यथाविशिष्टशक्तिस्थले व्यापारविशेषणत्वप्रयोजकविशिष्टोपस्थितिविषयत्ववतः फलस्यान्यत्र विशेष-
णतयान्वयविरहेण प्रवृत्तिस्तथा ययोरेकविशेषणतया परस्यान्वयएव तद्बोधकपदयोराकाङ्क्षानियमः तत्तदर्थोपस्थापकपदद्वय-
घटितकृत्तद्धितान्तसमासादिस्थलेप्यस्ति प्रवृत्तिरन्यत्रान्वय आकाङ्क्षाविरहेणोपस्थितिविषयताया एकत्र विशेषणत्वमात्रप्रयो-
जकत्वादिति पचमानादिपदघटकधात्वर्थस्य न सुवर्थकर्मत्वादावन्वय इति न काप्यनुपपत्तिः । अथ विक्लित्तिंजानानस्तण्डुलं
पचतीत्यादौ व्यापारविशेषणतयोपस्थिताया अपि विक्लितेः कर्मत्वविशेषणत्वाद्विक्लितेरेकत्वान्निरुक्तव्युत्पत्त्यनुपपत्तिः । एवमेक-
स्यापि किंचिदपेक्षया अपरत्वादुक्तव्युत्पत्त्यसंभवः। नचोपस्थितिविषयतायां स्वप्रयोज्यप्रकारतानिरूपितविशेष्यतावदन्यनिष्ठविशे-
ष्यतानिरूपितप्रकारताप्रयोजकत्वाभावएवोक्तव्युत्पत्तितात्पर्यमिति नोक्तदोषद्वयसंभव इति वाच्यम् नियताकाङ्क्षाभिव्यक्त्यर्था
ह्युक्तव्युत्पत्तिः सा च नियताकाङ्क्षाज्ञानादुक्तप्रयोज्यप्रयोजकभावनिर्णय एव सुग्रहेत्यन्योन्याश्रयादेवमुक्तव्युत्पत्तिं विनैवा-
काङ्क्षाग्रहे तत एव फलादेर्व्यापारेणान्वये नियमिते सकृदुच्चरितइत्यादिनियमेनोक्तव्युत्पत्त्यर्थसिद्धौ तस्यानिष्प्रयोजनत्वापत्ते-
श्चेति चेदुच्यते विषयताविशिष्टोपस्थितिविषयतायां स्वविशिष्टान्यविशेष्यतानिरूपितप्रकारत्वप्रयोजकत्वाभाव एवोक्तव्यु-
त्पत्तितात्पर्यम् । प्राथमिकवैशिष्ट्यं स्वतादात्म्यस्वाश्रयत्वोभयसंबन्धेन स्वाश्रयत्वञ्च स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपित-
विषयताप्रयोज्यविशेष्यतानिरूपितत्वस्वप्रयोज्यप्रकारतानिरूपितविशेष्यताप्रयोजकत्वस्वरूपयोग्यपदघटितवृत्तिघटकपदप्रयोज्य-
त्वान्यतरसंबन्धेन । द्वितीयवैशिष्ट्यं च स्वप्रयोजकवृत्तिज्ञानीयविषयतानिरूपितविषयताप्रयोज्यत्वस्वप्रयोजकपदघटितवृत्तिघट-
कपदप्रयोज्यत्वान्यतरसंबन्धेन । द्वितीया च वृत्तिः कृत्तद्धितान्तादिरूपा । कृदन्तादीनामन्यतमत्वेनैव तत्र प्रवेशः कार्यः वृत्ति-
त्वस्यान्यादृशस्य दुर्वचत्वात् । उपस्थितीयनीलादिविषयतायाः स्वविशिष्टान्यघटविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्यैव
सत्वे नियमासंभवःस्यादित्येकत्र विशेषणत्वेनेतिदलपर्यवसितार्थात्मकं विषयताविशिष्टत्वमुपात्तम् । इदं च ज्ञानभेदेनविषयता-
भेदपक्षएव निर्दुष्टं समानाकारकज्ञानीयविषयतयोरैक्ये तु पाचकादिपदघटकपच्धातुजन्योपस्थितीयपाकविषयतायां विषय-
ताविशिष्टायां स्वविशिष्टान्यकर्मत्वादिनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकस्य पाकं पश्येत्यादिस्थलीयपच्धातुजन्योपस्थिति-
विषयत्वस्य तादात्म्यसत्त्वेन तत्प्रयोजकत्वस्यैव सत्त्वान्नियमभङ्गस्स्यादित्युपस्थितावेव स्वविशिष्टविषयताविशिष्टप्रकारताप्रयोजक-
त्वाभावनियमे उक्तनियमस्य तात्पर्यं वाच्यम् । स्ववैशिष्ट्यं च स्वनिरूपितत्वस्वाश्रयत्वोभयसंबधेन । स्वाश्रयत्वंच स्वजनकवृत्ति-
ज्ञानीयविषयताप्रयोज्यविशेष्यतानिरूपितत्वस्वप्रयोजकपदघटितवृत्तिघटकपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वान्य-
तरसंबन्धेन । द्वितीयवैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वविशिष्टान्यविशेष्यतानिरूपितत्वोभयसंबन्धेन । विशिष्टान्यत्वघटकवैशिष्ट्यञ्च
प्रागवद्बोध्यं । स्वप्रयोजकपदघटितत्वं च स्वघटितवृत्त्यघटितत्वे सति स्वघटितत्वमेव तेन राजपुरुषधनमित्यादौ राज्ञो धनांशेऽन्व-
येपि नियमभङ्गाभावो दोषो न प्रसज्यते राजपुरुषात्मकवृत्तिघटितवृत्तिघटकत्वाद्धनपदस्य । नचोपस्थितौ तादृशप्रकारताप्रयो-
जकत्वं स्वीयविषयताद्वारकमेवास्तीति विषयत्वे तादृशाभावनियमपक्षोक्तदोषस्तदवस्थ इति वाच्यम् स्वप्रयोजकविषयता-
निरूपितविशेष्यताप्रयोजकोपस्थितित्वेसति तादृशविशेष्यताप्रयोजकपदघटितवृत्तिघटकपदजन्योपस्थितित्वे सति वा स्वप्र-
योजकविषयतानिरूपितत्वेन नियतं विलक्षणमेव हि विशेष्यतानिरूपितत्वविशिष्टप्रकारताप्रयोजकत्वं तादृशनिरूपितत्वरूपमेव
वात्र विवक्षितमिति न कोऽपि दोषः । एवञ्चोक्तव्युत्पत्तौ विशिष्टवृत्तिग्रहस्यैकवृत्तिघटकत्वग्रहस्यैव चोपयोगो न नियताकाङ्क्षा-

कर्मत्वे विशेषणतयान्वय इति चेत्तथापि पाकादिविशेषणतया सुबर्थसंख्याया अन्वयसंभवात् । यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितं पाकादेश्च तदबाधितं तत्र पचन्तौ पश्यति पचमानौ पश्यतीत्यादिप्रयोगप्रसङ्गस्य दुर्वारत्वात् । धातूपस्थाप्यार्थे सुबर्थान्वयबोधं प्रति तत्तद्धातूत्तरप्रत्ययधर्मिकर्किचिदर्थपरत्वज्ञानस्य प्रतिबन्धकतामुपगम्यैतादृशातिप्रसंगवारणे च गौरवात् । एवं शोभनं पचनमित्यादौ धातुमात्रेण पाकाद्युपस्थितौ च तत्र शोभनाद्यभेदान्वयबोधानुपपत्तिः विशेषणविभक्तिसजातीयविभक्तिप्रकृत्यनुपस्थाप्यत्वात् । प्रकृत्येकदेशसाधारणतादृशविभक्तिप्रकृतित्वस्य प्रयोजकत्वे तत्र ल्युडादेरधिकरणपरत्वेऽपि तथाविधान्वयबोधापत्तेः । कस्यचित्प्रतिबन्धकतां कल्पयित्वा तद्वारणे च गौरवात् । न चैवमुपकुम्भार्द्धपिप्पल्यादिरूपपूर्वपदार्थप्रधानसमासपदात्कुम्भसमीपपिप्पल्यर्द्धादौ विभक्त्यर्थान्वयस्य प्रातिपदिकान्तरार्थाभेदान्वयस्य चानुपपत्तिः । पूर्वपदस्य समासोत्तरविभक्त्यप्रकृतित्वादिति वाच्यम् । तदनुरोधेनैव तत्र कुम्भपिप्पल्यादिपदानामेव कुम्भसमीपपिप्पल्यर्द्धादौ लक्षणायाः पूर्वपदस्य तात्पर्यग्रहमात्रोपयोगितायाश्च स्वीकारात् । वस्तुतस्तु, तत्रोत्तरपदार्थविशेषितपूर्वपदार्थसमीपार्द्धादौ प्रत्ययार्थान्वयबोधेतादृशसमस्तपदप्रत्ययपदयोरव्यवहितपूर्वापरीभावोप्याकाङ्क्षा । एवं तत्र प्रातिपदिकान्तरार्थाऽभेदान्वयबोधे समानविभक्तिकयोस्तादृशसमस्तपदपदान्तरयोश्च समभिव्याहारोप्याकाङ्क्षा । तथा सत्यतिप्रसङ्गविरहात् । धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधे प्रातिपदिकान्तरार्थाभेदान्वयबोधे च ल्युड्घञाद्यन्तसमुदायप्रत्यययोरव्यवहितपूर्वापरीभावस्य समानविभक्तिकयोस्तादृशसमुदायपदपदान्तरयोः समभिव्याहारस्य चाकाङ्क्षात्वोपगमे दर्शिताधिकरणार्थकल्युट्प्रत्ययस्थलीयातिप्रसङ्गस्य दुरुद्धरतया न तत्संभवः । अथ घञन्तसमुदायस्य पाकाद्यर्थकत्वे घञन्तस

---

ग्रहस्य । स्वरूपयोग्यत्वग्रहेऽपि च निराकाङ्क्षत्वग्रहविरह एवोपयुज्यते इति नान्योन्याश्रयः । उक्तव्युत्पत्त्यभावे कृदाद्यर्थविशेष्यतयान्वितस्य पाकादेः कर्मत्वादौ कृदाद्यर्थाविवक्षायां वा तत्र तस्यान्वयस्य सकृदुच्चरितइत्यादिनियमेन वारणासंभवेन सार्थक्यञ्च । नच प्रकृत्येकदेशार्थसाधारणप्रकृत्यर्थत्वाघटितप्रत्ययानामित्यादिनियमसद्भावे स्वाश्रयत्वघटकद्वितीयसंबन्धवैयर्थ्यं भविष्यत्येवेत्युक्तव्युत्पत्तेर्वस्तुतो विशिष्टशक्तिमात्रस्थलीयताया एव वक्तव्यतया प्रत्ययानामित्यादितथाविधनियमासद्भावेऽपि कथन्तया कर्मत्वादौ पाकान्वयवारणमिति शङ्क्यम् राजपुरुषोऽयमितिवाक्यस्य पुरुषपदार्थाविवक्षायां राजात्मकइदमर्थे राजपदार्थान्वयतात्पर्येण राजपदे कर्मधारयक्षुतस्वन्तत्वप्रतिसंधाने प्रामाण्यापत्तेस्तथाप्युक्तसंबन्धस्यावश्यमुपादेयत्वात् । नच न सापेक्ष इत्यादिनियमादेवोक्तदोषवारणसंभवादुक्तसंबन्धोनोपादेय इति वाच्यं सापेक्षत्वस्य तदर्थान्वितस्वार्थतात्पर्यकत्वरूपस्य वक्ष्यमाणतया वृत्तिघटकविशेषणपदार्थस्य वृत्त्यघटकपदार्थविशेष्यत्वएवोक्तव्युत्पत्त्याऽतिप्रवृत्तेः । नच निरुक्तसंबन्धाप्रवेशे लाघवानुरोधेन तदर्थनिरूपितान्वयनिरूपकत्वमेवास्तु तत्सापेक्षत्वघटकमिति वाच्यं प्रधानं ह्यप्रधानमपेक्षते प्राधान्यञ्च विशेष्यत्वमेवेति तत्प्रतियोगिकानुयोगित्वस्यैव सापेक्षत्वघटकत्वौचित्यादाजानिकसिद्धायां व्युत्पत्तौ नियोगपर्यनुयोगस्याप्यनर्हत्वात् । यद्युक्तप्रवेशो नस्यात्तदोक्तव्युत्पत्तेर्विशिष्टशक्तिमात्रस्थलीयतयोक्तग्रन्थानुपपत्तिर्दुष्परिहरा । नच पचमानादिपदानां विशिष्टशक्त्यभिप्रायकएवोक्तग्रन्थइति वाच्यं धातूपस्थाप्यर्थेत्यग्रिमग्रन्थविरोधात् । तस्मादुक्तरीतिरादर्त्तव्या । विशिष्टशक्तिकृदादिवृत्तिस्थलद्वयसाधारणैकप्रकारनिर्वचनप्रयत्नो वा कर्त्तव्यइति दिक् ।

**धातूपस्थाप्यार्थेति** । अथैवं प्रतिबन्धकत्वे कल्पितेऽपि यत्र राजद्वयसंबन्ध्येकः पुरुषोऽस्ति तत्र राजपुरुषौ पश्येति प्रयोगापत्तिर्दुर्वारेति चेन्न, तत्तत्पदार्थधर्मिकसुबर्थान्वयबुद्धौ तत्तत्पदाव्यवहितोत्तरवर्त्तिसुब्भिन्नपदधर्मिककिञ्चिदर्थपरत्वज्ञानस्य तत्तत्पदाव्यवहितोत्तरपदधर्मिकतत्तत्पदार्थान्वितार्थपरत्वज्ञानस्य वा प्रतिबन्धकत्वे तात्पर्यात् द्वितीयकल्पानुसरणाच्च । द्वन्द्वस्थले सर्वपदार्थे विभक्त्यर्थान्वयनिर्वाहः । नचैवमर्द्धकायादिपूर्वपदार्थप्रधानसमासस्थले बहुपट्वादितद्धितस्थले च विभक्त्यर्थान्वयानुपपत्तिरिति वाच्यं पूर्वपदतात्पर्यग्राहकत्वपक्षे दोषस्यैवाभावात् । वस्तुतस्त्वित्यादिकल्पान्तरे चोक्तसमासादिस्थलउत्तरपदार्थे विभक्त्याद्यर्थान्वयवारणानुरोधेन पूर्वपदार्थधर्मिकार्थपरत्वज्ञानस्य प्रतिबन्धकत्वस्य निरुक्तप्रतिबन्धकतायां पदे निरुक्तसमासादिघटकभिन्नत्वस्यच निवेशनीयत्वात् । तदर्थान्वितत्वस्य तदर्थान्वयानुयोगित्वस्य वा विवक्षितत्वात् ।

**कस्यचित्प्रतिबन्धकतां कल्पयित्वेति** । द्वितीयान्यसुबन्तार्थाभेदान्वयबुद्धौ धातूत्तरवर्त्तिप्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकतां कल्पयित्वेत्यर्थः । स्वार्थकप्रत्ययान्तधातूपस्थाप्यार्थे द्वितीयान्तार्थाभेदभानस्य तैरपि स्वीकाराद्द्वितीयान्येति । **नचैवमिति** । घञाद्यन्तसमुदायस्य शक्तिस्वीकारेऽपीत्यर्थः । प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेराकाङ्क्षाविशेषकार्यकारणभावग्राहकतया पूर्वपदार्थप्रधानसमासस्थलेऽन्यादृश्या आकाङ्क्षाया एव कल्पनेन नोक्तव्युत्पत्तिविरोध इत्याह **वस्तुत**-

मुदायस्य संयोगविभागत्वादिविशिष्टवाचकत्वं व्युत्पाद्य संयोगविभागादिपदानां नैमित्तिकसंज्ञात्वनिराकरणं दीधितिकृतां विरुद्धमिति चेत्का क्षतिः । न हि कस्यचिद्ग्रन्थकृतो विपरीतलेखनं युक्तिबलाद्वस्तुसिद्धौ बाधकम् । एवं च यत्र धातुमात्रस्यैव पाकादौ तात्पर्यं तत्र तद्विशेषणवाचकपदाद् द्वितीयैव यत्र तु कृदन्तसमुदायस्य पाकादौ तात्पर्यं तत्र तादृशपदं तथाविधकृदन्तसमुदायसमानविभक्तिकमेव । तदुक्तं कातन्त्रपरिशिष्टकृता कथं स्तोकः पाकः कृदन्तविशेषणत्वात् । धात्वर्थैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति वदन्ति ।

---

स्त्विति । नैमित्तिकसंज्ञेति । जात्यवच्छिन्नसंकेतवतीसंज्ञेत्यर्थः । यत्र धातुमात्रस्यैव पाकादौ तात्पर्यमिति । अथधातोः पाकादौ तात्पर्येघञन्तसमुदायेन पाकोपस्थितावुभयोरनन्वयप्रसंगात् समुदायशक्त्युपस्थापितपाकादेरविवक्षणीयतया विभक्त्यर्थसंख्याकर्मत्वादेः कुत्रान्वय इति चेन्न, विभक्त्यर्थसंख्याकर्मत्वादेर्यत्रविवक्षितत्वं नहि तत्र धातुमात्रस्य पाकादौ तात्पर्यम् अपितु धात्वर्थपाकदौ स्तोकादेरेवान्वयो यत्र विवक्षितस्तत्रैव । अतएव स्तोकमोदनस्य पाकाय यतते पाकेनभूयतइत्यादयो न प्रयोगाः तादर्थ्यकर्तृत्वाद्यविवक्षायामौत्सर्गिकतया प्रथमाया एव प्राप्तेः । अतएव स्तोकमोदनस्य पाक इत्येवोदाहृतं ग्रन्थकृता । धात्वैकाधिकरण्येत्विति । स्तोकपदस्येति शेषः । धातुप्रतिपाद्यप्रतिपादकत्वेतु स्तोकपदस्येत्यर्थः ।

इतिवदन्तीति । ननु धातुमात्रशक्तेः क्लृप्ततया ततएव विवक्षितत्वान्वयबोधोपपत्तौ कृदन्तसमुदायशक्तिकल्पनं गौरवावहम् । नच स्तोकः पाकइत्यदौ विशेष्यवाचकधातुपदस्याप्रथमाप्रकृतित्वादेवमन्वयो न स्यात्तदर्थे प्रथमान्तस्तोकपदार्थस्य प्रकृत्येकदेशसाधारणविभक्तिप्रकृतित्वञ्च पचमानावित्यादौ पाकादौ द्वित्वान्वयप्रसंगेन हि वक्तुमशक्यमित्युक्तमेव समुदायशक्तिकल्पनाबीजमिति प्रामाणिकं गौरवं न दोषायेति वाच्यं वस्तुतस्त्वित्याद्यनुपदोक्तग्रन्थोक्तरीत्यवलम्बनेन पाकादौ स्तोकाद्यभेदान्वयबोधे स्वन्तस्तोकपदसमभिव्याहृतस्वन्तपाकपदत्वस्याकाङ्क्षात्वस्य पाकादौ द्वित्वान्वयबोधे पचमानावित्याद्यानुपूर्व्या आकाङ्क्षात्वाभावस्य च कल्पनेनैव निर्वाहे गौरवस्याप्रामाणिकत्वात् । नच वस्तुतस्त्वित्यादिसंदर्भे धात्वर्थपाकादौ प्रत्ययार्थान्वयबोधइत्यादिनोक्तएवात्र दोष इति वाच्यम् तत्तद्धातूत्तरतत्तत्प्रत्ययधर्मिककिञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वकल्पनेन तद्दोषवारणसंभवात् । अथ प्रतिबन्धकताकल्पनागौरवं समुदायशक्त्यस्वीकारे दोषः, नच समुदायशक्तिवादे कथं निर्वाहः, शोभनं पचनमित्यादिसमभिव्याहारस्याकाङ्क्षात्वस्य ल्युडादेरधिकरणपरत्वाग्रहे शोभनाभिन्नपाकाद्यन्वयबोधानुरोधेन वाच्यतया तादृशाकाङ्क्षाज्ञानादधिकरणपरत्वग्रहे निरुक्तशाब्दबोधापत्तिवारणस्य विना प्रतिबध्यप्रतिबन्धकभावमिति वाच्यम् उक्तान्वयबोधे जननीये निरुक्ताकाङ्क्षाज्ञानस्य समुदायशक्तिज्ञानजन्यपाकाद्युपस्थितेरेव सहकारित्वकल्पनात् । ल्युडादेरधिकरणपरत्वग्रहकाले धातुशक्तिग्रहजन्यपाकोपस्थितेरेव विद्यमानत्वादुक्तदोषाभावादिति चेन्न यत्र यत्र समुदायशक्त्यभावपक्षे प्रतिबन्धकत्वकल्पनं तत्र तत्र समुदायशक्तिपक्षे तादृशशक्तिज्ञानजन्योपस्थितेरतिरिक्तकारणताकल्पनमिति साम्यात् धातुशक्तिज्ञानजन्यपाकादिशाब्दबुद्धौ तादृशशक्तिज्ञानजन्योपस्थितेः क्लृप्तकारणभावाया एव व्यापक सामग्रीविधयाप्रवेश्यत्वाच्छक्त्यभावपक्षे शक्तिपक्षे च तत्प्रवेशस्योक्तदोषभयेन कर्तुमशक्यत्वादुक्तकारणत्वस्याप्याख्यातादिस्थलानुरोधेन वाच्यत्वात् । एवं भावमात्रशक्तक्तिन्घञाद्यन्तगत्यादिपदघटितायाः शोभनागतिरित्यादिस्थलीयाकाङ्क्षायाः शोभनाभिन्नगमनादिशाब्दबुद्धौ कारणत्वे नास्ति कस्याश्चित्प्रतिबन्धकतायाः कल्पनमिति क्तिन्नन्ताशेषधातुघटितसमुदायस्य बहुतरशक्तिकल्पनेन तज्ज्ञानजन्योपस्थितिकारणत्वकल्पनेन चातिगौरवम् । नच क्तिन्प्रत्ययस्याधिकरणाद्यर्थकत्वाभावेऽपि दोषादितस्तत्तदर्थपरत्वग्रहे शाब्दबोधवारणाय तत्रापि प्रतिबन्धकत्वमावश्यकमिति वाच्यम् अनुशासनाहिताधिकरणत्वाद्यर्थकत्वग्रहजन्यतत्तदर्थपरत्वग्रहस्यैवप्रतिबन्धकत्वस्याभ्युपेयत्वात्, क्तिन्प्रत्ययस्थले तादृशग्रहस्यैवासंभवात् अन्यथैतद्विचारोपन्यस्तघञ्[illegible]स्थलोपेक्षणस्य दर्शिताधिकरणार्थकल्युट्प्रत्ययेत्यत्राधिकरणार्थकत्वोक्तेश्च निर्बीजत्वापत्तेः । यद्युक्तस्थले सामान्यतस्तत्तदर्थपरत्वग्रहस्य प्रतिबन्धकत्वमानुभविकं तदा शोभनं पचनमित्यादौ तादृशसमभिव्याहारग्रहे समुदायशक्तिजन्यपाकोपस्थितौ ल्युटोऽधिकरणपरत्वग्रहे च शोभनाभिन्नपाकादिमुख्यविशेष्यकशाब्दबुद्धेर्वारणाय समुदायशक्तिपक्षेऽपि प्रतिबन्धकत्वमङ्गीकरणीयम् । नच शाब्दमतेस्तत्रेष्टत्वान्नप्रतिबन्धकत्वकल्पनमितिवाच्यम् समुदायशक्त्युपस्थापितार्थस्य शाब्दबोधे भानाभ्युपगमेऽधिकरणपरत्वग्रहोपरोधप्रसंगात् समुदायार्थस्याप्रकृत्यर्थत्वेन तेन समं प्रत्ययार्थाधिकरणस्यान्वयासंभवाच्छोभनाभिन्नधातूपस्थाप्यपाकान्विताधिकरणशाब्दबोधोपगमेऽपि वाक्यमिदं शोभनाभिन्नपाकपरमिति तात्पर्यग्रहान्तरस्य समुदायशक्त्युपस्थापितार्थशाब्दबोधार्थमपेक्षमाणस्यानुपरोधाच्चेष्टापत्तेरयोगात् । अतएव समुदायशक्तिपक्षे उपस्थितिकारणत्वकल्पनयाऽतत्पक्षीयप्रतिबन्धकत्वकल्पनस्य समानत्वेऽपि भिन्नविषयकप्रत्यक्षादिकं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वे प्रतिबन्धकाभावरूपकारणस्याधिकस्य प्रवेशेन विशेष्यविशेषणभावे विनिगमनाविरहेण सामग्रीत्वेन प्रतिबन्धकताया अत्याधिक्यप्रसंगइत्यपि निरस्तम् प्रतिबन्धकत्वस्योभयत्रसमानत्वात् । वस्तुतस्तु क्रियापदस्य

तदर्थकपदोत्तरविभक्त्या संख्याबोधनेऽभेदसंसर्गावच्छिन्नप्रकारताभिन्नतदर्थविषयताशालिशाब्दबोधसामग्री अपेक्षिता । तादृशश्च बोधस्तदर्थविशेष्यकस्तदर्थनिरूपितभेदान्वयविषयकश्च नीलौ घटावित्यादौ च विशेष्यवाचकपदोत्तरविभक्त्यैव द्वित्वादिकं प्रत्याय्यते । एवं च क्रियाविशेषणवाचकपदोत्तरविभक्त्या अबाधितयोरपि द्वित्वबहुत्वयोः प्रत्यायनासंभवात्तादृशपदोत्तरमौत्सर्गिकमेकवचनमेव

---

सार्थकप्रत्ययान्तधातुप्रस्थाप्यार्थपरत्वादिति ग्रन्थेऽभिहितं प्रत्ययस्य सार्थकत्वं द्वितीयान्तसमभिव्याहारघटिताकाङ्क्षा न जन्यशाब्दबोधेनस्वरूपसदुपयुक्तं ल्युटो निरर्थकत्वग्रहे शोभनपदस्य द्वितीयांतत्वग्रहेऽपि शाब्दप्रसंगात् अर्थरहितस्य किन्घञादेः सा॑र्थकत्वग्रहेऽपि शोभनाद्यन्वितपाकाद्यन्वयबोधस्य समभिव्याहारं विनाप्यापत्तेश्च किंतु ज्ञायमानं तथा च शोभनाभिन्नपाकाद्यन्वयबोधे द्वितीयान्तशोभनादिपदसमभिव्याहारज्ञानं प्रथमाद्यन्तशोभनादिपदसमभिव्याहारज्ञानं च कारणम् । तत्राद्येन धातुजन्यपाकाद्युपस्थितिः धातूत्तरप्रत्यये किंचिदर्थपरत्वरूपसार्थकत्वविशेषिते विभक्त्यव्यवहितपूर्ववर्तित्वविषयकत्वंच सहकारितयापेक्ष्यते, द्वितीयेन तु धातुजन्यपाकाद्युपस्थितिः निरर्थकत्वविशेषिते धातूत्तरप्रत्यये प्रथमाद्यव्यवहितपूर्ववर्तित्वविषयकत्वं चेति, शोभनं पचनमित्यादौ ल्युडादेरधिकरणपरत्वग्रहे शोभनपदस्य च प्रथमान्तत्वग्रहे च नापत्तिसंभवः निरुक्ताकाङ्क्षाज्ञानस्यैवाभावात् किमर्थं प्रतिबन्धकत्वकल्पनं, नच प्रथमात्वादिघटितरूपस्याकाङ्क्षत्वे प्रथमात्वाद्यज्ञाने शाब्दबोधानुपपत्तिरिति तत्तद्विभक्त्यानुपूर्वीघटितस्यैवाकाङ्क्षात्वमुपेयमिति शोभनं पचनमित्याद्यानुपूर्वीज्ञानमात्रकालेऽधिकरणपरत्वग्रहेसत्यापत्तौ तात्पर्यमितिवाच्यं प्रथमाद्वितीययोः शोभनमित्यत्रैकरूपतया ल्युडादेरधिकरणपरत्वग्रहे धातुतः पाकोपस्थितौ द्वितीयान्तसमभिव्याहारज्ञानात्समुदायशक्तिवादेऽपि शाब्दबोधस्येष्टतया प्रथमात्वाद्यग्रहदशायामापत्तित्वस्यैव दुरवधारणीयत्वात् । द्वितीयात्वादिज्ञानस्यानुपयुक्तत्वे उक्तस्थलानुरोधेनोक्ताकाङ्क्षाज्ञानस्य धातुजन्यपाकोपस्थितेश्च कारणत्वस्य कल्पनीयतया प्रथमान्तत्वग्रहकाले निरुक्तशाब्दबोधस्य समुदायशक्तिमतेऽपि दुरुद्धरत्वाच्च । नच प्रतिबन्धकत्वकल्पनयापि तद्वारणं संभवति, एवं सति प्रतिबन्धकत्वस्यैव दुर्वचत्वात् । तथाहि यदि पाकवि॑श्यकत्वोकाभेदबुद्धित्वं प्रतिबध्यतावच्छेदकं प्रथमान्तत्वग्रहत्वञ्च प्रतिबन्धकतावच्छेदकं तदाल्युटो निरर्थकत्वग्रहकाले शाब्दबोधानुपपत्तिः । नच निरर्थकत्वग्रहविरहसहकृतस्य प्रतिबन्धकतावच्छेदकत्वं समुदायशक्त्या पाकाद्युपस्थितौ निरर्थकत्वग्रहविरहे प्रथमान्तत्वग्रहे च शाब्दबोधानुपपत्तेः । अथ यद्युच्येत धातुप्रयोज्योपस्थितीयविषयताप्रयोज्यपाकविशेष्यताकबोधे प्रथमान्तत्वग्रहस्य प्रतिबन्धकत्वं तदासमुदायशक्त्युपस्थितपाकविशेष्यकशाब्दबोधे पाकपदधर्मिकप्रथमान्तत्वग्रहसहकृतद्वितीयान्तत्वग्रहस्यापि प्रतिबन्धकत्वान्तरं वक्तव्यम् प्रागुक्तं चाधिकरणपरत्वग्रहस्य प्रतिबन्धकत्वमिति समुदायशक्तिवादे बहुतरप्रतिबन्धत्वमापतेत् । यद्यनुभवापह्नवः क्रियेत नैकत्रापि पक्षे तदा प्रतिबन्धकत्वकल्पनं तद्वरमेतावत्प्रतिबन्धकत्वकल्पनापेक्षया निरुक्तसमभिव्याहारज्ञानस्थले सर्वत्र यथायथं स्वमाद्युपस्थितिकल्पनं सुत्वाम्लादिनैव च निरुक्ताकाङ्क्षाशरीरे प्रथमाद्वितीयादेः प्रवेशो नतु प्रथमात्वादिना तथासति प्रथमात्वाद्यग्रहेपि न क्षतिरिति चेदेतादृशाखरससूचनायैव वदन्तीत्युक्तमिति गृहाणेति दिक् ।

**तदर्थकपदोत्तरविभक्त्येति** । ननु नीलो घट इत्यत्रापि नीलघटबोधकनीलपदोत्तरविभक्त्या कथं न संख्यान्वयबोधः अभेदसंबन्धावच्छिन्नप्रकारत्वान्यनीलनिष्ठघटत्वावच्छिन्नविशेष्यताकशाब्दसामग्र्यास्तत्रसत्वात् । एवं नीलो घट इतिवाक्यग्रहे नीलस्येदमिति वाक्यग्रहघटितसामग्रीसत्वे च नीलपदोत्तरसुविभक्त्या संख्यान्वयप्रसङ्गः नीलार्थनिष्ठाऽभेदसंबन्धावच्छिन्नप्रकारत्वान्यशाब्दसामग्र्या विद्यमानत्वात् । किंच नीलत्वबोधनीलपदोत्तरसुविभक्त्या नीले संख्याबोधप्रसंगः अभेदसंबन्धावच्छिन्नप्रकारत्वान्यनीलत्वनिष्ठविषयताकशाब्दसामग्र्या विद्यमानत्वात् । तद्धर्मावच्छिन्नबोधकपदोत्तरविभक्त्या संख्याबोधनेऽभेदसंबन्धावच्छिन्नप्रकारत्वान्यतद्धर्मावच्छिन्नविषयताकसामग्र्या अपेक्षणीयत्वविवक्षाया वेदाः प्रमाणमित्यत्र प्रमाणत्वावच्छिन्नविषयतायास्तादात्म्यसंबन्धावच्छिन्नत्वात्प्रमाणत्वे संख्यान्वयानुपपत्तेः कर्तुमशक्यत्वात् । यत्र संख्यान्वयोऽभिमतस्तस्यैव तद्धर्मपदेन ग्राह्यत्वात् । संख्यान्वयितावच्छेदकग्रहणे व्रीहित्वे संख्यान्वयस्थले नियमानुपपत्तेः संख्यान्वयिनः संख्यान्वयितावच्छेदकस्यैव वा ग्रहणमित्यत्र नियामकाभावाच्चेति चेन्न, तत्प॒दोत्तरविभक्तिप्रयोज्यसंख्यानिष्ठप्रकारतानिरूपिततत्तदर्थनिष्ठविशेष्यताकबोधेऽभेदसंबन्धावच्छिन्नप्रकारत्वान्यतदर्थनिष्ठतत्पदप्रयोज्यविषयताकशाब्दसामग्र्यपेक्षितेत्यस्य विवक्षितत्वात् । घटनिष्ठविषयताया नीलनिष्ठत्वेऽपि नीलपदाप्रयोज्यत्वात् षष्ठ्यन्तनीलपदप्रयोज्यनीलनिष्ठविषयतायास्तादात्म्यसंबन्धानवच्छिन्नत्वेऽपि स्वप्रकृतिनीलपदाप्रयोज्यत्वात् नीलस्य तत्पदार्थतया विवक्षणे तन्निष्ठनीलपदप्रयोज्यविषयतायास्तादात्म्यसंबन्धानवच्छिन्नत्वात् प्रमाणत्वव्रीहित्वादिवन्नीलत्वेतु सति तात्पर्ये संख्यान्वयस्येष्टत्वात् । नच प्रमाणएव स्वाश्रयप्रमाणत्ववत्त्वसंबन्धेनैकत्वान्वयपक्षे का गतिरितिवाच्यं संख्यानिष्ठप्रकारतायां पर्याप्तिसंबन्धावच्छिन्नत्वस्य विवक्षितत्वादिति ।

**एवंचेति** । संख्याबोधे निरुक्तसामग्र्यपेक्षणेचेत्यर्थः । **असंभवादिति** । संख्याप्रत्ययप्रयोजकनिरुक्तसामग्र्यभावेन संख्याप्रत्ययोत्पत्त्यसंभवादित्यर्थः । तथाचेतिशेषः । संख्याप्रत्ययाभावे संख्याप्रतिपत्त्यर्थतया प्रयोगासंभवात् यस्य कस्यचिद्वचनस्य प्रयोगेप्राप्ते प्राथमिकत्वादेकवचनमेव प्रयोक्तव्यमिति भावः । **औत्सर्गिकमेकवचनमेवेति** । तस्यौत्सर्गिक-

भावाख्यातस्थलवदित्यवधेयम्। अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिः घटो घटः, दण्डवान् दण्डवान्, पाकं पचतीत्यादौ घटत्वदण्डवत्त्वपाकत्वाद्यवच्छिन्ने तत्तद्रूपावच्छिन्नस्य तथाविधान्वयबोधानुदयात्। अथ तत्प्रयोजकसमानधिभक्तिकत्वादेः सत्त्वात्कथं न तादृशान्वयबोधः। अत्राहुः। यादृशं फलं क्वचित्प्रसिद्ध्यति तादृशस्यैवापत्तिः सम्भवति क्लृप्तसामग्रीबलात्। यादृशं च सर्वथैवाप्रसिद्धं तादृशस्य चापादकाप्रसिद्धेरापत्तिरशक्यैवेति घटत्वाद्यवच्छिन्नविशेष्यताकाभेदसंसर्गकघटत्वाद्यवच्छिन्नप्रकारकशाब्दबोधस्य क्वचिदप्यनुदयात्कथं तदापत्तिः अथ घटो नीलघटः दण्डवान्

---

क्लीबलिङ्गाभिव्यञ्जकत्वमपि बोध्यम्। सामान्ये नपुंसकस्यैव साधुत्वात् नियतलिङ्गस्य क्रियाविशेषणत्वे लिङ्गत्यागप्रयोजकानुशासनाभावादौत्सर्गिकमिति, तेनेतिहेतुं पचतीत्यादयएव प्रयोगाः सा चेयं द्वितीया तादात्म्यफलतावच्छेदकान्यतरसंबन्धेन धात्वर्थतावच्छेदकफलशालिनः कर्मसंज्ञकत्वं क्रियाविशेषणानां तादात्म्येन फलेऽन्वयश्चाभ्युपेत्य कर्मणिद्वितीयेति सूत्रानुशिष्टैवाङ्गीक्रियते जरच्छाब्दिकैः। नचाकर्मकधातोर्व्यापारमात्रवाचित्वेन तद्विशेषणपदाद्वितीयाकथमिति वाच्यं तन्मते फलावच्छिन्नव्यापारस्यैव सर्वत्र धात्वर्थत्वात् फलव्यापारयोस्सामानाधिकरण्यासामानाधिकरण्याभ्यामेव सकर्मकासकर्मकव्यवस्थाया उक्तत्वात्। नैवैतन्मतमतिरमणीयं क्रियाविशेषणस्य मुख्यकर्मत्वे तत्र लकारापत्त्या स्तोकः पच्यते सुखमास्यत इत्यादिप्रयोगापत्तेः। न च तादात्म्यसंबन्धानवच्छिन्नधात्वर्थतावच्छेदकफलाश्रयत्वशालिनि कर्मणि लकारःस्वीक्रियत इति नोक्तप्रयोगापत्तिरिति वाच्यं विशेष्यविशेषणभावव्यत्ययं विना कर्तृकर्मलकारघटितवाक्ययोस्समानविषयकत्वस्यानुभवसिद्धत्वेन तदनुपपत्तेः। अतादात्म्येन फलाश्रयस्य लकारार्थत्वात् तादात्म्यघटितान्यतरसंबन्धेन फलाश्रयस्य द्वितीयार्थत्वात् शक्तौ गौरवप्रसंगात् शाब्दबोधस्य तादात्म्यसंबन्धानवच्छिन्नत्वादिघटितकर्मत्वविषयकत्वेनातिरिक्तविषयकत्वापत्त्या प्रतिवध्यप्रतिबन्धकभावगुरुत्वप्रसक्तेश्चोत्तरदेशसंयोगानुकूलव्यापारस्य मन्दद्रुतत्वादिविवक्षया मन्दं गच्छति द्रुतं गच्छतीत्यादिप्रयोगस्यानुभविकत्वे तदनापत्तेः मन्दादिपदानां फलेऽनन्वयात् अकर्मकधातोः फलावच्छिन्नव्यापारवाचकत्वस्यापि खण्डितत्वाच्च। अथास्तु नव्यवैयाकरणमतानुसारेण विशेषणान्वयाकाङ्क्षाभिव्यक्त्यर्था द्वितीया त्रैहेयमोदनं पचतीत्यत्र कर्मीभूतौदनान्वयप्रयोजकाकाङ्क्षा च विशेषणपदस्य द्वितीयान्तत्वे सत्येव यथाभिव्यज्यते तथा धात्वर्थतावच्छेदकीभूतोत्पत्तिरूपफलाश्रयत्वेन कर्मीभूतविक्लित्यन्वयप्रयोजिकाकाङ्क्षा स्तोकादिविशेषणपदस्य द्वितीयान्तत्वे सत्येव व्यज्यत इति त्रैहेयादिपदादिव स्तोकादिपदादप्याकाङ्क्षानिर्वाहायैव द्वितीया। अतएव भावनाकर्महोमविशेषणाग्निहोत्रपदाद्वितीया भावनाकरणयागविशेषणवाजपेयादिपदात्तृतीयेति मीमांसकानामुक्तिः संगच्छते। कर्तुरीप्सितमित्यादिना कर्मसंज्ञा कर्मणि लकारश्च व्यधिकरणफलाश्रयीभूते धात्ववाच्ये कर्मण्येव तेन सुखोत्पत्त्यनुकूलव्यापारवाचिनो रमतेरात्मानं रमते आत्मा रम्यते इत्यादयो न प्रयोगाः फलस्य व्यापारसमानाधिकरणत्वात्। नापि शय्याङ्गविलक्षणसंयोगानुकूलव्यापारवाचिनः स्वपतेरङ्गंस्वपित्यङ्गं सुप्यतइत्यादयः प्रयोगाः अङ्गस्य धातुवाच्यकर्मत्वात् एवंच विक्लितेरपि धातुवाच्यकर्मत्वेन स्तोकः पच्यत इत्यादयो न प्रयोगा इति तत्र जनितविभागं गच्छतीत्यादौ व्यापारविशेषणताया एवागत्या वाच्यतया तत्रोक्तगतेरसंभवात्। विशेषणसुपामव्यभिचारेण विशेष्याकाङ्क्षाभिव्यक्त्यर्थत्वेन द्वितीयान्तविशेष्यवाचकपदार्थविशेषणपदस्य द्वितीयान्तत्वसंभवेपि क्रियाविशेषणस्थले वाजपेयेनेत्यत्र व्यभिचाराद्विशेषणस्य द्वितीयान्तत्वसंभवात् विना विशेषविधिं प्रातिपदिकार्थमात्रे प्रथमात्यागायोगाद्वितीयानुपपत्तेश्च। तस्मादुभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यतइत्यंशीभूतेन ततोन्यत्रापि दृश्यत इत्यनेन क्रियाविशेषणं कर्मवद्भवतीत्यनुशासनं कल्प्यत इति तेन तत्रातिदिष्टं कर्मत्वमङ्गीक्रियते अतिदेशफलं च द्वितीयैव कर्मप्रवचनीयसंज्ञादिवत्। अतिदेशस्थले च सर्वमुख्यकार्याभावान्नकर्मणि लकारइत्यवधेयम्।

**अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति**। अत्र षष्ठ्या न विषयत्वमर्थः सरूपोपस्थितार्थद्वयविषयकसमूहालम्बनाभेदान्वयविषयकशाब्दबोधस्य प्रसिद्धत्वात् किन्तु प्रतियोग्यनुयोगिनिरूपितत्वसाधारणनिरूपितत्वत्वावच्छिन्नं तच्चाभेदान्वयान्वयि तादृशनिरूपितत्वातिरिक्तव्यवच्छेद एवह्येवकारार्थः तस्यापि हि स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितत्वस्वातिरिक्तोपस्थितिविषयतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वोभयसंबन्धेनोपस्थितिविषयताविशिष्टैव भवति शाब्दबोधीयाभेदत्वावच्छिन्नसांसर्गिकविषयतेति पर्यवसितार्थः। तेन विशेष्यत्वप्रकारत्वावच्छेदकस्यैकत्वेऽपि यत्किंचिद्धर्मापेक्षया विरूपत्वसंभवेन न विवक्षितार्थालाभ इति। तत्प्रयोजकेत्यत्र तत्पदं सामान्यतोऽभेदान्वयं परामृशति न तथाविधान्वयबोधं तत्प्रयोजकस्य तदप्रसिद्ध्याऽक्लृप्तत्वात्। **यादृशमिति**। यद्धर्मावच्छिन्नमित्यर्थः तद्व्यक्तेः क्षणविशेषादिघटितसामग्र्या अन्यत्रासंभवाद्यदिति नोक्तम्।

रक्तदण्डवानित्यादौ तादृशशाब्दबोधस्य प्रसिद्धिः विधेयकोटावधिकावगाहिनः शाब्दबोधस्य नवीनैः स्वीकारादिति चेत्तर्हि घटाद्यंशे विशेषणतावच्छेदकविधया नीलादिभाननियामकनीलाद्युपस्थितितात्पर्यज्ञानविशेषादिघटितैव सामग्री घटत्वावच्छिन्नविशेष्यकनीलघटत्वाद्यवच्छिन्नाभेदान्वयबोधप्रयोजिका तदभावादेव घटो घट इत्यादिषु न तादृशशाब्दबोधापत्तिरिति केचित्। तन्न द्रव्यत्वादौ धर्मितावच्छेदकतासंसर्गेण प्रसिद्धस्य शुद्धघटत्वाद्यवच्छिन्नप्रकारकाभेदान्वयबोधस्य घटत्वादावापत्तिसंभवात्। न च तत्रापादकाभावः; तात्पर्यज्ञानविशेषादिघटितताया धर्मितावच्छेदकतया द्रव्यत्वादौ तदुत्पादनियामकसामग्र्या एवापादकत्वात्। न च धर्मितावच्छेदकतासम्बन्धेन

---

**विधेयकोटावित्यादि।** विधेयांशघटकतयोद्देश्याद्यघटकं विषयीकुर्वतः इति तु नार्थः तथासति तादृशत्वस्य विधेयांशं सर्वथापूर्वमवगाहमानेऽपि शाब्दबोधे सत्वेन तस्य प्राचीनैरभ्युपेतत्वाद्विशेषोक्तिरसंगता स्यात्, एकविशेषोक्तेर्विशेषान्तरव्यवच्छेदफलकतायाः स्वरससिद्धत्वात्। किन्तु विधेयघटकतयाखिलोद्देश्यघटकावगाहिनस्तदघटकमवगाहमानस्येत्यर्थः। अभेदान्वयस्थले विधेयस्य नियमत उद्देश्यघटकत्वादखिलेत्युक्तम्। अत्रोद्देश्यस्य प्राक्प्रयोक्तव्योद्देश्यवाचकपदेन प्रथमावगन्तव्यकल्पतया तदंशस्याबुबोधयिषिततया न विधेयत्वेन भानसंभवः किन्त्वधिकांशस्यैव नचैवं नीलोघटइत्यादौ नैल्याश्रयस्य विधेयतया भानं नस्यात्तस्योद्देश्यात्मकत्वेन बुबोधयिषितत्वासंभवादिति वाच्यम् आश्रयविनिर्मुक्तस्य नामतउपस्थितस्य नैल्यादेर्व्युत्पत्तिविरोधेन भेदेनान्वयासंभवेनावर्जनीयतया बुबोधयिषितत्वसंभवेन विधेयकोटाववगाहनसंभवात्। घटो नीलोघट इत्यादौ घटांशभाने तादृशयुक्त्यभावादिति प्राचामभिमतमित्थमाक्षिपन्ति नवीनाः। तथाहि प्रवृत्त्युपयोगिविशिष्टज्ञानसम्पत्तये संशयनिवृत्तये वार्थं प्रतिपिपादयिषन्ति वक्तारस्तत्र नीलघटभेदस्य विशेषाभावत्वेन घटत्वस्य तदविरोधितया घटोनीलघटो नवेत्यादिसंशयस्य संभवेन तादृशसंशयमेव बोधनीयपुरुषगतमनुसंदधानास्तन्निवृत्तिमभिलषन्तो घटे नीलघटमेव विधेयतया प्रतिपादयन्ति घटोनील इत्यादिषूद्देरसमानप्रकारकत्वेन तादृशसंशयाविरोधित्वात्। समानविषयकत्वेन प्रतिबन्धकत्वस्य प्राचामभिमतस्याप्रामाणिकत्वादित्सगत्योक्तसंशयोत्सारणसमर्थो विधेयांशेऽधिकावगाही नीलघटो घट इत्यादिशाब्दबोधोऽभ्युपेयस्तदिदमनुसंधायोक्तं—**नवीनैस्स्वीकारादिति। तर्हि घटाद्यंशेविशेषणतावेच्छदकविधयेत्यादि।** ननु घटत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नस्य नीलाद्युपस्थितिव्यभिचारितया तदुत्पत्तौ तद्विरहस्याकिञ्चित्करत्वान्नतत्प्रयोजकत्वंतस्येति चेदत्र केचित् निर्विशेषस्य सामान्यस्याभावेन सामान्यधर्मावच्छिन्नोत्पत्तौ विशेषधर्मावच्छिन्नसामग्र्या अपेक्षितत्वनियमेन सामान्याश्रयव्यक्त्युत्पत्तौ तद्व्यक्तिनिष्ठयावज्जन्यतानिरूपितजनकतावच्छेदकावच्छिन्नसत्त्वनियमपर्यवसन्नेन नीलाद्युपस्थितिघटितसामग्र्या अवश्यमपेक्षणीयत्वमवगम्यत इत्याहुः। वस्तुतस्तु घटत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति स्वातन्त्र्येण न कस्यापिकारणत्वमिति तद्धर्मावच्छिन्नसत्त्वं नीलघटो घट इत्यादिवाक्यनिष्ठाकाङ्क्षाज्ञानजन्यतावच्छेदकनीलघटत्वावच्छिन्नविधेयतानिरूपितघटत्वावच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वाद्यवच्छिन्नसामग्रीप्रयोज्यमेव वाच्यम् सा च सामग्री नीलाद्युपस्थित्यादिघटितेति तद्विरहदशायां नोक्तधर्मावच्छिन्नसत्त्वप्रसङ्गइत्याशयः। अत्र वक्ष्यमाणाया द्रव्योपस्थितिं विना द्रव्यत्वे शाब्दबोधापत्तेरसङ्गतिः पूर्वकल्पवन्न प्रसज्यत इति।

**शुद्धघटत्वावच्छिन्नप्रकारकेति।** विधेयांशेऽधिकावगाहिशाब्दस्वीकारपक्षे घटत्वावच्छिन्नप्रकारकशाब्दबोधस्य घटत्वे इष्टत्वादापत्त्यभावाच्छुद्धघटत्वावच्छिन्नेत्युपात्तम्। **आपत्तिसम्भवादिति।** आपाद्यतावच्छेदकधर्मस्यप्रसिद्धत्वात्तदवच्छिन्नव्याप्तिज्ञानादिलक्षणापत्तिसामग्र्याः सम्भवादिति भावः। ननु कार्यापत्तिस्थले कार्यव्याप्यतयासामग्र्याएवापादकत्वं न चास्ति कापि सामग्री शुद्धघटत्वावच्छिन्नप्रकारकशाब्दत्वावच्छिन्नंप्रति कुत्रैत्यापादकाभाव इत्याह—**नचतत्रापादकाभाव इति। तदुत्पादनियामकसामग्र्या एवेति।** नच धर्मितावच्छेदकतया द्रव्यत्वे घटत्वावच्छिन्नप्रकारताकशाब्दत्वावच्छिन्नोत्पादनियामिका सामग्रीव्यक्तिर्द्रव्यत्वावच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितैव साच कथमपि घटत्वे न वर्तेत इति वाच्यम् यादृशी सामग्री द्रव्यत्वे तदुत्पादनियामिका तादृश्यास्तात्पर्यज्ञानादिघटितायाः सामग्र्या एवेत्यर्थकरणात्। तथाच ययोरर्थयोरन्वयाभिमतोऽभेदसंसर्गेणतेन संसर्गेण तद्विशेष्यकतत्प्रकारकज्ञानस्य योग्यताज्ञानत्वेन यथाघटोद्रव्यमित्यस्य योग्यताज्ञानत्वं तथाघटोघट इति ज्ञानस्यापि तत्त्वं यथातद्बोधकपदयोः समानविभक्तिकयोः समभिव्याहारस्याकाङ्क्षात्वेन घटोद्रव्यमितिवाक्यज्ञानस्याकाङ्क्षाज्ञानत्वं तथा घटोघट इतिवाक्यज्ञानस्यापि यथाच तदर्थान्वितत्तदर्थपरत्वस्य तात्पर्यरूपत्वेन घटोद्रव्यमिति वाक्यं घटान्वितद्रव्यपरमिति ज्ञानस्य तात्पर्यभानत्वं तथाचं घटोघट इदं वाक्यं घटान्वितघटपरमिति ज्ञानस्यापि तत्त्वम् तत्तदर्थोपस्थित्योरेककालीनयोरासत्तिरूपत्वेन द्रव्यं घटइत्युपस्थित्योर्यथाऽऽसत्तित्वमेवं घटो घट इत्युपस्थित्योरपीति प्रतिनियतेन तेन संबन्धेन परिपूर्णा निरुक्तशाब्दसामग्री द्रव्यत्वे विद्यमाना यथाकार्यं घटत्वावच्छिन्नप्रकारकशाब्दबोधात्मकमुत्पादयति तथा घटत्वेपि विद्यमाना निरुक्ता परिपूर्णा शाब्दसामग्री तत्कार्यमुत्पादयेदापाद्यापादकयोश्च व्याप्तिर्यत्त्वतत्त्वोपरागानुगृहीता सामान्यतः परिच्छिन्ना विशेषतो गृ-

द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिका द्रव्यपदजन्यद्रव्यत्वाद्यवच्छिन्नविशेष्यकोपस्थितितद-वच्छिन्नविशेष्यकयोग्यताज्ञानादिघटितसामग्र्येव। धर्मितावच्छेदकतायास्तत्कार्यतावच्छेदकताविरहेपि द्रव्यत्वादिनिष्ठायास्तत्कार्यतावच्छेदकधर्मघटकत्वात् तादृशसामग्र्याश्चात्मनिष्ठप्रत्यासत्त्या द्रव्यत्वाद्यवच्छिन्नविशेष्यकघटत्वाद्यवच्छिन्नाद्यभेदबुद्धित्वरूपस्वीयकार्यतावच्छेदकावच्छिन्नोत्पत्ते-रेव व्याप्यतया घटत्वादौ धर्मितावच्छेदकतासम्बन्धेन घटत्वावच्छिन्नाभेदबोधापादकत्वं न सम्भ-

---

वीतपक्षधर्मत्वस्यापादकस्यानुग्राहिकेति नापत्त्यसंभव इति भावः। अथ कारणतावच्छेदकीभूतधर्मावच्छिन्नघटितसमुदायस्यैव भवति सामग्रीत्वमिति घटत्वावच्छिन्नविशेष्यकघटत्वावच्छिन्नप्रकारकज्ञानादेः कारणतावच्छेदकधर्मविरहेण तदघटितसमुदायस्य न सामग्रीत्वसंभवइति न तस्यापादकत्वमुपपद्यत इत्याशयवानाह । **नच धर्मितावच्छेदकतासंबन्धेनेत्यादि।** द्रव्यत्वादाविति सप्तम्याः कपाले घटउत्पद्यत इत्यत्रेवावच्छेदकत्वमर्थः अन्वयश्चास्योत्पत्तौ कार्यनिष्ठाद्यक्षणसम्बन्धरूपायां प्रत्ययानुरोधात्तस्य संबन्धावच्छिन्नत्वमपि स्वीक्रियते। ननु कार्यतावच्छेदकसंबन्धेन कार्याधिकरणं कारणतावच्छेदकसंबन्धेन कारणाधिकरणं वा योदेशस्तस्यैव प्रत्ययानुरोधादवच्छेदकत्वं कल्प्यते तदवच्छिन्नायांतद्धर्मावच्छिन्नकार्योत्पत्तावेव च तद्ध-र्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नघटितसमुदायात्मकसामग्र्याः प्रयोजकत्वमङ्गीक्रियत इति द्रव्यत्वावच्छि-न्नविशेष्यकघटत्वावच्छिन्नप्रकारकयोग्यताज्ञानादेः द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वाव-च्छिन्नकार्यतानिरूपितकारणतावच्छेदकधर्मवत्तया तद्घटितसमुदायस्य सामग्रीत्वसंभवेपि कार्यतावच्छेदकेन कारणतावच्छेदकेन वा समवायेन निरुक्तकार्यस्य कारणस्य वाधिकरणेनात्मनावच्छिन्नायामुक्तकार्यतावच्छेदकावच्छिन्नोत्पत्तावेव प्रयोजकत्वं ननु द्रव्यत्वावच्छिन्नायां, घटत्वावच्छिन्नप्रकारकशाब्दत्वावच्छिन्नोत्पत्तौ धर्मितावच्छेदकतायाः कार्यतावच्छेदकसंबन्धत्वविर-हेण द्रव्यत्वस्य तादृशदेशत्वविरहादुक्तशाब्दत्वस्य कार्यतानवच्छेदकत्वाच्च। नचोक्तनियमेमानाभावइति वाच्यम् तथासति कपाले घट उत्पद्यतइतिवत्पर्वतेघटउत्पद्यतइति व्यवहारापत्तेर्द्रव्यत्वादौ तादृशान्वयबोधोत्पत्तिप्रयोजिकेत्युक्तिरसङ्गतेति चेन्न उक्तनियमशरीरे हि कार्यतावच्छेदकसंबन्धेन कार्याधिकरणमित्यत्रधर्मसंसर्गसाधारणमेवावच्छेदकत्वं तद्धर्मावच्छिन्नकार्यतेत्य-त्रावच्छेदकत्वमपर्याप्त्या च विवक्षितम्। यदि कार्यतावच्छेदकसंबन्धेनैव कार्याधिकरणे देशे सामग्र्याः कार्योत्पत्तिप्रयोज-कत्वं स्याद्धर्मत्वादेरात्मप्रत्यासत्त्यभावपक्षेपि कार्यतानवच्छेदकतया धर्मिण्युत्पत्तिव्यवहारो न स्यादुक्तरीत्या तु सोप्युपपद्यते महौषध्यादिकं प्रति तादात्म्येन हिमालयादीनां कारणत्वमुपपाद्य हिमालये महौषधयः समुत्पद्यन्ते कुलालगेहे घट उत्प-द्यतइत्यादयो व्यवहारा उपपादनीयाः, तथाच द्रव्यत्वनिष्ठधर्मितावच्छेदकताया धर्मविधया कार्यतावच्छेदकघटकतया तेन संबन्धेन द्रव्यत्वस्य कार्याधिकरणदेशत्वादुक्तकार्यताया घटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वघटितधर्मावच्छिन्नत्वाचोक्तसामग्र्या द्रव्यत्वे निरुक्तशाब्दोत्पत्तिप्रयोजकत्वमव्याहतम्। घटत्वनिष्ठधर्मितावच्छेदकतायाः घटत्वावच्छिन्नप्रकारकशब्दत्वघटित-धर्मावच्छिन्नकार्यतायामनवच्छेदकत्वेन घटत्वे निरुक्तशाब्दोत्पत्तिप्रयोजकत्वं च न कस्याश्चिदस्ति सामग्र्याइति धर्मिताव-च्छेदकत्वादेः कार्यतावच्छेदकसंबन्धत्वविरहेपि घटत्वावच्छिन्नप्रकारकशाब्दत्वस्य कार्यतानवच्छेदकत्वेपि च द्रव्यत्वउक्त-शाब्दोत्पत्तिरुपपादयितुं शक्यते नच घटत्व आपादयितुमित्यभिसंधाय धर्मितावच्छेदकतायाइत्याद्युक्ताशङ्कोन्मेषबीजवाक्य-संवलितं द्रव्यत्वनिष्ठायाइत्यादिहेतुवाक्यसहितं द्रव्यत्वे निरुक्तशाब्दबोधोत्पत्तिप्रयोजकत्वपरं वाक्यमाह। द्रव्यत्वादौ धर्मि-तावच्छेदकतेत्यादि। **सामग्र्येवेति।** एवकारेण धर्मितावच्छेदकतासंबन्धेन कारणत्वेनाभिमतयोग्यताज्ञानादिघटितसमु-दायस्य सामग्रीत्वव्यवच्छेदः।

केचित्तु द्रव्यत्वादाविति सप्तम्यावृत्तित्वमर्थस्तच्च शाब्दबोधेऽन्वेति द्रव्यत्वे शाब्दबोधस्य वृत्तित्वमुपपादयितुमाह–द्रव्यत्वनिष्ठा-याइत्यादि। अयमाशयः समवायादिसंबन्धस्य कार्यतानवच्छेदकत्वे कालिकप्रत्यासत्त्या काले प्रत्यासन्नेभ्यः कारणेभ्यः कालसंबन्ध-रूपाद्युत्पत्तिमात्राद्य कार्यं समवायेनास्मिन्नेवात्मन्यधुना वर्तते नान्यत्रेति व्यवस्थानुपपत्तेर्यथा समवायादेः कार्यतावच्छेदक-संबन्धत्वमावश्यकं न तथा धर्मितावच्छेदकत्वादेः समवायेन स्वोत्पादकसामग्र्यात्मनि समुत्पद्यमानस्य ज्ञानस्य द्रव्यत्वाद्यवच्छि-न्नविशेष्यकत्वादेव धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादिमात्रवृत्तित्वसिद्धेरितिधर्मितावच्छेदकतासंबन्धेन कार्योत्पादिकायां अतिरिक्तसामग्र्या अनावश्यकतया न तथास्ति घटत्वे निरुक्तशाब्दापत्तिसंभावनापीत्याहुः। तत्रेदमवधेयम् अत्रपक्षे चैत्रे निरुक्तशाब्दबोधउत्पद्यते द्रव्यत्वउत्पद्यत इत्यादौ चैत्रादिवृत्तिनिरुक्तशाब्दबोधउत्पत्त्याश्रयइत्यस्यैव विषयत्वमङ्गीकार्यम् तथा-सति अस्य प्रामाण्यवत्स्थलेपद्ममुत्पद्यतइत्यादीनामपि प्रामाण्यं स्यात् उत्पत्तिकाले स्थलस्य विद्यमानतया यथाकथंचित्संबन्धेन तद्वृत्तित्वविशिष्टपद्मउत्पत्त्याश्रयत्वस्याबाधितत्वात् निरुक्तवृत्तित्वादेः क्लृप्ततया कार्यतावच्छेदकसम्बन्धेन वृत्तित्वमात्रविषयताकथ-नस्य राजाज्ञासमशीलत्वात् धर्मितावच्छेदकत्वस्य वृत्त्यनियामकत्वेन संबन्धित्वविषयताया अप्युभयत्र समानत्वात् अवच्छेदक-त्वावगाहितापक्षे च तस्य कल्प्यतया प्रत्ययानुरोधात् कार्यतावच्छेदकसंबन्धेन कार्याधिकरणएव कल्पत इति नोक्तदोषः

**वतीति वाच्यम् । योग्यताज्ञानस्य धर्मितावच्छेदकं निवेश्य तद्भेदेन अनन्तकारणताकल्पनमपेक्ष्य लाघवाद्धर्मितावच्छेदकतासंबन्धेन शाब्दबुद्धौ तादृशसंबन्धेन धर्मितावच्छेदकमनिवेश्य हेतुताकल्पनस्यैव युक्तत्वात् ।**

---

किञ्चात्र पक्षे धर्मितावच्छेदकतायाः कार्यतावच्छेदकसंबन्धत्वविरहेपीत्युक्तेर्नास्ति प्रयोजनम् कार्यतावच्छेदकसंबन्धेनैव वृत्तित्वं यदि स्यात्संभावितमपिस्यादपिशङ्कोत्थापकतया सार्थकत्वंनास्ति च तदिति । **तद्भेदेनानन्तकारणताकल्पनमपेक्ष्य लाघवादिति** । ननु धर्मितावच्छेदकसंबन्धेन कार्यकारणभावे पुरुषान्तरीयद्रव्यत्वाद्यवच्छिन्नविशेष्यताकयोग्यताज्ञानात्पुरुषान्तरस्य शाब्दबोधापत्तिवारणाय तत्तत्पुरुषीयत्वस्य कार्यतावच्छेदककारणतावच्छेदककोटौ प्रवेशनीयतया तद्भेदेन तत्पक्षेपि कार्यकारणभावानन्त्यम् विषयपुरुषयोरनन्तत्वेन न्यूनाधिकभावस्य परिच्छेत्तुमशक्यत्वादिति चेन्न, पुरुषदशकं विषयदशकं चानुसृत्य न्यूनाधिकभावविज्ञाने लाघवगौरवस्य सुज्ञानत्वात्, तथाहि पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावेन तत्तत्पुरुषत्वस्यापि धर्मितावच्छेदकत्वसंभवेन कार्यकारणभावदशकं विषयनिष्ठतत्तद्धर्मस्य धर्मितावच्छेदकतया तद्भेदेन कार्यकारणभावदशकमिति विंशतिकार्यकारणभावः धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वे तत्तत्पुरुषभेदेन कार्यकारणभावदशकमेवेति न्यूनाधिकभावः सुज्ञान एवेति । यत्तु पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावे प्रकारत्वविशेष्यत्वयोर्निरूप्यनिरूपकभावापन्नयोः कार्यकारणभावावच्छेदककोटौ प्रवेशनीयत्वेन विशेष्यविशेषणभावे विनिगमनाभावाद्विषयदशकं पुरुषदशकं चानुसृत्य विचारे विंशतिकार्यकारणभावः धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या कार्यकारणभावे च तत्तत्पुरुषीयत्वप्रवेशेन तत्तद्दशकमेवेति व्यक्तो न्यूनाधिकभावइति तन्न यथाह्येकैकप्रकारस्य विशेष्यदशकं तथैकैकविशेष्यस्य प्रकारदशकमपि संभवतीति विनिगमकाभावात्प्रकारतावच्छेदकताप्रत्यासत्त्यापि कार्यकारणभावो वक्तव्यस्तथा च धर्मितावच्छेदकताप्रत्यासत्त्याकार्यकारणभावदशकं प्रकारतावच्छेदकताप्रत्यासत्त्या च कार्यकारणभावदशकं तत्रैकैकस्मिन् तत्तत्पुरुषीयत्वप्रवेशे कार्यकारणभावानां द्वेशते प्रकारत्वविशेष्यत्वयोर्विनिगमनाविरहेण परस्परविशेष्यविशेषणभावापन्नयोः कार्यकारणभावघटकत्वेपि पुरुषनिष्ठप्रत्यासत्त्या हेतुहेतुमद्भावपक्षेपि द्वेशते एव अत्र त्वेकैकस्मिन्विशेष्ये प्रकारदशकमध्यात्त्रयाणां त्रयाणामेव विशेष्यत्रय एव चैककस्य प्रकारत्वेसंभविते द्वेशते एव कार्यकारणभावानां, धर्मितावच्छेदकनिष्ठप्रत्यासत्त्याहेतुहेतुमद्भावे पुरुषनिष्ठप्रत्यासत्त्याहेतुहेतुमद्भावे तु त्रयाणां प्रकारत्वसंभावनायां प्रथमतस्त्रिंशद्विशेष्यविशेषणभावे विनिगमनाविरहेण च षष्टिः संभाव्यत इति विपरीतएव न्यूनाधिकाभाव इति न दूषणम् कालादेरनन्ततयैकपुरुषज्ञानेप्येकस्मिन् विशेष्ये सर्वेषां प्रकारत्वसंभवात् अन्यथा तत्तत्पुरुषाणां विशेष्यत्वावलम्बनेनोद्भावितस्याधिक्यस्याप्यवकाशो न स्यात् पुरुषत्रयस्यैव विशेष्यत्वसंभावनयोक्तरीत्या षष्टिकार्यकारणभावेन विंशत्यधिकशतकार्यकारणभावस्यैव प्रसक्तेः । अथ यदुक्तमात्मनिष्ठप्रत्यासत्त्याकार्यकारणभावे तत्तत्पुरुषस्य विशेष्यत्वेन तदाधिक्यं तन्न सङ्गच्छते तथाहि प्रागुक्तरीत्या प्रकारतावच्छेदकतासंबन्धेन कार्यकारणभावस्यापि स्वीकरणीयतया विषयनिष्ठप्रत्यासत्त्या हेतुहेतुमद्भावपक्षेपि तत्तत्पुरुषत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वाद्यवच्छिन्नकार्यकारणभावदशकस्य वक्तव्यतया तत्र तत्तत्पुरुषीयत्वप्रवेशे पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणपक्षवत्पुरुषविशेष्यत्वनिबन्धनस्य कार्यकारणभावस्य प्रसङ्ग इत्येतदबोधविजृम्भितम् । विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे धर्मित्वप्रकारत्वावच्छेदकत्वाभ्यां द्विविधकार्यकारणभावसद्भावेपि विशेष्यदशकं प्रकारदशकं पुरुषदशकं चानुसृत्य विचारे सर्वेषां सर्वविशेष्यत्वप्रकारत्वसंभवेन तत्तद्धर्मावच्छिन्नप्रकारत्वघटितधर्मावच्छिन्नहेतुहेतुमद्भावदशकत्रये तत्तद्धर्मावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्नहेतुहेतुमद्भावदशकत्रयेच तत्तत्पुरुषीयत्वप्रवेशे षट्शत्येव कार्यकारणभावानां संभवति, पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावपक्षे तु त्रिंशतामेकैकधर्मावच्छिन्नप्रकारतानिरूपितस्वातिरिक्तोनत्रिंशद्धर्मावच्छिन्नविशेष्यत्वघटितधर्मावच्छिन्नोनत्रिंशत्कार्यकारणभावे सप्तत्युत्तराष्टशती कार्यकारणभावानां, तत्र च प्रकारत्वविशेष्यत्वयोः विशेष्यविशेषणभावे विनिगमनाविरहाद्द्वैगुण्यप्रसक्तौ सुतरामाधिक्यमिति, वस्तुतः परस्परविशेष्यविशेषणाभावे तत्तत्पुरुषस्य विशेष्यत्वानुशरणेपि पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभाव एवाधिक्यम्, तथाहि दश[illegible]मवलम्ब्यविचारे स्वातिरिक्तोनविंशतितत्तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्तद्धर्मावच्छिन्नप्रकारत्वघटितोनविंशतिगुणितविंशतिकार्यकारणभावे प्रकारत्वविशेष्यत्वयोः परस्परं विशेष्यविशेषणभावे विनिगमनाविरहात् षष्ठ्यधिकसप्तशती कार्यकारणभावानां विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावे चतुःशत्येवेति । इदमुपलक्षणम् तत्तद्धर्मावच्छिन्नविशेष्यत्वस्य कारणतावच्छेदकघटकत्वेऽवच्छेदकत्वविशेषणतया तत्तद्धर्माणां तत्तत्संबन्धतया चाधेयत्वस्य कारणतावच्छेदकघटकत्वादपि गौरवं बोध्यम् ॥

ननु द्रव्यत्वावच्छिन्नविशेष्यकप्रमेयत्वावच्छिन्नविशेष्यकज्ञाने ज्ञानमिदं घटाभाववति प्रमेये घटप्रकारताकमित्यप्रामाण्यज्ञानास्कन्दिते द्रव्यत्व इव प्रमेयत्वे प्रमेयत्वइव द्रव्यत्वेऽप्यप्रामाण्यज्ञानस्योत्तेजकत्वानुत्तेजकत्वयोर्घटत्वावच्छिन्नप्रकारकशाब्दबोधस्यानुपपत्तिरापत्तिश्चेति पुरुषनिष्ठप्रत्यासत्त्या हेतुहेतुमद्भावोङ्गीकरणीयः तत्र च प्रमेयत्वावच्छिन्नविशेष्यकशाब्दबोधे प्रमेय-

घटत्वादिर्धर्मितावच्छेदकघटत्वाद्यवच्छिन्नप्रकारकयोग्यताज्ञानबलादेव घटत्वादौ धर्मितावच्छेदकतासंबन्धेन तदापत्तेः । न च योग्यताज्ञानस्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या हेतुत्वोपगमे द्रव्यत्वाद्यवच्छिन्नस्य पदादनुपस्थितत्वेपि द्रव्यत्वादौ तादृशप्रत्यासत्त्या प्रत्यासन्नयोग्यताज्ञानात्तत्र प्रत्यासत्त्यातादृश शाब्दबोधापत्तिः। आत्मनिष्ठप्रत्यासत्त्या हेतुभूतां द्रव्यत्वाद्यवच्छिन्नोपस्थितिमन्तरेणापि तादृशप्रमेयत्वाद्यवच्छिन्नोपस्थित्यादिदशायां प्रमेयत्वादौ धर्मितावच्छेदकतासंबन्धेन योग्यताज्ञानस्य फलजनकत्वात्तादृशद्रव्यत्वाद्यवच्छिन्नोपस्थितिविरहस्याकिंचित्करत्वादिति वाच्यम् । समानप्रकारताप्रत्यासत्त्या पदार्थोपस्थितेः शाब्दबोधे हेतुत्वोपगमात् ।

---

त्वावच्छिन्नविशेष्यत्वघटिताप्रामाण्यग्रहस्यैवोत्तेजकत्वं वाच्यमिति न दोषसंभव इति चेन्न स्वविशिष्टावच्छेदकत्वसंसर्गेण हेतुत्वे दोषाभावात् । वैशिष्ट्यं च स्वीयघटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यताकत्वस्वनिष्ठविशेष्यतानिरूपितघटत्वावच्छिन्नप्रकारताकत्वनिष्ठप्रकारतानिरूपितघटाभाववन्निष्ठविशेष्यत्वनिष्ठविषयतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वोभयसंबन्धेन। अवच्छेदकतावत्ताच स्वसामानाधिकरण्यस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वस्वावच्छेदकसंबन्धावच्छिन्नत्वैतच्चतुष्टयसंबन्धेन । नचोक्ताकाराप्रामाण्यज्ञानेनावच्छिन्नत्वसंसर्गेण विशेष्यत्वे प्रमेयत्वादेर्विशेषणत्वमनुभूयते नवाघटाभाववतोविशेष्यत्वविशेषणतापीति वाच्यम् धर्मिपारतन्त्र्येण सप्तम्यभिलप्यमाने विशेष्यत्वे प्रमेयत्वादेः प्रकारत्वसंभवात् घटाभाववतोप्याधेयतया विशेष्यत्वएवमानाभ्युपगमाच्च प्रमेये तद्भाने बाधनिश्चयविधया प्रतिबन्धकत्वादेवापत्त्यसंभवेन तस्योत्तेजकत्वानावश्यकत्वात् अवच्छिन्नत्वप्रकारकज्ञानसङ्ग्रहाय च विशेष्यत्वनिष्ठविषयतानिरूपितस्वरूपातिरिक्तसंबन्धानवच्छिन्ननिरूपितत्वनिष्ठविषयतानिरूपितावच्छेदकतात्वावच्छिन्नविषयतावदवच्छेदकतावत्त्वस्य संसर्गघटकताविवक्षिता नातोऽननुगमइत्येषादिक् । घटाभाववतिघटप्रकारताकमिदंज्ञानमित्याद्यप्रामाण्यज्ञानानामभावस्तुयोग्यताज्ञानएव विशेषणीयइति ।

**योग्यताज्ञानबलादेवेति** । उक्तज्ञानस्य कारणतावच्छेदकवत्त्वे तद्घटितसमुदायस्यापिसामग्रीत्वसंभवेन कार्यतावच्छेदकसंबन्धेन धर्मितावच्छेदकत्वेन कार्यतावच्छेदकघटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वावच्छिन्नापादकत्वसंभव इति भावः । ननु योग्यताज्ञानस्यविषयनिष्ठप्रत्यासत्त्यालाघवेन हेतुत्वेप्युपस्थितेः समवायेनैवहेतुत्वं युक्तं नच तत्तद्धर्मावच्छिन्नविषयकशाब्दबोधे तत्तद्धर्मावच्छिन्नविषयकोपस्थितित्वेन कारणत्वस्य वाच्यतया समवायेनहेतुत्वे अनन्तकारणत्वापत्त्या गौरवमितिवांच्यम् स्वत्वस्याननुगतत्वेन सर्वत्र परम्परायाः संसर्गत्वे मानाभावेन च स्वजनकज्ञानीयेत्यादिवक्ष्यमाणप्रकारेण विषयनिष्ठप्रत्यासत्या हेतुत्वस्यासंभवात् विशिष्टशक्तिज्ञानकारणत्वानुरोधेन वृत्तिशरीरेविषयप्रवेशस्यावश्यकत्वेन विषयनिष्ठप्रत्यासत्त्याहेतुत्वे तत्तत्पुरुषीयत्वप्रवेशेन विपरीतगौरवाच्चेत्याशयवानाह—**आत्मनिष्ठप्रत्यासत्त्याहेतुभूतामिति। उपस्थितिमन्तरेणेति** । ननु कारणतावच्छेदकेन समवायेन कार्याधिकरणे द्रव्यत्वादावप्रत्यासन्नत्वादेवोपस्थितेः सहकारित्वासंभवे व्यभिचारेण तत्प्रदर्शनमफलम् । किंचोपस्थितेर्व्यतिरेको न कालगतो नवा संबन्धमात्रावच्छिन्नप्रतियोगिताको नचाप्यात्मनिष्ठः प्रकृतेर्विवक्षितः तत्पुरुषस्य द्रव्यत्वावच्छिन्नोपस्थितिविरहकालेपि पुरुषान्तरस्य तत्सद्भावात् पुरुषान्तरीयोपस्थितेर्विषयतया द्रव्यत्वे सत्त्वात् आत्मनः कार्यदेशत्वविरहाच्चेति कारणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकः कार्याधिकरणनिष्ठः सहकारिताविरहप्रयोजकतया विवक्षणीयः सच द्रव्यत्वावच्छिन्नोपस्थितेरिव घटत्वावच्छिन्नोपस्थितेरप्यभावो द्रव्यत्वे विद्यमानस्तस्याइव तस्या अप्यसहकारितां व्यवस्थापयतीति तद्विरहकालेऽप्यापत्तिः संभवतीति तदुपेक्षणं च निर्बीजमितिचेन्न तत्तद्धर्मावच्छिन्नकार्यस्य तत्तद्धर्मावच्छिन्नकार्यतावच्छेदकसंबन्धेनोत्पत्तिस्तत्तद्धर्मव्यापकाशेषधर्मावच्छिन्नकारणानां स्वस्वकार्यतावच्छेदकसंबन्धेन कार्याधिकरणे कारणतावच्छेदकसम्बन्धेन प्रत्यासन्नानां पूर्वकालसत्त्वमपेक्षत इत्यभिप्रायात् । नच किमर्थमेतदङ्गीकार्यमिति वांच्यं ज्ञानत्वावच्छिन्नंप्रति त्वङ्मनोयोगस्य हि लाघवेनात्मनिष्ठप्रत्यासत्त्यैव हेतुत्वेन विषये तदभावसत्त्वेन तस्यासहकारितया तद्भावदशायामापत्तिरितरथा दुरुद्धरैव स्यात् एवंच सहकारिताविरहप्रयोजको न कार्याधिकरणे तदभावः किंतुकारणतावच्छेदकसंबन्धेन स्वाधिकरणावच्छेद्यः पूर्वकालवर्त्तितदभावएवेत्युपस्थितिमन्तरेणेत्यादिग्रन्थसङ्गतिः । घटत्वावच्छिन्नोपस्थितिमन्तरेण घटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वावच्छिन्नस्य न क्वाप्युत्पत्तिसंभवः घटत्वावच्छिन्नविषयकशाब्दबुद्धित्वस्य तद्व्यापकत्वेन तदवच्छिन्नकारणीभूताया आत्मनि प्रत्यासन्नायाः तदुपस्थितेः पूर्वकालसत्वस्यापेक्षणीयत्वात् । नच योग्यताज्ञानकार्यतावच्छेदकस्य तत्पुरुषीयत्वघटितत्वेन तदवच्छिन्नस्य तत्पुरुषस्य घटत्वावच्छिन्नोपस्थितिविरहे पुरुषान्तरस्य तदुपस्थितिदशायां चापत्तिरेवमपि दुर्वारेति वाच्यम् स्वस्वकार्यतावच्छेदकसम्बन्धेन तत्तद्धर्मावच्छिन्नकार्याधिकरणे प्रत्यासन्नानामित्यस्य विवक्षणीयत्वात् तत्पुरुषीयघटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वावच्छिन्नस्य समवायेनाधिकरणे तत्पुरुषे तदानीमुक्तोपस्थितेरप्रत्यासन्नत्वात् । नचैवं द्रव्यत्वावच्छिन्नोपस्थितेः किमिति पूर्वकालसत्त्वं नापेक्ष्यत इति वाच्यम् द्रव्यत्वावच्छिन्नविषयकशाब्दत्वस्योक्तोपस्थितिजन्यतावच्छेदकस्य घटत्वावच्छिन्नप्रकारकशाब्दबुद्धित्वाव्यापकत्वादिति ।

**उपस्थितेः शाब्दबोधे हेतुत्वोपगमादिति** । अथ घटो द्रव्यमित्याकाराकाङ्क्षाज्ञानमन्तरेणापि योग्यताज्ञानात्प्रमेयत्वे शा-

व्दवोधोत्पत्त्या निरुक्ताकाङ्क्षाज्ञानस्य तत्सहकारित्वासंभवेन तद्विरहदशायां द्रव्यत्वे निरुक्तशाब्दवोधापत्तेरेवमपि तदवस्था । यदिच निर्विशेषस्य सामान्यस्याभावेन तत्तद्धर्मावच्छिन्नकार्योत्पत्तौ तत्तद्धर्मव्याप्ययत्किञ्चिद्धर्मावच्छिन्नकारणानां स्वस्वकार्यतावच्छेदक-संवन्धेन तत्तद्धर्मावच्छिन्नकार्याधिकरणे प्रत्यासन्नानां पूर्वकालसत्त्वमपेक्षितंभवतीत्यस्याभ्युपगमे घटत्वावच्छिन्नप्रकारतानिरूपि-तद्रव्यत्वावच्छिन्नविशेष्यताकशाब्दवुद्धित्वावच्छिन्नं प्रति घटोद्रव्यमित्याकाङ्क्षाज्ञानस्य कारणत्वेन नोक्तापत्तिसम्भव इत्युच्यते तदापि घटः प्रमेय इत्याकाङ्क्षाज्ञानकाले द्रव्यत्वे शाब्दवोधापत्तिर्दुवारा घटत्वावच्छिन्नप्रकारतानिरूपितप्रमेयत्वावच्छिन्नविशेष्य-ताकशाब्दवुद्धित्वस्यापि व्याप्यत्वेनोक्ताकाङ्क्षाज्ञानस्य तदवच्छिन्नकारणत्वात् । नच द्रव्यत्वे प्रकारतयोपस्थितेरभावान्नापत्तिरिति वाच्यं आकाङ्क्षावहिर्भूतपदवृत्तिज्ञानजन्यद्रव्योपस्थितिकालएवापत्तौ तात्पर्यात्। नचोपस्थितिकारणतावच्छेदककोटौ पदस्य विशि-ष्यैवप्रवेशः कार्यः प्रमेयादिपदजन्योपस्थितिमन्तरेणोक्ताकाङ्क्षाज्ञानस्य फलानुपधायकत्वेन तथाविधोपस्थितेरेव सहकारितया नोक्तापत्तिरिति वाच्यं घटत्वेऽप्येवमापत्त्यसंभवात्। घटत्वावच्छिन्नप्रकारतानिरूपितद्रव्यत्वाद्यवच्छिन्नविशेष्यताकशाब्दवुद्धित्वादेरेव निरुक्तधर्मव्याप्यत्वेन तदवच्छिन्नसामग्र्याः द्रव्यादिपदजन्योपस्थितिसहकृतघटोद्रव्यमित्याद्याकाङ्क्षाज्ञानघटिताया घटोघटइत्याकाङ्क्षा-ज्ञानकालेऽसत्त्वात् घटपदजन्यद्रव्यत्वावच्छिन्नोपस्थितिसहकृतघटोघटइत्याकाङ्क्षाज्ञानघटितसमुदायस्य सामग्रीत्वेऽपि तत्सामग्र्या नियमतो घटपदलक्षणाज्ञानजन्योपस्थितिघटितत्वेन उपस्थितिशाब्दवोधकार्यकारणभावावच्छेदकशरीरे विषयप्रवेशाभावेऽपि तत्तत्सत्त्वस्य तत्रासंभवात् घटोद्रव्यमित्याकाङ्क्षाज्ञानस्य द्रव्यपदलक्षणाज्ञानजन्योपस्थितिसहकृतस्य प्रमेयत्वे शाब्दोत्पादकतया त-द्घटितसामग्रीकाले यद्यपि घटत्वे संभवत्यापत्तिस्तथापि घटोघट इत्याद्युपक्रमविरोधप्रसङ्गो दोषः । किंचोपस्थितिकारणतावच्छेदक कुक्षौ विशिष्यपदप्रवेशे कार्यतावच्छेदकेऽपि व्यभिचारवारणाय तादृशोपस्थित्यव्यवहितोत्तरत्वस्य प्रवेश्यतया तदवच्छिन्नस्य यो-ग्यताज्ञानकार्यतावच्छेदकावच्छिन्नव्यापकत्वासंभवेन येन सम्बन्धेन यद्धर्मावच्छिन्नंप्रतीत्याद्युक्तेरप्यसङ्गतिः स्यात् । नच द्रव्यत्वप्र-मेयत्वादौ सर्वत्रैव धर्मितावच्छेदके शक्तिलक्षणाज्ञानजन्यद्रव्यपदप्रयोज्यद्रव्यत्वप्रमेयत्वाद्युपस्थित्यव्यवहितोत्तरशाब्दवुद्धेः सत्त्वेन कथं न व्यापकवत्त्वमिति वाच्यं वृत्तित्वस्यानुगताननतिप्रसक्तस्य दुर्वचत्वेन तत्तत्पदशक्तिज्ञानजन्योपस्थित्यव्यवहितोत्तरशाब्द-वुद्धित्वतत्तत्पदलक्षणाज्ञानजन्योपस्थित्यव्यवहितोत्तरशाब्दवुद्धित्वाद्यवच्छिन्नंप्रत्येव कारणत्वस्य विशिष्यवक्तव्यतया व्यभिचा-रस्य स्फुटत्वात् । सतिचैवं विशिष्यपदप्रवेशे कृतेप्याकाङ्क्षाज्ञानोपस्थित्योः सहकारित्वस्य न संभवः द्रव्यपदशक्तिज्ञान-जन्योपस्थित्यभावे तल्लक्षणाज्ञान जन्योपस्थितिकाले द्रव्यपदलक्षणाज्ञानजन्योपस्थित्यभावे तत्तच्छक्तिजन्योपस्थितिकाले घटोद्रव्यमित्याकाङ्क्षाज्ञानस्य फलोपधायकत्वादुक्ताकाङ्क्षाज्ञानाभावे पटोद्रव्यमित्याकाङ्क्षाज्ञानकाले निरुक्तोपस्थित्योश्च फलो-पधायकत्वात् । इत्थं च ग्रन्थानां भूयो यथाश्रुतार्थपरित्यागस्य दृष्टतयोक्तग्रन्थस्यापि विशिष्यपदप्रवेशेनाका-ङ्क्षावहिर्भूतपदजन्योपस्थितिकाले ह्यापत्तिवारणे उक्तरीत्यापत्तिसङ्गमने च तात्पर्यमित्युक्तिरपि ग्रन्थाननुरोधिनां निरस्ता वेदितव्या । यच्चात्राकाङ्क्षाज्ञानस्य स्वीयस्वाद्यन्तघटपदत्वावच्छिन्नप्रकारतानिरूपितस्वाद्यव्यवहितपूर्ववर्त्यानुपूर्व्यवच्छिन्नविशेष्यता-विशिष्टविषयतानिरूपितवृत्तिप्रकारतानिरूपितधर्मितावच्छेदकताविशिष्टोपस्थितिप्रकारत्वसंवन्धेन कारणत्वमुपगम्याकाङ्क्षाज्ञान-विरहकाले द्रव्यत्व आपत्तिवारणं घटत्वे तत्संपादनं च केषांचित्तदप्युपेक्षणीयम् । एवं सत्युपस्थितेः समानप्रकारतया कार्यकार-णभावस्यानावश्यकत्वापत्त्या तदवलम्व्युक्तग्रन्थस्याभासत्वप्रसङ्गात् घटोद्रव्यमित्याकाङ्क्षाज्ञाने प्रमेयादिपदाद्द्रव्योपस्थितौ चैवमपि हि तदवस्थैवापत्तिः । कालान्तरीणवृत्तिज्ञानीयद्रव्यपदनिष्ठविषयताया निरुक्तविशेष्यताविशिष्टत्वसंभवेन परम्परया तन्निरूपिताया धर्मितावच्छेदकताया वैशिष्ट्यस्योक्तोपस्थितीयप्रकारत्वे संभवात् एकक्षणावच्छिन्नैकात्म्यवृत्तित्वसंवन्धेन स्वनिरूपकज्ञानविशिष्टज्ञा-नीयत्वस्वावच्छेदकावच्छिन्नत्वोभयसंवन्धेन विशेष्यतावैशिष्ट्योक्तिरपि समानाकारकज्ञानीयविषयतयोरेकत्वे कालान्तरीणस्य घ-टोद्रव्यमित्याकाङ्क्षाज्ञानस्यापि स्वनिरूपकतया तद्विशिष्टकालान्तरीणवृत्तिज्ञाननिरूपितत्वस्य संभवान्नापत्तिवारणायालम्। एकक्षणाव-च्छिन्नैकात्मकवृत्तित्वसंवन्धेन स्वविशिष्टज्ञानीयत्वस्वीयस्वाद्यन्तघटपदत्वावच्छिन्नप्रकारतानिरूपितस्वाव्यवहितपूर्ववर्त्यानुपूर्व्यवच्छि-न्नविषयतावच्छेदकावच्छिन्नत्वोभयसंवन्धेन स्वविशिष्टत्वस्य विषयतायामुपादानं । यत्र द्रव्यं द्रव्यपदशक्यमित्यपेक्षाबुद्ध्यात्मकवृत्ति-ज्ञानमनन्तरं द्रव्योपस्थितिस्ततो घटोद्रव्यमित्याकाङ्क्षाज्ञानं प्रमेयपदवृत्त्यवगाहिसमूहालम्वनात्मकं ततश्च द्रव्योपस्थितिः [illegible] द्रव्यपदवृ-त्तिज्ञानस्योक्ताकाङ्क्षाज्ञानविशिष्टत्वेन तन्निरूपितद्रव्यपदत्वावच्छिन्नविषयतानिरूपितवृत्तिविषयतानिरूपितधर्मितावच्छेदकताविशिष्ट-त्वस्य प्रमेयपदवृत्तिज्ञानजन्योपस्थितिप्रकारतायां सत्त्वेन तेन संवन्धेन तदुपस्थितिकाले अपि द्रव्यत्वे निरुक्ताकाङ्क्षाज्ञानस्य सत्त्वेन तदुत्तरं शाब्दवोधापत्त्या हेयम् । अत्रोक्तापेक्षाबुद्ध्यात्मकवृत्तिज्ञानोत्तरोपस्थितिजन्मानुधावनम् स्वनिरूपकज्ञानविशिष्टज्ञानीयत्वस्या-प्युक्तधर्मितावच्छेदकतावैशिष्ट्यघटकतयोपादाने दूषणसंपत्त्यर्थम् । तथासति प्राथमिकोपस्थितेः स्वनिरूपकज्ञानविशिष्टत्वसंभ-वेन तदीयत्वस्य द्वितीयोपस्थितिप्रकारतायामपि संभवात् समानाकारकज्ञानीयविषयत्वयोरैक्यात् । यत्तु येन संवन्धेन यद्धर्मावच्छिन्नकार्यंप्रतीत्याद्युक्तिरुपस्थितिशाब्दवुद्ध्योः सामान्यकार्यकारणभावाभिप्रायेणाकाङ्क्षावहिर्भूतपदवृत्तिज्ञानजन्योपस्थि-तिकाले शाब्दापत्तिवारणं तु पदविशेषमन्तर्भाव्यशाब्दवुद्ध्युपस्थित्योर्विशेषकार्यकारणभावस्वीकारेणेति तदपि मन्दम् तथा-सति स्वजनकवृत्तिज्ञानीयेत्यादिसंवन्धशरीरानुधावनस्य वैफल्यप्रसङ्गात् । संबन्धान्तरज्ञानजन्योपस्थितिकालेचापत्तेर्विशेषका-र्यकारणभावेनैव वारणात् । किंचोक्तकार्यकारणभावस्य सामान्यत्वमपि न संभवति स्वजनकज्ञानीयेत्यादिसम्बन्धशरीरे

वृत्तिविषयताया वृत्तित्वावच्छिन्नत्वेन प्रवेशे शक्तित्वादिना संबन्धमवगाहमानाज्ज्ञानादेव जायमानाया उपस्थितेः शाब्दबोधकारणत्वेन शाब्दबोधानुकूलपदपदार्थसम्बन्धत्वात्मकवृत्तित्वस्य तत्र विषयतानवच्छेदकत्वादनुपपत्तिः शाब्दस्य स्यात् वृत्तित्वसमानाधिकरणत्वेन प्रवेशे च संबन्धत्वेन शक्त्याद्यवगाहिज्ञानादुपस्थितेः शाब्दबोधापत्तिरिति शक्तित्वाद्यवच्छिन्नविषयताया विशिष्यनिवेशनीयतया कारणतावच्छेदकसंबन्धस्यैक्यासंभवात्। एवं पदधर्मिकवाचकत्वावगाहिज्ञानजन्योपस्थितेरपि शाब्दकारणत्वेनतस्याः स्वजनकज्ञानीयवृत्तिप्रकारतानिरूपितधर्मितावच्छेदकताविशिष्टप्रकारत्वस्याप्रसिद्ध्या तत्रानुपपत्तिः स्यादिति वृत्तिप्रकारतानिरूपितपरम्परावच्छेदकताविशिष्टप्रकारताया अपि संसर्गताया वाच्यत्वात्। अपि च विषयप्रवेशेप्यावश्यक एव तत्तद्धर्मविशिष्टनिरूपितत्वावगाहिज्ञानस्यैव कारणतायाः शक्तिवादे व्यवस्थापितत्वादिति चेदत्र ब्रूमः भगवदिच्छाविषयताभेदभिन्नमूर्तिकतया द्विविधवाच्यवाचकत्वयोस्तद्भेदभिन्नस्वरूपाणां क्षणानां ज्ञानेभ्यो जायमानानामुपस्थितीनां कारणत्वस्यैकस्य संपत्तये स्वजनकज्ञानीयवाच्यत्वप्रकारतानिरूपितधर्मितावच्छेदकत्ववाचकत्वप्रकारतापरम्परानिरूपितावच्छेदकत्ववाच्यसंबन्धित्वप्रकारतानिरूपितधर्मितावच्छेदकत्वसंबन्धिवाचकत्वप्रकारतापरम्परानिरूपितावच्छेदकत्वविशिष्टप्रकारतानामन्यतमत्वेन कारणतावच्छेदकसंबन्धत्वं वाच्यम्। नचैवमन्यतमत्वस्य कारणतावच्छेदकघटकत्वेऽपसिद्धान्तः आकाङ्क्षाज्ञानाव्यवहितोत्तरत्वस्यात्र ग्रन्थे शक्तिवादे चोपस्थित्यव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वोक्तिविरोधश्चान्यतमत्वेन कारणतयैव व्यभिचारवारणासंभवादिति वाच्यम् नह्यन्यतमत्वं नाम कश्चिदपूर्वं वस्तु कारणतावच्छेदकतया कल्प्यते कॢप्तस्य हि तस्य न वाङ्मात्रेण कारणतावच्छेदकत्वं च वारयितुं शक्यते अपितु स्वभावानुपलब्धिलिङ्गकानुमानभङ्गसहकारिनियमानुपपत्तिगौरवादिदोषसद्भावाद्वह्निगतवैजात्यादिवदवश्यमभ्युपेय इति सिद्धान्तस्य न हानिः नह्यत्र शक्तिज्ञानलक्षणाज्ञानजन्योपस्थितीनां प्रतिनियतसहकारिभेदः प्रामाणिकमतावभासते यदनुपपत्त्याश्रीयेतापि कार्यकारणभावभेदः। नच तत्तत्पदजन्योपस्थितीनां तत्तत्पदघटिताकाङ्क्षाज्ञानं प्रति नियतमेवास्ति सहकारीति वाच्यम् एतत्प्रत्याशाया अपि तत्तत्पदशक्तिलक्षणाज्ञानजन्योपस्थितीनामुक्तक्रमेणैककारणत्वएव संभवाद्विभिन्नकारणत्वे सहकारित्वासंभवस्यानुपदमुक्तत्वात्। उक्तरीत्या हेतुत्वस्वीकारे च नास्त्येव हि पदविशेषस्य प्रवेशइति कुतः प्रतिनियतसहकारिप्रत्याशा स्वक्रियाव्याघातात्स्वतोवा यत्र शङ्काविरहस्तत्र कार्यानुपलब्धिलिङ्गकानुमानयोः संभवेन तद्भङ्गस्य दोषताया एव हि नास्ति संभवः। नचैवमाकाङ्क्षावहिर्भूतपदवृत्तिज्ञानजन्योपस्थितिकाले शाब्दापत्तिर्दुर्निवारैवेति वाच्यम् सहकारिवादजीवनभूतायां हि सामग्रीव्याप्तौ सत्याम् तथाहि यथा लाघवज्ञानसहकारादनुमितिर्व्यापकतानवच्छेदकरूपेणापि विधेयं परिच्छिनत्ति तथा घटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वाद्यवच्छिन्नव्याप्यतया व्यापकसामग्रीघटकोपस्थितिवैशिष्ट्योपरागेण घटोद्रव्यमित्याद्याकाङ्क्षाज्ञानघटितां सामग्रीं गृह्णन् ग्राहकः पदान्तरज्ञानाद्यकल्पनालाघवज्ञानसाचिव्यवशात् कारणतानवच्छेदकेनाप्याकाङ्क्षाघटकपदघटितसंबन्धविशेषेण कार्याधिकरणप्रत्यासन्नत्वविशिष्टाया एवोपस्थितेर्वैशिष्ट्यं परिच्छिनत्तीत्युक्तस्थले नास्ति कार्यनियता काचिदपि सामग्रीति नापत्तिसंभवः। आत्मनिष्ठप्रत्यासत्त्याकारणत्ववादिनाप्युक्तैव गतिरङ्गीकरणीया आकाङ्क्षाज्ञानोपस्थित्योः स्वस्वाव्यवहितोत्तरत्वावच्छिन्नं प्रति कारणत्वे प्रागुक्तरीत्या सहकारित्वस्यासंभवात् तत्र तत्राकाङ्क्षाज्ञानादीनामन्यतमत्वेन कारणत्वानुक्तिश्चाकाङ्क्षाज्ञानगतान्यतमत्वस्य दुर्ज्ञेयत्वात् अन्यतमत्वस्य भेदकूटावच्छिन्नप्रतियोगिताकभेदरूपत्वेन विशेष्यतावच्छेदकधर्मं विना खलेकपोतन्यायेन विशेषणत्वस्याव्यवच्छेदकताया व्यासज्यवृत्तित्वस्य चानभ्युपगमात्तत्र कूटत्वस्यैकविशिष्टापरत्वरूपतया भेदानां विशेष्यविशेषणभावे विनिगमनाविरहेणान्यतमत्वस्यानेकत्वादवच्छेदकभेदस्य सामान्यतोऽवच्छेद्यभेदकत्वाभ्युपगमाद्गुरुधर्मावच्छिन्नकारणतानन्त्यप्रसङ्गरूपगौरवाच्चान्यतमत्वस्य कारणतावच्छेदकत्वासंभवात् एकत्र निर्णीत इति न्यायावलम्बनाच्च प्रकृते चान्यतमत्वस्य सुज्ञेयत्वात् लाघवानुरोधेन विनापि विशेष्यतावच्छेदकं खलेकपोतन्यायेन भानस्यावच्छेदकताया व्यासज्यवृत्तित्वस्य चाङ्गीकारात् समनियतधर्माणां भेदस्यावच्छेद्यभेदकत्वानङ्गीकाराच्चान्यतमत्वस्य कारणतावच्छेदकघटकत्वमभ्युपेत्य सामान्यकार्यकारणभावोक्तिरुपचकेवलान्वयिग्रन्थे। कार्यतावच्छेदकेऽव्यवहितोत्तरत्वमनिवेश्य व्यभिचारवारणायान्वयव्यतिरेकसहचारविषयताद्वयान्यतरवत्त्वेन सहचारज्ञानस्य व्याप्तिग्राहकत्वं इत्यादिनान्यतरत्वस्य कारणतावच्छेदकघटकत्वं स्वयमेव ग्रन्थकृता स्वजनकज्ञानीयविशेष्यत्वनिष्ठप्रकारतानिरूपिताया पदविषयतानिरूपितविषयत्वविषयतानिरूपितजन्यत्वविषयत्वविषयतानिरूपितबोधविषयत्वविषयतानिरूपितविषयत्वप्रकारत्वनिष्ठविषयतातन्निरूपितावच्छेदकतानिरूपितत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकताविशिष्टप्रकारत्वादेः संसर्गत्वस्य विवक्षणाद्विशिष्टनिरूपितशक्तिज्ञानस्य हेतुत्वेऽपि न विषयप्रवेशस्यावश्यकता। निरुक्तक्रमेण च सामग्रीव्याप्तेर्निर्वचने घटत्वावच्छिन्नप्रकारकशाब्दबोधव्याप्यसामग्रीकोटौ स्वजनकज्ञानीयेत्याद्युक्तसंबन्धेन घटत्वे प्रत्यासन्नाया उपस्थितेः प्रवेश्यत्वान्न घटोपस्थितिविनिगमकाले धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वे शाब्दबोधापत्तिः। नच यत्र क्वचन स्वजनकज्ञानीयेत्यादिसंबन्धेन विद्यमानाया व्यापकसामग्र्या अपेक्षितत्वे शाब्दापत्तितादवस्थ्यात् धर्मितावच्छेदकतासंबन्धेन कार्याधिकरणे प्रत्यासन्नाया उपस्थितेः व्यापकसामग्रीविधयापेक्षितत्वस्य येन संबन्धेनेत्यादिग्रन्थस्वरससिद्धताया वाच्यतया निरुक्तसामग्रीव्याप्तौ तत्प्रवेशस्य समूलत्वेन संभवेऽपि घटत्वे प्रत्यासन्नाया उपस्थितेः कथं प्रवेशो मूलविरहादिति वाच्यम् धर्मितावच्छेदकतासंबन्धेन द्रव्यत्वादौ घटत्वावच्छिन्नप्रकारकशाब्दबुद्धिरुत्पद्यमाना प्रकारतया घटत्वेप्युत्पद्यतएव तत्र चोप-

**येन संबन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन संबन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकता तेन संबन्धेन तद्धर्मावच्छिन्नकार्योत्पादकसामग्र्या अपि तेन संबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तावपेक्षिततया प्रकारतासंबन्धेन द्रव्यत्वादौ पदजन्यपदार्थोपस्थित्यसत्त्वे तत्र धर्मितावच्छेदकतासम्बन्धेन शाब्दबोधापत्तेरयोगात् । न च यत्र प्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञानजन्यप्रमेयत्वाद्यवच्छिन्नविशेष्यकोपस्थितावेव उद्बोधकान्तरात् द्रव्यत्वाद्यवच्छिन्नस्य भानं तत्र द्रव्यत्वाद्यवच्छिन्नविषयकशाब्दापत्तिवारणाय तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविशेष्यकवृत्तिज्ञानजन्यतद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुता वाच्या तथा च प्रकारविशेषनिवेशस्यावश्यकत्वे विषयनिष्ठप्रत्यासत्त्या हेतुताकल्पनमयुक्तम् तथा सति पुरुषभेदेन कार्यकारणभावबाहुल्यप्रसङ्ग इति वाच्यम् । स्वजनकज्ञानीयवृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकता-**

---

स्थितिविरहेऽपि द्रव्यत्वे धर्मितावच्छेदकतासंबन्धेनोक्तशाब्दबुद्धिर्यदुत्पद्येत शाब्दोपस्थित्यो :सामान्यकार्यकारणभावे व्यभिचारः स्यादिति तद्वारणस्यैव तत्प्रवेशे मूलत्वात् । नचैवमेतस्मादेव मूलाद्धर्मितावच्छेदकता प्रत्यासत्त्योपस्थितेः सामग्रीव्याप्तौ प्रवेशसंभवे येन संबन्धेनेत्याद्युक्तिर्निरर्थिकेति वाच्यम् येन संबन्धेनेत्यादेर्येन संबन्धेन यद्धर्मावच्छिन्नकार्यं प्रति येन संबन्धेन यद्धर्मावच्छिन्नकार्यस्य व्यापकत्वं तेन संबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ तद्धर्माश्रयीभूततत्तद्धर्मावच्छिन्नयत्किंचिद्व्यक्तेस्तत्तद्धर्मावच्छिन्नकार्यतावच्छेदकसंबन्धेन यद्यदाश्रकरणं तत्र कारणतावच्छेदकसंबन्धेन प्रत्यासन्नानां तत्तद्धर्मावच्छिन्नकार्यकारणानां पूर्वसत्त्वमपेक्ष्यत इत्यर्थः । तथासति घटत्वावच्छिन्नप्रकारकशाब्दत्वाश्रयीभूतायाः शाब्दत्वावच्छिन्नायाः घटोद्रव्यमित्यादिशाब्दव्यक्तेः प्रकारतासंबन्धेनाधिकरणेषु यावत्सु घटत्वद्रव्यत्वादिषु स्वजनकज्ञानीयेत्यादिसंबन्धेन प्रत्यासन्नानामुपस्थितीनामपेक्षितपूर्वसत्त्वकत्वेऽत एव घटाद्युपस्थितेर्व्याप्यीभूतसामग्र्यां प्रवेशस्य समूलत्वात् व्यभिचारवारणस्य चोक्तापेक्षामूलस्यैव मूलत्वादुक्तग्रन्थासङ्गतिविरहात् । एवं च व्याप्यीभूतायाः सामग्र्याः शथा घटत्वावच्छिन्नप्रकारकयोग्यताज्ञानेन घटोद्रव्यमित्याकाङ्क्षाज्ञानेन स्वजनकज्ञानीयेत्याद्युक्तसंबन्धेन प्रत्यासन्नाभ्यामुपस्थितित्वावच्छिन्नाभ्यां घटपदद्रव्यपदजन्योपस्थितिभ्यां च घटितत्वं तथा घटोघटइत्याद्याकाङ्क्षाज्ञानेन स्वजनकज्ञानीयेत्याद्युक्तसंबन्धेन प्रत्यासन्नाभ्यां घटपदजन्योपस्थितिंच घटितत्वं लक्षणाज्ञानस्थलानुरोधेन स्वीकरणीयमिति घटत्वे निरुक्तशाब्दापत्तिर्भवत्युपपादिता ।

अथवा घटत्वावच्छिन्नप्रकारताकशाब्दबुद्धौ धर्मितावच्छेदकतया द्रव्यत्वादौ समुत्पद्यमानाया प्रकारतावच्छेदकतासंसर्गेण घटत्वेऽपि द्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धिरुत्पद्यते स्वीक्रियते च विनिगमकाभावाद्द्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रत्यपि कारणता तथासति प्रकारतावच्छेदकतासंबन्धेन द्रव्यत्वावच्छिन्नविशेष्यताकशाब्दबुद्धित्वावच्छिन्नं प्रति प्रकारतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नस्य व्यापकत्वेन तदवच्छिन्नकारणीभूतोपस्थितेः प्रकारतावच्छेदकतासंबन्धेन कार्याधिकरणे तत्र घटत्वे प्रत्यासन्नायाः पूर्वकालसत्त्वस्यापेक्षिततया घटत्वावच्छिन्नविषयकोपस्थितिरहितो घटत्वावच्छिन्नप्रकारकशाब्दसामग्रीक्षणो येन संबन्धेनेत्याद्युक्तयथाश्रुतनियममहिम्नैव दुर्लभ इत्यापत्त्यभावादुक्तार्थो न तस्य विवक्षणीय इत्यलम् ।

**येन संबन्धेन यद्धर्मावच्छिन्नेत्यादि** । यद्धर्मं प्रति यद्धर्मस्य व्यापकत्वं तद्धर्मावच्छिन्नकार्यतावच्छेदकसंबन्धेन तद्धर्मावच्छिन्नकार्योत्पत्तौ तत्तद्धर्मावच्छिन्नकार्यकारणतावच्छेदकसंबन्धेन तद्धर्मावच्छिन्नसामग्र्यपेक्षितेत्युक्तावपिसामञ्जस्ये येन संबन्धेनेत्याद्युक्तिः कार्यतावच्छेदककारणतावच्छेदकसंबन्धलाभायैवेत्यवधेयम् । अथात्र व्यापकत्वं प्रतियोगिवैयधिकरण्यघटितं तदघटितं वा । नाद्यः संयोगत्वावच्छिन्नं प्रति विभागत्वावच्छिन्नस्यापि व्यापकत्वापत्त्या संयोगोत्पत्तौ विभागसामग्र्या अप्यपेक्षितत्वापत्तेः न द्वितीयः तत्पुरुषीयघटत्वावच्छिन्नप्रकारताकशाब्दबुद्धित्वावच्छिन्नाधिकरणे द्रव्यत्वे तत्पुरुषीयशाब्दत्वावच्छिन्नाभावस्य तादृशशाब्दानधिकरणकालावच्छेदेन विद्यमानतया तस्यापि व्यापकत्वानुपपत्तेरिति चेन्न तद्धर्मावच्छिन्नाधिकरणे तद्धर्मावच्छिन्नोत्पत्तिकालावच्छेदेन वर्तमानो योऽभावस्तस्यैव व्यापकताघटकत्वेन विवक्षितत्वात् । नचैवमपि घटीयपाकजेरूपादिकं प्रति घटैकत्वादीनां व्यापकतया पाकजरूपोत्पत्तौ संख्यासामग्र्या अपेक्षितत्वापत्तिरिति वाच्यं तादृशाभावाप्रतियोगित्वोत्पत्तिकालावच्छेद्यस्वाधिकरणताकत्वस्य विवक्षितत्वादिति । **स्वजनकज्ञानीयेति** । जनकत्वमत्राव्यवहितोत्तरपूर्ववर्तितामात्रमधिकप्रवेशे प्रयोजनविरहात् । **विशेष्यतावच्छेदकताविशिष्टप्रकारतेति** । धर्मितावच्छेदकत्वमात्रस्य संसर्गत्वे द्रव्यत्वप्रमेयत्वाद्यवच्छिन्नविशेष्यकवृत्तिज्ञानाद्द्रव्यत्वावच्छिन्नांशेऽप्रामाण्यज्ञानास्कन्दिताज्जायमानायाः प्रमेयत्वावच्छिन्नमात्रविषयकोपस्थितेरुक्तधर्मितावच्छेदकतासंसर्गेण द्रव्यत्वेऽपि सत्त्वेन तत्र शाब्दबोधः स्यादिति तद्विशिष्टप्रकारत्वस्य संसर्गत्वानुधावनम् । वैशिष्ट्यंच स्वसामानाधिकरण्यादिभिर्बोध्यमिति कश्चित् तदसत् लाघवेन स्वप्रयोज्यत्वमात्रस्य संसर्गत्वौचित्यात् । अनुभवबलाचोपस्थितीया यादृशसम्बन्धावच्छिन्ना यादृशरूपावच्छिन्ना निरवच्छिन्ना वा यन्निष्ठा या विषयता तस्यां तादृशसंबन्धावच्छिन्नायास्तादृशरूपावच्छिन्नाया निरवच्छिन्नाया वा तन्निष्ठवृत्तिज्ञानधर्मितावच्छेदकताया एव प्रयोजकत्वस्य स्वीका-

विशिष्टप्रकारतासंबन्धेनोपस्थितेर्हेतुतां स्वीकृत्य तादृशापत्तेर्वारणात्। न च पदार्थेपि प्रकारतासंबन्धेन शाब्दबोधोत्पत्त्या तत्र प्रकारतासंबन्धेन पदार्थोपस्थितेरभावात्प्रकारनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुता व्यभिचारेण कल्पयितुमशक्येति वाच्यम्। परामर्शकारणताविचारदर्शितदिशाव्यभिचारस्य वारणीयत्वादिति चेत्तर्हि तद्धर्मावच्छिन्नभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मभेदस्यापि हेतुतायाः स्वीकरणीयतया न घटो घट इत्यादिस्थले शाब्दबोधापत्तिः। स घट इत्यादिवाक्याज्जातित्वादिना घटत्वादिधर्मितावच्छेदककस्य स्वरूपतो घटत्वादिप्रकारतावच्छेदककस्य घटः स इत्यादिवाक्यात्स्वरूपतो घटत्वादिधर्मितावच्छेदककस्य जातित्वादिविशिष्टघटत्वावच्छिन्नप्रकारताकस्य शाब्दबोधस्योपपत्तये विशेष्यत्वप्रकारत्वयोरवच्छेदकत्वे निरवच्छिन्नत्वेन विशेषणीये घटी नीलघट इत्याद्यन्वयबोधस्य प्रामाणि-

रात् द्रव्यं द्रव्यपदशक्यं घटश्च द्रव्यसंबन्धीति समूहालम्बनोत्तरं जायमानाया बाधकमहिम्ना घटमात्रविषयकोपस्थितेः घटत्वप्रकारकत्वस्य द्रव्यत्वनिष्ठधर्मितावच्छेदकतावैशिष्ट्यवारणस्य सामानाधिकरण्यफलस्य घटत्वावच्छिन्नधर्मिकवृत्तिज्ञानोत्तर जायमानाया बाधकबलादुद्बोधकान्तरजन्यायाः प्रमेयावच्छिन्नमात्रविषयकोपस्थितेः प्रमेयत्वावच्छिन्नप्रकारत्वस्य घटत्वनिष्ठनिरवच्छिन्नधर्मितावच्छेदकतावैशिष्ट्यवारणस्य स्वानवच्छेदकानवच्छिन्नत्वफलस्य तत्रैवोपस्थितिवृत्तिज्ञानयोर्विपरीतक्रमेण जायमानत्वे घटत्वनिष्ठनिरवच्छिन्नप्रकारतायां प्रमेयत्वावच्छिन्नधर्मितावच्छेदकतावैशिष्ट्यवारणस्य स्ववृत्तित्वफलस्योद्बोधकान्तरजन्योपस्थितीयसमवायावच्छिन्नत्वप्रकारत्वे संबन्धान्तरेण वृत्तिज्ञानीयद्रव्यत्वनिष्ठधर्मितावच्छेदकतावैशिष्ट्यवारणस्य स्वावच्छेदकसंबन्धावच्छिन्नत्वफलस्यापि तावन्मात्रेणैव संपन्नत्वाच्च। अत एव निरुक्तचतुष्टयसंबन्धेन वैशिष्ट्यप्रवेशेऽपि द्रव्यत्वावच्छिन्नधर्मिकवृत्तिज्ञानाद्प्रामाण्यज्ञानास्कन्दितादुत्तरमुद्बोधकवशाद्द्रव्योपस्थितौ द्रव्यत्वे शाब्दापत्तिर्दुर्निवारैव स्यादिति निरस्तम्।

**नच पदार्थेऽपि प्रकारतासंबन्धेन शाब्दबोधोत्पत्त्येति**। अथोक्तधर्मितावच्छेदकताविशिष्टप्रकारतायाः प्रकारतात्वेन प्रवेशे प्रयोजनाभावाद्वैशिष्ट्यस्य स्वप्रयोज्यत्वस्वनिरूपितधर्मिताप्रयोज्यत्वान्यतरसंबन्धेनोक्तौ प्रकारे न व्यभिचारसंभवः। नच कारणस्य मुख्यविशेष्येऽपि सत्वेन तत्र प्रकारतया शाब्दानुत्पत्त्यान्वयव्यभिचारः विषयत्वमात्रस्य कार्यतावच्छेदकसंसर्गत्वे संसर्गेऽपि शाब्दोत्पत्तेस्तत्र कारणाभावाद्व्यतिरेकव्यभिचार इति वाच्यम् संसर्गत्वान्यविषयत्वस्य कार्यतावच्छेदकसंसर्गत्वोक्तौ दोषाभावादिति चेन्न एवं सत्यपूर्वव्यक्तेः शाब्दबोधे भानानुपपत्तेरुक्तप्रकारस्योपेक्षणीयत्वादिति। **तदुपस्थितिप्रकारताविशिष्टप्रकारताया इति**। स्वत्वस्याननुगतत्वेऽपि स्वप्रकारताविशिष्टप्रकारत्वस्य न कार्यतावच्छेदकसंसर्गत्वं वैशिष्ट्यनियामकसंसर्गस्य सामानाधिकरण्यादिरूपत्वे नीलपदवृत्तिज्ञानजन्यनीलोपस्थितौ यथाकथंचिन्नीलवतो भाने उक्तदोषतादवस्थ्यात्। प्रयोज्यत्वस्य संसर्गत्वे उपस्थितशाब्दबुद्ध्योरुक्तकार्यकारणभावे कार्यतावच्छेदककारणतावच्छेदकविषयत्वयोः प्रयोज्यप्रयोजकभावः प्रयोज्यप्रयोजकभावे च तद्घटितकार्यकारणभावइत्यन्योन्याश्रयात्। अपितु स्वजनकज्ञानीयधर्मितावच्छेदकताविशिष्टप्रकारत्वसंबन्धस्य शाब्दबुद्धित्वावच्छिन्नकार्यतावच्छेदकत्वे तात्पर्यम् स्वमुपस्थितिः शाब्दबोधप्रकारत्वस्यापि परम्परयाऽस्त्येव धर्मितावच्छेदकताप्रयोज्यत्वम्। एवञ्च स्वरूपतो द्रव्यत्वप्रकारकोपस्थितेः प्रमेयत्वादिना द्रव्यत्वे शाब्दबोधापत्तिः प्रमेयत्वावच्छिन्नद्रव्यत्वप्रकारतायाः स्वरूपतो द्रव्यत्वोपस्थितिकार्यत्वावच्छेदकत्वासम्भवात्। स्वजनकज्ञानीयधर्मितावच्छेदकताप्रयोज्यत्वाभावात् उपस्थितिकारणतानवच्छेदकीभूतोक्तविषयत्वप्रयोज्यत्वस्य तथात्वेप्यन्योन्याश्रयो यद्यानुभविकस्तदा सामानाधिकरण्यादिचतुष्टयस्यैव तथात्वं बोध्यम्, यद्वा प्रकारताविशिष्टप्रकारत्वं संसर्गः कार्यतावच्छेदको वाच्यः वैशिष्ट्यंच स्वतादात्म्यस्वप्रयोजकवृत्तिज्ञानीयधर्मितावच्छेदकताकत्वोभयसंबन्धेन बोध्यम्। शाब्दबुद्धेर्वृत्तिज्ञानधर्मिनिष्ठप्रकारत्वस्य स्वप्रयोजकवृत्तिज्ञानीयधर्मितावच्छेदकत्वाप्रसिद्ध्या प्रकारताविशिष्टत्वासंभवान्न प्रकारे व्यभिचारः। अत्र निरुक्तापत्तिवारणाय निरुक्तप्रकारतात्वसंबन्धेन शाब्दबुद्धौ निरुक्तप्रकारताप्रयोज्यत्वसंसर्गेणोपस्थितेः कारणत्वमेवेच्छन्ति केचित्। अथ प्रमेयस्स इत्यादौ तच्छब्दान्नीलस्य घटस्य च विशृङ्खलतयोपस्थितौ नीलघटत्वावच्छिन्नविशेष्यकप्रमेयत्वावच्छिन्नप्रकारकशाब्दबोधापत्तिः शाब्दबोधप्रकारे नीलत्वघटत्वादौ प्रकारतयोपस्थितेः सत्त्वात्। नचाकाङ्क्षाज्ञानविरहान्न तथेति वाच्यं नीलत्वसंसर्गस्य वृत्तिभास्यतया आकाङ्क्षाया अप्रयोजकत्वादिति चेन्न यद्विषयतयोरुपस्थितौ न निरूप्यनिरूपकभावः शाब्दबोधे निरूप्यनिरूपकभावापन्नयोस्तयोराकाङ्क्षाप्रयोज्यत्वस्यैवोपेयत्वान्नीलत्वप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यत्वस्योपस्थितिविषयतासजातीयताविरहेणाकाङ्क्षाप्रयोज्यत्वस्यैवाभ्युपगन्तव्यत्वात् प्रकृते चाकाङ्क्षाभावादापत्तिविरहादिति विभावनीयम्। परामर्शकारणताविचारदर्शितदिशेत्यादिक्वचित्पाठः तस्य यथाधर्मितावच्छेदकतासंबन्धेन तल्लिङ्गकानुमितौ धर्मितावच्छेदकतासंबन्धेन तल्लिङ्गकपरामर्शत्वेन कारणतायां यत्र भाविज्ञानमप्रमेत्यप्रामाण्यज्ञानमनन्तरं वह्निव्याप्यधूमवान् पर्वत इति परामर्शस्ततो वह्निव्याप्यालोकवद्द्रव्यमिति परामर्शस्ततो वह्निमान् पर्वतः वह्निमद्द्रव्यमिति समूहालम्बनानुमितिः तत्र तस्या धूमालोकोभयलिङ्गिकाया द्रव्यत्वपर्वतत्वयोरुभयत्र सत्त्वेन तत्तल्लिङ्गकपरामर्शस्य

(१) पुस्तकान्तरे पाठोऽयम्।

कत्वेन्यत्र दर्शितरीत्या सोऽप्युपपादनीयः । स स इत्यादिवाक्याज्जातित्वाद्यवच्छिन्नधर्मितावच्छेदकताकतद्धर्मावच्छिन्नप्रकारतावच्छेदकताकाभेदान्वयबोधस्य वारणाय तद्धर्मावच्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकत्वप्रत्यासत्त्या शाब्दबोधं प्रति तद्धर्मभेदस्यापि पृथक्कारणत्वं कल्पनीयम् । एवं दण्डवान् दण्डवानित्यादिवाक्याद्दण्डसंयोगत्वाद्यवच्छिन्नवति तदवच्छिन्नवदभेदान्वयबोधस्य वारणाय दण्डसंयोगत्वाद्यवच्छिन्नावच्छेदकताकप्रकारतानिरूपितविशेष्यतानिरूपितसंयोगत्वाद्यवच्छिन्नावच्छेदकतानिरूपितावच्छेदकतावच्छेदकत्वसंबन्धेन शाब्दबोधे दण्डत्वादिभेदस्यापि पृथक्कारणत्वं कल्पनीयम् । अवच्छेदकतायां निरवच्छिन्नत्वनिवेशोऽपि पूर्व-

---

तत्रासत्त्वाद्व्यभिचारस्य वारणाय तत्तल्लिङ्गकपरामर्शधर्मितावच्छेदकताविशिष्टधर्मितावच्छेदकतायाः कार्यतावच्छेदकसंबन्धत्वमुपेयते तथात्रापि वृत्तिज्ञानधर्मितावच्छेदकताविशिष्टप्रकारताया एव कार्यतावच्छेदकसंबन्धत्वं स्वीक्रियते इत्यर्थः ।

**अन्यत्र दर्शितरीत्येति ।** पर्याप्तिविवक्षयेत्यर्थः । तथाच निरवच्छिन्नघटत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रकारताकशाब्दबुद्धित्वावच्छिन्नं प्रत्येव घटत्वभेदस्य कारणतया नीलघटत्वावच्छिन्नप्रकारताकशाब्दबोधस्यातादृशत्वान्नानुपपत्तिः । अत्र च तद्रूपवृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसंबन्धेन शाब्दबुद्धौ तद्रूपभेदस्य कारणत्वे तात्पर्यं बोध्यम् । नातो नीलत्वघटत्वोभयधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबुद्धौ नीलत्वभेदघटत्वभेदयोः कारणत्वे विधेयांशेऽधिकावगाहिनो नीलघटो घट इत्यस्यानुपपत्तिः तदुभयभेदस्य कारणत्वे तस्य केवलान्वयित्वेन नीलघटो नीलघट इतिशाब्दबोधापत्तिः। अथ साक्षात्परम्परासाधारणावच्छेदकतास्वीकारे विवक्षितस्य निरवच्छिन्नत्वस्य वैयर्थ्यं तदस्वीकारे तन्निवेशस्यावश्यकतया विधेयांशेऽधिकावगाहिशाब्दबोधानुपपत्तिः तत्र प्रकारताया घटगतैकत्व एव वृत्तित्वात्प्रकारतानिरूपितनिरवच्छिन्नावच्छेदकत्वस्य नीले विरहात् एवमुद्देश्यांशेऽधिकावगाहिशाब्दबोधापत्तिर्दुर्वारा । कैश्चिदत्र साक्षात्परम्परासाधारणनिरूपितत्वमेव स्वीक्रियते निरवच्छिन्नप्रकारतावच्छेदकत्वतदवच्छेदकत्वादिविवक्षाया यथोक्तपर्याप्तिनिवेश एव तात्पर्यम् । उद्देश्यांशेऽधिकावगाहिशाब्दबोधवारणाय च तद्रूपभेदस्य कारणतांविहाय तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपभेदस्य तद्रूपव्यापकरूपभेदस्य वा कारणत्वं वाच्यं नच घटत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयतात्वस्य नीलघटत्वावच्छिन्नविषयत्व इव पीतघटत्वाद्यवच्छिन्नविषयत्वेपि सत्त्वेन तादृशविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकसमुदायत्वभिन्नत्वस्य नीलत्वघटत्वादिगतद्वित्वे घटत्वगतैकत्वे च सत्त्वादापत्तितादवस्थ्यमिति वाच्यं स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन तादृशविषयताविशिष्टान्यत्वस्यैव सत्त्वादित्याहुस्तन्मन्दम् जातित्वेन घटत्वावगाहिनो जातिमान् घट इतिशाब्दबोधस्यानुपपत्तेः घटत्वजातित्वगतद्वित्वस्योक्तविषयताविशिष्टत्वात् घटत्वगतैकत्वव्यापकत्वाच्चेतिचेदत्र ब्रूमः । घटत्वगतैकत्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन शाब्दबोधे घटत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रकारतावदन्यत्वं कारणम् । प्रकारतावत्ताच स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । तथा च घटोघट इत्यस्य च नापत्तिः नवा विधेयांशेऽधिकावगाहिनो घटोनीलघटइत्यस्यानुपपत्तिः । एवं जातित्वघटत्वगतद्वित्ववृत्तिप्रकारतानिरूपितविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन शाब्दबुद्धौजातित्वावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतावदन्यत्वं कारणमिति जातिमान् जातिमान् जातिमद्घटो जातिमानित्यस्य नापत्तिः नवा जातिमान् जातिमद्घट इत्यस्यानुपपत्तिः । अत्र स्वरूपत एकं घटत्वमेका जातित्वेन जातिरेकं च जातित्वमवच्छेदकमित्यपेक्षाबुद्ध्यनन्तरमेतानि घटत्वजातिजातित्वानि त्रीणि निरुक्तविषयतावच्छेदकानीति बुद्धिर्जायमाना यदि घटत्वजातिजातित्वगतत्रित्वे तस्य जातिमद्घटत्वावच्छिन्नविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वे चार्हति प्रामाण्यं तदोक्तैव रीतिस्साधीयसी आश्रयस्य द्वित्वादुक्तत्रित्वस्याप्रामाणिकत्वे जातिमान् घट इत्यस्य प्रथमे कार्यकारणभावे द्वितीये च जातिमान् जातिमद्घट इत्यस्यानुपपत्तिर्वक्ष्यमाणप्रकारेणैव वारणीया । एवं नीलत्वनीलघटत्वगतत्रित्ववृत्तिप्रकारतानिरूपितधर्मितावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकतासंबन्धेन शाब्दबुद्धौ नीलत्वावच्छिन्ननीलनिष्ठावच्छेदकतानिरूपितनिरवच्छिन्नघटत्वनिष्ठावच्छेदकताप्रकारतावदन्यत्वं कारणम् । तथासति नीलघटो नीलघटो द्रव्यं नीलघटो नीलघट इत्यस्य नापत्तिः नवा घटो नीलघट इत्यस्यानुपपत्तिरित्येषादिगन्यत्र तत्स्वयमूह्यम् ।

अथ कालिकेन घटत्वविशिष्टपरेण तच्छब्देन घटितात्सयइति वाक्याच्छाब्दबोधानुपपत्तिः उद्देश्यतावच्छेदकविधेयतावच्छेदकयोर्भेदविरहात् एवं कालिकेन प्रमेयत्वविशिष्टवत्परेणस्वरूपेण प्रमेयत्वविशिष्टवत्परेण च तच्छब्देन घटितात्सः स इति वाक्याच्छाब्दबोधानुपपत्तिः उद्देश्यविधेयभावावच्छेदकतावच्छेदकगतरूपस्य तदवच्छिन्नस्य च भेदस्य विरहादप्रसिद्धेश्च । नच धर्मसंसर्गसाधारणोद्देश्यविधेयभावावच्छेदकत्वतदवच्छेदकत्वादीनां पर्याप्तिर्विवक्षिता तथासति कालिकघटत्वादिगतरूपभेदस्य

वद्बोध्यः । वस्तुतस्तु तद्धर्मान्यवृत्तिविषयतासम्बन्धेन ज्ञानं प्रति तद्धर्मभेदत्वेन हेतुता लाघवात् । एवं च घटत्वाद्यवच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधं प्रति घटत्वाद्यन्यवृत्तिविषयतासंबन्धेन ज्ञानत्वाद्यवच्छिन्नस्य व्यापकतया घटत्वादौ तादृशविषयतासंबन्धेन ज्ञानत्वावच्छिन्नोत्पादकसामग्रीविरहेण न तत्र तादृशविशेष्यतावच्छेदकतासंबन्धेन शाब्दबोधापत्तिः । एवं च घटवान् घटवानित्यादिशाब्दबोधवारणानुरोधेन धर्मितावच्छेदकतावच्छेदकादिनिष्ठप्रत्यासत्त्या कारणत्वान्तरमपि न कल्प्यते । एवमुद्देश्यतावच्छेदकविधेययोरैक्येनैकोद्वावित्यादिवाक्यादेकत्वद्वित्वाद्यवच्छिन्ने एकत्वद्वित्वादीनां भेदान्वयबोधानुदयात्, एकत्वत्वद्वित्वत्वाद्यवच्छिन्नसमवायादिसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतानिरूपितसमवायादिसंसर्गावच्छिन्नावच्छेदकतावच्छेदकत्वादिसंबन्धेन शाब्दबुद्धौ एकत्वत्वद्वित्वत्वादिभेदस्य । एवं कर्म गच्छतीत्यादौ च कर्मत्वत्वाद्यवच्छिन्ने आधेयतासंबन्धेन तद्वतोऽन्वयबोधवारणाय कर्मत्वत्वाद्यवच्छिन्नावच्छेदकताकाधेयतासंबन्धावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासंबन्धेन शाब्दबोधे कर्मत्वत्वादिभेदस्य घटो न घट इत्याद्यनुमितेः शाब्दबोधस्य च वारणाय घटत्वाद्यवच्छिन्नभेदप्रकारतानिरूपितधर्मितावच्छेदकतासंबन्धेनानुमितौ शाब्दबोधे च घटत्वादिभेदस्य हेतुत्वान्तरकल्पनमनादेयमेव । तद्धर्मभेदस्यैकैककारणतयैव सकलातिप्रसङ्गवारणसंभवादिति कृतं पल्लवितेन ॥

---

समवायघटत्वादिगतरूपे संभवान्न दोष इतिवाच्यं कालिकेन घटत्वविशिष्टत्वे सति समवायेन द्रव्यत्वविशिष्टपरेण समवायेन
घटत्वविशिष्टत्वे सति कालिकेन द्रव्यत्वविशिष्टपरेण च तच्छब्देन घटितात्सः स इतिवाक्याच्छाब्दबोधानुपपत्तेस्तथाप्यवारणा-
दिति चेन्न विशेष्यतात्वसंबन्धेन शाब्दबुद्धौ प्रकारतावदन्यत्वं हि कारणम् । प्रकारतावत्ता च स्वनिरूपितत्वस्वनिरूपितावच्छेद-
कतात्वव्यापकत्वोभयसंबन्धेन । व्यापकता च स्वनिरूपितावच्छेदकतावत्त्वसंबन्धेन । अवच्छेदकतावत्ता च स्वसामानाधिकरण्यस्वा-
वच्छेदकसंबन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वतत्संबन्धावच्छिन्नस्ववृत्तित्वैतच्चतुष्टयसंबन्धेन । तथा च न क्वचिदप्युद्देश्य-
विधेययोः सर्वथैक्ये उद्देश्यस्याधिक्ये च शाब्दबोधप्रसङ्गः । नवा विधेयांशस्याधिकवस्तुघटितत्वे शाब्दबोधस्यानुपपत्तिः ।
अथावच्छेदकतावत्त्वनियामकसंबन्धघटकावच्छेदकत्वं साक्षात्परम्परया वोपादेयं नास्ति चोभयथापि तन्निर्दोषतासंभव-
रूपवद्वृत्तिद्रव्यत्वविशिष्टत्वे सत्यवायुस्पर्शवद्वृत्तिपृथिवीत्वविशिष्टपरेणावायुस्पर्शवद्वृत्तिद्रव्यत्वविशिष्टत्वे सति रूपवद्वृत्तिपृथिवीत्ववि-
शिष्टपरेण च तच्छब्देन घटितात्ससइतिवाक्याच्छाब्दबोधानुपपत्तेः विशेष्यत्वप्रकारत्वावच्छेदकत्वयोः साक्षादवच्छेदकत्वस्य
वृत्तित्वमात्रे सत्त्वादुभयत्रैवावच्छेदकत्वे रूपवन्निरूपितत्वस्पर्शवन्निरूपितत्वयोर्विशेष्यत्वप्रकारत्वद्वारेण परम्परावच्छेदकत्वाच्चेति
चेन्न विशेष्यत्वप्रकारत्वाद्वारत्वसहितनिरूपितत्वस्यैवोपादेयत्वाद् इत्थं चाननुगतकार्यकारणभावसरण्यनुसृतिरनुचिन्तनीया
ग्रन्थकर्त्तुरनुसरणीया नैवमेवंविधैव योग्यज्ञानकार्यकारणभावस्यापि रीतिरित्यलम् ।

**वस्तुतस्तुतद्धर्मान्यवृत्तिविषयतासंबन्धेनेत्यादि ।** अत्र यद्यपि घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वाव-
च्छिन्नस्य घटत्वावच्छिन्नप्रकारतानिरूपितधर्मितावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति नास्ति व्यापकत्वं नापि
चावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतानिरूपितधर्मितानिरूपितावच्छिन्नावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति
जातित्वप्रमेयत्वाभ्यां धर्मित्वप्रकारत्वावच्छेदकतया घटत्वावगाहिनः शाब्दबोधस्योत्पत्तेः तथापि निरवच्छिन्नघटत्वनिष्ठावच्छे-
दकताकप्रकारतानिरूपितविशेष्यतानिरूपितनिरवच्छिन्नावच्छेदकतासंबन्धेन शाब्दबुद्धिं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन
ज्ञानत्वावच्छिन्नस्य जातित्वाद्यवच्छिन्नावच्छेदकताप्रकारतानिरूपितधर्मितावच्छेदकतावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं
प्रति जातित्वान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्य संभवति व्यापकत्वम् । नच समवायसंबन्धावच्छिन्नजातित्वाद्यव-
च्छिन्नावच्छेदकताकप्रकारतानिरूपितधर्मितानिरूपितकालिकसंबन्धावच्छिन्नावच्छेदकतावच्छेदकत्वस्य जातित्वेऽपि सत्त्वेन
जातित्वाद्यन्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्य न तद्व्यापकत्वसंभव इति वाच्यम् । अवच्छेदकत्वयो-
रेकसंबन्धावच्छिन्नत्वस्य व्याप्यशरीरे प्रवेशनीयत्वात् । अथ विधेयांशेऽधिकावगाहिशाब्दबोधस्वीकारे निरव-
च्छिन्नघटत्वनिष्ठावच्छेदकताकप्रकारतानिरूपितनिरवच्छिन्नावच्छेदकतासंबन्धेन शाब्दबुद्धेः घटोनीलघटइत्यत्र घटत्वेऽपि
सत्त्वात्तत्र घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्यासत्त्वात्कथं व्यापकत्वम् । नच व्याप्यशरीरे घटत्वमा-
त्रावच्छिन्नत्वं प्रवेश्यमिति वाच्यं नीलघटो नीलघट इतिशाब्दबोधापत्तेर्दुर्वारत्वात् । नच घटत्वादिगतैकत्वान्यवृत्तिविषयताव-
च्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानत्वाद्यवच्छिन्नं प्रति घटत्वादिगतैकत्वादिभेदस्य कारणत्वं वाच्यं
तथासति तादृशज्ञानत्वावच्छिन्नस्य घटत्वैकत्ववृत्तिप्रकारताकविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंब-

**भेदान्वयबोधश्च प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपातार्थेन च सममेव जायते न त्वन्येन। सत्यपि पदार्थोपस्थितियोग्यताज्ञानादिरूपकारणकलापे राजा पुरुषः भूतलं घट इत्यादौ पुरुषाद्यंशे राजभूतलादेः सत्त्वाधेयतासंबन्धेन तण्डुलः पचति चैत्रः पच्यत इत्यादौ कर्मत्वकर्तृत्वा-**

---

न्वेन शाब्दबुद्धित्वावच्छिन्नव्यापकतया न कस्याश्चिदापत्तेः संभव इति वाच्यम् एवं सत्युद्देश्यांशेऽधिकावगाहिशाब्दबोधापत्तेर्दुर्वारत्वप्रसङ्गात्। समवायेन द्रव्यत्वविशिष्टत्वे सति कालिकेन घटत्वविशिष्टस्य विशेष्यत्वे कालिकेन द्रव्यत्वविशिष्टत्वे सति समवायेन घटत्वविशिष्टस्य प्रकारत्वे द्रव्यत्वघटत्वगतद्वित्ववृत्तिप्रकारताकविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वस्य घटत्वद्रव्यत्वगतद्वित्वेऽपि सत्त्वेन तत्रोक्तद्वित्वान्यवृत्तिविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन ज्ञानत्वावच्छिन्नस्यासत्त्वेनाव्यापकत्वप्रसङ्गाच्चेतिचेदुच्यते। निरवच्छिन्नघटत्वमात्रावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकत्वसंबन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्य निरवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितनीलत्वावच्छिन्नप्रकारतानिरूपितनीलत्वावच्छिन्नविशेष्यतानिरूपितानवच्छिन्नावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्य निरुक्तप्रकारतानिरूपितघटत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितधर्मितावच्छेदकतासंबन्धेन शाब्दबोधं प्रति नीलत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्य कालिकसंबन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकतानिरूपितसमवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितप्रकारतानिरूपित कालिकसंबन्धावच्छिन्नद्रव्यत्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन शाब्दत्वावच्छिन्नस्य निरुक्तप्रकारतानिरूपितसमवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकविशेष्यतानिरूपितकालिकसंबन्धावच्छिन्नावच्छेदकतासंबन्धेन शाब्दबोधं प्रति घटत्वान्यवृत्तिविषयतासंबन्धेन ज्ञानत्वावच्छिन्नस्य च व्यापकत्वसंभवेन न कोऽपि दोषः पदमादधाति एषा च रीतिः। शाब्दबोधं प्रत्येव भेदस्य कारणतापक्षेऽपि संभवत्येतदभिप्रायक एव च वस्तुतस्त्वित्यतः प्राचीनो ग्रन्थः (आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या च) अत्रापि घटत्वानवच्छिन्नविशेष्यतात्वसंबन्धेन ज्ञानत्वावच्छिन्नं प्रति घटत्वावच्छिन्नविशेष्यताभेदस्यैव कारणत्वं तस्य च घटत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वसंबन्धेन शाब्दबोधव्यापकतया घटोघट इत्यादिशाब्दापत्तेर्वारणं प्राग्वत्संभवति। आत्मनिष्ठप्रत्यासत्त्या विषयनिष्ठप्रत्यासत्त्या च कार्यकारणभावस्यैव संप्रदायसिद्धतया विषयतानिष्ठप्रत्यासत्त्या कार्यकारणभावस्य संप्रदायविरुद्धत्वाल्लघुभूतस्यापि तस्योपेक्षैव कृता ग्रन्थकृतेति विभावयन्तु सुधियः।

**भेदान्वयबोधश्चेत्यादि।** भेदशब्दोऽत्राभेदान्यसंबन्धबोधकःपारिभाषिकः। **प्रातिपदिकार्थधात्वर्थयोरिति।** नत्वस्य बोधइत्यनेनान्वयस्तथासति प्रातिपदिकार्थधात्वर्थविषयको बोधः प्रत्ययार्थनिपातार्थविषयक एव नत्वन्यविषयक इत्यर्थः स्यात्स च बाधितः प्रातिपदिकार्थधात्वर्थविषयकत्वादेव बोधस्य तस्माद्बोधविशेषणीभूते भेदान्वय एव तदन्वयो वाच्यः तथाच प्रातिपदिकार्थनिरूपितो धात्वर्थनिरूपितश्च यः प्रत्ययार्थनिरूपितार्थान्यतरनिरूपितो भेदान्वयस्तद्विषयक एव शाब्दबोधो जायते नतु तदन्यनिरूपिततादृशान्वयविषयक इत्यर्थः। एवं च शाब्दबोधीयाभेदान्यसम्बन्धावच्छिन्नप्रातिपदिकधात्वर्थान्यतरविषयताप्रत्ययनिपातान्यतरार्थविषयतानिरूपितैव नान्यार्थविषयतानिरूपिता भवतीति नियमः फलितार्थः। अथ प्रातिपदिकार्थविषयतायाः संसर्गतानिरूपितत्वात्पदार्थतावच्छेदकविषयतानिरूपितत्वाच्चोक्तनियमबाधः। नच प्रातिपदिकार्थविषयतानिरूपिताभेदान्यसंबन्धविषयतायां प्रत्ययाद्यर्थविषयतानिरूपितत्वनियमोऽपि संभवदुक्तिकः प्रातिपदिकार्थविषयतानिरूपितत्वात्संसर्गतावच्छेदकविषयतानिरूपितत्वाच्चोक्तसंसर्गतायाः इति चेन्न प्रातिपदिकवृत्तिज्ञानीयमुख्यविशेष्यताप्रयोज्या शाब्दबोधीया विषयता आकाङ्क्षाप्रयोज्यतादात्म्यातिरिक्तसांसर्गिकविषयतानिरूपितप्रत्ययादिप्रयोज्यविषयतानिरूपितैव नतु तादृशसंसर्गतानिरूपितप्रत्ययाद्यप्रयोज्यविषयतानिरूपितेति नियमस्य विवक्षितत्वात् पदार्थतावच्छेदकसंसर्गविषयतयोःप्रत्ययाद्यप्रयोज्यत्वेप्याकाङ्क्षाप्रयोज्यसंसर्गत्वानिरूपितत्वाद्दोषासंभवात्। अत्र प्रत्ययार्थप्रातिपदिकार्थयोः क्वचिदेकत्वेपि प्रातिपदिकादिप्रत्ययादिप्रयोज्यविषयतयोर्भेदादर्थघटितप्रागुक्तनियमवदत्र दोषस्य न संभव इति।

प्रातिपदिकार्थयोर्भेदेनान्वयाभ्युपगमे दोषमभिधाय क्रियाप्रातिपदिकार्थयोस्तदभ्युपगमे दोषमाह। **तण्डुलः पचति चैत्रः पच्यत इत्यादाविति।** नच तण्डुलरूपकर्मणश्चैत्ररूपकर्तुश्चानभिहितत्वात्तण्डुलपदोत्तरं द्वितीयायाश्चैत्रपदोत्तरं तृतीयाया एव संभवितया नोक्तप्रयोगप्रसङ्गसंभव इति वाच्यं कर्मत्वकर्तृत्वादेस्तत्तत्प्रातिपदिकार्थविशेष्यतया विवक्षितत्वे तत्तत्प्रातिपदिकोत्तरं द्वितीयादिर्भवतीत्यस्यैव तत्तदनुशासनार्थत्वमभिप्रेत्योक्तप्रयोगस्य प्रसञ्जितत्वात्प्रकृते कर्मत्वकर्तृत्वादेस्संसर्गतयैव विवक्षितत्वात्। द्वितीयादेरसंभवेन प्रातिपदिकार्थे विहितायाः प्रथमायाः संभवात् उक्तनियमाभ्युपगमे चोक्तस्थले कर्मत्वादेस्संसर्गतया बोधासंभवेन विवक्षाया असंभवादुक्तप्रयोगस्याप्रसक्तेः। यत्तु कर्मकर्तृगतसंख्यानभिधानस्यैव तत्तदनुशासनार्थतया कर्मत्वादिसंबन्धेन पाकादेः तण्डुलादावन्वये आख्यातार्थसंख्याया अपि तत्रैवान्वयस्य वाच्यतया संख्याभिधानस्यैव सत्त्वेन

दिसंबन्धेन तण्डुलचैत्रादौ पाकादेः स्वकर्मकत्वस्वकर्तृकत्वादिसंबन्धेन पाकाद्यंशेवा तण्डुलचैत्रादे-
रन्वयाबोधान्निपातातिरिक्तप्रातिपदिकार्थयोः क्रियातादृशप्रातिपदिकार्थयोश्च भेदेन साक्षादन्वय-
बोधस्याव्युत्पन्नत्वात् । विभक्त्यर्थमन्तराकृत्य तयोरप्यन्वयबोधात्साक्षादिति निपातातिरिक्तत्वादि-
विशेषणाद्, भूतले न घटः, घटो न पट, इत्यादौ घटादेर्नञर्थाभावेन मुखं चन्द्र इवेत्यादौ मुखचन्द्रा-
दीनामिवार्थसादृश्यादिना न कलञ्जं भक्षयेदित्यादौ नैयायिकमते नञुपस्थाप्येन बलवदनिष्टाननुब-
न्धित्वविशिष्टेष्टसाधनत्वादिरूपविध्यर्थाभावेन धात्वर्थभक्षणादेरनुयोगितया, गुरुमते तु विध्यर्था-
पूर्वांशे विशेषणतयान्वितेन नञुपस्थाप्याभावेन धात्वर्थभक्षणादेः प्रतियोगितयान्वयेऽपि न क्षतिः ।
राजपुरुष इत्यादिसमासस्थले तु पुरुषादिपदार्थेन समं राजादिपदार्थस्य न भेदान्वयबोधः किन्तु

---

न द्वितीयादिप्रसक्तिरिति तन्न तण्डुलाः पचति चैत्राः पच्यते इत्यादिप्रयोगप्रसङ्गस्याप्यानुभविकत्वेन तस्य चासंभवाद्बहुत्वाद्यन्व-
यिनि तण्डुलादावेकत्वान्वयस्यासंभवात् कर्मकर्तृगतसंख्याभिधानस्यैव कर्माद्यभिधानरूपतया यक्शपोरेव प्राप्तत्वेनोक्तप्रयोगा-
संभवस्य दुर्वारत्वात् स्वकर्मकत्वादिसंबन्धेन तण्डुलादेः पाकादावन्वयपक्षे तत्र संख्यान्वयस्य कथञ्चिदपि प्रसक्तेरभावाद्द्विती-
याद्यापत्तेरपि दुरुद्धरत्वाच्च । नन्वाख्यातस्य कर्मकर्त्राद्यनुशिष्टस्य तत्तदर्थाविवक्षाया वक्तुमशक्यतया कर्तृत्वकर्मत्वादेस्तत उप-
स्थितौ तत्रैव धात्वर्थान्वयसंभवो न प्रातिपदिकार्थे एकपदोपात्तत्वप्रत्यासत्तेरननुग्रहप्रसङ्गात् । नच ये विभक्त्यादीनां द्योतकत्व-
मभ्युपगच्छन्ति तेषां नाख्यातस्य कर्मत्वादिरर्थ इति नानुपपत्तिरितिवाच्यम् उक्तप्रयोगप्रसङ्गस्य विभक्तेरर्थद्योतकत्वमताभि-
प्रायकत्वस्य वक्तुमशक्यत्वात् उक्तनियमाभ्युपगमं विनैवोक्तप्रयोगवारणस्य तन्मते वक्ष्यमाणत्वादित्यनुशयेनाह । **स्वकर्मकत्व-
स्वकर्तृकत्वादिसंबन्धेनपाकाद्यंशेवेति** । प्रातिपदिकार्थधात्वर्थयोरन्योन्यविशेष्यविशेषणभावेनान्वयाभिप्रायेण तदुक्ति-
रित्यपि कश्चित् नचात्र विनिगमनाविरहः तात्पर्यस्यैव विनिगमकत्वादिति ।

**गुरुमत इति** । कार्यात्माऽपूर्वो विध्यर्थः तत्र धात्वर्थस्य विषयतया फलकामस्य च नियोज्यतया प्रथममन्वयः पश्चादनु-
पपत्तिसहकृतशब्दरूपोपादानाद्यागादौ कार्यत्वस्येष्टसाधनत्वस्य च फलकामे कर्तृत्वाधिकारित्वादेः प्रतीतिरिति प्रवर्तकज्ञानसंपत्ते-
स्तत्र प्रवर्तते निषेधस्थले च कलञ्जभक्षणाभावादेः विरोधिप्रयत्ननिर्वाह्यतया साध्यरूपे दुरितप्रतियोगिकत्वादपूर्वात्मनि
दुरिताभावे जन्यत्वपर्यवसितेन विषयत्वेनान्वयः ततश्च कलञ्जभक्षणाभावस्य दुरिताभावरूपेष्टसाधनत्वमुपादानप्रतीतं कलञ्ज-
भक्षणस्यानिष्टसाधनत्वं विनानुपपद्यमानमित्यनुपपत्तिसहकृतशब्दात्कलञ्जभक्षणेऽनिष्टसाधनत्वमवगम्य ततो निवर्तत इति गुरुमत-
निगर्वः । भट्टमते निवर्तनाविधिप्रत्ययस्यार्थः नञोद्योतकत्वमात्रमिति तन्नोक्तम् । धात्वर्थस्य प्रतियोग्यनुयोगितया निषेधान्वयं दर्शं-
यितुं मतद्वयोपादानमित्यधिकोक्तिशङ्कानिरासः । ननु नामार्थयोः साक्षाद्भेदेनानन्वयनियमस्य राज्ञः पुरुष इत्यादौ संबन्धाद्यर्था-
नुशिष्टषष्ठ्याद्युपस्थापितसंबन्धादिकमन्तराकृत्यान्वयेन निर्वाहेऽपि समासस्थले विभक्तेरभावेन संबन्धादेस्तदर्थत्वाभावात्संब-
न्धिलक्षणायां समासविग्रहवाक्ययोस्समानाकारकबोधजनकत्वनियमभङ्गप्रसङ्गात् तत्पुरुषकर्मधारयसमासयोः परस्परविविक्त-
रूपत्वासंभवाच्च संबन्धलक्षणैवाभ्युपगन्तव्या अभ्युपगता च चिन्तामणिकारादिभिरिति नामार्थस्यैव च तस्य भेदसंबन्धेन पुरु-
षादावन्वयादुक्तनियमे व्यभिचारः । नचोक्तनियमाभावे विभक्तेरपि वृत्तिकल्पनं व्यर्थं राजापुरुष इत्यादावपि भेदान्वयापत्तिश्चेति
वाच्यं तत्साधकयुक्तीनामत्रैव वक्ष्यमाणत्वाद्विभक्तिद्योतकतामतवदाकाङ्क्षावैचित्र्यकल्पनयोक्तापत्तेर्वारणीयत्वाच्चेत्यत आह । **राज-
पुरुषइत्यादिसमासस्थलइति** । अयमभिप्रायः । अन्वयव्यतिरेकाभ्यां गृहीतस्य नियमस्यासमाधेयशंकयैव परित्याज्यत्वमन्यथा
वैजात्यकल्पनया समाहितशङ्कस्य वह्नितृणमण्यादिकार्यकारणभावस्यापि परित्यागः स्यादिति वक्ष्यमाणयुक्त्या विभक्तीनां तत्तदर्थवा-
चकत्वेऽन्वयव्यतिरेकाभ्यां गृहीतस्य नियमस्य समासस्थले व्यभिचारशङ्कायाः संबन्धिलक्षणाकल्पनया समाधातुं शक्य-
तया न परित्यागः । नच विग्रहसमासवाक्ययोः समानाकारकानुभवजनकत्वनियमभङ्गप्रसङ्गात् उक्तकल्पनैव न संभवतीति
वाच्यम् तादृशनियमे मानाभावात् उक्तजनकत्वानुभवस्य सविवादत्वेनोक्तकल्पनापरिपन्थित्वाभावात् समान्यनियमस्य बहु-
व्रीहौ व्यभिचारात्तदन्यत्वस्येव तत्पुरुषविशेषाद्यन्यत्वस्य प्रवेशेऽपि क्षत्यभावाच्च । विभक्तेर्वाचकत्वे संबन्धिलक्षणापक्षस्यैव
प्रबलत्वमितरथा समासविग्रहवाक्ययोर्भेदसंबन्धेनान्वयबोधजनकत्वपक्षस्येति पक्षद्वयमेव यथामति परिगृह्य पराक्रान्तं सूरिभिः ।
नच तृतीयं संबन्धलक्षणापक्षम् चिन्तामण्यादीनामाकरत्वेन समीचीनासमीचीनानां पक्षाणां रत्नाकर इव रत्नारत्नानां
सद्भावो न दुष्यति । अथ संबन्धिलक्षणायां स्वघटकपदार्थयोरभेदान्वयबोधकसमासत्वरूपकर्मधारयत्वस्य तत्पुरुषेऽतिव्याप्ति-
रुक्तकल्पनापरिपन्थिनी तदवस्थेतिचेत् विभक्तेर्द्योतकत्ववादिनामेव तत्कर्मधारयलक्षणं तेषां कर्मधारयातिरिक्तसमासस्थले सर्वत्र
भेदसंबन्धेनैवान्वयादतएव वक्ष्यति । भवन्मते कर्मधारय इति संबन्धिलक्षणापक्षे किं तल्लक्षणम् । समासघटकतत्तत्पदाव्य-
वहितोत्तरप्रसक्तविभक्त्यदर्शनविधायकशास्त्रस्मारितविभक्तिमत्स्वघटकपदसजातीयपदघटितवाक्यात्मकविग्रहवाक्याद्यत्राभेदान्व
यबोधस्तत्र कर्मधारयो यत्र विभक्त्यर्थमन्तराकृत्य भेदान्वयबोधस्तत्र तत्पुरुषादिरिति लक्षणम् । कर्मधारयस्य हि समा-

नविभक्तिपदघटितं नीलश्चासौ घट इति विग्रहवाक्यं तत्पुरुषस्य तु राज्ञः पुरुष इत्यादिविरुद्धविभक्तिमत्पदघटितमिति तयोर्लक्षणसमन्वय इति न वाच्यम् कुपुरुषप्रपुरुषविपुरुषसुजनदुर्जनातिवेलोद्विद्यावकोकिलपर्यध्ययनसंवर्मापरिवीरुदुद्युद्धाभिश्रुतनिर्वणापग्रामान्तर्मुखनिर्मक्षिकादिनित्यसमासस्थले लौकिकविग्रहस्याभावात्स्वघटकसविभक्तिकपदसमूहात्स्वार्थप्रकाशनासंभवात् । किन्तु कुत्सितः पुरुषः प्रकृष्टं गतः प्रपतितो वा पुरुषः विशिष्टो विरुद्धो वा पुरुषः शोभनो जनः दुष्टो जनः अतिक्रान्तो वेलाम् उद्गतोविद्याम् अवक्रुष्टः कोकिलया परिग्लानोऽध्ययनाय सन्नद्धो वर्मणा परिणद्धो वीरुद्भिरुद्युक्तो युद्धायाभिगतः श्रुताय निष्क्रान्तोवनादपगतोग्रामादन्तर्गतो मुखान्निर्गतोमक्षिकाया इत्याद्यसमासस्थपदघटितवाक्यैरेव तेषामर्थस्य बोधयितुं शक्यत्वात्कुसुपुरुषसु अतिवेलअमित्याद्यलौकिकग्रहाणां संभवेऽपि तेषामर्थबोधास्वरूपयोग्यत्वात् अर्थविवक्षानुसारेणैव विग्रहवाक्यस्य समासपूर्वावस्थायाः कल्पनीयतया राजपुरुषइत्यत्रार्थाविशेषे विग्रहवाक्यभेदस्य दुर्ग्रहत्वाच्चेतिचेदुच्यते । यत्र समासघटकपदार्थस्य विशेष्यत्वे सति तद्घटकीभूतपदानां स्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थवदन्तर्भावेण लक्षणां विना सामानाधिकरण्यं तत्र कर्मधारयत्वम् तादृशलक्षणया सामानाधिकरण्ये तत्पुरुषत्वमिति लक्षणमुक्तमस्त्वभियुक्तैरिति संबन्धिलक्षणापक्षेऽपि न तदसंभव इति एतल्लक्षणमभिप्रेत्यैव वक्ष्यति यदस्मन्मतेऽसौ समासः षष्ठीतत्पुरुष इति पञ्चमूलीत्यादिसमाहारद्विगोरुत्तरपदस्यपञ्चाभिन्नमूलसमाहारलक्षकतया पञ्चपदमूलपदयोः विभक्त्यर्थावच्छिन्नलक्षणां विनैव समानाधिकरणत्वेऽपि यदन्तर्भावेण सामानाधिकरण्यं तस्य समासघटकपदार्थस्य मुख्यविशेष्यत्वाभावात्तादृशविशेष्यत्वार्थकस्य तत्रातिव्याप्तिवारणाय सत्यन्तस्य सार्थक्यम् । नचोत्तरपदस्यैव तादृशविशिष्टार्थलक्षकत्वस्यैकदेशान्वयप्रसंगभङ्गाय वाच्यतया तादात्म्येनान्वितपदार्थविषयताप्रयोज्यत्वरूपसामानाधिकरण्यं न पञ्चपदस्येत्यतिव्याप्तिरेव नास्तीति वाच्यं तात्पर्यग्राहकतया कथञ्चित्तत्प्रयोजकत्वस्य सत्त्वात् । नचैवं परमसुन्दरो महाकविः महाविज्ञ इत्यादौ क्रियाविशेषणेन समासस्य कर्मधारयत्वपक्षे स्तोकपक्वास्तोकनम्रेत्यादौ च का गतिः यदन्तर्भावेण सामानाधिकरण्यं तस्यमुख्यविशेष्यत्वाभावादितिवाच्यं समासघटकपदप्रयोज्यप्रकारतानिरूपितविशेष्यत्वस्यैव सत्यन्तार्थत्वात् समासघटकपदस्य प्रयोजकत्वं च स्वप्रयोजकोपस्थितीयमुख्यविषयताप्रयोजकत्वरूपं तात्पर्यग्राहकतया प्रयोजकत्वव्यावृत्तमेव विवक्षितमिति न द्विगावतिव्याप्तिः । यदि च सामानाधिकरण्यांश एवोक्तरूपं प्रयोजकत्वं निवेश्यं तावतैव द्विगुवारणाद्व्यर्थमेव सत्यन्तम् । किञ्चोक्तकर्मधारयवदेकदेशान्वयमभ्युपेत्य मूलपदस्य मूलसमाहारमात्रलक्षकत्वस्यतात्पर्यग्राहकत्वरूपव्यर्थकल्पत्ववारणायाभ्युपगमे क्षत्यभावात् सत्यन्तोपादानेप्यतिव्याप्तिस्तदवस्थैव एवं समाहारद्वन्द्ववत्समाहारद्विगोरपि नास्ति समाहारलक्षकत्वं समाहारस्य छिदादिकर्मत्वाभावेन पञ्चमूलीं छिनत्तीत्यादिप्रयोगाभावप्रसङ्गात् । मूलादेर्द्वित्वबहुत्वेप्येकवचनान्तत्वं चानुशासनिकमेव दारादिपदवत् । नचैवं पञ्चखट्वीत्यादौ खट्वाशब्दस्योपसर्जनत्वाभावेन गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वासंभवेनादन्तत्वाभावाददन्तस्य द्विगोर्विहितस्य स्त्रीप्रत्ययस्यानुपपत्तिरितिवाच्यं द्विगोरन्त्यस्यापि ह्रस्वविधेः स्वातन्त्र्येण वक्तव्यत्वात्प्रयोगानुसारित्वात्कल्पनायास्तथाच सुतरामतिव्याप्तिरेतेन यत्समासत्वावच्छेदेन समासघटकपदशक्यार्थस्य मुख्यविशेष्यत्वाभावस्तदन्यत्वस्य यत्समासत्वसामानाधिकरण्येन समासघटकपदशक्यार्थस्य मुख्यविशेष्यत्वं तत्त्वस्य वा सत्यन्तार्थत्वे नियमतोऽन्यपदार्थप्रधाने समाहारद्विगुप्रभृतौ न दोषः। यत्र समासघटकपदशक्यार्थस्य मुख्यविशेष्यत्वं तत्त्वस्य सत्यन्तार्थत्वं लाक्षणिकोत्तरपदककर्मधारयाव्यापकत्वान्न संभवदुक्तिकमिति प्रत्युक्तमिति विभाव्यते तदासमासघटकपदे सामानाधिकरण्यप्रतियोगिनि शक्त्या संख्याबोधतात्पर्यविषयभिन्नत्वस्यैव सत्यन्तार्थत्वं वाच्यम् । घटकपदे सामानाधिकरण्यप्रतियोगिनि पञ्चमूल्यादिद्विगुघटकपञ्चादिपदानां शक्त्यैव संख्याबोधकत्वान्नातिव्याप्तिः त्रिकटुप्रभृतिकर्मधारयघटकत्र्यादिपदस्य शुण्ठ्यादिपर्याप्तत्रित्वावच्छिन्नलक्षकतया न तत्राव्याप्तिशङ्का । अतएव द्वौ गार्ग्यावित्यर्थे द्वाभ्यां दण्डाभ्यामित्यर्थे तिसृणां यमुनानां समाहारइत्यर्थे विहितस्य द्विगार्ग्यद्विदण्डिद्वियमुनाद्यव्ययीभावस्यापि वारणं यथाश्रुतसत्यन्तार्थस्य तत्रापि सत्त्वेनातिव्याप्तिर्दुरुद्धरा स्यात् द्विग्वव्ययीभावाद्यन्यत्वे वा विशेषणे सत्यन्तस्य तात्पर्यम् । वस्तुतस्तु द्विगोरुक्ताव्ययीभावानांच कर्मधारयत्वमेव द्विगुपरिभाषाव्ययीभावत्वातिदेशश्च स्त्रीप्रत्ययैकवचनान्तत्वामादेशादिपदसंस्कारार्थ एव तात्पर्यग्राहकताया व्यर्थत्वव्याजशब्दान्तरत्वमाकलय्यापरितोषाद्बहुव्रीहावेकदेशान्वयाभ्युपगमपक्षे समानाधिकरणबहुव्रीहावतिव्याप्तिवारणमेव सत्यन्तस्य प्रयोजनं समासघटकपद स्यावच्छेदकतानात्मकविशेष्यत्वं च तदर्थः । परमसुन्दरइत्यादि कर्मधारये च परमपदस्य स्वाश्रयसौन्दर्यादिमत्त्वसंबन्धेन परमत्वविशिष्टे लक्षणेति न तत्राव्याप्तिप्रसक्तिरित्यास्तां तावत् । नीलरूपशक्तस्य नीलादिपदस्य समवायेन नीलरूपविशिष्टलक्षणयैव घटादिपदसामानाधिकरण्यमिति नीलघटादिकर्मधारयेऽव्याप्तिवारणाय विशेष्यदले स्वोत्तरमुत्पत्तियोग्यविभक्त्यर्थावच्छिन्ननिरूपितत्वेन लक्षणाविशेषितानीलादिपदानां नीलसंबन्धित्वेन लक्षणाभावाल्लक्षणसंगतिः । राजादिपदानामपि स्वत्वादिसंबन्धेन राजादिविशिष्टलक्षकत्वे कर्मधारयत्वमेव राजपुरुषादिसमासानां राजपदार्थस्य राज्ञस्तादात्म्येनापि पुरुषान्वययोग्यतया विभक्त्यर्थघटितलक्षणां विनापि सामानाधिकरण्यसंभवेन राजसंबन्धिपुरुषादिबोधतात्पर्येण प्रयुक्तेऽपि राजपुरुषादिपदे कर्मधारयत्वं स्यान्नस्याच्च तत्पुरुषत्वमिति स्वप्रयोजकबुबोधयि.. षयस्वघटकपदार्थभेदान्वयबोधप्रयोजकत्वमेव सामानाधि-

करण्यपदार्थोऽत्र विवक्षणीयस्तथासत्येकत्वविशिष्टनीलाद्यभिन्नघटादिबुबोधयिषया प्रयुक्ते नीलघटादिकर्मधारये विवक्षितसामानाधिकरण्यस्य स्वोत्तरसुत्पत्तियोग्यप्रथमार्थैकत्वावच्छिन्नलक्षणां विना निर्वाहासंभवादव्याप्तिः स्यादिति विभक्त्यर्थे स्वार्थान्वितत्वं विशेषणं देयं । तथाच प्रकृत्यर्थान्वितैकत्वावच्छिन्ने लक्षणाभावान्न दोषः । अथ नीलत्वृत्त्येकत्वावच्छिन्नलाक्षणिकनीलपदघटितकर्मधारयेऽव्याप्तिः तत्र लक्षणाया नीलपदार्थान्वितविभक्त्यर्थैकत्वावच्छिन्ननिरूपितत्वात् । किंच स्वोत्तरसुत्पत्तियोग्यत्वं प्रातिपदिकप्रकृतिकत्वं स्वोत्तरत्वेनानुसन्धीयमानत्वं वा । नप्रथमः सुबर्थावच्छिन्नेत्यस्यैव वक्तुमुचितत्वात् न द्वितीयः अव्यावर्तकत्वेन व्यर्थत्वापातात् समासविशेषत्वनिश्चयाधीननिश्चयकत्वेन समासविशेषलक्षणे प्रवेशानर्हत्वाच्च । नच तन्नोपादेयमेव प्रयोजनाभावादिति वाच्यं कुलालस्यघटइति विग्रहवाक्यात्कुलालसंबन्धित्वेनैव घटः प्रतीयते नतु कुलालकर्तृकत्वेन कुलालेनघट इत्यतोऽपि न तथा प्रतीयत इति कुलालकर्तृकत्वलाक्षणिककुलालादिपदघटितकुलालघटादिपदस्य कर्मधारयत्वमेवं ग्रामस्यगतः विधिनाश्रितः विधेःश्रित इत्यादिवाक्यानां निराकाङ्क्षत्वेन ग्रामसंबन्धित्वेन गमनकर्तुः विधिकर्तृकत्वेन श्रयणकर्तुः बोधाय तत्र तदर्थलक्षणायामाश्रितायां ग्रामगतविधिश्रितादीनां कर्मधारयत्वमेव तत्रचाव्याप्तेरतिव्याप्तेश्च कर्तृत्वादेः सुवर्थत्वादिति चेदुच्यते स्वघटकविशेष्यपदप्रयोज्यविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकविषयतानिरूपिताकाङ्क्षाप्रयोज्यसंसर्गतानिरूपितविषयताप्रयोजकाकाङ्क्षाघटको यः स्वघटकविशेषणपदार्थतावच्छेदकावच्छिन्नविषयताप्रयोजकपदाव्यवहितोत्तरविभक्तिवृत्त्यानुपूर्वीरूपो धर्मस्तद्धर्मावच्छिन्नविषयताकनिश्चयत्वावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतादृशानुपूर्व्याश्रयविभक्त्यर्थवृत्तिविषयतावच्छेदकावच्छिन्नोऽत्र विभक्त्यर्थेत्यन्तार्थः । तथाच नीलोनीलमित्यादि सविभक्तिकपदवृत्तिर्नैकाप्यानुपूर्वी नीलविशिष्टैकत्वमर्थं बोधयितुमलमिति न तादृशैकत्वस्य तादृशविषयतावच्छेदकावच्छिन्नत्वसंभवः संभवश्च नीलकर्मत्वादेस्तदवच्छिन्नलक्षणां विनैव च विवक्षितसामानाधिकरण्यनिर्वाहान्नीलघट इत्यादिकर्मधारये लक्षणसमन्वयः । एकत्वविशिष्टनीलविशिष्टलाक्षणिकनीलादिपदघटितनीलभूतलादिकर्मधारये एकत्वविशिष्टनीलरूपविभक्त्यर्थान्तार्थमादायाव्याप्तिवारणाय तादृशानुपूर्व्याश्रयविभक्त्यर्थवृत्तित्वेन विषयता विशेषिता गमनश्रयणादिकर्तृत्वावच्छिन्नविषयतानिरूपितविषयताप्रयोजिका चाकाङ्क्षा न ग्रामस्यगतो विधिनाश्रितो विधेःश्रित इत्यादिसमभिव्याहारात्मिका किन्तु ग्रामंगतो विधिंश्रित इत्यादिसमभिव्याहारात्मिकैव तद्धटकत्वं च नास्ति ग्रामस्य विधिनेत्यादेरिति ग्रामसंबन्धविधिकर्तृत्वादेरुक्तविषयतावच्छेदकावच्छिन्नत्वविरहाल्लक्षणसमन्वयः एवं कुलालेन घटइति समभिव्याहारस्यापि घटत्वावच्छिन्नविषयतानिरूपितविषताप्रयोजकाकाङ्क्षात्वाभावात्कुलालकर्तृत्वस्याप्युक्तविषयतावच्छेदकावच्छिन्नत्वस्य न संभव इति तत्रापि लक्षणसंगतिः गमनत्वश्रयणत्वाद्यवच्छिन्नविशेष्यतानिरूपितविषयताप्रयोजकाकाङ्क्षात्वस्य ग्रामस्यगमनं विधिनाश्रयत इत्यादिसमभिव्याहारस्य सत्त्वेन तद्धटकत्वस्य ग्रामस्यविधिनेत्यादेः सत्त्वेऽपि विशेष्यपदार्थतावच्छेदकतापर्याप्त्यधिकरणगमनश्रयणकर्तृत्वत्वावच्छिन्नत्वस्योक्तविशेष्यतायां विरहान्नाव्याप्तिसंभावना । नच ग्रामगत इत्यत्र ग्रामकर्मकस्य गमनएवान्वयेन गमनकर्तृत्वावच्छिन्ना नास्ति विशेष्यता अपितु गतत्वावच्छिन्नैवेति भवत्येवाव्याप्तिरिति वाच्यम् स्वप्रयोजकबुबोधयिषानिरूपिताकाङ्क्षाप्रयोज्यसंसर्गत्वतन्निरूपितप्रकारत्वतदवच्छेदकत्वाद्यवृत्तिविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिबुबोधयिषानिरूपितविषयतावत्त्वेन विशेष्यताया उपादेयत्वात् । बुबोधयिषायां रूपवृत्तित्वंच निरुक्तावृत्तित्वविशेषितस्वीयविषयतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । तथाच स्वप्रयोजकबुबोधयिषायाः उक्तावृत्तित्वविशेषितविषयतात्वं गतित्वकर्तृत्वाद्यवच्छिन्नविषयतात्वावच्छिन्नविषयत्व एव तदवच्छेदकतापर्याप्त्यनुयोगितावच्छेदकगमनत्वकर्तृत्वाद्यवच्छिन्नत्वविषयतात्वगतसमुदायत्ववृत्तिबुबोधयिषाविषयीभूता कर्तृविषयतानिरूपितगमनविशेष्यतैवेति न दोषः स्वप्रयोज्यशाब्दबोधीयसंसर्गत्वाद्यन्यविषयतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिमुख्यविशेष्यताद्वयशून्यशाब्दबोधनिरूपितत्वेनापि कथञ्चिद्विशेष्यत्वोपादानं संभवदुक्तिकमिति बोध्यम् । अत्र स्वघटकविशेषणपदप्रयोज्यत्वमुपेक्ष्य विशेषणपदार्थतावच्छेदकावच्छिन्नत्वेन निवेशात्, सुजनः प्रपुरुषइत्यादेरविग्रहत्वेऽपि शोभनोजनः प्रकृष्टगतः पुरुष इत्यादिविग्रहमादायैव लक्षणसङ्गतिः सुजनादिनित्यसमासे कर्मधारयस्य वेलामतिक्रान्तइत्यादिविग्रहमादायातिवेलादिनित्यसमासे तत्पुरुषस्येति एतद्दलस्यापिच परिष्कारो दर्शितप्रकारजातीयः स्वयमूहनीयः । नचार्धपिप्पल्यादिसमासे उत्तरपदस्य समुदायलक्षकत्वं विभक्त्यर्थान्वयानुरोधेन स्वीकरणीयमिति तत्र तत्पुरुषलक्षणाव्याप्तिः पदयोः सामानाधिकरण्याभावादिति वाच्यम् एतदस्वरसेनैव विनैव समुदायलक्षणां विभक्त्यर्थान्वयस्य वस्तुतस्त्वित्यादिना प्राक्समर्थिततया दोषाभावात् । एवं सर्वदले प्रकृतलक्षणस्य परिष्कृतस्य स्वत्वघटितत्वेनाननुगतस्यानुगमनं सुकरमेवेत्युपेक्ष्यते । इदन्तु बोध्यम् घनश्यामादीनां घनसदृशलाक्षणिकविशेषणपदघटितानां कर्मधारयत्वमेव । एवमन्येषां ध्वङ्क्षुलोरीकृत्यादीनामुक्तलक्षणानाक्रान्तानां येषामस्ति तत्पुरुषप्रकरणे विहितं, समासत्वं तेषां गौणमेव तद्बोध्यम् । अघटादिनञ्समासे प्रथमायाः प्रतियोगित्वार्थकत्वे मुख्यं तत् इतरथा तत्रापि तद्गौणमेव । वस्तुतस्तु तादृशलक्षणप्रयुक्तसामानाधिकरण्यघटितं न तत्पुरुषलक्षणमपितु तादृशलक्षणानपेक्षसामानाधिकरण्याभावघटितमित्युक्तसमासेषु सामानाधिकरण्यरूपविशेष्यविरहाल्लक्षणसमन्वयः सामानाधिकरण्यविधुरसमासान्तरातिव्याप्तिश्च तत्तदन्यत्वविशेषणेन वारणीया कर्मधारयलक्षणे हि शब्दशक्तिप्रकाशिकायां द्विगव्ययीभावभिन्नत्वमस्त्युपात्तमित्येषा दिक् ।

अथ समर्थः पदविधिरिति सूत्रापेक्षितं सामर्थ्यं न निरूप्यनिरूपकभावापन्नविषयताकशाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपव्यपेक्षात्मकमपितु एकधर्मावच्छिन्नशक्तिमत्त्वरूपैकार्थीभावात्मकमेव लाघवादिति शक्तिः समासादिवृत्ताववश्यमभ्युपगन्तव्येति राजपदस्य राजसंबन्धिलक्षणाभ्युपगमो निरर्थकः शक्त्यैव राजसंबन्धविशिष्टपुरुषादिबोधसंभवात् । तथासति समासविग्रहवाक्ययोः समानार्थकत्वमप्यौत्सर्गिकं निराबाधमवतिष्ठते, नापि नामार्थधात्वर्थयोर्भेदेनान्वयनियमस्यापि काचिदपि हानिः । नच समासावयवप्रत्येकपदात्क्लृप्तशक्तिकाच्छक्त्या लक्षणया वा बुभुत्सितार्थबोधसंभवेऽतिरिक्तशक्तिर्न कल्प्या ह्यनन्यलभ्यो हि शब्दार्थ इति वाच्यं । शक्त्यभावे हि प्रातिपदिकसंज्ञा प्राचीनविभक्तिलोपविभक्त्यन्तरोत्पत्त्यादिकार्यं न स्यात् अर्थवदिति सूत्रेऽर्थवत्त्वस्य वृत्तिमत्त्वलक्षणस्यैव सद्भावात् । नच कृदादिसूत्रेण प्रातिपदिकसंज्ञा तस्यास्त्विति वाच्यं कृत्तद्धितेत्यादिसूत्रेपि तदनुवृत्तेरावश्यकत्वेन शक्त्यभावे समासादेः प्रातिपदिकसंज्ञायास्ततोऽप्यसंभवात् । नचोत्तरसूत्रे तदनुवृत्तिर्नाऽपेक्षणीयेति वाच्यम् कृत्तद्धितशब्दाभ्यांहि कृत्तद्धितान्तौ विवक्षितौ तादृशविवक्षाग्राहकंच तत्तत्पदस्य विशेषणपदत्वं तच्च विशेष्यपदं विना नोपपद्यत इति विशेष्यसमर्पकस्यार्थवदित्यस्यानुवृत्तिरावश्यकी विशेष्यसमर्पकपदान्तरकल्पनायामर्थवदित्यस्य निरर्थकत्वप्रसङ्गान्निरर्थकस्य सार्थकधात्वादिपर्युदासेनैव व्यावृत्तेः पर्युदासे नञस्तत्सदृशतद्भिन्नबोधकत्वात्सादृश्यस्यार्थवत्त्वस्यैवादरणीयत्वात्। नच व्यर्थमेवास्त्विति वाच्यम् उत्तरपदे हि कस्यचिद्विशेष्यपदस्य कल्पनीयत्वेऽर्थवदित्यस्य तथात्वे पूर्वसूत्रस्थत्वे च सति नञोभेदमात्रार्थकत्वस्यैव वाच्यत्वेन लाघवात् । वस्तुतः कृदादिसूत्रस्य विधायकत्वमेव नास्ति । नच कथं न तस्य विधायकत्वमिति वाच्यं तथासति कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया मूलकेनोपदंशमित्यन्तवाक्यग्रहणापत्त्या तस्यापि प्रातिपदिकसंज्ञापत्तेः तदन्तपरिभाषया तद्धितग्रहणे तद्धितान्तस्यैव ग्राह्यत्वेन बहुगुडादिपदे प्रातिपदिकसंज्ञानुपपत्तेश्च तद्धितग्रहणे तद्धितविशिष्टस्यैव हि ग्राह्यत्वे पचतकीत्यादिमध्यस्थिततद्धितकेऽपि प्रातिपदिकसंज्ञा स्यात् एवञ्च कृदादिसूत्रं येषां पूर्वसूत्रेणार्थवतां धातुभिन्नप्रत्ययभिन्नानां प्रातिपदिकसंज्ञा विहिता तेषां परिगणनत्वेन तत्प्रपञ्चमात्रमिति न ततः समासस्य प्रातिपदिकसंज्ञा संभव इति चेन्न अर्थवदितिसूत्रेऽर्थवत्त्वं न वृत्तिमत्त्वमपितु वृत्तिमदविषयकप्रतीत्यविषयत्वमेव वाच्यं।नच तत्र गौरवम् अनन्तसमासेष्वनन्तशक्तिकल्पनापेक्षया लाघवस्यैव सत्त्वात्।एवंच वृत्तिमत्संघातरूपे कृत्तद्धितान्तपूर्वे विहिततद्धितकसमासादौ वृत्तिं विनैवार्थवत्त्वस्य सद्भावात्प्रातिपदिकसंज्ञानुपपत्त्यभावात् वृत्तिमद्विषयकप्रतीतिविषयत्वन्तु समूहालम्बनमादाय निरर्थकेऽपि स्यादिति निषेधद्वयगर्भता अत्र प्रत्ययान्तपर्युदासश्चेत्कृदन्तादीनां नस्यात्प्रातिपदिकसंज्ञा नचेत्सुबन्ततिङन्तादीनामपिस्यादिति प्रत्ययान्तस्यचेत्प्रातिपदिकसंज्ञा कृत्तद्धितान्तयोरेव वाक्यस्यचेत्समासस्यैवेति नियमार्थं कृदित्याद्युत्तरसूत्रं कर्तव्यमेव इतरथा वृत्तिमत्त्वस्यार्थवत्त्वरूपत्वे कृत्तद्धितान्तसमासादीनामर्थवत्त्वात् सुप्तिङन्तवाक्यानामतथात्वात्प्रातिपदिकसंज्ञातदभावयोः संभवात्प्रत्ययान्तपर्युदासस्यास्मत्पक्षइव तवाप्यकर्तव्यत्वस्य तुल्यत्वेऽपि कृदित्यादिसूत्रस्य व्यर्थत्वमनिष्टमापन्नं स्यादिति । नचैवं धनं वनमित्यादौ प्रत्येकवर्णस्य प्रातिपदिकसंज्ञा स्यान्नान्तभागस्यापि तत्संभवात्तत्प्रयुक्तो नकारलोपश्च स्यादिति वाच्यं समुदायशक्त्या ह्यर्थवत्त्वं विवक्षितमवयवशक्त्या वा । नाद्यः तादृशशक्तिमत्समुदायाविषयकप्रत्येकविषयक प्रतीतिविषयत्वात्प्रत्येकस्य नान्त्यः शाब्दबोधानुकूलपदार्थोपस्थितिजनकवृत्तेरेव प्रवेश्यत्वात्समुदायघटकप्रत्येकवर्णशक्तेः शाब्दानुकूलपदार्थोपस्थित्यनाधायकत्वात् । नच क्विबन्तधातोः प्रातिपदिकसंज्ञा न स्यात् क्विपो लुप्तत्वाद्द्रियमानस्य धातुभिन्नत्वाभावादिति कृदित्यादिसूत्रं विधायकमेवाभ्युपगन्तव्यमिति वाच्यम् काल्पनिकविभक्त्यादिविशिष्टे राजन्ङस्पुरुषसुइत्यलौकिकप्रक्रियावाक्ये समाससंज्ञाया इव काल्पनिकक्विबन्तत्वमादाय धातुभिन्नत्वस्य संभवात् । यत्तु कृदन्तस्य धातुप्रत्ययसंघातात्मकत्वेन कथं धातुप्रत्ययभिन्नत्वस्य तत्र संभव इति । नच धातौ प्रत्ययभेदस्य प्रत्यये धातुभेदस्य च सत्त्वेन संघाते भेदद्वयसंभव इति वाच्यं धातुघटकप्रत्येकवर्णे धातुत्वावच्छिन्नभेदस्य सत्त्वेन धातोरपि धातुभिन्नत्वापत्तेरिति तदेतद्भेदप्रतियोगितावच्छेदकधातुत्वप्रत्ययत्वादिकं तद्घटकसाधारणं निरुच्य समाधेयम् । यद्रूपविशिष्टावच्छिन्नस्य प्रातिपदिकसंज्ञा विवक्षिता तद्रूपे धातुत्वादिपदजन्यबोधविषयत्वप्रकारतानिरूपितपाणिन्यादिसंकेतीयविशेष्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपभिन्नत्वमुपादेयमिति कृदन्तादिगतानुपूर्वीवृत्तिसमुदायत्वे धातुकृदादिवृत्त्यानुपूर्वीवृत्तिरूपभिन्नत्वस्य सत्त्वेन न कोपि दोष इति ।

अथापि समासशक्तिरवश्यमभ्युपगन्तव्याऽन्यथा चित्रगुरित्यादौ चित्राभिन्नगोस्वामिबोधस्यानुपपत्तिः । तथाहि गोपदस्य गोस्वामिलक्षकत्वे गोःपदार्थैकदेशत्वेन तत्र चित्रापदार्थान्वयस्यासंभवः । नच गोपदमेव चित्राभिन्नगोस्वामिलक्षकं चित्रापदं तात्पर्यग्राहकमिति वाच्यम् एकार्थीभावरूपसामर्थ्याभ्युपगमे व्यपेक्षारूपसामर्थ्यस्यैव समासप्रयोजकत्वेन चित्रापदप्रयोज्यविषयत्वस्य तत्राभावे व्यपेक्षाया अप्यसंभवात् समासानुपपत्तेः । नापि गोपदस्य शक्त्या गौरर्थः लक्षणया च स्वामी तत्र स्वामिविशेषणतापन्नगवि चित्रापदार्थान्वयस्तथासति नैकदेशान्वयप्रसङ्गः नवा व्यपेक्षाहानिरिति वाच्यं युगपद्वृत्तिद्वयानङ्गीकारात् प्रातिपदिकार्थयोर्गोस्वामिनोर्भेदेनान्वयस्याव्युत्पन्नत्वाच्च । नवा चित्रपदगोपदयोश्चित्राभिन्नगोस्वाम्यर्थः पदार्थयोश्च तादात्म्येनान्वयः । अतएव सर्वलाक्षणिकत्वाद्बहुव्रीहेस्तत्पुरुषापेक्षया जघन्यत्वप्रवाद इत्यपि युक्तम् तादात्म्येनान्वयप्रयोजकविरूपोपस्थितेरभावात् । नच विरूपोपस्थित्यर्थं चित्रपदस्योक्तस्वाम्यर्थः

गोपदस्य स्वरूपं चित्रपदस्य स्वरूपं गोपदस्य वोक्तस्वाम्यर्थ इति वाच्यम् इतरपदार्थान्वितगोरूपस्वार्थस्योपसर्जनत्वाभावेन तथात्व एवगोपदस्योदन्ततायास्संभवेन तदनुपपत्तेः । यत्त्वत्र द्वन्द्वैकशेषान्यतरप्रसङ्ग उक्तस्तन्न साक्षादनन्वितत्व एव तत्तत्पदार्थयोस्तयोः प्रसक्तेरत्र पदार्थयोरभेदेनान्वयाङ्गीकारात् । एवमेकदेशान्वयाभ्युपगमेऽपि प्राप्तमुदकं यमिति वाक्यार्थबहुव्रीहौ प्राप्तोदक इत्यत्रागतिरेव । तथाहि प्राप्तशब्दस्य कर्तृक्तनिष्पन्नस्य प्राप्तिकर्तार्थः उदकशब्दस्य उदकसंबन्धिनि लक्षणाभ्युपेयते उदके चोक्तकर्तुरन्वयस्तथापि विवक्षितस्य उदककर्तृकप्राप्तिकर्मणोर्थस्य न लाभः एवं । कृतपाकइत्यादौ कृतपाकपदयोरसक्तत्वेन लक्षणाया एवासंभवात् स्वसमवेतकृतिकर्मपाकसंवन्धित्वादिना चैत्रादेरवगमस्याशक्यत्वात् स्वरूपार्थकघञ्मात्रस्योक्तार्थलक्षकत्वस्य प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधेनासंभवात् धातुमात्रस्य तथात्वे तदर्थस्याप्रकृत्यर्थत्वेन सुवर्थानन्वयप्रसङ्गादगतिरेवेति चेत् उच्यते । कथञ्चिदपि क्लृप्तशक्तिकपदाल्लक्षणयाऽभिमतार्थसंभवे समभिव्याहारवैलक्षण्यप्रयुक्तानन्त्यवत्समासेष्वनन्तशक्तिकल्पनाया गुरुतराया अन्याय्यत्वमेव । लक्षणयाचेत्थं निर्वाहः संभवति । तथाहि गोपदस्य चित्राभिन्नगोस्वामिलक्षकत्वेऽपि चित्रापदस्यह्रस्वतापन्नस्य गोपदाव्यवहितपूर्ववर्तिन एव तात्पर्यग्राहकतयाऽन्वयव्यतिरेकाभ्यांच चित्रगुपदजन्यशाब्दबोधे तादृशसमभिव्याहारज्ञानस्य कारणतया च निरूप्यनिरूपकभावापन्नस्वस्वार्थनिष्ठविषयताकशाब्दबोधप्रयोजकाकाङ्क्षाशालित्वरूपा व्यपेक्षा तत्राक्षतैवेति न समासानुपपत्तिः । स्वार्थत्वं चस्व प्रयोज्यविषयताश्रयत्वमेव चित्रापदार्थविषयत्वे शाब्दबुद्धौ चित्रापदप्रयोज्यत्वस्योपस्थितिद्वारकस्यासत्त्वेऽपि चित्रापदवृत्तिग्रहं विना तात्पर्यग्राहकत्वस्याभावेन तात्पर्यग्रहद्वाराकाङ्क्षाघटकत्वेन साक्षादेव वा तस्य संभवः । नच पदार्थान्तरान्वितगोपदार्थस्योपसर्जनतायामेव ह्रस्वविधिर्वाच्योऽन्यथा गोशब्दस्य स्वामिनि स्वारसिकलक्षणायामपि ह्रस्वतापत्तेः पदान्तरानपेक्षया पदान्तरार्थविशिष्टत्वरूपेण तथात्वेपि ह्रस्वत्वोपगमे चित्रगोस्वामिनि स्वारसिकलक्षणायां गौरस्तीत्यादौ ह्रस्वतापत्तेरिति प्रकृते चित्रत्वस्यापि गोपदार्थत्वे ह्रस्वतानुपपत्तिरिति वाच्यम् निरुक्तक्रमेण पदान्तरप्रयोज्यार्थविषयतानिरूपितगोपदार्थविषयताया गोपदजन्योपस्थितिविशेष्यतानिरूपितप्रकारताप्रयोज्याया आश्रयत्वमेवोपसर्जनत्वं तथात्वेच गोपदस्य ह्रस्वत्वाभ्युपगमे क्षतिविरहात् । एवं च बहुव्रीहिस्थले एकदेशान्वयादिक्लेशस्यापि नावकाशः । तत्पुरुषापेक्षयापि बहुव्रीहेर्जघन्यताप्रवादश्च व्यर्थत्वकल्पतात्पर्यग्राहकत्वस्य स्वघटकपदे प्रसक्त्योपपादनीयः कृतपाक इत्यत्र घञोलक्षणाव्युत्पत्तिवैचित्र्योपगमात्प्रकृत्यर्थान्वितत्वनियमः संकोचनीयः, प्राप्तोदक इत्यत्रोदकपदमेवोदककर्तृकप्राप्तिकर्मलाक्षणिकं प्राप्तपदं तात्पर्यग्राहकमिति न काचिदनुपपत्तिः । यद्वा गोपदस्यैव शक्त्या लक्षणया च गौः स्वामी चार्थ इति न तत्रैकदेशान्वयापत्तिः । एकधात्वर्थयोः संयोगव्यापारयोरिवैकप्रातिपदिकार्थयोरपि भेदेनान्वयो व्युत्पत्तिवैचित्र्यादभ्युपेयते मूलं च तत्रैकदेशानन्वयनियमसहकृता तात्पर्यान्यथानुपपत्तिः अतएव युगपद्वृत्तिद्वयाङ्गीकरणमपि न विरुध्यते । नचात्र चित्रगुरस्ति तामानयेत्यत्र तत्पदात् गोर्बोधापत्तिः तस्य प्रधानत्वात् प्राधान्यं च वृत्तिग्रहमुख्यविशेष्यत्वमेव नतु शाब्दग्रहमुख्यविशेष्यत्वं तथा सति चैत्रेण गम्यते तमानयेत्यादौ चैत्रादिबोधानुपपत्तेरिति वाच्यं तत्पदवृत्तिज्ञानीयविषयताप्रयोज्यविशेष्यत्वानिरूपिततत्पदवृत्तिज्ञानीयविषयताप्रयोज्यविषयताश्रयत्वस्यैव प्राधान्यरूपत्वात् चैत्रेणेत्यादौ चैत्रादेः प्रकारत्वेऽपि चैत्रपदार्थे तस्याप्रकारत्वात् प्राधान्यनिर्वाहः गोः गोपदार्थएव स्वामिनि प्रकारत्वान्न प्राधान्यप्रसङ्गः बहुव्रीहेरधिकवृत्तिग्रहसापेक्षत्वात्तत्पुरुषापेक्षया जघन्यताप्रवादः समर्थनीयः चित्रपदगोपदयोरुभयोश्चित्राभिन्नगोस्वामिलक्षकत्वपक्षश्च व्युत्पत्तिवैचित्र्यादेकपदार्थयोरभेदान्वये विरूपोपस्थितेरनपेक्षामभ्युपेत्य कथञ्चिदुपपादनार्होऽपि द्विधा तादृशार्थभानस्यानुभवविरुद्धत्वादितो नादरणीयः प्राप्तोदक इत्यत्र धातोः प्राप्तिः क्तप्रत्ययस्य कर्मकर्ता चार्थः कर्तर्युदकस्य कर्तुः प्राप्तौ प्राप्तेः कर्मण्यन्वयोपगमाद्विवक्षितस्योदककर्तृकप्राप्तिकर्मबोधस्य निर्वाहः विशेष्यविशेषणभावव्यत्यासश्च व्युत्पत्तिवैचित्र्यादभ्युपेयो इति सर्वमवदातम् । अथवा परमःसुन्दरः चैत्रस्यगुरुकुलमित्यादौ शतश एकदेशान्वयस्य दृष्टत्वेनैकदेशान्वयनियमस्यावश्यसंकोचनीयत्वे बहुव्रीहिस्थलेऽपि तत्संकोचो लक्षणाच न दोषावहः लक्षणायां संकोचे च शक्तिकल्पनागौरवसहकृततात्पर्यान्यथानुपपत्तिर्मूलमस्तीति निर्मूलत्वाभावात् अत्रपक्षे चोपसर्जनत्वप्राधान्यादिकं यथाश्रुतमपि न क्षतिकरम् । नह्यत्र प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमसंकोचस्यादृष्टचरस्य प्रसङ्गः कृधातोः स्वकीयकृतौ लक्षणा क्तप्रत्ययस्य कर्मार्थः पच्धातोश्च पाकः घञः संवन्धिनि लक्षणेत्यभ्युपगमात्कृतपाकइत्यत्र स्वकृतिकर्मपाकसंबन्धित्वेन चैत्रादेर्बोधस्य निर्वाहात् । नह्यत्र युगपद्वृत्तिद्वयाङ्गीकारप्रसङ्गो नवा क्लृप्तविशेष्यविशेषणभावव्यत्यासस्य च प्रसङ्गः प्राप्तोदक इत्यत्र धातोः स्वकर्मकप्राप्तौ लक्षणा क्तप्रत्ययस्य कर्तार्थः उदकपदस्योदकसंबन्धिनि लक्षणा तथासति स्वकर्मकप्राप्तिकर्त्रुदकसंबन्धित्वेन ग्रामादेरवगतिरुपपद्यते । नचैवमप्युदककर्तृकप्राप्तिकर्मत्वेन ग्रामादिबोधस्य विवक्षितस्य न निर्वाह इति वाच्यम् आरूढवानरइत्यादौ स्वकर्मकारोहणकर्तृवानरसंबन्धित्वादिना वृक्षादेर्बोधस्य तत्रतत्रोपपादितत्वेन तत्तुल्येऽत्रापि तथाविधार्थविवक्षाया एवोचितत्वेनोक्तार्थविवक्षाया एवाप्रामाणिकत्वात् प्रामाणिकत्वे वा उदकपदस्य कर्मणि क्तप्रत्ययस्य प्राप्तौ धातोरुदककर्तृत्वे लक्षणाभ्युपगमादुदककर्तृकप्राप्तिकर्मबोधस्य संपादनीयत्वादत्रच प्रणाल्या प्राप्तोदक इत्यत्र कारकतृतीयार्थस्य प्रणालीकरणत्वस्य स्वनिरूपकप्राप्तिनि-

रूपितत्वसंबन्धेन धात्वर्थीभूतनिरुक्तकर्तृत्व एवान्वयो वाच्यः कारकविभक्तेर्धातुसाकाङ्क्षत्वादुक्तस्य संसर्गता च व्युत्पत्तिवैचित्र्यादभ्युपगन्तव्य इति सर्वनिर्वाहान्नाभ्युपगन्तव्या समासशक्तिः । तथाच राजपदस्य राजसंबन्धिनि लक्षणोक्तिरुपपन्नैवेति ।

अथ समासशक्त्यभ्युपगमे सविशेषणानां वृत्तिर्नवृत्तस्य विशेषणयोगोनेति वार्तिकस्य भवति वै नित्यसापेक्षे समास इति वार्तिकस्यचानुवादकत्वम् इतरथा विधायकत्वं स्यादिति लाघवात्समासशक्तिरभ्युपगन्तव्या तथाहि ऋद्धस्य राजमातङ्गाइति वाक्यस्य ऋद्धाभिन्नराजमातङ्गादिबोधकतायां साधुतावारकस्य पदार्थैकदेशे पदार्थान्वये वाक्यमसाधु यथा नित्योगौरिति न्यायस्यानुवादकं प्रथमं वार्तिकं राजादेः पदार्थैकदेशत्वात् भवति नित्यसापेक्ष एकदेशान्वयो यथा चैत्रस्य नप्तेति न्यायस्यानुवादकं द्वितीयं समासशक्त्यभावे राजादेः पदार्थत्वादुक्तन्यायस्य तत्राप्राप्तत्वान्न तथा । नच तादृशस्थलेऽन्वयप्रयोजकाकाङ्क्षाया अभावात् तादृशान्वयबोधस्यैवासंभवादसाधुत्वमिति वाच्यम् समासस्थले लुप्तविभक्त्यनुसन्धानेनान्वयोपगमपक्षे सर्वदैव तदभावपक्षेऽपि यदा लुप्तविभक्त्यनुसन्धानं तदाकाङ्क्षायाः सत्त्वादन्वयबोधस्य वारयितुमशक्यत्वात् शोभने वने चरः विरूपाया दास्याः पुत्रः शुक्ले कण्ठे कालः मिताया वाचस्पतिरित्याद्यलुक्समासस्थले सहजतएवाकाङ्क्षाप्रतिपत्तेरन्वयबोधस्य दुर्वारतापत्तेः । यत्त्वनभ्युपगमेऽपि समासशक्ते राजादिपदसंबन्ध्यादौ लक्षणायाः स्वीकृतत्वेन राजादेः पदार्थैकदेशत्वादनुवादकत्वमेनोक्तवार्तिकस्येति तन्न उक्तसमासेषु विभक्त्यर्थघटितार्थलक्षणाया अनावश्यकत्वेन वनप्रभृतेः पदार्थैकदेशत्वाभावादस्मन्मते तत्रापि विशिष्टशक्तेरभ्युपगमेन वनप्रभृतेः पदार्थैकदेशत्वसंभवात् तज्ज्ञानविषयत्वं यत्र घटत्वेन घटोनास्त्यपितु नीलत्वेनैव तत्र विशिष्टान्वयस्यौत्सर्गिकत्वेन घटपदार्थे घटत्वविशिष्टे तज्ज्ञानविषयत्वस्यान्वयासंभवेन नीलपदार्थएव तदन्वयस्य विवक्षणीयतया तज्ज्ञानविषयनीलघटा इत्यस्यैव साधुत्वं नतु तज्ज्ञानविषयो नीलघटइत्यस्य । तत्रच नीलस्य पदार्थैकदेशत्वाभावात्स्यात्साधुतेत्युक्तवार्तिकस्य विधायकत्वमेव स्यात् नामार्थयोर्विभक्त्यर्थसंबन्धेनान्वयपक्षेतु सुतरामिति चेन्न अनन्ताप्रामाणिकशक्तिकल्पनापेक्षया विधायकत्वे गौरवाभावात् सापेक्षमसमर्थवद्भवतीति स्मृत्या समासप्रयोजकसामर्थ्यविपरीतमसामर्थ्यमतिदिशन्त्या लभ्यस्यार्थस्यानुवादकताया एवोक्तवार्तिकस्याभ्युपगमाच्च । अथ किन्नाम सापेक्षत्वमिति चेत् समासाघटकपदार्थान्विताप्रधानीभूतस्वार्थकत्वं प्राधान्यं च प्रकृतसमासजन्यबोधे मुख्यविशेष्यत्वं भवति चैवमृद्धस्यराजमातङ्गाः शोभनेवनेचर इत्यादेः समासाघटकर्द्धशोभनादिपदार्थान्विताप्रधानीभूतराजवनादिस्वार्थकत्वस्य राजवनादिपदे सत्त्वेन समर्थतया तस्य पुरुषादिपदेन समासासंभवेनासाधुतया प्रयोगानर्हत्वम् । अन्वितत्वं चान्विततत्वेन तात्पर्यविषयत्वं तेन ऋद्धस्य राजमातङ्गा इत्यत्र राज्ञः सर्वदैव ऋद्धान्वितया ऋद्धान्वितत्वेन तात्पर्याविषयत्वे सत्यपि सापेक्षत्वस्य न प्रसङ्गः । अप्रधानीभूतेति विशेषणात् शोभनोराजपुरुषइत्यत्र पुरुषपदस्य न सापेक्षत्वप्रसङ्गः । नच दर्शनीयं राजपुरुषमानयेत्यादौ पुरुषस्य मुख्यविशेष्यत्वलाभावात्सोपक्षत्वं स्यादिति वाच्यम् समासजन्यावान्तरवाक्यार्थबोधे मुख्यविशेष्यत्वस्य पुरुषे संभवात् । यदि चावान्तरवाक्यार्थबोधस्य पुरुषमात्रविशेष्यकस्य न संभवः निर्विभक्तिकस्य राजपुरुषपदस्य निराकाङ्क्षत्वादमन्तस्य तदुपस्थितकर्मत्वविशेष्यकबोधसाकाङ्क्षत्वेन तद्विशेष्यकबोधस्यैव संभवात् अमन्तत्वग्रहेऽपि यत्र प्रागमः कर्मत्वानुपस्थितौ कथञ्चित्पुरुषमात्रविशेष्यकबोधोत्तरं तदुपस्थितेस्तद्विशेष्यको बोधस्तत्र तथासंभवेऽपि विशेष्येविशेषणमिति रीत्या शाब्दबोधस्य तात्पर्यविषयत्वस्थले वान्तरशाब्दबुद्धेरनपेक्षितत्वेन तत्रोक्तप्रसङ्गस्य दुर्वारत्वात् शाब्दबोधसकलकारणस्य तदव्यवहितपूर्वक्षणे संपत्तेः सौकर्याय विशेष्ये विशेषणमिति रीत्या शाब्दबोधस्य व्यवस्थापितत्वादिति विभाव्यते तदापि समासघटकपदप्रयोज्यविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नविषयत्वस्य प्राधान्यरूपत्वं वक्तुं शक्यं पुरुषस्य समासबहिर्भूतद्वितीयार्थे कर्मत्वे प्रकारत्वात्प्राधान्यम् नित्यसापेक्षस्य समासाघटकपदसापेक्षत्वेऽपि नासामर्थ्यम् । तेन चैत्रस्य गुरुकुलं चैत्रस्य दासभार्या देवदत्तस्य पुत्रधनं पितृधनं नप्तृधनम् शरैः शातितपत्र इत्यादौ गुरुशातितादिपदस्य सापेक्षतायामपि नासामर्थ्यम् गुरुत्वादेः सनिरूपकत्वेन शातनादेः क्रियारूपत्वेन प्रतियोगिकारकाभ्यां नित्यसापेक्षत्वात् । नित्यसापेक्षतांच स्वार्थान्वय्यर्थजिज्ञासात्मकाकाङ्क्षानियततत्प्रतिबन्धकविरहसहकृतस्वार्थप्रतिपत्तिकत्वम् । गुर्वादिपदार्थेज्ञाते असति च प्रतिबन्धके कस्य गुरुर्दासः पुत्रोवेत्यादिजिज्ञासायाः शातितादिपदाच्छातनादिक्रियाज्ञाने कैरित्यादिकरणकारकजिज्ञासाया नियमेनोत्पादाद्गुर्वादिपदस्य तथात्वम्, अत्रानुभववैलक्षण्यादुक्तसापेक्षत्वशरीरे नित्यसापेक्षस्थले तद्वारकविशेषणानामप्यस्ति वैलक्षण्यम् । तत्र केचिदाहुः समासाघटकपदार्थान्वितत्वत्रान्वयस्तादात्म्यरूपो ग्राह्यः ऋद्धस्य राजमातङ्गाइत्यत्रर्द्धपदार्थस्याभेदेनैवान्वयस्य विवक्षितत्वात्सापेक्षत्वम् चैत्रस्य गुरुकुलमित्यादौ गुरुपदार्थे समासबहिर्भूतपदार्थस्य चैत्रनिरूपितत्वादेर्भेदेनैवान्वयान्न सापेक्षत्वम् प्रमेयादिपदार्थस्य गुरुत्वदासत्वादिपदार्थेऽभेदेनान्वयविवक्षायां प्रमेयं गुरुकुलं दासभार्येत्यादौ सापेक्षता भवत्येव प्रमेयस्य गुरुकुलमित्यादिकं प्रमेयनिरूपितत्वान्वितगुरुत्वादिबोधतात्पर्यकमभ्युपेयत एव साधुतया परन्तु प्रमेयत्वादिसामान्यधर्मेण चैत्रादेर्गुरुत्वादिनिरूपकस्यावगतेर्जिज्ञासानिवर्तकत्वाभावेनाप्रतिपिपित्सितत्वात्तत्प्रतिपादकवाक्यप्रतिपादयिता निगृह्यत एवेत्यप्रयोगः । नच नित्यसापेक्षस्यासामर्थ्याभावप्रतिपादनादाभियुक्तादसामर्थ्यप्रयोजकसापेक्षत्वशरीरेऽन्वयस्याभेदात्मकत्वं कथं लभ्यत इति वाच्यम् योह्यभेदेन स्वान्वय्यर्थः स्वस्वात्मैवेति स्वपरिच्छेदाय स्वरसतः स्वरूपतो नापेक्षणीयः अपेक्ष्य-

माणोऽपि कथञ्चिद्विशेषणविशेषोपरागेणैवेति विविच्यमाने तत्रापि विशेषणस्यैवापेक्षितत्वं पर्यवस्यति । विशेषणं च भेदेनैव स्वान्वयीति नित्यसापेक्षत्वं भेदसंबन्धेनेतरान्वितत्वे पर्यवसितं सयदाऽसामर्थ्यप्रतिद्वन्द्वितयाऽवगम्यते तदाऽभेदेनान्वितत्वस्यासामर्थ्यप्रयोजकत्वमपि गृह्यत एवेति सापेक्षत्वघटकतयाऽभेदान्वयस्य लाभः संभवत्येवेति ।

अत्रचैत्रस्यगोरूपमित्यत्र सापेक्षताविरहप्रसङ्गः कौस्तुभकृतोद्भावितः चैत्रनिरूपितत्वस्य समासाघटकपदार्थस्यापि भेदेनैव गोपदार्थेऽन्वयात् सच यद्यपि प्रतिबन्धकाभावे गोपदार्थावगमे च सति कस्येत्याकाङ्क्षाया नियमेनोत्थानं तत्र चेदानुभविकमिष्टएव स्यात् प्रयोगस्य साधुत्वात् तथापि गोत्वादिपदार्थावगतावेव गोत्वस्य गोसंसृष्टतयावगतत्वेन कस्य कुत्रवेत्याद्याकाङ्क्षाया विरहाद्गोत्वपदस्यानित्यसापेक्षतयासापेक्षत्वविरह इष्टापत्त्ययोगाद्बाहुल्येयायां गोत्वाभाव इति साधुः स्यात् प्रामाणिकश्च स्यात्प्रयोग इत्यत्र तात्पर्यं बोध्यम् । एवञ्चाग्रे तदर्थान्वितेत्यत्राभेदान्वयो वा निवेशनीय इत्यत्रानास्थाद्योतकवाकारस्य ग्रन्थकर्तुरुपन्यासो मन्तव्यः । यच्च त्रिपदतत्पुरुषादेरनभ्युपगमाच्चैत्रसखिधनमित्यत्र सख्युर्धनं सखिधनं चैत्रस्य सखिधनमिति समासएवाभ्युपेयः चैत्रशब्देन सखिशब्दस्य प्राक्समासेतु समासान्तविधेः प्राप्तौ चैत्रसखधनमिति स्यात् तत्र सखिपदार्थस्य सखिधनमितिसमासबहिर्भूतचैत्रपदार्थेन चैत्रसंबन्धिना भेदेनान्विततया सापेक्षत्वेनोक्तसमासस्यासाधुतास्यादित्युक्तं तैस्तत्समासाघटकपदे विभक्त्यन्तत्वोपादानात्स्वप्रयोजकविवक्षाप्रयोज्यसमासबहिर्भूतत्वस्यैव समासाघटकत्वपदार्थत्वेन विवक्षितत्वाद्वा, समासाघटकपदार्थे विभक्त्यर्थघटितधर्मावच्छिन्ननिरूपितनिरूढलक्षणाधीनोपस्थितिविषयत्वस्य विशेषणत्वाद्वा समाधातुं शक्यं तथाहि चैत्रस्यसखिधनमित्यत्र चैत्रशब्दस्य विभक्त्यन्तत्वेऽपि अभेदान्वयाभावान्न सापेक्षता चैत्रसखिधनमित्यत्रापि चैत्रपदस्य विभक्त्यन्तत्वाभावेनाप्राप्त्यत्वान्न सा । नचैवं राज्ञोमातङ्गा राजमातङ्गा ऋद्धस्य राजमातङ्गा-इतिविग्रहेऽपि समासः स्यादिति वाच्यम् तादृशविग्रहस्यैवासाधुत्वात् ऋद्धराजमातङ्गाइति समासस्तु साधुरेव ऋद्धश्चासौराजा ऋद्धराजः ऋद्धराजस्य मातङ्गा इति साधुविग्रहस्य सत्त्वात् । तत्रहि सापेक्षत्वमनिष्टमेव एवं प्रतिप्रयोगं पदानां भिन्नत्वेन यत्र चैत्रसखिधनमिति प्रयोगस्तत्र तद्घटकस्य सखिधनमिति समासस्य केवलात्सखिधनमिति समासाद्भिन्नत्वेन चैत्रसंबन्धिसखिधनबुबोधयिषाया एकस्या एवाभ्युपेतव्यायाः स्वप्रयोजकतया तत्प्रयोज्यस्य चैत्रसखिधनमिति समासस्य घटकमेव हि चैत्रपदमिति नसापेक्षत्वप्रसङ्गः । एवं चैत्रपदार्थस्य चैत्रसंबन्धिनो विभक्त्यर्थघटितत्वाद्वा नोक्तप्रसङ्ग इति । अन्येत्वाहुः । चैत्रस्य गुरुकुलमित्यादेः साधुत्वोपपादनाय सापेक्षत्वशरीरे समासघटकपदे प्रतियोगिपदकारकपदातिरिक्तत्वं विशेषणमुपादेयम् "प्रतियोगिपदादन्यद्यदन्यत्कारकादपि । वृत्तिशब्दैकदेशार्थे न तस्यान्वय इष्यत" इत्यभियुक्तोक्तेः । प्रतियोगित्वं च स्वग्रहत्वव्यापकविषयतासमानाधिकरणतत्प्रयोज्यजिज्ञासाविषयतावच्छेदकविशेषधर्मावच्छिन्नत्वम् । गुरुत्वादिकञ्चात्र मते सर्वं निरूपकघटितमेवाभिप्रेतम् । तथाहि स्वबुभुत्सितार्थप्रतिपत्तिफलकोपदेशकर्तृत्वम् स्वगर्भबुभुत्सितत्वप्रवेशादुपदेशादन्यस्यान्यबुभुत्सितार्थप्रतिपत्तावपि न तन्निरूपितगुरुत्वव्यवहारः स्वाभिलषितनियतनिरुपाधिकोपकारकर्तृत्वं सखित्वम् स्वाभिलषितत्वप्रवेशादसङ्गस्य यतेः स्वरसतोविश्वोपकारिणि यतौ न मित्रत्वव्यवहारः नियतत्वप्रवेशात्कदाचिदुपकारके निरुपाधिकत्वप्रवेशाच्चापकर्तुरपि धर्मबुद्ध्योपकारके न सखित्वप्रसङ्गः पुत्रत्वपितृत्वादीनांजन्यजनकभावघटितानां जन्यजनकघटितत्वं प्रसिद्धमेव दासत्वं तु क्रीतत्वे सति स्वामीच्छाविघातपरिहारेण प्रवर्तमानत्वं क्रीतानामपि गवादीनां स्वामीच्छाविरोधेनापि प्रवर्तमानानां न दासत्वव्यवहारः अक्रीते तु विशेष्यदलसत्त्वमात्रनिबन्धनो गौणः सः मित्रे त्वन्योन्यानुरोधादन्योन्येच्छाविरोधेन प्रवर्तमाने न गौणोपीत्येवं सनिरूपकाणां निरुक्तिरूहनीया गुरुत्वादीनां संबन्धिघटितत्वात्संबन्धिघटितत्वेन सनिरूपकत्वेन च व्यवहारः । नच गोगोत्वादीनां स्वाम्याद्यघटितत्वात् प्रतियोगित्वनिरुक्तौ जिज्ञासापर्यन्तानुधावनाद्गुरुत्वादिग्रहत्वव्यापकविषयत्वस्य बुभुत्साप्रतिपत्त्यादौ सत्त्वेऽपि न प्रतियोगित्वप्रसङ्गः न ततो बुभुत्साया गुरुरित्यादिव्यवहारप्रसङ्गश्च गुरुत्वादिघटकतया सामान्यतोज्ञातस्य विनेयादेरेव हि विशेषतो जिज्ञासितत्वं न बुभुत्सादेः विनेयादेर्विशेषतो ग्रहादेव च गुरुत्वादिबोधः पर्यवसन्नः सर्वांशे ह्यसंदिग्धात्मा संपद्यत-इति युक्तं विनेयादेर्निरूपकत्वापरपर्यायंप्रतियोगित्वम् एवं चात्र पक्षेऽभेदान्यसंबन्धप्रतियोगित्वातिरिक्तं प्रतियोगित्वं दुर्वचमिति मन्यमानस्य कौस्तुभकृतो यच्चैत्रस्य गोरूपं चैत्रसखिधनमित्यत्रापत्त्यनुपपत्त्योरुद्भावनं तदपि निरस्तम् चैत्रादेर्गोपदार्थे प्रतियोगित्वविरहात्सखिपदार्थे सखित्वे तत्सत्वाच्च । प्रतियोगिपदत्वं च प्रतियोगितद्घटितधर्मावच्छिन्नान्यतरस्य शक्तिनिरूढलक्षणान्यतरवृत्त्याभिधायकत्वं, विभक्त्यर्थस्य संसर्गतापक्षे यथाश्रुतमेव, अतएव कारकपदान्यत्वमपि सार्थकम् । अन्यथा कारकस्याप्यभेदान्यसंबन्धेनैवान्वितत्वेन प्रतियोगिरूपत्वेन कारकपदस्यापि प्रतियोगिपदातिरिक्तत्वेनैव व्यावृत्तिः स्यात्, अयमेव च पक्षः कातन्त्रपरिशिष्टकृदाद्यभिमतो जगदीशस्यापि संमतः । कौस्तुभकृतां दोषोद्भावनंतु विनेयादेर्गुरुत्वादिशरीरे प्रवेशाभावेऽपि चैत्रादिपदार्थविनेयादिविशेषस्य नियमतो बुभुत्साद्यन्वयसाकाङ्क्षत्वाभ्युपगमेन यस्य बुभुत्सा तस्यैव निरूपितत्वस्यच तत्रोपगमेन दोषनिरासंभवेनोक्तप्रतियोगित्वनिरुक्तेरसंभवाभिप्रायकतया कथंचित्समर्थनीयमिति ।

परेतु यत्र नित्यसापेक्षत्वं तत्रैकदेशान्वय इत्यभिप्रेत्य यत्र विशेषणेऽन्वयस्तत्र सापेक्षत्वं यत्र विशेषणतावच्छेदके न तत्र तथात्वमित्याहुस्तच्चैतत्स्वार्थश्च स्वीयवृत्तिग्रहविशेष्य इति मूलग्रन्थवक्ष्यमाणपक्ष एव पर्यवस्यति । अत्रच चैत्रस्य गोरूप-

मित्यस्य न प्रसङ्गः गवादेर्विशेषणतानवच्छेदकत्वात् । गुरुत्वसखित्वादेर्विशेषणतावच्छेदकत्वात् तत्र तत्रेतरान्वयेऽपि न सापेक्षता । अथात्र यद्यपि विभक्त्यर्थस्य संसर्गतामते लुप्तविभक्त्यनुसन्धानेनान्वयपक्षे च गोरूपं राजमातङ्गा इत्यादौ गवादेर्न विशेषणतावच्छेदकत्वप्रसङ्गो नवा. वृत्तिग्रहविशेष्यत्वस्य च हानिस्तथापि चात्र ग्रन्थे राजादिपदस्य राजसंबन्ध्यादिलक्षणापक्षस्यादृतत्वात्कौस्तुभेऽपि चैत्रसखिधनमित्यत्र चैत्रसंबन्धिनश्चैत्रपदार्थत्वमभ्युपेत्य प्रागुक्तपक्षद्वयं दूषयित्वा एतत्पक्षस्य परिग्रहादेतत्कल्पस्य संबन्धिलक्षणापक्षेऽपि निर्दोषत्वं प्रतीयते । तच्च न संभवति राजादेर्विशेषणतावच्छेदकत्वात् वृत्तिग्रहविशेष्यत्वाभावाच्च । तत्र समासाघटकपदार्थान्वयेऽपि सापेक्षत्वानुपपत्तेः नच शक्तिरेव वृत्तिपदेन ग्राह्येति वाच्यम् तज्ज्ञानविषयो नीलघटइत्यत्र पवित्राया गङ्गाघोष इत्यत्रच लक्ष्यार्थे नीलरूपवति गङ्गातीरे च समासाघटकपदार्थान्वयेऽपि सापेक्षत्वाभावप्रसङ्गात् शक्तिलक्षणासाधारणवृत्तित्वप्रवेशे गुरुत्वादेरपि गुर्वादिपदलक्षणाग्रहविशेष्यत्वसंभवादतः प्रकृतानुकूलत्वेनैव वृत्तिग्रहस्य प्रवेशनीयतया राजपदलक्ष्यार्थस्यैव शाब्दबोधे भाने लक्षणाग्रहस्यैव प्रकृतानुकूलत्वसंभवेन राजादेः पदार्थैकदेशत्वस्य दुर्वारत्वात् । एवं शरैः शातितपत्र इत्यत्र शातनादेः पदार्थैकदेशत्वकथनमपि न संगच्छते शातितादिपदानां यौगिकत्वेन तस्य वृत्तेरभावात् । नच क्तान्तस्य स्वपदग्राह्यत्वे क्तस्य स्वपदग्राह्यतायाः संभवेन तद्वृत्तेः प्रसिद्धतया तद्ग्रहाविशेष्यत्वाच्छातनादेर्नानुपपत्तिरिति वाच्यम् आर्जुनियुद्धं शाबलेयरूपमित्यादौ तद्धितान्तस्य यौगिकत्वेन वृत्त्यभावात्स्वपदग्राह्यतद्धितवृत्तिग्रहविशेष्यत्वस्यार्जुनशबलादावभावेन पदार्थैकदेशत्वसंभवेन तत्र समासाघटकपदार्थान्वयेऽपि सापेक्षताविरहात्पाण्डवस्यार्जुनियुद्धं चैत्रस्य शावलेयरूपमित्यादिकमपि हि साधु स्यात् तत्र शातनकर्मणः पदार्थत्वं कथं चिदुपपाद्य शातनस्य पदार्थैकदेशत्वसमर्थनमर्जुनापत्यादेः पदार्थत्वेनार्जुनादेरपि पदार्थैकदेशत्वस्य प्रसञ्जकम् स्वस्वघटकवृत्तिग्रहविशेष्यत्वेन पदार्थत्वन्तु धातुवृत्तिग्रहविशेष्यतया शातनेप्यतिप्रसक्तमिति चेदुच्यते स्वघटितसमासप्रयोजकबुबोधयिषाविषयशाब्दानुकूलस्ववृत्तिग्रहविशेष्यत्वप्रवेशे न कोपि दोषः राजपदशक्तिग्रहस्यापि राजसंबन्धिलक्षणाग्रहानुकूलत्वेन प्रकृतशाब्दानुकूलत्वात् राजादिपदशक्तिग्रहविधुरस्योक्तशाब्दानुदयात् गङ्गायां घोष इत्यत्रापि गङ्गापदशक्तिलक्षणाग्रहयोरुक्तरीत्या शाब्दानुकूलतया गङ्गातीरे चान्वये भवत्येव सापेक्षता । गुर्वादिपदस्य गुरुत्वे लक्षणाग्रहस्तु गुरुकुलमिति समासप्रयोजकबुबोधयिषाविषयबोधस्य न कथंचिदप्यनुकूल इति तत्र नानुपपत्तिः कृदन्तस्य स्वपदग्राह्यत्वे कृत्प्रत्ययस्य ग्रहणसंभवेन शातनादेस्तद्वृत्तिग्रहविशेष्यत्वासंभवेन सापेक्षत्वविरहवदार्जुनिप्रभृतितद्धितान्तस्य स्वपदग्राह्यत्वे तद्धितस्य ग्रहणसंभवेन तद्वृत्तिग्रहविशेष्यत्वस्यार्जुनादावभावेन सापेक्षत्वविरहः समस्यमानस्य कृदन्तस्येव तद्धितान्तस्यापीष्यत एव समासासाधुत्वनिबन्धनो न तथाप्रयोगाभावः किन्तु तद्धितवृत्तेरसाधुतयैवतादृशवृत्त्यघटकपाण्डवादिपदार्थान्वितस्वार्थकत्वेनार्जुनादिपदस्य सापेक्षतया ततस्तद्धितोत्पत्तेरेवासंभवात् । नच कृदन्तस्यापि वृत्तित्वेन तदघटकशरैरित्यादिपदार्थान्वितस्वार्थकत्वेन धातोः सापेक्षतया कृत्प्रत्ययानुत्पत्तेः शरैः शातितपत्रइत्यप्यसाधुः स्यादिति वाच्यम् कृदन्तवृत्तिसापेक्षत्वशरीरे वृत्त्यघटकपदे कारकपदभिन्नत्वस्य निवेशनीयतया तत्र सापेक्षत्वाभावाद्भवत्येव हि शरैःशातितपत्रइति साधुः । पाण्डवस्यार्जुनिरिति तु न भवत्येव । अतएव दासत्वादौ प्रमेयादिपदार्थान्वये निरुक्तसापेक्षत्वस्यासंभवात्प्रमेयं दासभार्येत्यादिप्रयोगप्रसङ्गमाशङ्क्य प्रमेयादिपदार्थस्य दासत्वाद्येकदेशेनान्वये प्रमेयंदासइति प्रयोगाभावेन निराकाङ्क्षतयैव तादृशप्रयोगाभाव उपपादितः चैत्रस्य गुरुर्दास इत्यादिप्रयोगात् गुरुत्वादौ चैत्रादिसंबन्धान्वयस्य साकाङ्क्षत्वात् चैत्रस्यगुरुकुलमिति भवत्येव साधुः तदर्थं च सापेक्षत्वनिबन्धनसमासासाधुत्वस्य प्रसक्तस्याभावसंपत्तये सापेक्षत्वविरहमात्रं परमुपपादनीयमुपपादितं च तत्र तत्र ।

इदमत्रावधेयम् । परमःसुन्दर इत्यत्र सौन्दर्ये पदार्थैकदेश एवान्वये साकाङ्क्षत्वमङ्गीकृतमस्तीति तत्र परमस्य सुन्दरप्रतिकृतिरित्यत्र प्रमेयं दासभार्येत्यादाविव निराकाङ्क्षत्वस्य वक्तुमशक्यत्वात्पदार्थैकदेशेऽन्वयेन सापेक्षत्वस्याप्यभावात्साधुत्वं दुर्वारमेव, परमपदस्य प्रतियोगिपदकारकपदभिन्नत्वाच्च नेष्टापत्तिः स्वाभिन्नसौन्दर्यादिमत्त्वसंबन्धेन परमपदार्थस्य सुन्दरएवान्वयाभ्युपगमेन चैत्रादिसंबन्धस्यापि स्वाश्रयगुरुत्ववत्त्वसंबन्धेन गुरावेवान्वयोऽभ्युपेयः स्यादेकदेशानन्वयनियमसंकोचप्रसङ्गबीजस्य तुल्यत्वात्तथासति तत्रापि स्यात्सापेक्षता । यदिचैकत्र सापेक्षत्वमपरत्र न तथात्वमिति वैलक्षण्यायैवैकत्रैकदेशान्वयसाकाङ्क्षत्वमन्यत्र न तथेति चेदुपेयते भवति तदानुपपत्तीनां परिहार इति । अथापि पितुः स्वर्गकाम इत्यादि प्रामाणिकवाक्यानां न साधुतोपपत्तिः स्वर्गपदस्य सापेक्षत्वेन समासानुपपत्तेरिति चेदत्रकौस्तुभकृतः षष्ठ्यर्थस्य स्वर्गभागित्वेन विषयताविशेषरूपसंबन्धस्य कामनांशे कामपदार्थएवान्वयो हि स्वीकरणीयोऽन्यथा मुक्तंपितरमुद्दिश्य प्रयुक्तस्योक्तवाक्यस्य बाधितार्थकत्वापत्तेः । नच श्रृङ्गीचित्रगुरित्यत्र गवाद्यंशे श्रृङ्गिणोऽन्वयतात्पर्ये प्रामाण्यस्य गोपदस्य प्रधानार्थकतया सापेक्षत्वविरहप्रसङ्गप्रसञ्जितसाधुत्वस्य च वारणाय स्वार्थे प्रधानीभूतार्थभिन्नत्वस्यैव विशेषणतायाः प्रागुक्ततया कामनायाः प्रधानपदार्थत्वेऽपि प्रधानार्थत्वविरहेण सापेक्षत्वं दुर्वारमेवेति वाच्यम् प्रधानार्थपदस्य हि सापेक्षत्वं क्रियासप्रतियोगिकभिन्ने विशेषणीभूते स्वार्थे समासाघटकपदार्थान्वये सत्येव स्वीकरणीयं तथासति प्रधानार्थककामपदार्थकामनाया विशेषणरूपत्वेऽपि क्रियाभि-

त्वाभावान्न सापेक्षता सप्रतियोगिकभिन्नत्वनिवेशाच्चैत्रस्य सुन्दरपुत्रोयमित्यत्र न सापेक्षता पुत्रत्वस्य सप्रतियोगिकत्वेन तद्भिन्नत्वलाभवात् चैत्रस्यकृतोपकारः मैत्रस्यदृष्टपुत्र इत्यादयोऽपि प्रयोगा इष्यन्त एवेत्याहुः। तत्रेदमवधातव्यम्। तन्न्यपर्यालोचनया प्रधानार्थकपदसापेक्षताया भिन्नत्वं प्रतीयते तच्च समासाघटकपदार्थान्वितस्वार्थेऽप्रधानीभूतत्वं क्रियाभिन्नत्वं सप्रतियोगिकभिन्नत्वं चेति विशेषणं प्रक्षिप्यैकोक्तिसंभवादग्राह्यम् । किंच तत्र सप्रतियोगिकत्वघटकप्रतियोगित्वं यदिविवक्षितामेदान्यसंबन्धप्रतियोगित्वं तदा चैत्रस्य दृष्टगुः—पुरुष इत्यत्र प्रधानार्थकगोपदार्थविशेषणतावच्छेदकस्य गोः सप्रतियोगिकभिन्नत्वाभावात् सापेक्षत्वाद्युपपत्तिः। इष्टापत्तिस्तु न सम्भवति चैत्रस्य गोरूपमित्यस्यानिष्टतायास्तैः प्रागुक्तत्वात्। अत्र प्रागुक्तस्य प्रतियोगित्वस्यत्वेतत्पक्षानभ्युपगम्यतायाः प्रागुक्तत्वात्तथासति प्रतियोगिपदादन्यदित्याद्युक्तपक्षएव पर्यवसानापत्तेः। किञ्च क्रियात्वं यदिधातुपदबोध्यत्वं तदा कृतोपकारइत्यादिबहुव्रीहौ घञन्तसमुदायस्य शक्तिपक्षे चरमपदस्य तस्यैव घञः स्वरूपार्थकत्वे तस्य चोपकारघटितपदार्थलाक्षणिकतया तदर्थस्योपकारस्य धात्वर्थत्वाभावात् क्रियात्वं न स्यात्। क्रियास्वरूपभेदनिवेशे स्वारसिकतलक्षणावत्पदार्थेप्युपकारादावन्वये सापेक्षताविरहः स्यात् घञो निरर्थकत्वपक्षस्य समस्यमानस्यैव स्वपदग्राह्यतया घञन्तस्य घञश्च वृत्तिविरहेणानुपादेयत्वाद्धातोरसमस्यमानत्वात् अतिक्लेशपरिग्राह्यत्वेनैवोपेक्षणीयत्वात्। तण्डुलस्य दृष्टपाचक इत्यत्र तु सुतरामगतिः स्वघटकधातुवृत्तिग्रहस्य प्रकृतबोधानुकूलस्य विषयत्वं तूक्तलक्षणास्थलेऽपि धातुशक्तिग्रहस्यकथंचिदुपयोगित्वेन संभवदुक्तिकमपि चैत्रादिपदस्य विशेष्यपदत्वे स्वघटकधात्वप्रसिद्धेरुपेक्षणीयम् । यदिच वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वमनुमतं तदा तादृशस्य विषयत्वसंबन्धावच्छिन्नप्रधानार्थकपदाभाववत्त्वं क्रियाभिन्नत्वरूपं वक्तुं शक्यमिति । इदंतुबोध्यम्। पितुः स्वर्गकामइत्यत्र कामनांशेऽन्वयाभ्युपगमे प्राक्परिष्कृतस्य स्वीयवृत्तिग्रहविशेष्यत्वस्याभावादेव सापेक्षत्वप्रसङ्गस्यासंभवात् क्रियाभिन्नत्वमनुपादेयमेव चैत्रस्य कृतोपकारस्तण्डुलस्य दृष्टपाचक इत्यादीनामपि साधुत्वमुपपद्यत एव निरुक्तविशेष्यत्वस्योपकारपाकादावभावात्। एवं सप्रतियोगिकभिन्नत्वमपि नोपादेयम् पुत्रत्वेपि निरुक्तविशेष्यत्वाभावात् चैत्रस्यदृष्टगुरित्यत्र गोर्निरुक्तविशेष्यत्वस्य संभवान्न साधुताप्रसङ्ग इतिदिक् ॥

अथ समासशक्त्यस्वीकारे ब्राह्मणः पण्डितः पण्डितोब्राह्मण इत्यत्रेव पण्डितब्राह्मणइति समासेप्युद्देश्यविधेयभावेन शाब्दबोधापत्तिस्तत्प्रयोजिकाया असंसृष्टोद्देश्यविधेयोपस्थित्यात्मकपृथगुपस्थितेः सत्त्वात् समासशक्त्यभ्युपगमे च पण्डिताभिन्नब्राह्मणोपस्थितौ समासशक्तिजन्यायामुभयोः संसृष्टयोरेव विषयत्वात्पृथगुपस्थितेरभावान्नोद्देश्यविधेयभावेनान्वयबोधः। अतएव वषट्कर्तुः प्रथमभक्षा इत्यत्र वषट्कर्तृविशिष्टभक्षाद्युद्देशेन प्राथम्यस्य न विधिरपितु प्राथम्यविशिष्टभक्षान्तरस्यैवेति मीमांसासिद्धान्तोऽपि संगच्छते अन्यथोद्देश्यविधेयभावे प्रयोजकपृथगुपस्थितेः सत्त्वात् भक्षणस्य प्रधानार्थत्वेन वषट्कर्त्रन्वयेऽपि सापेक्षत्वाभावात्तादृशविधाने क्षत्यभावादसंगतिः स्यात्। नचैवं लोहितोष्णीषा ऋत्विजः प्रचरन्ति सप्तदशारत्निर्वाजपेयस्य यूप इत्यत्र लौहित्यसाप्तदश्यादेर्विधेयत्वोक्तिर्मीमांसकानामसंगता स्यादिति वाच्यम् अतिदेशादुपदेशस्य बलवत्वेनातिदेशालोचनात्प्रागुपदेशेन लौहित्यविशिष्टोष्णीषसप्तदशारत्निविशिष्टयूपादिविधाने पश्चादतिदेशाकलनात्प्राप्ताप्राप्तविवेकेन लौहित्यायंश ,,एव, विधेयत्वव्यवस्थितेस्तदभिप्रायकत्वादुक्तोक्तेरसंगत्यभावात्। वषट्कर्तृभक्षणस्य च प्राप्त्यभावान्नैवं तत्रापि गतिरिति चेन्न समासस्थले उद्देश्यविधेयभावेन बोधो न जायत इत्यस्य वासनामात्रविजृम्भितत्वात् सत्यां पृथगुपस्थितौ तादृशबोधाभ्युपगमे क्षत्यभावात् समासशक्त्यनभ्युपगन्तृमीमांसकानामुक्तसिद्धान्ते बीजान्तरस्यैव वक्तव्यत्वात् समासशक्त्यभ्युपगमे प्रसक्तस्य तत्पुरुषे लक्षणायाः कर्मधारये चालक्षणाया निषादस्थपत्यधिकरणीयकर्मधारयाभ्युपगममूलकनिषादविद्योपगमसिद्धान्तमूलभूताया असंभवेन तत्सिद्धान्तविरोधस्य यथा वैदिकसमासस्थले तत्पुरुषकर्मधारयत्वान्यतरसन्देहे कर्मधारयत्वमेवेत्यनादिनियममूलकतात्पर्यबुद्धेः तत्सिद्धान्तमूलत्वमभ्युपेत्य निषादाभिन्नस्थपतिः समासार्थं उत निषादभिन्नस्त्रैवर्णिको निषादानांस्थपतिस्समासार्थं इति सन्देहे निषादभिन्नोपस्थितिकल्पनागौरवग्रहनिबन्धनकर्मधारयार्थतात्पर्यबुद्धेर्वा तदभ्युपेत्य परिहारः क्रियते भवद्भिः तथास्माभिरपि वैदिकसमासस्थले समासैकदेशार्थस्य विधेयत्वमुचितं विशिष्टार्थस्यवेति सन्देहे विशिष्टार्थस्यैवेति नियममूलकविशिष्टार्थविधेयत्वानादितात्पर्यग्रहमूलकत्वमुक्तसिद्धान्तस्याभ्युपेत्य वषट्कर्तृविशिष्टभक्षणस्याप्राप्तत्वेनोद्देश्यत्वासंभवात् भक्षणमात्रमुद्दिश्य प्राथम्यवषट्कर्त्रोर्विधाने वाक्यभेदप्रसङ्गेन गौरवं स्यादित्यनुसन्धानमूलकविशिष्टविधितात्पर्यग्रहमूलकत्वं वा तत्सिद्धान्तस्याभ्युपेत्य सोऽस्माभिरपि परिहरणीयः वस्तुतो भवद्भिरप्ययमेव परिहारोऽभ्युपेयः । तथाहि समासशक्त्यभ्युपगमेऽपि समासघटकतत्तत्पदार्थवृत्तिग्रहसहकृतविशिष्टशक्तिग्रहजन्योपस्थितिरेव शाब्दकारणमभ्युपेयते नवीनवैयाकरणैः वाक्यात्तत्र विशेषश्च वाक्यस्थले पृथगुपस्थितयोरर्थयोः शाब्दबुद्धावेव संसृष्टतया भानं समासस्थले चोपस्थितावपीति प्रत्येकपदवृत्तिग्रहापेक्षाभ्युपगमे मूलञ्च समासघटकराजपदादेश्चन्द्राद्यर्थकत्वग्रहे नृपसंबन्धिपुरुषे समुदायशक्तेर्ग्रहो ग्रहेपि वा शाब्दबोधाननुभवः राजपुरुषपदशक्यसंबन्धित्वेन शुद्धघटादिग्रहे समासस्थलेऽविशिष्टघटादिशाब्दस्याननुभविकस्य प्रसङ्गश्च समुदायशक्तिग्रहप्रयुक्तविशिष्टविषयकत्वोपगमे च तथात्वे विशिष्टस्य प्रकृत्यर्थतया तत्र विभक्त्यर्थान्वयाप्रसङ्गादिः प्राक्प्रदर्शितयुक्तिसंघातश्च मूलमिति

तथासति समासस्थलेऽपि पृथगुपस्थितेः सम्भवादुद्देश्यविधेयभावेन बोधस्य दुर्वारतया तत्सिद्धान्तविरोधस्य दुर्वारत्वात्। एवंचैवं समासशक्तिपक्षपरिष्कारे करणीये न्यायनये समासस्थलीयशाब्दबोधसामग्र्यामुपस्थितिद्वयप्रवेशेनगौरवमिति शङ्कापि निरस्ता वेदितव्या। प्रत्येकशक्तिग्रहजन्यत्वद्वयं समुदायशक्तिजन्यत्वं विशिष्टविषयत्वं च निरूप्यनिरूपकभावव्यत्ययप्रयुक्तविषयतात्रयरूपमिति षण्णां कारणविशेषणत्वे व्यासज्यवृत्त्यवच्छेदकत्वानङ्गीकारेण विशेष्यविशेषणभावे विनिगमनाविरहाद्बहुतरगुरुधर्मावच्छिन्नकारणत्वप्रसङ्गेन समासशक्तिवाद एव गौरवात् लाघवेनोपस्थितिद्वयस्य कारणत्वे व्यवस्थिते सामग्रीप्रतिबन्धकत्वादौ गौरवस्य फलमुखत्वेनादोषत्वादिति।

वस्तुतस्तु समासघटकपदार्थस्य विधेयताया अनुभवातीतत्वे तादात्म्येन नीलादिविधेयकघटाद्युद्देश्यकबोधे स्वाद्यन्तघटपदोत्तरवर्तिस्वाद्यन्तनीलपदज्ञानत्वेनैव कारणत्वं राजसम्बन्ध्यादिविधेयकबोधेस्वाद्यन्तपुरुषादिपदोत्तरवर्ति स्वाद्यन्तराजसंबन्ध्यादिपदज्ञानत्वेन राजसंबन्धविधेयकबोधे स्वाद्यन्तपुरुषादिपदोत्तरवर्तिङसाद्यन्तराजादिपदज्ञानत्वेन कारणत्वमित्येव निर्वक्तव्यम्। ईदृक्कार्यकारणमूलकमेव च "उद्देश्यवचनं पूर्वं विधेयस्य ततःपरम्" इति वचनम्। पृथगुपस्थितेः विधेयताप्रयोजकत्वोक्तिः पृथक्पदादर्थाद्विभक्त्यन्तपदादुपस्थित्यभिप्रायिका बोध्या। यत्तु समासेप्युद्देश्यविधेयभावेनान्वयोपगमे अविमृष्टविधेयांशस्य दोषत्वं तत्र नस्यात्तद्दोषतायां बीजस्य विधेयत्वेन बुबोधयिषितस्य तत्त्वेनाप्रत्ययस्य प्राङ्निर्दिष्टस्यैवोद्देश्यत्वं चरमनिर्दिष्टस्यैव विधेयत्वमिति नियमनिर्वाहस्य तत्रासंभवात्तदप्यबोधविलसितमेव। तथाहि विधेयस्यान्यत्रानुपसर्जनत्वे सति उद्देश्यपदानन्तरनिर्देशाभावो दोषताप्रयोजकः समासे विधेयस्योपसर्जनत्वाद्वाक्येचोद्देश्यानन्तरनिर्देशाभावाद्दोषत्वमित्यालङ्कारिकोक्तेः समासे उद्देश्यविधेयभावेनाप्रत्यायकत्वस्य दोषत्वाप्राप्तेः समासस्थले उद्देश्यविधेयभावेन बोधस्यैवाभावे विधेयस्योपसर्जनत्वकथनं हि विरुध्येत। नच तत्र विधेयपदं विधेयत्वेनाभिमतपरं तस्योपसर्जनत्वोक्तिश्च विशिष्टशक्त्यभिप्रायिकेति वाच्यं तथासति वाक्यस्थले विधेयस्य प्राङ्निर्देशे विधेयतया प्रतीत्यभावस्यावश्यकतया विधेयतया प्रत्यायकत्वाभावपर्यवसन्नेन विशेष्याभावदलेनैव पूर्वपदार्थप्रधानसमासेऽप्यभिमतसंप्रतिपत्तिसंभवात्। विशेषणाभावदलस्य हि दोषताप्रयोजकत्वकीर्तनमसंगतं स्यात् समासे चोद्देश्यविधेयभावेन बोधाभ्युपगमे हि विशेष्याभावदलस्य विधेयत्वेनाप्रत्यायकतापर्यवसन्नस्याप्यसंभवेन विशेषणाभावदलस्य विधेयतया प्रत्ययेऽपि दोषताप्रयोजकत्वेन पृथक्कीर्तनं संगच्छते। एवञ्चाविमृष्टविधेयांशस्य दोषताप्रयोजिकाबुभुत्सितासंप्रतिपत्तिर्बोध्या। तत्र प्रयोजकमुभयमुपसर्जनत्वमुक्तनिर्देशाभावश्च अविमृष्टविधेयांशस्थले समासेचोपसर्जनत्वंनियतं वाक्येचोक्ताभावः सिद्धत्वनियतमुपसर्जनत्वमुद्देश्यस्य सिद्धात्मकस्य प्राङ्निर्देशस्य प्रचुरत्वात्सिद्धत्वनियतं प्राङ्निर्दिष्टत्वमपि गृहीतमस्तीत्यविमृष्टविधेयांशस्थले उद्देश्यविधेयभावेन ऽदबोधे जातेऽपि उपसर्जनत्वं प्राङ्निर्दिष्टत्वादिग्रहतः साध्यस्वभावस्यापूर्वात्मनोविधेयस्य सिद्धत्वं गृह्यते ततश्च विधेयतया बुबोधयिषितत्वफलीभूतसाध्यत्वापूर्वत्वादिप्रत्ययो व्याहन्यते तथासति न्यक्कारो ह्ययमेव मे यदरयइत्यादिवाक्यस्थले न्यक्कारस्य सिद्धत्वप्रतीत्याऽपूर्वत्वप्रत्ययकृतस्य वक्तूरावणस्य बुभुत्सितोत्कर्षप्रत्ययस्यानिर्वाहोपकर्षप्रत्ययापत्तिश्च, एवंजातमिथ्यामहिम्नामित्यादिसमासस्थले मिथ्यामहिमत्वस्य सिद्धत्वप्रतीतेर्वक्तुरुत्कर्षाप्रतीतिरपकर्षप्रतीतिश्चेति बुभुत्सितासंप्रतिपत्तिरूपदोषताप्रयोजकसद्भावान्न दोषत्वहानिरिति।

अत्रेदमवधेयम्। समासस्याशक्तत्वे शशशृङ्गादिपदानां व्यपेक्षारूपसामर्थ्यमादाय समाससंभवः शक्तिपक्षे विशिष्टस्य शशशृङ्गादिपदार्थस्यालीकतया शक्त्यसंभवेनैकार्थीभावस्याभावात्समासानुपपत्तिः प्रातिपदिकसंज्ञानुपपत्तिश्च। नचासत्ख्यात्युपनीते तत्रशक्तिसंभव इति वाच्यं ज्ञानकारणेन्द्रियादिव्यापाराभावेनासत्ख्यातेरेवासंभवात्। किञ्च शक्तेरज्ञाताया अनुपयोगित्वेन ज्ञानं तस्यापेक्षितं नच तत्संभवति। तथाहि परबुद्धिविषयत्वेन विशेषत उपस्थिते तत्र शक्तिग्रहः सामान्यत उपस्थिते वा विशेषत उपस्थितिरपि बुद्धेस्सनिरूपकत्वेन बुद्धिनिरूपणेऽवश्यं भासमानत्वेन व्यवहारे शाब्दबुद्धावुन्नीयमानायां विशेषणतया विषयत्वेन वा। तत्र नाद्यः परबुद्धेरप्रत्यक्षत्वान्नद्वितीयः अलीके व्यवहाराभावात् नापि शशशृङ्गादि शब्द उच्चारयितृतात्पर्यकः बालशुकादिशब्दभिन्नवाक्यत्वादित्यनुमानेन तात्पर्यसिद्धौ तात्पर्यं सविषयकमित्यनुमानेन तात्पर्यविषये सिद्धे शशशृङ्गशब्दसंकेतग्रहइति सामान्यतउपस्थितिपक्षो युक्तः तादृशसङ्केतग्रहस्य शाब्दबोधानुपयोगित्वात् अन्यथा गोत्वविशिष्टे शक्तिमजानतः सामान्यतः शक्तिग्रहाच्छाब्दबोधप्रसङ्गात्। नचान्यत्र तथा मास्तु निर्धर्मकेलीके तात्पर्यविषयत्वोपलक्षितएवशक्तिग्रहः शाब्दबोधोपयोगीति विशेषधर्मं विनैव कल्पनामात्रविषयः शशशृङ्गादिपदवाच्य इतिवाच्यम् कूर्मरोमशशशृङ्गविकल्पयोरविशेषप्रसङ्गेन तद्विषययोर्व्यावर्तकाभावेन कूर्मरोमशशशृङ्गादिपदजन्यबुद्धेर्वैलक्षण्यस्यानुभवसिद्धस्यापलापप्रसङ्गात्। अतएव तेषु तेष्वर्थेषु समासं विदधता व्याकरणेन तेष्वर्थेषु शक्तिरेव प्रतिपाद्यतेऽन्यथा व्याकरणाच्छक्तिरेव नसिध्येदित्यवश्यं शशशृङ्गादिवाच्यमेषितव्यमिति निरस्तम्। तत्र शक्तिग्रहस्यैवासंभवादसति बाधके तस्य शक्तिग्राहकत्वादित्यलम्-

**तेन समं विभक्त्यन्तार्थविशिष्टलाक्षणिकराजादिपदोपस्थाप्यराजसंबन्ध्यादेरभेदान्वयबोध एवेति न दोषः। एवं मुखं चन्द्र इत्यादिरूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशलक्षणया चन्द्रादिसदृशाभेदान्वयबोध एव, न तु सादृश्यादिसंबन्धेन चन्द्रादेर्मुखादावन्वय इति न तत्र व्यभिचारः। केचित्तु रूपकस्थले चन्द्रादिपदस्य चन्द्रादिसदृशे न लक्षणा किंतु तत्र मुख्यार्थचन्द्रादेरेवाभेदभ्रमो मुखादौ। मुखं न चन्द्र इत्यादि विशेषदर्शनदशायां च न तत्र शाब्दोऽभेदप्रत्ययः अपि तु शब्दजन्यविशकलितपदार्थोपस्थितिमूलको मानस एवाहार्य्याभेदभ्रम इत्याहुः। परे तु तादात्म्यातिरिक्त-**

---

प्रस्तुतानल्पजल्पनेन । **चन्द्रादिसदृशाभेदान्वय बोध एवेति** । नन्वेवमालङ्कारिकसिद्धान्तसिद्धस्योपमास्थलाद्रूपकालङ्कारस्थले विलक्षणचमत्कारस्यानुपपत्तिः उभयत्रापि चन्द्रसादृश्यस्यैव प्रत्ययादिति चेन्न यथाहि गङ्गायांघोष इत्यत्र गङ्गातीरे घोषइत्यत्रेव गङ्गातीरप्रत्ययस्याविशिष्टत्वेऽपि गङ्गाप्रत्यायकगङ्गापदजप्रत्ययनिबन्धनः शैत्यपावनत्वादिविशेष प्रत्ययस्तथारूपकोपमास्थलयोः सादृश्यप्रत्ययस्याविशिष्टत्वेऽपि चन्द्राभेदप्रत्ययप्रयोजकसमानविभक्तिकत्वरूपाकाङ्क्षाज्ञानचन्द्रपदाधीनचन्द्रोपस्थितिघटितसामग्रीप्रयुक्तत्वाप्रयुक्तत्वकृतश्चमत्कारवैलक्षण्यनिर्वाह इति । नन्वभेदावगाहिप्रत्ययादेवोपमास्थलविलक्षणस्य चमत्कारस्योदयइष्टो नोक्तसामग्रीप्रयुक्तज्ञानमात्रात् तथासति तज्जनितज्ञानानुव्यवसायस्यापि तत्प्रयुक्ततया ततस्तत्सामग्रीविगमकालेऽपि चमत्कारोदयापत्तेरिति बाधविरहकालेऽभेदशाब्दबोधात्तत्काले चेच्छाजनितादभेदमानसाच्चमत्कार उपपादनीयइति केषांचिन्मतमुपन्यस्यति । **केचित्त्वित्यादिना** । अत्रेदमवधेयम् यद्यभेदबोधादेव चमत्कारप्रत्ययः सहृदयहृदयसाक्षिकस्तदा सबोधः शाब्दबोधएवाभ्युपेयः श्रुतोयमर्थश्चेतश्चमत्करोतीत्यनुभवप्रामाण्यानुरोधात् श्रुधातोर्हि शाब्दबोधार्थकत्वं श्रोतव्यइत्यादौ व्यवस्थापितम्। नच बाधनिश्चयेन प्रतिबन्धान्न शाब्दबोधसंभवइति वाच्यं तथाहि अनुभवानुरोधाद्बाधनिश्चयदशायामिच्छां विनैव लौकिकसन्निकर्षजन्यं दोषविशेषजन्यं च ज्ञानमिच्छादशायां च चाक्षुषाद्यलौकिकविषयताकं ज्ञानमभ्युपेयते तथा शाब्दबोधोप्यभ्युपेयो यशःशुभ्रमित्यादौ बाधितार्थके श्रुतोऽयमर्थश्चेतश्चमत्करोतीत्यनुभवात् वह्निना सिञ्चतीत्यादौ श्रुतोवह्निकरणकः सेकः सच प्रमाणबाधित इत्यनुभवात्कथमद्रवेणवह्निनासेकंब्रवीषीत्युपहासदर्शनादमुमर्थंशाब्दयामीत्यनुभवस्य बाधकाले परोक्षं ज्ञानं नोत्पद्यतइत्यादिसिद्धान्तवासनादोषास्पृष्टमनसां समनसां निराबाधमुत्पत्तेश्च। नचोक्तानुभवानां सविवादत्वेन लाघवेन परोक्षत्वजात्यवच्छिन्नं प्रति प्रत्यक्षभिन्नज्ञानत्वावच्छिन्नं प्रति वा प्रतिबन्धकत्वमभ्युपेयं तथाच न शाब्दबोधसंभवः उक्तानुभवादयश्च शब्दमूलकमानसज्ञानादेवोपपादनीय इति वाच्यम् एवंहि सतिचाक्षुषाद्यलौकिकस्थलेऽपि इच्छया मानसप्रत्यक्षमभ्युपेत्य यथाकथञ्चिच्चक्षुरादिप्रयुक्तेन तेन सर्वानुभवादिरुपपादनीयो मानसत्वावच्छिन्नंप्रत्येव प्रतिबन्धकतायामिच्छाया उत्तेजकत्वस्य वाच्यत्वेन चाक्षुषत्वाद्यवच्छिन्नं प्रति तदिच्छाविरहघटितरूपेण प्रतिबन्धकत्वपञ्चककल्पनेन लाघवात् तथाच सिद्धान्तविरोधप्रसङ्गः । किञ्चापेक्षाबुद्ध्यात्मकबाधोत्तरम्परामशर्सत्त्वे सामान्यतस्साध्यसिद्धीच्छायां मानसस्य संभवेन तस्य यथाकथञ्चित्परामर्शप्रयुक्तत्वेनानुमितोयमर्थो बाधितोऽप्यमर्थमनुमिनोमीत्याद्युपपादकत्वसंभवेन तादृशानुभवाद्यापत्तेर्दुर्वारतापत्तेरेवमुक्तवाक्यस्थलेमानसाभ्युपगमेऽनपेक्षणीयत्वं स्यादाकाङ्क्षायाः तथासति निराकाङ्क्षादप्युत्पद्यमानान्मानसाच्चमत्कारोदयः स्यात् सचायं शाब्दबोधः परोक्षं ज्ञानमनाहार्यमेवेति सिद्धान्तादरे योग्यताज्ञानादेव बुभुत्सयोत्पादितत्वेन आहार्यादभ्युपेयः तदनादरेच बुभुत्साजन्यत्वेनाहार्यात्मा स्वयमेवाभ्युपेय इति । यत्तु शक्त्यानिरूढलक्षणया वा यत्र सादृश्यप्रतीतिस्तत्रोपमालङ्कारः निरूढलक्षणयेति वाचकलुप्तायाः संग्रहाय यत्राधुनिकलक्षणया सादृश्यप्रतीतिस्तत्र रूपकमित्युपमारूपकयोः शाब्दबोधमादायैव वैलक्षण्योपपादनसंभवे आहार्य्यमानसानुधावनं व्यर्थमित्यस्वरससूचनाय केचिदुक्तमिति तन्न चमत्कारवैलक्षण्येन ह्यलङ्काराणां वैलक्षण्यं सिद्धान्तसिद्धं तच्च विषयवैलक्षण्यनिमित्तकमेवानुभविकम् सादृश्यस्यैवोभयत्र विषयत्वे शक्तिलक्षणाप्रतिपादितत्ववैलक्षण्यस्याकिञ्चित्करत्वमेव सहृदयहृदयसाक्षिकचमत्कारवैलक्षण्यप्रयोजकत्वाभावादिति । यत्रामार्थयोरभेदान्वयोऽभिहितस्तत्राभेदस्स्ववृत्तिधर्मवत्त्वमेव वृत्तिताच सामान्यावच्छिन्ना तदनवच्छिन्नोभयावृत्तिधर्मनिष्ठाच संसर्गतया भासमाने तस्मिन्निविशते अयञ्च तत्रानुभवसाक्षिको नियमः यत्रभिन्नयोरपि चमत्कारविशेषोदयांयाभेदान्वयो विशेषदर्शितात्पर्यविषयस्तत्रैव सामान्यावच्छिन्नावृत्तिता तत्रान्तर्भवति यथा मुखंचन्द्रइत्यादौ चन्द्रनिरूपितसुखविशेषजनकतात्वावच्छिन्नवृत्तितावन्मुखनिष्ठसुखविशेषजनकत्ववत्त्वसंसर्गे यत्र च भिन्नयोरभेदो ज्ञायमानोऽपि न चमत्कारायपर्याप्तो न तत्रसामान्यावच्छिन्ना वृत्तितान्तर्भवत्यतश्चनीलंजलमिति न विशेषदर्शिनां प्रयोगः। अस्तु वा सर्वत्रैव वृत्तित्वस्याविशिष्टस्यैव संसर्गकोटौ भानं मशकइव हस्तीत्याद्युपमावन्नीलं जलं जलन्तेजइत्यादिरूपकमपि न चमत्कारायालमिति न प्रयुज्यत इत्यभिप्रायवताम्परेषाम्मतमुपन्यस्यति । **परेत्वित्यादिना** । अत्रच प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमत्वेन मुखंपद्ममित्यादावुक्ताभेदस्य संसर्गत्वे मुखंनपद्ममित्यादावपिप्रत्येतव्यत्वेन तस्यबाधिततया नपद्मंमुखमेवेदं नभृङ्गौचक्षुषीइमे इत्यादेरप्रामाणिकत्वप्रसङ्गः संबन्धान्तरावच्छिन्नाभावबोधाभ्युपगमे नीलंजलन्नीलन्नजलमित्युभयविधप्रयोगादेकदैवाभ्रान्तानां शाब्दप्रसङ्गः स्यादित्यस्वरसो वदन्तीत्युक्त्या सूचित इति ।

संबन्धेन नामार्थयोर्नान्वयबोधः । तादात्म्यं च प्रकृते तद्वृत्तिधर्मवत्त्वम् एवं च नीलो घट इत्यादौ स्ववृत्तिनीलत्वादिमत्त्वसंबन्धेन घटाद्यंशे नीलपदार्थस्यैव मुखं चन्द्र इत्यादौ स्ववृत्त्याह्लादकत्वादिमत्त्वसंबन्धेन मुखादौ चन्द्रादेरन्वयबोधः तादृशार्थान्वयबोधेऽपि समानविभक्तिकत्वं तन्त्रमित्यतो नातिप्रसङ्ग इति वदन्ति । अथ राजा पुरुष इत्यादौ पदार्थोपस्थित्यादिसत्त्वेन कथन्न भेदान्वयबोधः, सामग्र्या कार्यजनने उक्तनियमभङ्गरूपायाः प्रयोजनक्षतेरकिंचित्करत्वात्, सामग्रीसत्त्वे अवश्यं कार्यमिति नियमात् । न च तत्र भेदान्वयबोधौपयिकाकाङ्क्षाविरहाच्छाब्दसामग्र्येवासिद्धेति वाच्यम् । समभिव्याहाररूपाया आकाङ्क्षायास्तत्रापि सत्त्वात् । न च तादृशाकाङ्क्षायास्तत्र सत्त्वेऽपि राजादिपदार्थप्रकारकभेदान्वयबोधे राजादिपदाव्यवहितोत्तरङस्पदत्वादिरूपानुपूर्वीविशेषरूपाया आकाङ्क्षाया अपि प्रयोजकत्वात् तदभावादेव न तत्र शाब्दसामग्रीति वाच्यम् । संबन्धादिविशेष्यकराजादिप्रकारकान्वयबोधएव तादृशाकाङ्क्षाज्ञानस्य हेतुतया पुरुषादौ राजादिपदार्थप्रकारकान्वयबोधोत्पत्तौ तादृशाकाङ्क्षाज्ञानरूपकारणविरहस्याकिंचित्करत्वात् । अत्र केचित् । नामार्थप्रकारकभेदान्वयबोधं प्रति समानविशेष्यत्वप्रत्यासत्त्या प्रत्ययजन्योपस्थितेर्हेतुत्वकल्पनाद् नामार्थप्रकारकभेदान्वयबोधे विशेष्यतया प्रत्ययार्थस्यैव भानं न तु नामार्थान्तरस्य । तत्र विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितेरसत्त्वात् । न च संबन्धादेरपि नामार्थतया तत्प्रकारकान्वयबोधे पुरुषादिपदार्थस्य विशेष्यतया भानानुपपत्तेः, तत्तन्नामपदजन्यतत्तन्नामार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति प्रत्ययजन्योपस्थितित्वेन हेतुत्वेऽपि राजसंबन्धः प्रमेयः राज्ञः पुरुष इत्येतादृशवाक्यद्वयजन्यवाक्यार्थ-

---

**प्रयोजनक्षतेरिति** । प्रयोजनमिष्टं तथाचोक्तनियमस्य स्वेष्टस्य हानेरित्यर्थः । **अकिञ्चित्करत्वात्** । कार्यप्रतिरोधाक्षमत्वात् । विनैवपदमुपस्थितयोरर्थयोरन्वयबोधवारणाय तत्तदर्थोपस्थापकपदयोस्समभिव्याहारस्याकाङ्क्षाविधया ज्ञायमानस्यान्वयबुद्धौ हेतुत्वमुपेयते सच प्रकृतेऽप्यन्वयप्रतियोग्यनुयोग्युपस्थापकराजपदपुरुषपदयोरस्त्येवेत्याह । **समभिव्याहाररूपायाइति** । घटः कर्मत्वमित्यादौ घटकर्मत्वोपस्थापकपदयोस्समभिव्याहारे ज्ञातेऽपि घटीयकर्मत्वमित्याद्यन्वयबोधस्यानुदयाद्घटमित्याद्यानुपूर्वीरूपाया आकाङ्क्षायाश्शाब्दबोधानुकूलत्वमवश्यं वाच्यं भेदान्वयबुद्धौ साच राजापुरुषइत्यादौ नास्तीत्याशङ्कते । **नचेत्यादि** । राजादिप्रकारकभेदान्वयबुद्धेः राजानं राज्ञा राज्ञे राज्ञ इत्यादौ सर्वत्रैवोदयेन प्रत्येकं राजानमित्याद्यानुपूर्वीज्ञानानां व्यभिचरितत्वेन न हेतुत्वसंभवइति कर्मत्वादिविशेष्यकराजादिप्रकारकान्वयबोधादौ विशिष्यैव राजानमित्याद्यानुपूर्वीज्ञानानां हेतुत्वं वाच्यं पुरुषविशेष्यकबोधे तद्विरहश्चाकिञ्चित्करइत्युत्तरयति । **सम्बन्धादीति** । नच निपातार्थनिष्ठविशेष्यत्वानिरूपितभेदसम्बन्धावच्छिन्नराजपदप्रयोज्यराजनिष्ठप्रकारताशालिशाब्दबुद्धौराजपदाव्यवहितोत्तरवर्तिप्रथमान्यसुब्ज्ञानत्वेन हेतुतायां व्यभिचाराभावेनास्तिसंभवइति वाच्यम् अत्रकेचिदित्यादिनाह्यतो लघुभूतस्य सामान्यकार्यकारणभावप्रकारस्य वक्ष्यमाणत्वादिति । **भेदान्वयबोधम्प्रतीति** । निपातार्थाविशेष्यकमितिवक्तव्यमतोनिपातार्थस्य प्रत्ययानुपस्थाप्यत्वेऽपि न क्षतिः घटोनास्तीत्यादौ प्रथमार्थतयैव प्रतियोगित्वादीनाम्भानमिति मताभिप्रायकमिदमिति कश्चित् ।

**समानविशेष्यत्वप्रत्यासत्त्येति** । समानेति कार्यतावच्छेदकत्वस्यापि विशेष्यत्वे लाभायान्यथा तृतीयान्तस्य हेतुत्वान्वयित्वेन तदवच्छेदकत्वमात्रं तस्य लभ्यं स्यात् समानत्वञ्च यादृशविशेष्यत्वस्य कार्यतावच्छेदकसंबन्धत्वंतादृशविशेष्यतात्वमिति विशेष्यत्वस्य कार्यतावच्छेदकत्वं लभ्यते विशेष्यत्वयोरेकधर्मावच्छिन्नत्वञ्च अतएवैकरूपेण प्रत्ययात्सम्बन्धाद्युपस्थितावन्यरूपेण न तस्य शाब्दबोधइति । **नामार्थान्तरस्येति** । नामार्थस्येति वक्तव्ये यत्तथाभिधानं तद्वस्तुगतिमनुरुध्य तस्यैव विशेष्यत्वयोग्यत्वेन निषेद्धुमुचितत्वात्, यद्वा पदार्थे पदार्थतावच्छेदकस्य भेदात्मकान्वयस्यैव शाब्दबोधविषयत्वात्तद्व्युदासाय नामार्थान्तरेति तथाच तयोरेकशक्तिविषयत्वेनार्थान्तरत्वविरहात् आकाङ्क्षाभास्यान्वयलाभानुकूलपदस्य भेदान्वयेसत्राभावेनोक्तोपवर्णनस्य नासङ्गत्यवकाशः । केचित्तु चित्रगुरित्यादिबहुव्रीहौ स्वगोस्वामिनोर्गोपदार्थयोरन्वयाभ्युपगमपक्षे तद्व्युदासायनामार्थान्तरेति नामान्तरार्थेति तदर्थः तथालेखः प्रामादिकोवेति वदन्ति । यद्यपि नामार्थशब्दान्नामप्रयोज्यविषयताश्रयस्यबोधे तस्य प्रकारतायामन्वयेच विशिष्टान्वयमहिम्ना नामप्रयोज्यप्रकारत्वस्य लाभसम्भवान्नाशङ्कावकाशस्तथापि विशेष्येविशेषणमितिरीत्या शाब्दबोधस्यौत्सर्गिकतया विशेषणतावच्छेदकज्ञानसम्पादनक्लेशभयेन व्यवस्थापिततयोक्तविषयताश्रयवृत्तिप्रकारत्वमात्रं स्वरसतः प्रत्येतव्यमिति तदभिप्रायेणाशङ्कते । **नचसम्बन्धादेरपिनामार्थतयेति** । सति तात्पर्ये विशिष्टान्वयस्य प्रामाणिकत्वादाह । **तत्तन्नामपदजन्यतत्तन्नामार्थप्रकारकेति** । राज्ञः पुरुषइति वाक्यजन्यशाब्दबोधस्य सम्बन्धादिनामार्थीभूतसंबन्धप्रकारकत्वाद्राजादिनामजन्यत्वाच्च कार्यतावच्छेदकाक्रान्तत्वेन विशेष्यतया

द्वयान्वयबोधे पुरुषस्य राजसंबन्धविशेष्यतया भानानुपपत्तिरिति वाच्यम्। प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्यतदर्थप्रकारकशाब्दत्वावच्छिन्नं प्रत्येव प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्या हेतुत्वोपगमात्। अथैवमपि यत्र राजा पुरुष इत्यत्र पुरुषपदाधीनपुरुषोपस्थितौ प्रत्ययवशात्कश्चित्प्रत्ययार्थोऽपि विषयीभूतः तत्र प्रत्ययजन्यतथाविधसमूहालम्बनोपस्थितेर्विशेष्यतासंबन्धेन पुरुषेऽपि सत्त्वात्तस्य राजप्रकारकान्वयबोधे विशेष्यतया भानापत्तिर्दुर्वारैव। न च प्रत्ययजन्यतावच्छेदकीभूतविशेष्यतासंबन्धेनोपस्थितेर्हेतुत्वोपगमान्नानुपपत्तिः। तादृशसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यताया नाम्न एव जन्यतावच्छेदकत्वादिति वाच्यम्। ज्ञानभेदेन विशेष्यताभेदाभावात्। यत्रकुत्रचित्प्रत्ययादेव लक्षणादिना पुरुषाद्युपस्थितिस्तत्र तादृशोपस्थितिनिरूपितप्रत्ययजन्यतावच्छेदकीभूतविशेष्यतातः पुरुषादिपदजन्यपुरुषाद्युपस्थितविशेष्यताया अभिन्नतया तावताप्युक्तातिप्रसङ्गवारणासंभवादिति चेन्न। स्वजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासंबन्धेनैवोपस्थितेर्हेतुतयोक्तसमूहालम्बनोपस्थितिनिरूपितपुरुषनिष्ठविशेष्यतायाश्च तादृशोपस्थितिजनकज्ञानीयप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यतासामानाधिकरण्यविरहान्नातिप्रसङ्ग इति वदन्ति। तदसत्। प्रत्ययत्वस्यानुगतानतिप्रसक्तस्य दुर्वचतया उक्तकार्यकारणभावकल्पनाया असंभवात्। राजसंबन्धः पुरुष इत्यादौ संबन्धादिपदे ङस्पदत्वादिभ्रमदशायां संब-

---

पुरुषे तस्यसत्त्वेन व्यभिचारस्स्यादिति तत्तदिति नामविशेषणं तथाच तस्य सम्बन्धादिनामपदाजन्यत्वान्नदोषः। अथ राजपद-
जन्यस्य राजपदार्थप्रकारकस्य च राज्ञः पुरुषइतिवाक्यजन्यशाब्दबोधस्य पुरुषे विशेष्यतया सत्त्वेन तत्र प्रत्ययजन्योपस्थित्य-
भावाद्व्यभिचारो दुर्वारएवेति तत्तन्नामपदप्रयोज्यतत्तन्नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं
प्रतीत्येव वक्तव्यंतथासति तत्तदितिव्यर्थं पुरुषनिष्ठविशेष्यतानिरूपितप्रकारताया नामपदप्रयोज्यत्वाभावेन दोषाभावात्। एवञ्च
कार्यकारणभावबाहुल्यमपि नप्रसज्यते नापिच राजसंवन्धः प्रमेयइत्याद्यनुपदोक्तानुपपत्तिः पुरुषनिष्ठविशेष्यतानिरूपितसम्बन्ध-
निष्ठप्रकारतायाः सम्बन्धपदाप्रयोज्यत्वात्। किञ्च तत्तन्नामार्थेत्यपिव्यर्थमिति चेत्सत्यं तत्तदित्यादि नोपादेयमेव सम्बन्धपदप्रत्य-
यपदाभ्यां यत्रैकैवोपस्थितिस्तत्रोपस्थितिविषयताद्वारकप्रयोज्यत्वस्य प्रत्ययनिरूपितस्येव सम्बन्धादिनामनिरूपितस्यापि पुरुषनिष्ठ-
विशेष्यतानिरूपितविषयत्वे सत्त्वेनानुपपत्तिस्तु सञ्चच्छतएव। तत्तन्नामेत्यादिकंतु तत्तन्नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासं-
बन्धेन तत्तन्नामपदजन्यशाब्दबुद्धिम्प्रति प्रत्ययजन्योपस्थितेः कारणत्वाभिप्रायेणोक्तमित्यवधेयम्। परेतु तत्तत्प्रकारकत्वविशि-
ष्टज्ञानस्य विशेष्यतया तत्तत्प्रकारतानिरूपितविशेष्यताश्रयएवसत्त्वमङ्गीक्रियतइति राजपदजन्यराजप्रकारकत्वविशिष्टशाब्दबोधस्य
पुरुषे सत्त्वासंभवेन व्यभिचाराप्रसक्तेरुक्तविवक्षायाः प्रयोजनाभावेनोक्तरीत्यातत्तदिति भवत्येव सार्थकमिति प्राहुः।

**प्रत्ययाधीनतत्तत्पदार्थोपस्थित्यजन्येति।** राजापुरुषइत्यादिवाक्यात्प्रथमार्थैकत्वविषयकस्य राजप्रकारकशाब्दबो-
धस्य पुरुषे प्रसङ्गवारणाय तत्तदिति। उभयत्र तत्तदित्यस्य प्रवेशात्प्रत्ययाधीनोपस्थितिविषयत्वाप्रयोज्यनामार्थनिष्ठप्र-
कारताकशाब्दबुद्धौ हेतुत्वम्पर्यवस्यति अतएव राजसंवन्धोऽश्वः राज्ञः पुरुषइति वाक्यात्समूहालम्बनशाब्दबोधस्य स्वरूपसं-
बन्धेन राजसंबन्धप्रकारकस्य ङस्प्रत्ययजन्यसंवन्धोपस्थितिजन्यस्याश्वे न प्रसङ्गः। नचैवमपि राजापुरुषइत्यादौ राजपदाद्यस्यकस्य-
चित्प्रत्ययादगृहीतराजसंगतिकाच्चैकैवराजोपस्थितिरुक्तस्थलेच ङस्प्रत्ययात्सम्बन्धपदाच्चैकैवसंवन्धोपस्थितिर्यदा जाता तदा पुरुषा-
श्वयोर्भेदान्वयबोधो दुरुद्धरइति वाच्यं विशेष्यपदसाकाङ्क्षप्रत्ययस्यविवक्षितत्वात् यत्प्रत्ययार्थस्य यत्प्रत्ययान्तार्थस्य वा यद्विशेष्येऽन्व-
योविवक्षितस्तत्प्रत्ययस्यैव तत्साकाङ्क्षत्वात्। तथाच विशेष्यताविशिष्ट विशेष्यत्वस्य संसर्गत्वं फलितं। वैशिष्ट्यंच स्वतादात्म्यस्वप्रयो-
जकाकाङ्क्षाघटकप्रत्ययाप्रयोज्यनामार्थप्रकारताकत्वोभयसंबन्धेनेति न कश्चिद्दोषइति। **स्वजनकज्ञानीयप्रत्ययेत्यादि।** नच
राजापुरुषइत्यादौ पुरुषपदाद्यस्यकस्यचित्प्रत्ययादगृहीतसंगतिकाच्च यत्रैकैवपुरुषोपस्थितिस्तत्रातिप्रसङ्गोदुर्वारइति वाच्यं तत्तन्नामार्थप्र-
कारकान्वयबुद्धौ तत्तन्नामपदसाकाङ्क्षप्रत्ययजन्योपस्थितेर्हेतुत्वस्य विवक्षितत्वात्। एवञ्च स्वीयविषयताप्रयोज्यविशेष्यतानिरू-
पितप्रकारताप्रयोजकनामसाकाङ्क्षप्रत्ययवृत्तिप्रकारतानिरूपितविशेष्यताविशिष्टविशेष्यतासम्बन्धेन हेतुत्वं फलितम्। अत्रापि
विशेष्यतावैशिष्ट्यपर्यन्तानुधावनं राज्ञः पुरुषइत्यादौ ङस्पुरुषपदसमूहालम्बनवृत्तिज्ञानात्संबन्धपुरुषसमूहालम्बनोपस्थितेः संब-
न्धइव पुरुषेऽपि भेदान्वयवारणायादरणीयमिति ध्येयम्। प्रत्ययत्वस्य सङ्केतविशेषसंबन्धेन प्रत्ययपदवत्त्वस्यान्यस्य वा कथञ्चिदनु-
गतस्य संभवेऽपि तस्य न कारणतावच्छेदककुक्षौ प्रवेशस्सम्भवतीत्यभिप्रायवानाह। **राजसम्बन्धः पुरुषइत्यादावित्यादि।**

न्धादिविशेष्यकराजादिपदार्थप्रकारकान्वयबोधानुपपत्तेः । राज्ञः पुरुष इत्यादौ ङस्पदादिषु संबन्धादिपदत्वभ्रमदशायां संबन्धांशे राजादिप्रकारकान्वयबोधापत्तेश्च । न च प्रत्ययत्वेन ज्ञातं यत्पदं तत्पदजन्योपस्थितेः कारणत्वादेतद्दोषद्वयस्य नावकाश इति वाच्यम् । राज्ञः पुरुष इत्यादौ षष्ठ्यादेः प्रत्ययत्वाद्यनुपस्थितिदशायामपि आनुपूर्वीविशेषप्रकारकज्ञानाधीनतदर्थोपस्थितिसत्त्वे शाब्दबोधोत्पत्त्या प्रत्ययत्वप्रकारकज्ञाननिवेशासंभवात् । इदं पुनरत्र तत्त्वम् । राजा पुरुष इत्यादौ पुरुषादिविशेष्यकराजादिप्रकारकभेदान्वयबोधस्याऽप्रसिद्ध्यैव नापत्तिसंभवः । यत्र षष्ठ्यादिविभक्तेरेव स्वारसिकलक्षणया शक्तिभ्रमेण वा पुरुषाद्युपस्थितिस्तत्र तद्विशेष्यकराजादिपदार्थप्रकारकभेदान्वयबोधः प्रसिद्ध इति चेत्तर्हि ताद्दशबोधे तथाविधप्रकृतिप्रत्ययानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानसहकृततत्तद्विभक्तिजन्यपुरुषाद्युपस्थितिघटितसामग्र्या एव तादृशबोधोत्पत्तिनियामकतया तदभावादेव न तदापत्तिः । अत एव स्वत्वादिसंबन्धेन राजादिविशिष्टपुरुषादितात्पर्यकतदादिपदघटितात् स सुन्दर इति वाक्यात्पुरुषादिविशेष्यकस्वत्वादिसंसर्गकराजादिप्रकारकशाब्दबोधस्य च प्रसिद्ध्या राजा पुरुषः सुन्दर इत्यादौ पदार्थोपस्थितियोग्यताज्ञानादिबलात्तादृशशाब्दबोधापत्तिरित्यपि निरस्तम् । स सुन्दर इत्यादिवाक्याधीनशाब्दबोधसामग्र्यास्तत्पदत्वाद्यवच्छिन्नविशेष्यकसुन्दरादिपदसमभिव्याहारज्ञानसहकृततदादिपदजन्यतादृशविशिष्टार्थोपस्थितिघटिततया तदभावादेवापत्त्यभावात् । अथैतादृशरीत्यापत्तिवारणे राज्ञः पुरुष इत्यादौ स्वत्वादिसंबन्धेन पुरुषादौ राजाद्यन्वयबोधस्वीकारेऽपि क्षतिविरहाद्युक्तव्युत्पत्तिर्निर्युक्तिका । विभक्तीनां संबन्धादिवाचकत्वमपि निर्युक्तिकं, नीलो घट इत्यादौ विशेषणवाचकपदसमभिव्याहृतविभक्तेरिव सर्वविभक्तीनां साधुत्वमात्रार्थकत्वस्यैवोचितत्वात् । न हि तत्र तथाविधान्वयबोधोपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादिष्वपि तथाविधान्वयबोधप्रसङ्गः संभवति । तत्स्थलीयसामग्र्याः षष्ठ्यन्तराजपदत्वाद्यवच्छिन्नधर्मिकपुरुषादिपदसमभिव्याहाररूपाकाङ्क्षाज्ञानघटिततया तदभावादेव तत्र तादृशसामग्र्या अभावात् । एवं च राजपुरुष इत्यादिसमासे राजादिपदस्य राजसंबन्ध्यादिलक्षणास्वीकारोऽपि व्यर्थः तत्र भेदान्वयबोधस्वीकारेऽपि क्षतिविरहात् । न च तत्र भेदान्वयबोधाभ्युपगमे तत्स्थलीयसामग्रीबलाद्राजा पुरुष इत्यादावपि तादृशान्वयबोधापत्तिरिति वाच्यम् । तत्स्थलीयशाब्दबोधे राजपदाव्यवहितोत्तरपुरुषादिपदत्वरूपानुपूर्वीविशेषज्ञानस्य हेतुतयाऽसमासस्थले पुरुषादिपदस्य विभक्त्या राजादिपदव्यवहितत्वात्तादृशानुपूर्वीविशेषज्ञानासंभवेन तत्र तादृशबोधसामग्र्याः असिद्धेः । न च प्रकृतिप्रत्यययोरानुपूर्वीविशेषरूपस्याकाङ्क्षात्वात्प्रातिपदिकद्वयाव्यवधानघटितोक्तानुपूर्वीविशेषज्ञानस्य हेतुत्वमेव निष्प्रामाणिकमिति वाच्यम् । भवन्मतेऽपि राजपुरुष इत्यादौ तादृशसामग्रीबलाद्राजपदार्थराजसंबन्धिपुरुषपदार्थयोरभेदान्वयबोधस्तादृशसामग्रीबलाद्राज्ञः पुरुषः इत्यादावपि राजादिपदस्य राजसंबन्ध्यादौलक्षणाग्रहसत्त्वे तादृशाभेदान्वयबोधप्रसङ्गवारणाय तथाविधानुपूर्वीविशेषज्ञानस्य समासजन्यबोधेहेतुताकल्पनस्यावश्यकत्वात् अस्माभिर्भेदान्वयबोधएव तादृशानुपूर्वीविशेषज्ञानस्य हेतुतायाः कल्पनीयत्वात् । न चोभयमत एव राजसंबन्धिनि राजपदस्य स्वारसिकलक्षणाग्रहेण राजपुरुष इत्यत्र राजसंबन्धिपुरुषयोरभेदान्व-

---

ज्ञाननिवेशासंभवादिति । नच प्रत्ययत्वव्याप्यधर्मत्वेन ज्ञातमिति वक्तव्यंतथाच सम्बन्धपदस्य प्रत्ययत्वव्याप्यत्वाभावात् ङस्त्वादेस्तथात्वाच्च नकोपि दोषः प्रत्ययत्वव्याप्यत्वश्चोपलक्षणमेवातस्तदज्ञानदशायामपि न शाब्दबोधानुपपत्तिरितिवाच्यम् आनुपूर्वीविशेषाज्ञानदशायां प्रत्ययवृत्तितद्व्यक्तित्वादिज्ञानदशायाञ्च शाब्दापत्तेर्दुरुद्धरत्वात् प्रमेयत्वादिनापि ङस्त्वादिज्ञानेशाब्दप्रसङ्गाच्च । सम्बन्धादिवाचकत्वमपि निर्युक्तिकमिति । इदं च विभक्त्यन्तपदद्वयादिसमभिव्याहारादेव शाब्दबोधो नत्वैकविभक्त्यन्तपदाद्घटमित्यादौतु मानसएव बोधः प्रत्ययशक्तिभ्रमेण शाब्दरूपो वा घटीयंकर्मत्वमित्याकारको बोध इत्यभ्युपेत्योक्तम् । अन्यथा घटमित्यादिस्थलानुरोधेनैव विभक्तेः कर्मत्वादिवाचकत्वप्रसक्त्यासंगत्यापत्तेः संबन्धादिवाचकत्वमि-

यवोधो भवति। इयांस्तु विशेषो यदस्मन्मतेऽसौ समासः षष्ठीतत्पुरुषो भवन्मते कर्मधारय इति। एवं च पुरुषविशेष्यकाभेदसंसर्गकराजसंबन्धिप्रकारकबोधे राजपदाव्यवहितोत्तरवर्त्तिपुरुषपदत्वप्रकारकज्ञानत्वेन हेतुत्वमुभयवादिसिद्धमेव भेदान्वयबोधे तादृशानुपूर्वीज्ञानहेतुताकल्पनमधिकमिति वाच्यम्। उक्ताभेदान्वयबोधे तथाविधानुपूर्वीज्ञानहेतुतायां पर्यायशब्दान्तरघटितानुपूर्वीज्ञानजन्यतथाविधान्वयबोधे व्यभिचारवारणाय तादृशानुपूर्वीज्ञानानन्तर्यस्य कार्यतावच्छेदककोटावश्यं निवेशनीयतया तत्र विषयनिवेशे प्रयोजनाभावेन तादृशकार्यतावच्छेदकस्यैव भेदान्वयबोधसाधारण्येनानुपूर्वीज्ञानस्य भेदान्वयबोधे हेतुताया अनाधिक्यात्। एवं तण्डुलं पचतीत्यादावपि पाकादिरूपधात्वर्थे कर्मत्वादिसंबन्धेन तण्डुलादेरन्वयबोधः स्वीकर्तुमुचितः। कर्मत्वस्य पाकाद्यंशे प्रकारत्वे तत्र तत्र द्वितीयादेः शक्तिकल्पने तादृशवाक्यजन्यशाब्दबोधे कर्मत्वादिसंसर्गस्याधिकस्य विषयताकल्पने च गौरवात्। तण्डुलं पचतीत्यादिवाक्यजन्यशाब्दबोधसामग्रीबलात्तण्डुलः पचतीत्यादावपि तथाविधान्वयबोधापत्तिस्तु न संभवति। तादृशान्वयबोधे द्वितीयान्ततण्डुलपदत्वाद्यवच्छिन्नधर्मिकपचतीत्यादिसमभिव्याहारज्ञानस्य हेतुतया तण्डुलः पचतीत्यादौ तादृशसामग्र्या

---

त्युक्त्या संख्यावाचकत्वमप्रतिक्षिप्तं वेदितव्यं तस्य लाभासंभवात् अवुभुत्सितार्थघटितपरम्परासंबन्धघटकतया संख्याभानोपगमे वा संख्यार्थकत्वमपि न स्वीकरणीयमेवेति। **यदस्मन्मते असौसमासः षष्ठीतत्पुरुषो भवन्मते कर्मधारयइतीति।** प्रागेव व्याख्यातमेव तत्। **विषयनिवेशे प्रयोजनभावेनेति** । अथाकाङ्क्षाज्ञानेऽप्रामाण्यग्रहे शाब्दबोधवारणाय कारणतावच्छेदककोटावप्रामाण्यग्रहाभाववैशिष्ट्यमवश्यंप्रवेशनीयं तथासति कार्यतावच्छेदककोटौ विषयविशेषानिवेशे राजपुरुषः भूतलंघट इत्यादिद्विविधाकाङ्क्षाग्रहसत्त्वे तत्रैकत्र'प्रामाण्यग्रहे वाक्यार्थद्वयस्यापि शाब्दबोधानुपपत्तिः स्यादिति विषयनिवेश आवश्यक एवेतिचेन्न राजपुरुषोनृपपुरुषइत्यादिद्विविधानुपूर्वीज्ञानसत्त्वे ह्येकत्राप्रामाण्यग्रहे च विषयविशेषप्रवेशेऽपि शाब्दानुपपत्तेस्तादनस्थ्यादप्रामाण्यग्रहाभावविशिष्टतत्तत्कारणानन्तर्यस्यैव कार्यतावच्छेदकत्वघटकताया वाच्यतया दोषाभावात्कार्यतावच्छेदके विषयतानिवेशो नावश्यकः । नचाप्रामाण्यग्रहेऽप्रामाण्यग्रहे कार्यमुत्पद्यते तत्रापि पुनरप्रामाण्यग्रहे नोत्पद्यत इत्यप्रामाण्यज्ञानस्य तत्तद्व्यक्तित्वेनैवाभावः कारणतावच्छेदककुक्षौ प्रवेश्यस्तथाचैकविषयकशाब्दानुकूलाकाङ्क्षाज्ञानद्वयस्थलीयैकतराप्रमाण्यज्ञानव्यक्तेरभावो न निवेशनीय इति दोषाभावात्कार्यतावच्छेदकेऽप्रामाण्यग्रहाभावप्रवेशो नावश्यक इतिवाच्यम् राजपुरुष इत्याकाङ्क्षाज्ञानं प्रथममनन्तरमप्रामाण्यज्ञानास्कन्दितं नृपपुरुषइति ज्ञानं तत्र द्वितीयज्ञानतृतीयक्षणे शाब्दवारणाय तदप्रामाण्यज्ञानव्यक्तेरभावस्य कारणतावच्छेदके प्रवेश्यतया द्वितीयक्षणे शाब्दानुपपत्तिवारणाय कार्यतावच्छेदकेऽपि तन्निवेशस्यावश्यकत्वात्। नच तदप्रामाण्यज्ञानस्य स्वोत्पत्तिद्वितीयक्षणावच्छिन्नस्यैवाभावः प्रवेश्यस्तथाच द्वितीयक्षणे नानुपपत्तिसंभव इति वाच्यम् क्षणस्योपाधिविशेषावच्छिन्नकालरूपस्योपाधिरूपस्य वाप्रामाण्यग्रहे विशेषणीयतयोपाधीनामानन्त्येन विनिगमनाविरहेण सर्वेषां विशेषणत्वापत्त्यैकव्यक्तेरप्यनन्ताभावानां कारणतावच्छेदकत्वप्रसङ्गेन महागौरवात्कार्यतावच्छेदकेऽप्रामाण्यग्रहाभावप्रवेशस्यैवोचितत्वादिति। नन्वेवमाकाङ्क्षाज्ञानत्वावच्छिन्ने योग्यताज्ञानत्वाद्यवच्छिन्नं विनापि स्वाव्यवहितोत्तरत्वरूपस्वकार्यतावच्छेदकावच्छिन्नोपधायकतायाः सत्त्वेन स्वावच्छिन्नासमवधानप्रयुक्तफलोपधायकत्वाभाववत्तदवच्छिन्नकत्वरूपस्य तत्सहकारित्वस्य योग्यताज्ञानादिष्वसंभवेन राजपुरुष इत्याद्याकाङ्क्षाज्ञानाद्योग्यताज्ञानाद्यसद्भावेऽपि कुतो न राजसंबन्धिपुरुषादिबोधप्रसङ्ग इति चेन्न तादृशशाब्दबुद्धित्वावच्छिन्नस्यापादकाभावादिष्यतएव ह्यवहितोत्तरत्वावच्छिन्नस्य चोत्पत्तिः। नच राजसम्बन्धिपुरुषादिशाब्दबोधे योग्यताज्ञानस्य कारणत्वेन केवलादपि तस्मात्कुतो न तादृशशाब्दबुद्धित्वावच्छिन्नस्योत्पत्तिरिति वाच्यम् आकाङ्क्षाज्ञानमन्तरेण योग्यताज्ञानस्य फलानुपधायकत्वेनाकाङ्क्षाज्ञानस्य योग्यताज्ञानसहकारित्वात् तत्संबन्धेन तत्प्रकारकस्य तत्संबन्धावच्छिन्नाधेयतासंबन्धेन किञ्चित्प्रकारकतद्विशेष्यकस्य तत्संसर्गव्याप्यवत्ताज्ञानस्य च योग्यताज्ञानत्वेन तेषां परस्परजन्यबोधे व्यभिचारवारणाय तत्तद्योग्यताज्ञानाव्यवहितोत्तरत्वस्यैव कार्यतावच्छेदकत्वाच्च। अथयद्यपि यत्कार्यस्य यद्यत्कारणनिरूपितकार्यतावच्छेदकाक्रान्तत्वं तावत्कारणसम्मिलनादेव तत्कार्योत्पत्तिरिति नियमेन योग्यताज्ञानाद्येकतरकारणविगमे राजसम्बन्धिपुरुषादिशाब्दबोधो माजायतां तथापि परत्र राजसंबन्धिपुरुषादिगोचरबोधसंक्रान्तये तादृशशाब्दबोधकारणत्वज्ञानाधीनराजपुरुषइत्यादिवाक्यरचना कथं घटताम् तादृशकारणत्वग्रहासंभवात् तादृशशाब्दबुद्धित्वं कार्यतानवच्छेदकं सद्राजपुरुषइति वाक्यजन्यज्ञानमात्रे कथंव' वर्ततां नियामकाभावात् शाब्दत्वस्य कार्यतानवच्छेदकत्वे गतं तत्सद्भावप्रत्याशया साधकाभावात् तत्तत्कारणकार्यतायामेकधर्मावच्छिन्नत्वस्य व्याप्यव्यापकभावापन्नानेकधर्मावच्छिन्नत्वस्य वा ज्ञानाधीनया कारणसंघटनंवार्तयापि गतं शाब्दबोधस्थलइति चेदुच्यते—कारणानन्तर्यस्य कार्यतावच्छेदकताच न.

**अप्रसिद्धेः । एवं पचति चैत्र इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशेऽन्वयबोधस्वीकार उचितः । अन्यथोक्तरीत्या गौरवात् तत्र तादृशान्वयबोधस्वीकारे तत्स्थलीयसामग्रीबलात्, पच्यते चैत्रः, पाकश्चैत्र, इत्यादौ तथाविधान्वयबोधापत्तेरप्युक्तरीत्यैव वारणसंभवादिति ।**

---

ह्येकजातीयकारणानामेकजातीयकार्येण यदन्वयव्यतिरेकज्ञानं तदधीनकल्पनाविषयीभूता प्रयोजनाभावात् किन्त्वेकजातीयकार्येण विभिन्नजातीयकारणानां कतिपयानामेव यत्रान्यतमत्वेनान्वयव्यतिरेकग्रहोऽन्यतमत्वस्य कारणतावच्छेदके दोषदर्शनं च तत्र वैजात्यासंभवे व्यभिचारवारणाय कारणाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकं कल्पनीयम् एवं च तत्तद्विषयताकशाब्दत्वस्य कार्यविशेषणतयोपस्थितस्य व्यभिचारावारकत्वेनानवच्छेदकत्वेऽपि तादृशकार्ये गृहीतानां तत्तत्सामग्रीघटकनिखिलकारणानन्तर्याणामनेकविधाकाङ्क्षाज्ञानादितत्तदन्यतमत्वावच्छिन्ननिरूपितत्वेन व्यापकानां व्याप्यत्वेन सुगृहीततया स्वव्यापकाशेषतत्तत्कारणानन्तर्यावच्छिन्नकारणसद्भावं विना व्याप्यीभूततादृशशाब्दत्वस्य निर्वाहासंभवेनाकाङ्क्षाज्ञानादिसंपादनाय तादृशबोधसंक्रान्तये वाक्यरचना संगच्छते तादृशैकव्यापकविरहवतिबोधे तादृशशाब्दत्वाभावनियमश्चोपपद्यते । अतएव कारणसंघटनाप्यावश्यकी । एषु च नावश्यं तत्तद्धर्मस्य कार्यतावच्छेदकत्वं तदभावेऽपि संशयत्वादीनां संशयस्थले संशयसंक्रान्तितत्कारणसंघटनसंशयत्वनियमादयश्चोपपादितास्तत्रतत्र निबन्धे शाब्दत्वजातिसिद्धिश्चानुव्यवसायादेवेति गृहाणेत्यलम् ॥

नन्वस्तु तेषामाकाङ्क्षाज्ञानानामन्यतमत्वेन विषयविशेषविशेषितशाब्दत्वावच्छिन्नं प्रत्येकमेव कारणत्वं लाघवादिति चेन्न अन्यतमत्वस्य भेदकूटघटितस्यावच्छेदकत्वे कूटत्वस्यैकविशिष्टापरत्वरूपतया विशेष्यविशेषणभावे विनिगमनाविरहेण गुरुधर्मावच्छिन्नानेककारणत्वप्रसङ्गेन विपरीतगौरवात् अन्यतमत्वस्याखण्डोपाधिरूपत्वे कूटत्वस्य विषयताविशेषरूपत्वेऽसमवेतसंख्यारूपत्वाभ्युपगमेऽपि वा तस्यान्यथासिद्धिनिरूपकत्वमभ्युपगम्य कारणतावच्छेदकत्वस्य तत्रतत्र निराकृतत्वात् अन्यथा कार्यतावच्छेदकावच्छिन्नं प्रति प्रत्येकेण व्यभिचारिणमनुवर्तमानेनान्यतमत्वेन कारणत्वे कार्येण कारणं नानुमीयेत, परिगृहीतकार्यतावच्छेदकाश्रयस्य विशेषात्मना सामान्यव्यभिचारनिरूपकादन्यतमत्वेन कारणत्वयोग्याद्बुभुत्सितप्रसिद्धकारणान्यकारणविशेषादुत्पन्नत्वेन संभावितत्वया लिङ्गत्वासंभवात् । अतएवच कारणाभावात्कार्याभावोऽपि नाध्यवसीयेत । वस्तुतस्त्वन्यतमत्वादिना कारणत्वे राजपुरुषइत्याकाङ्क्षाज्ञानस्य राजपदजन्यराजोपस्थितिरेव सहकारिणी नृपपुरुष इत्याकाङ्क्षाज्ञानस्य नृपादिपदजन्यराजाद्युपस्थितिरेवेति सहकारिनियमानुपपत्तिः स्यात् । नच तत्तदुपस्थितिविशिष्टाकाङ्क्षाज्ञानानामेवास्त्वन्यतमत्वेन कारणत्वमिति वाच्यम् । तादृशोपस्थितिद्वितीयक्षणोत्पन्नाकाङ्क्षाज्ञानस्योपस्थितिविरहिणि स्वद्वितीयक्षणेऽपि कारणतयोत्तरक्षणे शाब्दापत्तेरेतद्विचारस्य प्रागपि प्रदर्शितत्वाच ॥

**उक्तरीत्यैववारणसंभवादिति ।** इदं च विभक्त्यर्थसंसर्गतावादिनां नव्यानां मतं तदेव चानुमोदितं शब्दशक्तिप्रकाशिकायां कौस्तुभेच, उक्तं च नहिप्रजावतीयं मे त्वं तस्मै देहि कम्बलमित्यादौ प्रजावतीशब्दार्थभ्रातृजायायेकदेशभ्रात्रादेस्तदा परामर्शवारणाय तदादेर्वृत्तिग्रहमुख्यविशेष्यपरामर्शनाव्युत्पत्तिरङ्गीकरणीया । तथाच दृश्यते राजमातङ्गास्तस्यैवामी तुरङ्गमाः । चैत्रो ग्रामं गतस्तत्र मैत्रः किंकुरुतेऽधुनेत्यादौ राजादिपदस्य राजसंबन्ध्यादिलक्षणिकत्वे तच्छब्देन राजादिपरामर्शोन स्यादतो विभक्त्यर्थस्य संसर्गत्वमेवोचितम् । अथ विभक्त्यर्थस्य संसर्गतापक्षो न युक्तः विभक्त्या शक्तिभ्रमेण स्वत्वाद्युपस्थितौ स्वत्वप्रकारकबोधस्य संसर्गतामतेऽपि स्वीकरणीयतया द्विविधशाब्दसामग्र्याः कल्पनीयतया गौरवात् भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकत्वानुसन्धाने चात्यन्तगौरवात् विभक्त्यर्थप्रकारतामते च स्वत्वादिसंसर्गकबोधस्य कुत्राप्यक्लृप्तत्वेन शाब्दसामग्र्या एकविधत्वात् किं च राज्ञः पुरुष इत्यादौ राजपुरुषइत्यादौच राजपदस्य राजस्वत्वे लक्षणायां राजस्वत्वप्रकारकबोधस्य संसर्गतामते स्वीकरणीयतया द्विविधशाब्दसामग्रीकल्पनेन गौरवम् । अतएव विभक्त्या स्वत्वोपस्थितावपि स्वत्वसंसर्गकबोधएवाभ्युपेयः शक्त्यकल्पनस्वत्वादिप्रतियोगिकसम्बन्धभानाद्यभावप्रयुक्तलाघवस्य सद्भावात् तादात्म्यसंसर्गताविचारे हि प्रथमया तादात्म्योपस्थितौ सत्यामपि तत्संसर्गकबोधएवाभ्युपेतोग्रन्थकृतेति न संसर्गतामते गौरवमिति निरस्तमिति चेन्न राजपदस्य राजस्वत्वे लक्षणायां प्रकारतामते स्वीकृतस्य राजस्वत्वसंबन्धप्रकारकबोधस्य संसर्गतामतेऽनभ्युपगम्यत्वेन सामग्रीद्वयस्य तुल्यत्वात् । नच राजस्वत्वसंबन्धलक्षणायां संसर्गतामतेऽपि तत्प्रकारकबोधः स्वीकरणीयएवेति सामग्रीत्रयकल्पनाद्गौरवमिति वाच्यम् प्रकारतामते तत्र राजस्वत्वसंबन्धसम्बन्धप्रकारकबोधस्य स्वीकरणीयतया संसर्गतामते तदनभ्युपगमेन तुल्यत्वात् । नच तत्रापि लक्षणया तादृशबोध उपपादनीयः तत्रतत्र लक्षणायामनवस्थितेस्तादृशसम्बन्धानुपस्थित्यादिभिर्यत्र विश्रान्त्या परिहारस्तत्र तत्संसर्गप्रकारकबोधस्यैव संसर्गतामतेऽनभ्युपगम्यतया तुल्यतायाः दुष्परिहरत्वात् । नच संबन्धसंबन्धानामनवस्थाभयेन संबन्धस्वरूपताया एव स्वीकरणीयतया तत्प्रकारकबोधाभ्युपगमादेव संसर्गतावादिभिः प्रकारतामतसिद्धसर्वप्रकारकबोधोभ्युपगत इति वाच्यं विषयैक्येपि प्रकारवैलक्षण्येन बोधवैलक्षण्यस्याभ्युपेयतया सामग्रीभेदस्य दुर्वारत्वात् । नच लक्षणासंभाव-

मैवम् । राज्ञः पुरुष इत्यादौ षष्ठ्यादेः स्वत्वादिवाचकत्वमावश्यकम् । अन्यथा पुरुषो न राज्ञ इत्यादौ पुरुषे राजस्वत्वाद्यभावबोधानुपपत्तेः । न हि तत्र स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाव एव प्रतीयते न तु राजस्वत्वाद्यभाव इति संभवति स्वत्वादिसंबन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः । अत एव स्वामित्वादिकं परित्यज्य स्वत्वादेः षष्ठ्यर्थत्वं नवीनाः स्वीकुर्वन्ति स्वामित्वादेः षष्ठ्यर्थत्वे तस्य निरूपकतासंबन्धेन पुरुषांशेऽन्वयसंभवेऽपि तादृशसंबन्धस्य वृत्त्यनियामकतया संसर्गाभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नाभावस्य नञा प्रत्यायनासंभवात् । आश्रयतासंबन्धाद्यवच्छिन्नाभावबोधस्यैतादृशसमभिव्याहारस्थलेऽभ्युपगमे चैत्रादिसंबन्धिनि धनेऽपि आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकचैत्रवृत्तिस्वामित्वाभावसत्त्वान्नेदं चैत्रस्येति प्रयोगापत्तिः । न च नञ्समभिव्याहारस्थलानुरोधेन षष्ठ्यादेः स्वत्वादिवाचकत्वेऽपि राज्ञः पुरुष इत्यादौ षष्ठ्याद्यर्थस्य संसर्गमर्यादया भानमुचितम् तस्य प्रकारत्वोपगमे तत्संबन्धस्याधिकस्य भानकल्पनेन गौरवात् । नञ्समभिव्याहारस्यैव तत्प्रकारकबोधनियामकत्वाभ्युपगमेन सामग्रीबलात् तत्प्रकारकबोधस्य तदसमभिव्याहारस्थलेऽसंभवादिति वाच्यम् । एवं सति नञ्पदं विना यादृशसमभिव्याहारस्थले यत्र धर्मिणि येन संबन्धेन यस्य विशेषणतया भानं तत्र नञ्समभिव्याहारे तत्र धर्मिणि तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावः प्रतीयते इति सर्वजनानुभवस्यापलापापत्तेः । राज्ञः पुरुष इत्यादि-

---

नया प्रकारतामतसिद्धस्य सर्वबोधस्यैव संसर्गतामतेसंभावितत्वात् संसर्गतामतसिद्धप्रथमसंसर्गबोधस्य प्रकारतामते संभावनाया अप्यभावात् सामग्र्यधिकसंभावनासंभावितं गौरवमस्त्येवेति वाच्यं स्वत्वादिशक्त्यकल्पनालाघवनिश्चयेन तादृशगौरवस्य दूषकत्वासंभवात् । नच वक्ष्यमाणसामग्रीप्रतिबन्धकताकल्पनगौरवमेवास्तु संसर्गतावादिप्रतिकूलमिति वाच्यं दर्शैते राजेत्यादि प्रामाणिकत्वस्य प्रकारतापक्षे दुरुपपादतया गौरवस्याकिंचित्करत्वादिति भावः । उक्तपक्षानां प्रामाण्यस्य सविवादतयाऽकिंचित्करतां समासस्थले तत्पदस्य लक्ष्यार्थघटकविभक्त्यर्थविशेषणीभवदर्थपरामर्शकताव्युत्पत्त्यन्तरं वा मनसि निधाय प्रकारतापक्षं परिष्कर्तुमुपक्रमते । **मैवमित्यादिना** । **स्वत्वादिवाचकत्वमिति** । अथ पूर्वग्रन्थपर्यालोचनया स्वत्वादीनां संबन्धत्वेन वाच्यता प्रतीयते उत्तरग्रन्थपर्यालोचनया स्वत्वत्वादिनेति भवति विमर्षः किंस्वत्वत्वेन वाच्यतोत संबन्धत्वेनेति । अत्रकेचित् स्वत्वत्वादिना वाच्यत्वे संबन्धानामनन्ततयानन्तशक्तिकल्पनापत्तिरिति संबन्धत्वेनैव वाच्यतोचिता क्वचित्स्वत्वत्वादिनाभानं त्वितरबाधबलादेव, तदभिप्रायेणैवाग्रिमग्रन्थे राजस्वत्वाभावादिनिर्णयात्मकबाधदर्शनम् वस्तुतस्तु राजसंबन्धाभावादिनिर्णयरूपएव बाधादिः प्रदर्शनीय इति वदन्ति तन्न युक्तं विशिष्टबुद्धिनियामकत्वादिरूपसंबन्धत्वस्यानेकपदार्थघटितत्वेन तदनुपस्थितिदशायामपि राज्ञःपुरुषइत्यादौ शाब्दबोधदर्शनात् राज्ञोनेदं स्वमिति बाधनिर्णयेऽपि राज्ञः पुरुषइतिवाक्यरचनायाः तद्वाक्याच्छाब्दबोधस्य च प्रसङ्गाच्च । स्वत्वत्वादिनैव शक्तिरुचिता । अतएव द्वितीयायाः संयोगत्वविभागत्वाद्यवच्छिन्न एव शक्तिं वक्ष्यति । पूर्वग्रन्थे राजसंबन्धत्वेन स्वत्वोत्कीर्तनमापाततएव ग्रन्थकारलेखसम्प्रदायानुसारेण दृश्यते हि ग्रामवृत्तिसंयोगादीनां ग्रामकर्मतात्वेनोत्कीर्तनंतत्रतत्र ग्रन्थ इति । **वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वेनेति** । यत्संबन्धेन प्रतियोगिनः सत्त्वेन प्रत्यक्षमापादयितुं शक्यते तस्यैव प्रतियोगितावच्छेदकत्वात् कुण्डलादिस्वामिन्यपि कुण्डलासंयुक्ते कुण्डलीदेवदत्त इत्यादिप्रत्यक्षानुदयाद्वृत्त्यनियामकस्य न प्रतियोगितावच्छेदकत्वमिति भावः ।

**आश्रयतासंबन्धेनेति** । साक्षात्संबन्धेनेत्यर्थः । कालिकाद्यन्यसाक्षात्संबन्धावच्छिन्ननिखिलाश्रयतावृत्तिधर्मविशेषआश्रयतात्वमेवसंसर्गतावच्छेदकमत्राभिमतं तथाच यथाश्रुतार्थकमेव तत् । नच संयोगत्वादिना संयोगादिसंसर्गकबुद्ध्यतिरिक्ताश्रयत्वसंसर्गकबुद्धिरेव नास्तीत्याश्रयत्वस्य संसर्गत्वे मानाभाव इति वाच्यम् वह्निमानयमित्यादिनिर्णयोत्तरमपि क्वचित्समवायेन संयोगेन वात्र वह्निरित्यादि संशयदर्शनादाश्रयत्वस्य तत्र संसर्गताया आवश्यकत्वादित्याहुरपरे । **संसर्गमर्यादया भानमुचितम् तस्य प्रकारत्वोपगम इति** । ननूपस्थितौ सत्यामेव प्रकारत्वोपगमसंभवः तत्सत्त्वेच न संसर्गत्वेन भानस्यौचित्यमन्यथासिद्धोपस्थितिविषयत्वस्यैव प्रकारत्वादिना भासमानत्वाप्रयोजकतया तत्सद्भावएव संसर्गत्वौचित्यात् नह्युपपादितस्य तादात्म्योपस्थितेरिवान्यथासिद्धत्वस्य स्वत्वोपस्थितेः संभवः उभयमतेप्युपस्थापकतयानञ्समभिव्याहारस्थले पञ्चवस्थितेः क्लृप्तत्वात् तज्जन्योपस्थितेरपि क्लृप्तनियतपूर्ववर्तिभिन्नत्वासंभवात् । किंच राजसंबन्धितया पुरुषस्य बुबोधयिषितत्वे राज्ञः पुरुषइतिवाक्यं प्रयुङ्क्ते न राजापुरुषइति तन्मूलान्वेषणे प्रागेव द्रागंवेयमेवाकाङ्क्षा नेयमित्यस्य

---

(१) पुस्तकान्तरे पाठोयम् ।

वाक्यजन्याप्रामाण्यज्ञानानास्कन्दितबोधदशायां पुरुषो न राज्ञ इत्यादिवाक्यादपि शाब्दबोधापत्तेः स्वत्वाभावबुद्धौ स्वत्वसंसर्गकज्ञानस्य विरोधित्वे मानाभावात् । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि राज्ञः पुरुष इत्यादौ राजस्वत्वादेः प्रकारताभ्युपगमः समुचितः । अन्यथा तादृशसमभिव्याहारज्ञानघटितशाब्दसामग्रीकाले राजस्वत्वाभाववान्पुरुषः सुन्दर इत्याकारकवि-

---

बुद्धावारोहासंभवात्समभिव्याहारनियमस्य तन्मूलत्वं वक्तुमशक्यं बुबोधयिषितप्रतिपत्तेः संसर्गतया स्वत्वादिभानेन निर्वाहस्य लाघवादभ्युपगमे षष्ठ्या उपस्थापकतयावश्यकत्वाभावेन पदसाधुत्वमात्रार्थकत्वस्यैव वक्तव्यत्वादाकाङ्क्षानिर्वाहकतयावश्यकत्वस्यास्यैव कथमाकाङ्क्षात्वमित्यस्यैव निरूप्यमाणत्वेन वक्तुमशक्यत्वात्, पदसाधुत्वार्थकत्वस्यच प्रथमाया अपि संभवात्, प्रकारतया सम्बन्धभानाभ्युपगमेन तन्निर्वाहस्वीकारे चावापोद्वापाभ्यामितरार्थविनियोगोर्वैरिततया षष्ठ्या उपस्थापकत्वे तद्भावाभावाभ्यामाकाङ्क्षाविशेषनियमस्य सुग्राह्यतया भवति तन्मूलत्वं सुवचमित्येवमप्युपस्थितेस्तस्या भवत्यनन्यथासिद्धत्वमिति चेदुच्यते । एतद्युक्तिमूलकमेव हि प्रतियोग्यभावान्वयावित्यादिनियममाश्रित्यानुपदमेवोक्तौचित्यं निराकरिष्यते इदानीं तु नञ्समभिव्याहारवद्वाक्यस्य नञघटितवाक्याद्भिन्नत्वेन तत्र स्वत्वोपस्थितेरन्यथानुपपत्तिकवलीकृतगौरवदोषत्वेन क्लृप्तत्वेन नञघटितवाक्यस्थले अन्यथानुपपत्तिविरहेण गौरवस्य दोषतया तस्याः क्लृप्तत्वाभावाद्भवत्येवान्यथासिद्धत्वम् । नच राजाद्युपस्थितावपि तुल्यं पुरुषगतैकत्वादिसंसर्गकोटौ राजस्वत्वादेरन्तर्भावेन संभवादिति वाच्यम् राजपदार्थस्य प्रकारतया भानाभ्युपगमापेक्षया संसर्गघटकतया भानाभ्युपगमएव प्रत्युताधिकपदार्थस्य विषयत्वप्रसङ्गेन राजाद्युपस्थितेर्लाघवेन क्लृप्तत्वादित्यापाततो लाघवानुसन्धानमूलिकौचित्योक्तिरिति गृहाण । वस्तुत एवंलाघवस्य पुरस्कारे राजादिघटितस्य संसर्गत्वे सांसर्गिकविषयत्वस्याधिक्येऽपि राजाद्युपस्थितेः सर्वत्र कल्पनेन राजादिविषयत्वस्य तदवच्छेदकत्वकल्पनेनोपस्थितेः सामग्रीकोटौ विशेष्यविशेषणभावविनिगमनाविरहनिबन्धनप्रतिबन्धकत्वाधिक्यकल्पनेन चातिगौरवाद्राजाद्युपस्थितेरक्लृप्तत्वापत्त्याऽन्यथासिद्धत्वमेव स्यात्तत्र-चानुभवव्याकुलीभावप्रसङ्गेनोक्तलाघवस्याकिञ्चित्करत्वस्यैव वक्तव्यत्वं स्यात्, एवमाकाङ्क्षानियममूलान्वेषणे सूत्रस्य कथञ्चित्तन्मूलत्वोक्तिसंभवेऽपि तत्परतायां कर्मत्वादिबोधानुकूलाकाङ्क्षानिर्वाहिका द्वितीयादिरित्यर्थेऽप्रामाणिकलक्षणाप्रसङ्गश्चेत्यलम् । यत्तु लाघवस्यैवोपस्थितिसाम्येऽपि संसर्गतया भाननियामकत्वमुक्तग्रन्थालब्धं तत्र स्वत्वसंसर्गकबोधे लाघवज्ञानं कारणमुतनेति । तत्र कारणमिति न प्रथमः पक्षः संसर्गतामते स्वत्वानुपस्थितौ लाघवज्ञानासत्त्वेपि शाब्दमतेरनुभवसिद्धतया तदनुपपत्तेः, नापि द्वितीयः अकारणस्य नियामकत्वासंभवादिति तु न शङ्क्यम् लाघवज्ञानविरहविशिष्टषष्ठ्यादिजन्यस्वत्वाद्युपस्थितेः षष्ठ्यादिपदघटिताकाङ्क्षाज्ञानाव्यवहितोत्तरस्वत्वादिसंसर्गकशाब्दबोधप्रतिबन्धकताकल्पनेन दोषाभावादिति तदसत् उक्तरीत्या सर्वसामञ्जस्ये प्रतिबन्धकत्वे मानाभावात् लाघवज्ञानविरहकाले स्वत्वोपस्थितौ प्रकारतया भानापत्तेः नचेष्टापत्तिस्तथासति तन्मतेऽपि स्वत्वप्रकारकबोधस्याङ्गीकृततया संसर्गतामतोक्तवक्ष्यमाणलाघवगौरवभावव्याकुलीभावप्रसङ्गादिति ।

**मानाभावादिति** । नच राज्ञःपुरुषइतिवाक्यजन्यबोधानन्तरं पुरुषोनराज्ञइति वाक्यजबोधानुत्पादस्य प्रदर्शितगौरवग्रहसहकृतस्य प्रतिबन्धकताकल्पकमानस्य सत्त्वान्मानाभावादित्युक्तिरसंगतैवेति वाच्यम् स्वत्वप्रकारकबोधानुरोधेन स्वरूपसम्बन्धावच्छिन्नस्वत्वनिष्ठप्रकारतानिश्चयेन प्रतिबन्धकत्वस्य क्लृप्ततया तदन्यप्रतिबन्धकताकल्पनागौरवेण महता प्रदर्शितगौरवस्याप्रकृतदोषभावत्वेनोक्तानुत्पादस्योक्तबोधे स्वत्वप्रकारकत्वकल्पकत्वस्यैवोचितत्वेन प्रतिबन्धकत्वे मानत्वाभावात् । नच स्वरूपसंबन्धातिरिक्तसंबन्धानवच्छिन्ना या राजविषयतानिरूपितस्वत्वविषयता तन्निरूपितपुरुषनिष्ठविशेष्यताकनिश्चयत्वेन प्रतिबन्धकत्वस्योक्तोभयविधबोधसाधारणस्य संभवेनोक्तानुत्पादस्य स्वत्वसंसर्गविषयकत्वलाघवसहकृतस्य स्वत्वप्रकारकत्वकल्पनापरिपन्थित्वमेवास्तीति वाच्यं, स्वत्वांशे कालिकादिना राजप्रकारकबोधस्यापि प्रतिबन्धकत्वापत्तेः । नच निरूपितत्वसम्बन्धावच्छिन्नत्वं निरूपितत्वसम्बन्धातिरिक्तसंबन्धानवच्छिन्नत्वंवा राजविषयतायां प्रवेशार्हम् स्वत्वसंसर्गकबोधासङ्ग्राहकत्वात् । नच स्वत्वविषयतायां निरूपितत्वान्यसंसर्गत्वानिरूपितत्वमप्युपादातुमर्हं स्वत्वप्रकारकबुद्धौ स्वत्वविषयताया निरूपितत्वान्यस्वरूपनिष्ठसंसर्गतानिरूपितत्वात्, निरूपितत्वान्यत्ववत्स्वरूपान्यत्वस्य विशेषणत्वे स्वत्वांशे स्वरूपेण राजप्रकारकबोधसंग्रहापत्तेः, समानाधिकरणविषयताया अवच्छेद्यावच्छेदकभावपक्षेपि सिद्धान्तभूते राजविषयतानिरूपितायाः स्वत्वविशेष्यतायाः पुरुषनिष्ठविशेष्यत्वनिरूपितत्वाभावेन स्वत्वप्रकारकबोधसंग्रहासंभवात्, एवंरूपगुरुतरप्रतिबन्धकत्वकल्पनातःस्वत्वप्रकारकत्वकल्पनाया एव लघीयस्त्वात्, अप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधेन प्रतिबन्धकत्वभेदस्यैवावश्यकत्वाच्चेति । **वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेपीति** । अयमभिप्रायः यथा राज्ञः पुरुषो न तथा आकाशस्यकालः यथा दण्डाद्घटः तथा न गगनं पारिमाण्डल्यादित्यादिवाक्यानां प्रामाणिकत्वेऽवश्यमभ्युपेयो वृत्त्यनियामकः प्रतियोगितावच्छेदकतयान्यथाप्रामाण्यासंभवात् तथाचसति निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभाववत्स्वत्वाभाववान् कालः निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकपारिमाण्डल्याभाववत्कार्यत्वाभाववद्गगनमित्यादिबोधाभ्युपगमेन तत्सम्भवात् । स्वयमपि वक्ष्यति द्वितीयाव्युत्पत्तिवादे वृत्त्य-

**शिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकताकल्पनाधिक्येन गौरवात् । अस्मन्मते तादृशसमभिव्याहारघटितसामग्र्या राजस्वत्वाभाववान् पुरुष इत्यादिबाधाभावघटिततया तत्सत्त्वे विशेष्यतावच्छेदकादिप्रकारकनिश्चयरूपकारणविरहादेव तथाविधविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षोत्पत्त्यसंभवेन तादृशसामग्र्यास्तत्र प्रतिबन्धकत्वस्याकल्पनात् । अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतया च न त्वन्मते निर्वाहः । अन्यत्रान्यविधप्रत्यक्षेच्छानामुत्तेजकतया तादृशेच्छायामसत्यां चोपदर्शितविशिष्टवैशिष्ट्यबोधत्वप्रकारेच्छाबलादुपदर्शितविशिष्टवैशिष्ट्यबोधोपपत्तये अन्यादृशविषयताया एव प्रतिबध्यतावच्छेदकत्वोपगमावश्य-**

---

नियामकस्य प्रतियोगितावच्छेदकत्वयुक्तिम् । किमत्र वक्तव्यम् वृत्त्यनियामकस्य प्रतियोगितावच्छेदकत्वे यदिचेत् वृत्तिनियामकसंबन्धेनेव वृत्त्यनियामकेनापि वस्तुसत्तानिषेधोऽभियुक्तानामनुभवपथारूढः स्यादेवतत् नस्याच्चेदलं प्रमाणशतोपन्यासेनापि तस्य शास्त्रैकमात्रसमधिगम्यत्वाभावादिति । **प्रत्यक्षवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकताकल्पनाधिक्येनेति ।** अथविभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वे प्रामाणिकएवोक्तगौरवोद्भावनं संगच्छते । नच तत्रोपलभ्यते मानमिति चेन्न जातिसाङ्कर्य्यस्य, ज्ञानयौगपद्यस्य चानभ्युपगततयोभयसामग्रीसत्त्वे हि केनचिदेकेनैव कार्येण भवितव्यं नहि तत्र प्रतिबन्धकत्वादृतेऽन्यस्य संभवतिविनिगमकत्वमित्यावश्यकं प्रतिबन्धकत्वमेकतरसामग्र्यास्तत्र प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वेऽन्ततः सर्वत्र शाब्दसामग्रीकाले योग्यत्वाकाङ्क्षाज्ञानादिमानसप्रत्यक्षसामग्र्या नियमेन सत्तया शाब्दप्रमितिमात्रोच्छेदः स्यादिति शाब्दसामग्र्या एव प्रतिबन्धकत्वं स्वीक्रियते । किंच ऋते लौकिकप्रत्यक्षसामग्र्या यस्या यदपेक्षया गुरुत्वं तस्यैवहि प्रतिबन्धकत्वमानुभविकं तद्विघटने पुनः क्लेशेन तस्याः संपादनीयत्वासंपद्यमानतत्कार्यप्रतीक्षणस्यैव लघुसामग्र्या अनतिक्लेशसंपाद्याया युक्तत्वादिति बोध्यम् । ननु राज्ञः पुरुषइत्यादिवाक्यज्ञान घटितसामग्रीसत्त्वे घटपटादिप्रत्यक्षवारणाय तत्तत्प्रत्यक्षे तत्सामग्र्याः प्रतिबन्धकत्वं कल्पनीयं तत्र विशिष्यतत्तद्विषयकप्रत्यक्षेऽनन्तप्रतिबन्धत्वमप्रकल्प्य लाघवेन राजत्वावच्छिन्नविषयतानिरूपितपुरुषत्वावच्छिन्नविशेष्यत्वावच्छिन्नभेदप्रतियोगितानवच्छेदकविषयताकत्वरूपभिन्नविषयकत्वविशिष्टप्रत्यक्षत्वावच्छिन्नं प्रत्येकमेव प्रतिबन्धकत्वं कल्पनीयमिति संसर्गत्वमतेऽपि न प्रतिबन्धकताधिक्यमित्यत आह । **अन्यादृशप्रत्यक्षस्थलीयप्रतिबन्धकतयेति । उपदर्शितविशिष्टवैशिष्ट्यबोधोपपत्तयइति ।** नचोपदर्शितविशिष्टवैशिष्ट्यबोधत्वप्रकारकेच्छाविरहवैशिष्ट्यमपि निवेश्यं तथाचोक्तरीत्यानुपपत्तिविरहात्प्रतिबध्यताभेदो नाङ्गीकरणीय इति वाच्यम् घटादिप्रत्यक्षेच्छाविरहकाले उपदर्शितविशिष्टवैशिष्ट्यबोधेच्छादशायां घटादिप्रत्यक्षापत्तिवारणाय तस्य तत्रानिवेशनीयत्वात्, आपत्तिवारणायैव प्रतिबन्धकत्वस्य कल्पिततया तद्वारणस्यैवाभ्यर्हितत्वादित्यनुपपत्तिपरिहाराय प्रतिबध्यताभेदस्यावश्यकत्वादितिभावः ।

अथोपदर्शितविशिष्टवैशिष्ट्यबोधेच्छादशायां घटप्रत्यक्षसामग्र्यां घटप्रत्यक्षापत्तेरुपदर्शितविशिष्टवैशिष्ट्यबोधेच्छादशायामुपदर्शितविशिष्टवैशिष्ट्यबोधसामग्र्यां तादृशबोधानुपपत्तेश्च वारणाय यद्यदिच्छासत्त्वे तादृशसामग्र्यां भिन्नविषयकं प्रत्यक्षमुत्पद्यते तत्तद्व्यक्तित्वेनैवाभावप्रतियोगितयेच्छाव्यक्तीनां प्रवेशो विधेयो, नच प्रतिबध्यप्रतिबन्धकभावभेदः कल्पनीयः आवश्यकश्च प्रतिबध्यप्रतिबन्धकभावभेदपक्षेऽपि तत्तद्व्यक्तित्वेनैवेच्छाव्यक्तीनां प्रवेशः घटप्रत्यक्षेच्छायाः घटप्रत्यक्षविषयकत्वेन प्रवेशे शाब्दत्वादिना तद्गोचरेच्छायां तदापत्तेः, घटप्रत्यक्षत्वप्रकारकेच्छात्वेन प्रवेशे शाब्दान्यज्ञानत्वादिना तदवगाहीच्छायां तदनुपपत्तेः यादृशयादृशेच्छाव्यक्तिसत्त्वे शाब्दसामग्र्यां प्रत्यक्षमुत्पद्यते तादृशत्वेन प्रवेशेऽपि राजपुरुषशाब्दान्यज्ञानं जायतामितीच्छातो राजपुरुषशाब्दसामग्र्यां घटादिप्रत्यक्षसामग्र्यां च घटादिप्रत्यक्षोत्पत्तेरनुभवसिद्धतया राजपुरुषशाब्दसामग्र्यां नीलघटादिशाब्दसामग्र्यां घटप्रत्यक्षसामग्र्यां च सत्यां विद्यमानाया निरुक्तेच्छायास्तादृशत्वेन तदानीं घटादि प्रत्यक्षापत्तेर्दुरुद्धरत्वात् अप्रतिबध्यनीलघटादिशाब्दोत्पत्त्या तादृशेच्छाया विषयपर्यवसानसंभवे प्रतिबध्यज्ञानार्जकत्वस्यानुभवविरुद्धत्वेनेष्टापत्तेरयोगादिति चेन्न भिन्नविषयकशाब्दसामग्र्यां घटप्रत्यक्षसामग्र्यां पटप्रत्यक्षसामग्र्यांच सत्यां घटप्रत्यक्षेच्छायां घटप्रत्यक्षमिव पटप्रत्यक्षमपि स्याद्घटप्रत्यक्षानुरोधेन तदिच्छाव्यक्तेरुत्तेजकताया आवश्यकत्वात्प्रतिबध्यप्रतिबन्धकभावभेदे पटप्रत्यक्षप्रतिबन्धकतायां निरुक्तेच्छाव्यक्तेरनुत्तेजकत्वादिति । एतेन स्वविषयतावच्छेदकधर्मावच्छिन्नप्रत्यक्षसामग्रीविशिष्टत्वस्वविषयतावच्छेदकावच्छिन्नशाब्दसामग्रीविशिष्टत्वसंबन्धावच्छिन्नस्वाभाववत्त्वस्वसामानाधिकरण्यैतत्त्रितयसंम्बन्धावच्छिन्नप्रतियोगिताकइच्छासामान्याभावएवास्तु सामग्र्यां विशेषणम् प्रथमसंबन्धनिवेशात् पटप्रत्यक्षेच्छायां घटप्रत्यक्षसामग्र्यां च नप्रत्यक्षापत्तिः द्वितीयसंबन्धनिवेशाच्च राजपुरुषशाब्दान्यज्ञानं जायतामितीच्छादशायामनुपदोक्ताया आपत्तेर्नावकाशइति निरस्तम् । यत्तु भिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रति स्वविशिष्टेच्छाभावविशिष्टसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यं वैशिष्ट्यं च स्वविषयकत्वस्वसामग्रीविशिष्टत्वस्वकालीनशाब्दाभाववत्त्वैतत्त्रितयसंबन्धेन । शाब्दाभावश्च स्वविषयकत्वस्वसामग्रीविशिष्टत्वो-

भयसंबन्धावच्छिन्नप्रतियोगिताको बोध्यः। स्वविषयकत्वंचोभयत्र स्ववृत्तिधर्मावच्छिन्नविषयताकत्वमतः शाब्दत्वादिना प्रत्यक्षावगाहीच्छावारणमनुमितित्वादिना प्रत्यक्षावगाहीच्छावारणं च राजपुरुषशाब्दान्यज्ञानं जायतामितीच्छावारणम् प्रत्यक्षत्वादिना शाब्दावगाहीच्छासंग्रहश्च। नच प्रत्यक्षान्यशाब्दान्यज्ञानं जायतामितीच्छायाः प्रत्यक्षवृत्तिज्ञानत्वरूपधर्माव-च्छिन्नत्वविषयताकत्वात्संग्रहः शाब्दान्यज्ञानं जायतामितीच्छायाः शाब्दवृत्तिज्ञानत्वरूपधर्मावच्छिन्नविषयताकत्वादसंग्रहोवेति वाच्यम् स्ववृत्तिधर्मावच्छिन्नत्वस्य स्वनिरूपिततादात्म्यसंबन्धावच्छिन्नयत्किञ्चित्सम्बन्धितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनु-योगितावच्छेदकरूपवृत्तित्वार्थकत्वात्। वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन बोध्यमित्येतद-प्यनुगमवर्त्म तदप्यननुसरणीयमुक्तदोषादेव। नच यदा यस्य प्रतिबध्यत्वेनाभिमतत्वं तदा तस्यैव स्वपदेनोपादानमिति घटप्र-त्यक्षेच्छाकाले पटप्रत्यक्षे आपाद्यमाने प्रतिबध्यत्वेनाभिमतस्य पटप्रत्यक्षस्यैव स्वपदेनोपादेयतया तद्विशिष्टेच्छाया अभा-वेनापत्तेर्नसंभव इति वाच्यमेवमनुगतभावस्य स्वपदार्थे संबन्धघटकतां विना नव्यैरनङ्गीकारात्पृथक्प्रतिबध्यप्रतिबन्धक-भावस्यैवापत्तेरेवमेवान्ये प्रकारा निरस्ता देदितव्या इति।

अथेच्छावदन्यत्वस्यैव प्रतिबध्यतावच्छेदकत्वं वाच्यं तथासत्युक्तदोषाणामप्रसक्तेः। प्रतिबध्यप्रतिबन्धकभावभेदो नाभ्युपेयः इच्छावत्त्वाच्च प्रयोज्यत्वसंबन्धेन। नन्विच्छावदन्यत्वस्य प्रतिबध्यतावच्छेदकत्व एवहि गौरवम् तथाहि। इच्छाविशिष्टप्रत्यक्षाणां शाब्दसामग्रीसत्त्वेऽसत्यांचेच्छायामापत्तिवारणाय तत्तदिच्छाविशिष्टप्रत्यक्षे तत्तदिच्छायाः कारणत्वं वाच्यमिति तदंशेन साम्याद्युक्तप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्याधिक्यादिति चेन्न, यत्रैकमिच्छाकारणत्वं तत्रहि सामग्र्याः प्रतिबन्धकत्वे सामग्रीत्वस्य समुदायत्वात्मकस्यैकविशिष्टापरत्वात्मकतया विशेष्यविशेषणभावे विनिगमनाविरहादनेकं गुरुधर्मावच्छिन्नं प्रतिबन्धकत्वं स्यादितीच्छावदन्यत्वस्य प्रतिबध्यतावच्छेदकत्वेन संभवति संभावनापि गौरवस्य यदि समुदायत्वं नैकविशि-ष्टापरत्वं तदापीच्छावदन्यत्वस्य प्रतिबध्यतावच्छेदकत्वे घटादिदशविषयकप्रत्यक्षं प्रति राज्ञः पुरुषइतिवाक्यघटितशाब्दसा-मग्र्या एकं चैत्रस्यपुरुषइति वाक्यघटितशाब्दसामग्र्या एकं प्रतिबन्धकत्वमितिप्रतिबन्धकताद्वयमिच्छाकारणतादशकंच इच्छाया-उत्तेजकत्वे विंशतिप्रतिबन्धकत्वानि इत्येवंप्रव्यक्तमेव लाघवगौरवमुभयत्र पक्षे। यत्तु इच्छाविरहविशिष्टसामग्रीत्वेन प्रतिबन्ध-कत्वे सामग्रीत्वस्यैकविशिष्टापरत्वरूपतया विशेष्यविशेषणभावे विनिगमकाभावाद्यावत्यः प्रतिबन्धकतास्ततो बाहुल्यंस्यात्तेषा-मेकैकस्येच्छाभावेन विशेष्यविशेषणभावे विनिगमकाभावादिति तदनादेयम् इच्छाभावस्य हि तत्तद्व्यक्तित्वावच्छिन्नप्रतियो-गिताकत्वेन निवेशनीयस्य समुदायत्वेनैव प्रतिबन्धकतावच्छेदककोटौ प्रवेश्यतया तस्य विशेष्यत्व एकविशिष्टापरस्यैव तत्त्वेन तत्र विशेष्यविशेषणभावे विनिगमकाभावादनन्तप्रतिबन्धकत्वापत्तेः तादृशाभावसमुदायस्य युगपद्विशेषणत्वेन परिहृतानन्त-प्रतिबन्धकत्वापत्तौ विशेषणत्वपक्षे विनिगमकत्वस्य संभवाद्विशेषणत्वमेव संभवतीति नेच्छाभावविशेष्यविशेषणभावविनिगमना-विरहकृतगौरवस्य प्रसरः परन्तु सामग्रीघटकतत्तत्कारणकोटिप्रविष्टतत्तद्विषयत्वादीनां विशेष्यविशेषणभावविनिगमनाविरह-प्रयुक्तप्रतिबन्धकतावच्छेदकबहुलीभावे सत्येकैकस्यापि प्रतिबन्धकतावच्छेदकस्य स्वघटकतत्तत्पदार्थेष्विच्छाभावविशेषणत्व-विनिगमकाभावनिबन्धनतत्तत्पदार्थसमसंख्यतयाऽनेकत्वं भवत्येवेति चेदत्रकेचित् शाब्दसामग्र्यां घटप्रत्यक्षसामग्र्यां पटप्रत्यक्ष-सामग्र्यांच सत्यां घटप्रत्यक्षासंभवे पटप्रत्यक्षमन्यथा घटप्रत्यक्षमेव जायतामितीच्छादशायां घटप्रत्यक्षमिव पटप्रत्यक्षमपि स्या-त्तस्यापीच्छावत्त्वेनाप्रतिबध्यत्वादेवंराज्ञः पुरुषइतिवाक्यघटितायां मैत्रस्यपुरुषइतिवाक्यघटितायां च शाब्दसामग्र्यां मैत्रस्यपुरुष इतिशाब्दसामग्र्यामसत्यांघटप्रत्यक्षमन्यथा शाब्दबोधो जायतामितीच्छादशायां घटप्रत्यक्षसामग्र्यां घटप्रत्यक्षापत्तिस्तस्यापी-च्छावत्त्वात् तादृशेच्छांविना तादृशप्रत्यक्षापत्तिवारणाय क्लृप्तकारणभावायास्तादृशेच्छाया अप्यत्र सत्वाच्च तादृशेच्छायास्तत्तद्व्य-क्तित्वेन हेतुत्वेचानन्तकारणत्वापत्त्याऽस्मिन्नेवपक्षे गौरवं स्यादुत्तेजकतापक्षे चेच्छायास्तत्तद्व्यक्तित्वेनैवाभावस्य प्रविष्टत्वेन दोषस्यासंभवादित्याहुस्तदसत् घटप्रत्यक्षसामग्रीविगमकालएव तादृशेच्छावतः पटप्रत्यक्षस्य संभवेन तादृशसामग्रीविरहविशि-ष्टत्वेन तस्या हेतुत्वोक्तौ दोषाभावात्। यत्तु शाब्दसामग्रीदशायां घटप्रत्यक्षेच्छातो जायमाने घटप्रत्यक्षे पटविषयकत्वमपि स्या-त्पटविषयकप्रत्यक्षसामग्र्याः पटविषयताप्रयोजिकायाः सत्त्वात् कार्यज्ञानस्येच्छावदन्यत्वविरहेणाप्रतिबध्यतया तन्निष्ठभिन्नविष-यकत्वस्य प्रतिबन्धकसामग्र्यभावानपेक्षत्वात् उत्तेजकतापक्षेच पटप्रत्यक्षेच्छाविरहविशिष्टसामग्र्यभावस्यैव पटविषयताप्रयो-जकत्वेन तादृशाभावविरहादेवापत्तेरसंभवादिति तत्तुच्छम्। पटविषयतायाः प्रत्यक्षनिष्ठाया अन्यतरद्धि प्रयोजकं तादृशसा-मग्र्यभावः पटप्रत्यक्षेच्छाच प्रकृतस्थले तदुभयोरभावान्न पटविषयकत्वप्रसक्तिः घटप्रत्यक्षेच्छायास्सत्त्वेन घटविषयकत्वंतु संभवत्येव अतएव सत्प्रतिपक्षग्रन्थे बाधबुद्धेरिच्छावदन्यविशिष्टबुद्धौ प्रतिबन्धकत्वाभिधानं संगच्छते अन्यथा बाधकाले घट-चाक्षुषेच्छादशायां जायमाने घटचाक्षुषे पटचाक्षुषसामग्रीसत्त्वे पटविषयकत्वमपि स्यादिति तस्यदुष्टत्वं स्यादिति चेदुच्यते। इच्छावदन्यप्रत्यक्षत्वस्य प्रतिबध्यतावच्छेदकत्वे तस्य सामग्र्यभावकार्यतावच्छेदकत्वस्याप्यावश्यकतया प्रयोज्यत्वस्य संसर्गतया तद्घटकत्वापत्तिः प्रयोज्यत्वस्य हि कार्यतावच्छेदकघटकत्वमात्माश्रयादिदोषदूषितम्। नच कारणनिरूपितमेव प्रयोज्यत्वमात्मा-श्रयादिप्रयोजकं नचेच्छाप्रकृतकारणमितिवाच्यमिच्छावदन्यबुद्धौ सामग्र्यभावस्य कारणत्वे इच्छाविशिष्टबुद्धाविच्छायाः

**कत्वात् । न च स्वत्वादेः प्रकारतामतेऽपि स्वत्वादिसम्बन्धावच्छिन्नप्रतियोगिताकराजाद्यभाव-विशिष्टपुरुषादिवैशिष्ट्यबोधे तथाविधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवम् । तत्संसर्गतामते**

---

कारणत्वमवश्यंहि वाच्यम् तत्रच कारणनिरूपितमेव प्रयोज्यत्वमवच्छेदकमिति भवत्येवात्माश्रयादिः स्ववृत्तिप्रागभावप्रतियो-गित्वस्वसामानाधिकरण्यस्ववृत्तिशब्दवृत्तित्वैतत्रितयसंबन्धेनेच्छावत्वमेवानुगतमव्यवहितोत्तरत्वमस्त्वचछेदकमित्यपि न वाच्यं तादृशपरम्परायाः संसर्गत्वानभ्युपगमात् अव्यवहितपूर्ववर्तिताया एककारणपरिशेषापत्त्यादिना पक्षताविचारे कारणतावच्छेद-कत्वस्य निराकृतत्वेनाव्यवहितोत्तरत्वस्य कार्यतावच्छेदकताया अपि निराकृतप्रायत्वात् अव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वे कार्यविशेषणधर्मान्तरस्य व्यभिचाराद्यवारकतया गौरवेण कार्यतानवच्छेदकत्वापत्त्या प्रवृत्तिनिवृत्तिव्याकुलीभावः प्रसज्येत इष्टतावच्छेदकावच्छिन्नसाधनत्वस्य दुर्ग्रहत्वात् । वस्तुतः सत्प्रतिपक्षग्रन्थे निरुक्तप्रतिबध्यप्रतिबन्धकभावसरणिः संशयानुमिति-स्वीकर्त्री प्रतिबन्धकतायामिच्छाया उत्तेजकत्ववादिना बाधनिश्चयवदन्यबुद्धित्वावच्छिन्नप्रतिबध्यत्वस्य ततोऽपि दोषविशेषाज-न्यत्वादेरवच्छेदकत्वाकल्पनेन लघुभूतस्यापादनरूपया प्रतिबन्द्या दूषिता । अतएवाहुरित्यादिना सन्दर्भेण सिद्धान्तभूतसंश-यानुमित्यभावपक्षावलम्बिना उत्तेजकत्वपक्षएव संशयानुमितिर्निराकृता अन्यथाऽव्यवहितोत्तरत्वघटितकार्यतावच्छेदकत्वपक्षस्या-दुष्टताया ग्रन्थकाराभिमतत्वे व्याप्यवत्तानिश्चयवदन्यबुद्धित्वावच्छिन्नं प्रति प्रतिबन्धकत्वस्यानिराकृततया रत्नकोषकारमतस्यैव प्राबल्यापत्तेः अव्यवहितोत्तरत्वघटितकल्पे दोषश्च तद्ग्रन्थस्यैव निपुणविचारणया विज्ञायते । तथाहि इच्छावदन्यत्वेन प्रतिबध्य तायां लाघवेन बाधनिश्चयवदन्यत्वेन प्रतिबध्यत्वापत्तिरूपां प्रतिबन्दिमुद्भाव्य तत्र सिद्धान्तकल्पेऽनुत्पन्नाया अनुमितेः स्वीकारेण दोषाभावकथनेन इच्छावदन्यविशिष्टबुद्धित्वेन प्रतिबन्धकत्वे चाक्षुषेच्छातः स्पार्शनानङ्गीकारे क्षत्यभावेन तदापत्तेः सुरगुरुणापि वारयितुमशक्यतया फलानिर्णयरूपदोषः प्रतीयत इत्यलम् ।

ननु स्वसामानाधिकरण्यस्वस्वविषयत्वोभयसंबन्धेनेच्छावदन्यत्वं प्रतिबध्यतावच्छेदकं वाच्यं तत्र नोक्तदोषसंभव इति चेन्न प्रत्यक्षत्वेन शाब्दावगाहीच्छायां प्रत्यक्षानुपपत्तेः स्वविषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वस्य हि संसर्गत्वे पटप्र-त्यक्षेच्छादशायां शाब्दसामग्र्यां घटप्रत्यक्षपटप्रत्यक्षसामग्र्योः समूहालम्बनघटपटप्रत्यक्षापत्तिः । नचात्र कल्पे तत्तद्विषयक-प्रत्यक्षंप्रति तत्तद्विषयकप्रत्यक्षेच्छायाः कारणत्वस्यावश्यकतया पटप्रत्यक्षेच्छाभावान्नोक्तसमूहालम्बनापत्तिरितिवाच्यं ज्ञानं-जायतामितीच्छायामपि शाब्दसामग्र्यां प्रत्यक्षोत्पत्तिस्वीकारे क्षत्यभावेन तदापत्तेर्वारयितुमशक्यतया फलानिर्णयस्या-त्राप्यव्यवहितोत्तरत्वस्य कार्यतावच्छेदकत्वपक्षवद्दोषत्वस्य जागरूकत्वादिति विभावनीयम् । ननु मैत्रस्यपुरुष इतिवाक्यजन्य-शाब्दसामग्र्याः प्रतिबन्धकत्वस्योभयमतसिद्धतया प्रतिबन्धकत्वस्यावश्यवक्तव्यत्वे लाघवाद्राजस्वत्वाभाववत्पुरुषविषयतानि-रूपितसुन्दरविषयताकप्रत्यक्षंप्रति तादृशविषयताबहिर्भूतविषयताकशाब्दसामग्रीत्वेन प्रतिबन्धकत्वं वाच्यमिति तस्या अप्युक्त-प्रतिबन्धकत्वेनैव गतार्थतया न प्रतिबन्धकताधिक्यमिच्छोत्तेजकत्वानुरोधेनाप्यस्यप्रतिबन्धकत्वस्य भेदासंभवादिति चेन्न प्रतिबन्धकतावच्छेदकस्योक्तसामग्रीत्वस्याननुगतानतिप्रसक्तस्य दुर्वचत्वात् । नच तादृशशाब्दविशिष्टत्वेनैव प्रतिबन्धकत्वं वाच्य-मिति वाच्यं शाब्दसामग्र्यव्यवहितपूर्ववर्तिनो यत्किञ्चित्कारणस्य शाब्दबोधक्षणेऽपि सत्त्वेन तदुत्तरमपि प्रत्यक्षोत्पत्त्यनुपपत्तेः । नच तादृशशाब्दाव्यवहितपूर्ववर्तित्वविशिष्टत्वेन प्रतिबन्धकत्वं वक्तव्यं विशिष्टस्यच न शाब्दक्षणे संभवइति वाच्यम् अ-व्यवहितपूर्वत्वस्य त्रिक्षणसाधारणस्य वाच्यतया यत्र पदार्थोपस्थित्यादिकारणानन्तरमुपनीतभानात्मकाकाङ्क्षाज्ञानमनन्तरं शा-ब्दबोधस्तत्र पदार्थोपस्थितेः शाब्दाव्यवहितपूर्ववर्तित्वेनाकाङ्क्षाज्ञानानुत्पादप्रसङ्गात् । नच त्रिक्षणसाधारणमव्यवहितपूर्वत्वं किमिति निवेश्यमिति वाच्यं यत्र घटप्रत्यक्षेच्छा घटप्रत्यक्षसामग्री पटप्रत्यक्षसामग्री शाब्दसामग्रीच तदनन्तरं घटप्रत्यक्षम् ततः शाब्दबोधस्तत्र शाब्दसामग्र्या द्वितीयक्षणवृत्तिनिष्ठशाब्दाव्यवहितपूर्ववर्तित्वाभावेन पटप्रत्यक्षापत्तेरिति ।

**नच स्वत्वादेः प्रकारतामत इत्यादि ।** ननु राजस्वत्ववत्पुरुषविषयकबुद्धित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वा-वच्छिन्नाभावएव शाब्दसामग्र्यां प्रकारतामते प्रवेशनीयस्तथाच नाभावद्वयप्रवेशः नच संसर्गतामते स्वत्वसंबन्धावच्छिन्नराजाभा-वप्रकारतानिरूपितपुरुषनिष्ठविशेष्यत्वनिरूपकनिश्चयत्वावच्छिन्नाभावो लघुतरः सामग्र्यां निविशते प्रकारतामतेचोक्ताभावो गुरु-तरइति वाच्यं संसर्गतामतेऽपिहि प्रतिबन्धकत्वावच्छिन्नाभावएव प्रवेशनीयोऽन्यथा राजाभाववान्पुरुषः पुरुषे राजाभावः राज-व्यापकाभाववान्पुरुषइत्यादि निश्चयानामभावांस्तादृशनिश्चयत्वावच्छिन्नाभावत्वे न स्युर्निविष्टास्तथासति विशेष्यविशेषणभावव्य-त्यासेन सामग्रीप्रतिबन्धकताबाहुल्यं स्यादिति चेन्न भाविज्ञानमप्रमेत्यप्रामाण्यग्रहोत्तरं यत्र बाधनिर्णयशाब्दसामग्रीप्रत्यक्षसामग्री-णामेकदासंवलनं तत्र तदुत्तरं प्रत्यक्षापत्तेः स्वतृतीयक्षणे कार्यानुत्पादानुरोधेन तद्बाधनिर्णयस्य प्रतिबन्धकत्वस्यावश्यकत्वात् अप्रा-माण्यग्रहविशिष्टज्ञानक्षणेऽप्रामाण्यग्रहाभावविशिष्टज्ञानत्वावच्छिन्नाधिकरणत्वस्यासत्तया तादृशज्ञानत्वावच्छिन्नाभावस्य सत्त्वेऽपि प्रतिबन्धकत्वेन तादृशज्ञानाधिकरणत्वस्याविलक्षणत्वेन तदवच्छिन्नाभावस्य सत्त्वासंभवात्तद्घटितशाब्दसामग्र्यास्तदानीमसत्त्वात् । अथ प्रतिबन्धकत्वस्याव्याप्यवृत्तित्वाभावेऽप्रामाण्यग्रहकालेऽपि बाधज्ञाने प्रतिबन्धकत्वसत्त्वापत्त्या तदुत्तरक्षणे कार्यप्रतिरोधा

तादृशसामग्र्याः स्वत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभाववत्तानिश्चयाभावघटिततया तत्सत्त्वे कारणविरहादेव तथाविधप्रत्यक्षवारणसंभवादिति वाच्यम् । मन्मते तादृशप्रत्यक्षं प्रति तथाविधसामग्र्याः प्रतिबन्धकताधिक्येऽपि निरूपितत्वादिसंबन्धावच्छिन्नप्रतियोगिताकराजाद्यभावविशिष्टस्वत्वादिवैशिष्ट्यबोधे । तथाविधसामग्र्याः प्रतिबन्धकताऽकल्पनेन तदंशे साम्यात् । तथाच पूर्वोक्तराजस्वत्वाभाववान् पुरुषः सुन्दर इत्यादिविशिष्टवैशिष्ट्यप्रत्यक्षं प्रति राज्ञः पुरुषः इत्यादिसामग्र्याः प्रतिबन्धकत्वकल्पनं संसर्गतावादिनां मतेऽधिकमिति । न च स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकं प्रति तादृशसामग्रीप्रतिबन्धकतायांविभक्तिजन्यस्वत्वाद्युपस्थितिनिवेशाधिक्येन राजस्वत्वाभाववान्पुरुष इत्यादिबाधाद्यभावनिवेशाधिक्येन च गौरवम् । अस्मन्मते तादृशोपस्थितितथाविधबाधाभावादीनां तथाविधवाक्यजन्यशाब्दबोधं प्रत्यहेतुतया तादृशवाक्यघटितसामग्रीप्रति-

---

पत्तिःस्यादिति तस्याव्याप्यवृत्तित्वमवश्यं वाच्यं तथाचाव्याप्यवृत्तिधर्मावच्छिन्नाभावस्तादृशधर्माभावकाले संभवत्येवेति नोक्तदोषः। यदिच कारणीभूताभावप्रतियोगित्वमेव प्रतिबन्धकत्वं प्रतियोगित्वस्य चाव्याप्यवृत्तित्वं सिद्धान्तविरुद्धम् अतिरिक्तस्यापि प्रतिबन्धकत्वस्याव्याप्यवृत्तित्वं नाङ्गीकरणीयं कार्यानुत्पादे प्रतिबन्धकतावच्छेदकावच्छिन्नसत्त्वमेव प्रयोजकं कार्योत्पादेच प्रतिबन्धकतावच्छेदकावच्छिन्नाभावस्यैव सत्त्वमित्युक्तदोषस्य विरहादित्युच्यते तदापि निरुक्तप्रतिबन्धकतावच्छेदकावच्छिन्नाभावत्वेनाभावानां प्रवेशे न दोषइति गृहाण । नच प्रतिबन्धकतावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकप्रतियोगिताकाभावत्वेनैव प्रवेशः कार्योऽन्यथा विशेषाभावादिकमादाय प्रतिबन्धकसद्भावेऽपि तस्य सत्त्वापत्तेस्तत्र यदि यत्किञ्चित्प्रतिबन्धकतावच्छेदकतापर्याप्तिर्निवेश्यते तदैकविधबाधसत्त्वेऽपि तादृशाभावसत्त्वापत्तिः यदि निरुक्तप्रतिबन्धकतावच्छेदकतात्वेनावच्छेदकतापर्याप्तिर्निवेश्यते तदापि सैव, प्रतिबन्धकनिश्चयस्य तावद्रूपाश्रयस्य समूहालम्बनात्मकस्यैव संभवेन तदभावस्य तत्रसत्त्वादिति वाच्यं निरुक्तप्रतिबन्धकताविशिष्टरूपवृत्तिनिरूपकताकाधिकरणत्वसामान्याभावस्यैव प्रतिबन्धकसामग्र्यांनिवेशात् । वैशिष्ट्यंच स्वावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। वृत्तित्वमपि तेनैवसंबन्धेन बोध्यम् एवञ्चाप्रामाण्यज्ञानाद्यभावविशिष्टतत्तद्बाधनिश्चयत्वगतसमुदायस्य प्रतिबन्धकताविशिष्टतया तद्वृत्तिनिरूपकताकाधिकरणतात्वस्यानुगतस्य तादृशतत्तद्बाधनिश्चयाधिकरणतासु सत्त्वेन तदवच्छिन्नाभावस्य नैकबाधसत्त्वे सत्त्वसंभवो नवा प्रामाण्यज्ञानक्षणे सत्त्वासंभवः। यद्युक्तपरम्परायाः संसर्गत्वं नाभ्युपेयते तदापि निरुक्तप्रतिबन्धकतावृत्त्युभयावृत्तिधर्मावच्छिन्ननिरूपितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तीयावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नकिञ्चिन्निष्ठनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगितावदवच्छेदकताकनिरूपकताकाधिकरणत्वं नास्तीति प्रतीतिसिद्धाभावस्य तादृशप्रतिबध्यत्वनिष्ठावच्छेदकताभिन्नप्रतिबन्धकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकताभिन्नाधेयत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधेयत्वनिष्ठावच्छेदकतेत्यादिक्रमेणवच्छेदकत्वानि निवेश्य तन्निरूपितप्रतियोगितानिरूपकत्वेन निवेशः कार्यइति चेदुच्यते। येन रूपेण प्रतिबन्धकत्वं तद्रूपावच्छिन्नाभावत्वेनैव प्रतिबन्धकाभावः सामग्र्यां निवेश्यः तेनैव रूपेण तस्य कारणत्वात् कारणकूटस्यैव सामग्रीत्वादुक्तानुगताभावस्य चाकारणत्वात् प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वरूपत्वेन तदवच्छिन्नाभावत्वेन कारणत्वेऽन्योन्याश्रयप्रसङ्गात् । एकैकबाधनिश्चयाभावत्वेनोपस्थितेनान्वयव्यतिरेकावच्छेदकतया गृहीतेन च लाघवात्कारणत्वे व्यवस्थिते तादृशानेककारणत्वकल्पनागौरवस्य फलमुखत्वेनादोषत्वाच्च शाब्दसामग्रीलिङ्गकशाब्दानुमाने प्रत्यक्षाभावानुमाने तथैवसामग्र्याः सुग्रहत्वादिति प्रतिबन्धकाभावस्यानेकत्वनिबन्धनो लाघवगौरवविचारो नादरणीयः । अथोक्तानुगताभावस्याकारणत्वेपि प्रतिबन्धककुक्षौ प्रवेशे काक्षतिः नचानेकाभावघटितोक्तरूपेण तस्य प्रवेशएव गौरवमिति वाच्यं तद्व्यक्तित्वेनैव तस्य प्रवेशादितिचेन्न । कारणनिष्ठसमुदायत्वेन प्रतिबन्धकत्वे तदवच्छिन्नाभावत्वेन कारणत्वे चान्यतमत्वेन प्रतिबन्धकत्वकारणत्वादाविवान्यथासिद्धेरभ्युपगमात् । गगनाद्यभावनिष्ठतादृशाभावस्य गगनाभावात्मकतया तद्व्यक्तित्वेन तदधिकरणत्वस्य बाधनिश्चयदशायामपि सत्त्वात् नचेत्यादिशङ्काग्रन्थस्य सामग्रीप्रतिबन्धकतायामवच्छेदककोटौ कारणस्यैव प्रवेशइति मत्योत्थानादुत्तरग्रन्थस्यापि तादृशबुद्ध्यैव प्रवृत्तेरसङ्गतिविरहात् उत्तरग्रन्थेन स्वत्वप्रकारतामतव्यवस्थापकेनोक्तरूपेण प्रतिबन्धकत्वस्याप्युपलक्षणीयत्वाच्च । यत्तु साक्षात्परम्परासाधारणावच्छेदकत्वानङ्गीकारे निरुक्तक्रमेण निवेशो न संभवदुक्तिकः पुरुषविशेष्यत्वनिश्चयत्वाप्रामाण्यग्रहाभाववादिनामेव साक्षात्प्रतिबन्धकतावच्छेदकत्वेन तदवच्छिन्ननिरूपकताकाधिकरणत्वस्य पुरुषविशेष्यकबाधानात्मकनिश्चयसत्त्वेऽपि सत्तया निरुक्ताभावासत्त्वेन शाब्दसामग्र्यनुपपत्तेरिति तन्न राजस्वत्वाभावप्रकारतानिरूपितपुरुषविशेष्यत्वानामेव प्रतिबन्धकतावच्छेदकत्वेन तावन्मात्रावच्छिन्नत्वस्य राजस्वत्वाभावत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्ननिरूपकतायामेवसत्त्वात् पुरुषत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्ननिरूपकतावच्छेदकत्वस्य तादृशप्रकारत्वानिरूपितविशेष्यतास्वपि सत्त्वादिति ।

बन्धकतायां तेषामनिवेशादिति वाच्यम् । भवन्मतेऽपि स्वत्वसम्बन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यराजस्वत्वाभाववान्पुरुष इत्यादिनिश्चयस्य तदभावव्याप्यवत्तानिश्चयमुद्रया तादृशवाक्य-

---

भवन्मतेऽपि स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्येत्यादि । अथ राजाभावव्याप्याभावप्रमेयादिमत्तानिश्चयाभावानामवश्यप्रवेशनीयतया तेषां किंचिद्धर्मावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपिताभावादिविषयताघटितधर्मावच्छिन्नाभावत्वेनैकेनानुगतेनैव रूपेण प्रवेशो विधेयस्तथासति राजाभावव्याप्यराजस्वत्वाभाववत्तानिश्चयाभावस्य पृथक्निवेशप्रयोजनाभावइति कथं संसर्गतामते निवेशनाधिक्यमिति चेन्न । अनुमितिजननयोग्यव्याप्यवत्तानिश्चयस्यैव प्रतिबन्धकतायाः स्वीकृतत्वेन प्रमेयत्वव्यापकराजाभावसमानाधिकरणवाच्यत्ववत्तानिश्चयस्य घटकालीनप्रमेयत्वव्यापकराजाभावसमानाधिकरणपटकालीनप्रमेयत्ववत्तानिश्चयस्यचानुमितिजननासमर्थतयाऽप्रतिबन्धकत्वेन तत्सत्त्वेऽपि शाब्दसामग्र्या इष्टत्वेनोक्तरूपेणाभावप्रवेशे तदनुपपत्तेः एवमप्रामाण्यज्ञानाभावविशिष्टनिश्चयाभावस्यैव प्रवेशनीयतया तत्राप्रामाण्यग्रहस्य विशिष्यैव प्रवेशस्य कार्यतया व्याप्यतावच्छेदकतापर्याप्त्यधिकरणधर्मविशेषपर्याप्तावच्छेदकताकविषयतात्वेनैवाधिकरणविषयतानिरूपितविषयतायाः सामानाधिकरण्यधर्मिविषयतायाश्च प्रवेशस्य कार्यत्वादेकस्यानुगतधर्मस्यासंभवात् । अतएव विषयताविशिष्टप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नाभावत्वमेकमनुगतो धर्मः संभवति वैशिष्ट्यं च स्वावच्छेदकतापर्याप्त्यधिकरणधर्मनिष्ठावच्छेदकताकत्वस्वनिरूपिताधिकरणविषयताभाववविषयताघटितव्यापकत्वविषयतानिरूपितराजाभावविषयतानिरूपितसामानाधिकरण्यविषयतानिरूपितविषयत्वावच्छिन्नत्वोभयसंबन्धेन बोध्यमित्यपि प्रत्युक्तम् । यत्तु प्रमेयत्वव्यापको राजाभावः प्रमेयत्ववानपुरुष इति निश्चयस्यापि प्रतिबन्धकत्वेन तदभावोऽपि निवेशनीयस्तस्यचोक्तरूपेण नसंभवति निवेशइति तन्न उक्तराजाभावविषयताकनिश्चयविशिष्टनिश्चयीयत्वस्यैव संसर्गतयोपादेयत्वात् । इदमत्रावधेयम् । अनुगतरूपेणाप्रामाण्यज्ञानस्य निवेशसंभवेन तत्तद्व्यक्तित्वेनाप्रामाण्यज्ञानानामभावकूटस्य प्रतिबन्धकतावच्छेदककोटौ प्रवेशेवा अनुगतैकधर्मस्य भवति संभव इति नोक्तरीत्या संसर्गतामतखण्डनं साधीयः जगदीशप्रभृतिभिश्च संसर्गतामतमेवानुमोदितमपि परन्तूक्तकूटत्वस्यासर्वज्ञाज्ञेयत्वमनुचिन्त्य भट्टाचार्येण प्रकारतामतमेव समीचीनतयोरीकृतमिति । अथात्र प्रकारतावादिनामपि राजस्वत्वाभावव्याप्यराजाभाववान्पुरुषइतिनिर्णयस्य स्वातन्त्र्येण प्रतिबन्धकतया तदभावस्य निवेशनीयतया तदंशे साम्यमेव नच तस्य संसर्गतावादिमते निवेशनीयेन स्वत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावव्याप्यनिरूपितत्वसंबन्धावच्छिन्नराजाभाववत्स्ववत्पुरुषनिर्णयाभावेन समतया राजाभावव्याप्यराजस्वत्वाभाववत्पुरुषनिर्णयाभावनिवेशनं संसर्गतावादिनां पुनरधिकमेवेति वाच्यम् निरूपितत्वसंबन्धावच्छिन्नराजाभावव्याप्यराजाभाववत्पुरुषवत्स्वत्वनिर्णयाभावस्य प्रकारतावादिनामपि निवेशनीयतया आधिक्याभावात् । किमत्र वक्तव्यं प्रकारतावादिनां प्रतिबन्धकताधिक्यं प्रति तथाहि तन्मते द्विविधबाधनिर्णयाभावयोः साध्याभाववदवृत्तित्वरूपव्याप्तिघटितद्विविधतद्व्याप्यवत्तानिर्णयाभावयोः सामग्र्यां निवेशः संसर्गतामतेच राजाभाववत्पुरुषनिर्णयाभावस्य राजाभावव्याप्यवत्तानिर्णयाभावस्यच सामग्र्यां निवेश इति सुव्यक्तमेव प्रकारतामत आधिक्यं व्यापकसामानाधिकरण्यरूपव्याप्तिघटितव्याप्यवत्ताबुद्ध्यभावानां प्रवेशे सुतरां तत्र प्रमेयत्वादिधर्मचतुष्टयमवलम्ब्य विचारे क्रियमाणे राजस्वत्वाभावव्याप्यप्रमेयत्वादिधर्मचतुष्टयवत्तानिर्णयाभावचतुष्टयस्य निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकराजाभावव्याप्यप्रमेयत्वादिधर्मचतुष्टयवत्तानिर्णयाभावचतुष्टयस्य राजाभाववत्पुरुषरूपविशेषणभिन्नमूर्तिकविशिष्टप्रमेयत्वादिधर्मचतुष्टयस्य द्विविधबाधव्याप्यतया निर्णयानामभावाष्टकस्य राजस्वत्वाभावव्याप्यराजाभाववत्पुरुषनिर्णयाभावस्य राजाभावव्याप्यराजाभाववत्पुरुषवत्स्वत्वनिर्णयाभावस्यच प्रवेशइति द्वाविंशत्यभावानां प्रवेशः, संसर्गतामतेच राजाभाववत्पुरुषनिर्णयाभावस्य साध्याभाववद्वृत्तित्वरूपव्याप्तिघटितराजाभावव्याप्यवत्तानिर्णयाभावस्य व्यापकस्य सामानाधिकरण्यरूपव्याप्तिघटितराजाभावव्याप्यप्रमेयत्वादिधर्मचतुष्टयवत्तानिर्णयाभावचतुष्टयस्य राजस्वत्वाभाववत्पुरुषराजाभाववत्स्वस्वत्वरूपविशेषणविभिन्नमूर्तिकविशिष्टप्रमेयत्वादिधर्माष्टकस्य राजाभावव्याप्यतया निर्णयानामभावाष्टकस्य राजाभावव्याप्यराजस्वत्वाभाववत्तानिर्णयाभावस्य राजाभावव्याप्यराजाभाववत्पुरुषवत्स्वत्वनिर्णयाभावस्यच प्रवेशइतिषोडशाभावानां प्रवेशइति चेत् ।

अत्र केचित् घटादभिन्नविषयकप्रत्यक्षंप्रति प्रतिबन्धकत्वमुभयमतेऽपि समानं तत्र प्रकारतामते सामग्र्यामधिकवस्तुप्रवेशगौरवेऽपि नाधिकप्रतिबन्धकतागौरवम् । संसर्गतामतेच राजस्वत्वाभाववान् पुरुषः सुन्दरः प्रमेयोवाच्य इत्यादि भिन्नविषयप्रत्यक्षसहस्रंप्रति प्रतिबन्धकतासहस्रस्य कल्पनीयत्वाद्गौरवं स्पष्टमेवेत्याहुः तन्न संसर्गतामते राजस्वत्वाभाववान्पुरुषः सुन्दरइत्यादिप्रत्यक्षे शाब्दसामग्र्याः प्रतिबन्धकताकल्पनेन गौरवेसमुद्भावितेन च स्वत्वादेः प्रकारतामते घटप्रत्यक्षादिकंप्रतीत्यादिग्रन्थेन प्रकारतामते समुद्भावितस्य गौरवस्य सन्दर्भविरुद्धत्वापत्तेः भवन्मतेपीत्यादिग्रन्थेन व्याप्यवत्तानिर्णयाभावप्रवेशनाधिक्येन गौरवस्य समुद्भावितस्य प्रकारतामतेऽपि व्याप्यवत्तानिर्णयाभावस्य तुल्यस्याधिकस्य वा प्रवेशनीयतया न संभवइत्येतन्मात्रस्यैव पूर्वपक्षितत्वेनोक्तरीत्या समाधानस्यासंभवाच्च अतएव संसर्गतामतेऽपि लक्षणादिस्थले स्वत्वप्र-

**जन्यशाब्दधीविरोधितया तादृशनिश्चयाभावस्य तथाविधसामग्रीप्रतिबन्धकतायां निवेशनस्याधिक्येन लाघवानवकाशात् । मन्मते राजस्वत्वाभाववान् पुरुष इत्यादिबाधकाभावनिवेशेनैव**

---

कारकबोधस्य स्वीकरणीयतया तादृशबोधसामग्र्याः प्रतिबन्धकताया उभयमतसिद्धत्वात् स्वत्वादिसंसर्गकबोधसामग्र्याः प्रतिबन्धकताकल्पनेन गौरवस्य संसर्गतामते जागरूकत्वेन तन्मतखण्डनं ग्रन्थकृतां संगच्छत एवेत्यपि निरस्तम् । गौरवाभावेन संसर्गतामतस्य समीचीनत्वमित्यस्य पूर्वपक्षाविषयत्वादुक्तरीत्या संसर्गतामते गौरवस्य प्रागेवनिराकृतत्वाच्च अत एवान्यथातादृशसमभिव्याहारज्ञानघटितशाब्दसामग्रीकालइत्यादिग्रन्थेन भिन्नविषयकप्रत्यक्षविशेषे संसर्गतामते सामग्र्याः प्रतिबन्धकत्वकल्पनेन गौरवप्रदर्शनमसमञ्जसम् भिन्नविषयकप्रत्यक्षमात्रएव संसर्गतामते बोधद्वयसामग्र्याः प्रतिबन्धकताद्वयस्य प्रकारतामते प्रतिबन्धकतैक्यस्य च संभवाद्गौरवस्य स्फुटत्वात्तावद्दूरानुधावनस्य निर्बीजत्वादिति निरस्तम् । किंचात्रकेचिदित्यादिना यदुक्तं संसर्गतामते गौरवं निपुणतयाऽऽलोचने विपरीतमेव तदवभासते । तथाहि घटादिभिन्नभिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वे प्रकारतामते बाधनिर्णयाभावद्वयस्वत्वोपस्थितिराजोपस्थितिपुरुषोपस्थितियोग्यताकाङ्क्षातात्पर्यज्ञानत्रयेत्यष्टकारणानां सामग्र्यां प्रवेशः संसर्गतामते चैकविधबाधनिश्चयाभावराजोपस्थितिपुरुषोपस्थितियोग्यताकाङ्क्षाज्ञानत्रयेति षट्कारणानां प्रवेशः । तत्र सामग्रीत्वस्य कारणकूटत्वरूपत्वात् कूटत्वस्य चैकविशिष्टापरत्वरूपत्वात्कारणाष्टकस्य विशेष्यविशेषणभावे विनिगमनाविरहे प्रकारतामते एकत्रैव प्रायः सविंशतिशतत्रयाधिकचतुरयुतप्रतिबन्धकत्वमापद्यते । संसर्गतामते च तत्र विंशत्यधिकसप्तशतप्रतिबन्धकत्वं द्विविधबाधघटितभिन्नविषयद्वयप्रत्यक्षद्वये संसर्गतामते च चत्वारिंशदधिकचतुर्दशशतप्रतिबन्धकत्वमेकविधबाधघटितभिन्नविषयकैकप्रत्यक्षं प्रति प्रकारतामते सविंशतिशतत्रयाधिकचतुरयुतप्रतिबन्धकत्वमिति कियदाधिक्यं प्रतिबन्धकत्वस्य प्रकारतामत इति सुधीभिरालोचनीयम् । यदि चापेक्षाबुद्धिविषयत्वमेव समुदायत्वं तदा नोक्तरीत्या गौरवस्य संभवइति विभाव्यते तदाप्यपेक्षाबुद्धेस्तद्व्यक्तित्वेन प्रतिबन्धकतावच्छेदकत्वे विनिगमकाभावादनन्तानां तद्व्यक्तीनामवच्छेदकत्वापत्त्याऽसर्वज्ञदुर्ज्ञेयानन्तप्रतिबध्यप्रतिबन्धकभावापत्तिरिति तत्तत्कारणविषयताविशेषविशेषितज्ञानत्वेनैवावच्छेदकत्वमपेक्षाबुद्धेर्वाच्यं तत्र च व्यासज्यवृत्त्यवच्छेदकत्वानङ्गीकारे एकविशिष्टापरविषयत्वस्यैवावच्छेदकत्वमङ्गीकरणीयमिति विशेष्यविशेषणभावे विनिगमकाभावात्तत्तन्मते तावतामेव प्रतिबन्धकत्वानां प्रसङ्गो दुर्वारः कथमन्यथा सामग्र्यां न्यूनाधिकवस्तुप्रवेशविचारपरतत्तद्ग्रन्थस्य स्यात्संदर्भशुद्धता ।

अत्रब्रूमः प्रकारतामते राजस्वत्वाभावराजस्वत्वव्यापकाभावस्वत्वाभावस्वत्वव्यापकाभाववत्पुरुषराजस्वत्ववदवृत्तिमत्पुरुषस्वत्ववदवृत्तिमत्पुरुषराजाभाववत्स्वत्वराजव्यापकाभाववत्स्वत्वराजवदवृत्तिमत्स्वत्वात्मका नवबाधाः । संसर्गतामते च राजाभाववत्पुरुषराजव्यापकाभाववत्पुरुषराजवदवृत्तिमत्पुरुषात्मकास्त्रयोबाधाः । सतिचैवं प्रकारतामते बाधनिश्चयाभावानां नवानां बाधनवकव्याप्यसंसर्गतामतसिद्धबाधत्रयवत्तानिश्चयानां सप्तविंशतीनां द्वयोर्द्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहाद्बाधविशिष्टबाधात्मकविषयचतुष्टयस्य त्रयाणां विशेष्यविशेषणभावे विनिगमनाविरहाद्बाधविशिष्टबाधात्मकविषयषट्कस्य च बाधनवकव्याप्यतया निर्णयानां नवतीनामभावानां तावत्संख्यकानां सामग्र्यां प्रवेश इति सङ्कलने सर्वेषां षड्विंशत्यधिकशतसंख्याकाभावानां प्रवेशः । संसर्गतामते च त्रयाणां बाधनिश्चयाभावानां बाधत्रयव्याप्यबाधनवकवत्तानिश्चयाभावानां सप्तविंशतीनां प्रवेशः । नवसु बाधेषु द्वयोस्त्रयाणां चतुर्णां पञ्चानां षण्णां सप्ताना मष्टानां नवानां च विशेष्यविशेषणभावे विनिगमनाविरहेण बाधविशिष्टबाधात्मकाविषया बहवः संपद्यन्ते । तथाहि द्वयोर्विशेष्यविशेषणभावे विनिगमनाविरहे द्वावेव त्र्यादीनां च स्वगुणितस्वपूर्वफलात्मकस्वफललब्ध्या षट्चतुर्विंशतिविंशत्यधिकशतविंशत्यधिकसप्तशतचत्वारिंशदधिकपञ्चसहस्रसविंशतिशतत्रयाधिकचतुरयुतसाशीत्यष्टशताधिकद्विषष्टिसहस्राधिकलक्षत्रया जायन्ते तेषां संकलने सप्तत्यधिकनवसहस्राधिकचतुर्लक्षसंख्यकाविषयाः भवन्त्येकैकस्यैव द्व्याद्यात्मकसङ्घातस्य विशेष्यविशेषणभावे विनिगमकाभावेन विशिष्टरूपसंपादने नवसु च द्व्यात्मकः संघातः । षट्त्रिंशत्त्र्यात्मकः चतुरशीतिसंख्यकः चतुष्ट्यात्मकः षड्विंशत्यधिकशतसंख्यकः एवं पञ्चाद्यात्मकोप्युत्तरोत्तरमधिकसंख्यकः । तेषां सर्वेषामुक्तक्रमेण विशिष्टसंपादने बहुकोटिसंख्यका विषयास्तेषां सर्वेषां राजाभावव्याप्यतया धर्मिणि निश्चयानां बहुकोटिसंख्यकाभावानां च प्रवेशः । तथासति विशेष्यविशेषणभावे विनिगमकाभावात्सामग्रीत्वस्य प्रतिबन्धकतावच्छेदकस्य संसर्गतामते परार्धादिरूपतापद्यत इति गौरवे किं वक्तव्यम् । नच राजस्वत्वाभाववत्पुरुषराजाभाववत्स्वत्वयोरेकविशिष्टघटकत्वे तज्ज्ञानस्याहार्यतया न प्रतिबन्धकत्वसंभव इति तादृशविशिष्टसंपादनं व्यर्थमिति वाच्यम् । स्वत्वे राज्ञोऽव्याप्यवृत्तित्वग्रहकालेऽनाहार्यस्य प्रतिबन्धकीभूतस्योक्तविशिष्टज्ञानस्य संभवात् । नच प्रकारतामते प्रमेयत्वादिधर्मचतुष्टयस्य राजस्वत्वाद्यभावनवकव्याप्यस्य निर्णयानां षट्त्रिंशत्संख्यकाभावानां प्रवेशः संसर्गतामते च द्वादशाभावानां प्रवेश इति गौरवमिति वाच्यं नवबाधात्मकविषयाणां हि विशेष्यविशेषणभावव्यत्यासेन विशिष्टविषयरूपतासंपादने यदोक्तरीत्या व्याप्यनिश्चयाभावानां संसर्गतामते प्रकारतामता[illegible] यतस्तु विशेष्यविशेषणभावव्यत्यासतो विशि-

ताद्दशनिश्चयकाले प्रत्यक्षाद्युपपत्तेस्तदभावानिवेशात् । यत्तु राज्ञः पुरुष इत्यादौ राजस्वत्ववान् पुरुष इत्याद्यन्वयबोधोपगमे राजकीयं स्वत्वं राजस्वत्ववान्पुरुषइत्याकारकद्विविधानुमितेरेव तदतिरिक्ताविषयकत्वेन ताद्दशानुमितिं प्रति प्रत्येकं ताद्दशवाक्यघटितसामग्र्याः प्रतिबन्धकत्वद्वयम् अस्मन्मते च ताद्दशानुमित्योरे..विधवाक्यजन्याद्राजकीयः पुरुष इत्येताद्दशबोधादतिरिक्तविषयकतया तत्र ताद्दशसामग्र्याः प्रतिबन्धकत्वकल्पनं नास्ति, तथाविधानुमितितथाविधशाब्दसामग्र्योश्च सत्योरनुमितेरेवोत्पत्तेः, अपि तु राजकीयः पुरुष इत्याकारकस्वत्वसंसर्गकैकविधानुमितिं प्रत्येव ताद्दशसामग्र्याः प्रतिबन्धकत्वमेकं कल्पनीयमिति लाघवमिति तदप्यकिंचित्करम् । भवद्भिर्यत्र, याद्दशानुमितिः स्वीक्रियते अस्माभिरपि तत्र ताद्दशानुमितेः स्वीकरणीयतयानुमितौ शाब्दसामग्र्याः प्रतिबन्धकत्वसाम्यात्, उपदर्शितस्थले भवद्भिरनुमितिः स्वीक्रियते अस्माभिरपि स्वीक्रियते-

---

घरूपतां संपाद्य तेषां बाधत्रयव्याप्यतया निर्णयानामभावानां प्रवेशे कारिते परमाधिक्ये तथाच प्रकारतावादिमते संसर्गतावादिनोक्तरीत्या गौरवे समुद्भाव्यमाने परार्थमुद्यच्छमानस्य शस्त्रस्य स्वशिरसीव स्वमतएवातिगौरवस्य प्रपातः स्यादिति घटादिप्रत्यक्षस्थले सामग्र्यां बहुपदार्थप्रवेशेऽपि विषयताविशेषसंबन्धेनापेक्षाबुद्ध्यात्मकसमुदायत्वस्य स्वविशेषणविषयताभेदेनानेकस्वरूपस्यापि समनियतत्वेन समनियतनानाधर्मावच्छिन्नप्रतिबन्धकत्वस्यैक्यमेवेति घटादिप्रत्यक्षस्थले न प्रतिबन्धकताबाहुल्यं व्यासज्यवृत्तित्वमवच्छेदकत्वादीनामङ्गीक्रियतएवेति ज्ञानविशेषणविषयत्वेष्ववच्छेदकत्वमप्येकमेव तत्संबन्धोऽपि स्वरूपात्मकएव अवच्छेदकव्यक्तीनां बहुत्वेऽपि क्लृप्तत्वमेवेति न गौरवमिति संसर्गतावादिभिरेव वाच्यमेवं च प्रकारतावाद्युद्भावितराजस्वत्वाभाववान् पुरुषः सुन्दर इत्यादिभिन्नविषयकप्रत्यक्षएव प्रतिबन्धकतागौरवं निराबाधमिति भवति सर्वथैव सन्दर्भशुद्धिरिति ।

यद्यपि प्रागुपदर्शितविभिन्नविषयकप्रत्यक्षस्थलीयबहुतरप्रतिबन्धकत्वकल्पनागौरवे महति विद्यमाने प्रतिबन्धकताद्वयकल्पनागौरवं संसर्गतावादिभिरुद्भावितं न प्रकारतामतदूषणायालमिति तत्खण्डनोपक्रमो व्यर्थएव तथापि वस्तुस्थितिमनुरुध्य प्रौढिप्रकटनाशयात्तत्खण्डनमुपक्रमते **यत्त्वित्यादिना । तदतिरिक्ताविषयकत्वेनेति** । तद्विषयताविशिष्टान्यविषयताशून्यत्वेनेत्यर्थः । वैशिष्ट्यं च स्वसामानाधिकरण्यस्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन बोध्यम् । पर्वतोवह्निमान् पर्वतवान्वह्निरिति ज्ञानयोः परस्परमनतिरिक्तविषयकत्ववारणाय स्वानवच्छेदकसंबन्धानवच्छिन्नत्वरूपस्य स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य प्रवेशः । नचैवमपि पर्वतोवह्निमान् महानसंधूमवदिति समूहालम्बनस्यानतिरिक्तविषयकत्वं पर्वतो धूमवान्वह्निमन्महानसमिति समूहालम्बने स्यादिति वाच्यम् तद्विशेष्यतावदन्यप्रकारताशून्यत्वस्य विवक्षितत्वात् विशेष्यतावत्ताच स्वावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व स्वनिरूपितप्रकारतावत्त्वोभयसंबन्धेन । प्रकारतावत्ताच स्वावच्छेदकावच्छिन्नत्व स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन बोध्यम् । वह्नित्वेन वह्न्यवगाहिवह्नित्वेन घटावगाहिज्ञानयोरनतिरिक्तविषयकत्वं यदि नानुभविकं स्वसामानाधिकरण्यमपि संबन्धघटकतयोपादेयं नान्यथा महानसीयवह्निप्रकारकज्ञानानतिरिक्तविषयकत्वं वह्निप्रकारकज्ञाने यदीष्टं तदा स्वावच्छेदकावच्छिन्नत्वमधिकवारकपर्याप्तिघटितमेवोपादेयमितरथान्यूनवारकपर्याप्तिघटितमपीति । **भवद्भिर्यत्र याद्दशानुमितिः स्वीक्रियतेऽस्माभिरपि तत्र ताद्दशानुमितेः स्वीकरणीयतयेति** । अथ बुभुत्सिते ह्येकस्मिन्नर्थे विजातीयानुभवसामग्र्याः सन्निपाते कस्मिंश्चिदप्यनुभवे जायमाने बुभुत्सितार्थावगतिसाकल्यसंपत्तेः पुनरवगतेरसंपाद्यत्वमिति तत्र यत्सामग्र्या लघुत्वं तस्यैव फलजनकत्वं बुभुत्सितयोरर्थयोर्विजातीयानुभवसामग्र्योः सन्निपाते कयाप्येकयैवार्थावगत्या भवितव्यं ज्ञातिसाङ्कर्यज्ञानयौगपद्ययोरनभ्युपगमादिति बुभुत्सितार्थावगतिसाकल्यासंपत्तेः पुनरवगतिः संपादनीया साच सामग्र्यधीना तत्र गुरुसामग्रीसंपादनापेक्षया लघुसामग्रीसंपादनं युक्तमिति यत्सामग्र्या गुरुत्वं तस्या एव प्रथमतः फलजनकत्वमित्यनुभवसिद्धं तथाचान्वयव्यतिरेकसहचारग्रहतर्कादिसम्पाद्यव्याप्तिग्रहाद्यपेक्षानुमितिसामग्रीतः शाब्दसामग्र्याः शाब्दसामग्रीतश्च प्रत्यक्षसामग्र्या लघुभूताया अनतिरिक्तविषयिकायामनुमितौ शाब्दमतौ च प्रतिबन्धकत्वं विभिन्नविषयके शाब्दबोधे चानुमितिसामग्र्याः ताद्दशे प्रत्यक्षे च शाब्दसामग्र्याः प्रतिबन्धकत्वं क्लृप्तं तदनुरुद्ध्यैवानतिरिक्तविषयकत्वमनुमितिद्वयस्य प्रतिबध्यत्वप्रयोजकं प्रदर्श्य संसर्गतावादिना प्रतिबन्धकत्वद्वयोपादानं कृतं नह्यकस्मादनुमितिद्वयस्य प्रतिबध्यत्वमवलम्ब्य तदुद्भावितम् स्वमतेच प्रतिबध्यताप्रयोजकस्यानतिरिक्तविषयकत्वस्यानुमितिद्वये विरहात्तयोस्तत्र स्वीकारेण प्रतिबन्धकताद्वयवारणं च कृतम् एवं सति संसर्गतावादिनामनुमितिद्वयस्वीकारः प्रतिबध्यताप्रयोजकानतिरिक्तविषयकत्वविरहनिबन्धनो नाकस्मिकः प्रकारतावादिनां तु प्रतिबध्यत्वप्रयोजकस्यानुमितिद्वये सत्वात्तत्स्वीकारो निर्युक्तिक इति भवद्भिर्येत्रेत्याद्युक्तिरसङ्गतेतिचेत् उच्यते—नह्यनतिरिक्तविषयकत्वं प्रतिबध्यताया अवच्छेदकत्वात्प्रयोजकमिच्छोत्तेजकत्वानुरोधेन त्वयापि तस्यानङ्गीकारादन्यथा प्रतिबन्धकताद्वयापादनमेवासङ्गतं स्यात्किंत्वनुत्पद्यमानत्वनियततया गृहीतं सदेव प्रयोजक-

कुतः प्रतिबन्धकताद्वयकल्पनमिति भवतापि तादृशशाब्दं प्रति तादृशानुमितिद्वयसामग्रीद्वयस्य प्रतिबन्धकताया वाच्यतया साम्याच्च । एवं राजपुरुष इत्यादिसमासवाक्यात्स्वत्वसंसर्गकशाब्दबोधस्वीकारे तादृशशाब्दबोधसामग्र्याः स्वत्वसंसर्गेण राजविशिष्टपुरुषतात्पर्यज्ञानादिघटिताया भिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकत्वाधिक्येन गौरवात् । तत् राजसंबन्धिप्रकारकाभेदान्वयबोधस्वीकार एवोचितः । न च भवन्मतेऽपि तादृशाभेदान्वयबोधसामग्र्याः प्रतिबन्धकताधिक्येन गौरवमिति वाच्यम् । राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहदशायामभेदसंबन्धेन राजसंबन्धिविशिष्टपुरुषे तात्पर्यग्रहसत्त्वे भवन्मतेऽपि कर्मधारयत्वेनाभिमतात्तथाविधसमासवाक्यात्तादृशशाब्दबोधस्वीकारस्यावश्यकतया तादृशसामग्रीप्रतिबन्धकताया उभयमतसिद्धत्वात् । यत्तु दधि पश्य इत्यादौ लुप्तद्वितीयाविभक्तिस्मरणेन दधिकर्मकदर्शनबोधवद्राजपुरुष इत्यादावपि लुप्तषष्ठीविभक्तिस्मरणेन राजसंबन्धप्रकारकभेदान्वयबोधनिर्वाहे राजसंबन्धिनि निरूढलक्षणां स्वीकृत्याभेदान्वयबोधोपगमो निरर्थकः । नच षष्ठीतत्पुरुषादिस्थलेऽपि लुप्तविभक्तिस्मरणएव चेदन्वयबोधस्तदा ऋद्धस्य राजमातङ्गा इत्यादिप्रयोगापत्तिस्तत्र मातङ्गादौ राजादीनामन्वयबोधोपपत्तये राजादिपदोत्तरषष्ठ्यादिविभक्त्यनुसंधानस्यावश्यकत्वेन समानविभक्तिकतया राजादौ ऋद्धादिपदार्थस्याभेदान्वयबोधसंभवादिति वाच्यम् । यतस्तत्र ऋद्धराजादीनामभेदान्वयबोधानुपपत्त्या नाभियुक्तानामप्रयोगः, अपि तु समासाघटकपदसापेक्षतया राजशब्दस्यासामर्थ्यातिदेशात्समासासाधुत्वेन । तत्सापेक्षत्वं च तदर्थान्वितस्वार्थपरत्वं, स्वार्थश्च स्वीयवृत्तिग्रहविशेष्यः । अत एव, शरैः शातितपत्रश्चैत्रस्य दासभार्येत्यादौ न समस्यमानशातितदासपदादेः सापेक्षता । तदर्थैकदेशशातनदासत्वादावेव शरकरणकत्वचैत्रनिरूपितत्वादीनामन्वयात् । तदर्थान्वितत्वञ्चात्राभेदान्वयो वा निवेशनीय इति । तदसत् । स्वारसिकलक्षणाग्रहस्थलानुरोधेन तादृशसमभिव्याहारज्ञानादेस्तथाविधबोधजनकतायाः क्लृप्तत्वात्तत्र निरूढलक्षणास्वीकारे गौरवाभावात् । यत्र राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहस्तत्र तादृशबोधस्योभयमतसिद्धतया तादृशसमभिव्याहारज्ञानस्य राजसंबन्ध्यभिन्नपुरुषबोधे

---

मेषितव्यं तत्किमनुत्पत्त्यापराद्धं यस्याः प्रयोजकत्वं न स्वीकरणीयं सा चानुत्पत्तिश्चेद्भवद्भिः राज्ञः पुरुष इत्यादिशाब्दसामग्रीकालेऽनुमितिसामग्रीसत्त्वे राजकीयः पुरुष इत्यनुमितावेव प्रमाणतः परिच्छिन्ना न राजकीयं स्वत्वं राजस्वत्वान्पुरुषइत्यनुमित्योस्तां तथैवाङ्गीकुर्मो वयं तत्परीक्षायाः निष्प्रयोजनत्वात् परीक्षासहस्रेणापि प्रामाणिकस्यार्थस्यान्यथाकर्तुमशक्यत्वाच्च । तथाचास्माकमपि राजत्वावच्छिन्नप्रकारतानिरूपितपुरुषत्वावच्छिन्नविशेष्यताशाल्यनुमितित्वावच्छिन्ना एकैव प्रतिबध्यता तन्निरूपितप्रतिबन्धकताचेति नाधिक्यं प्रतिबन्धकत्वस्य । अथ यद्युच्यते भवद्भिर्नास्माभिः प्रबलेन केनापि प्रमाणेनानुत्पत्तिः परिच्छिन्ना किंत्वनतिरिक्तविषयकत्वरूपानुत्पन्नसाजात्येनैवाधिगतेति तदा शाब्दसामग्र्यनुमितिसामग्र्योः सत्त्वोर्योग्ययोरनुमित्योरदर्शनेन प्रमाणेन परिच्छिन्नास्माभिर्द्वयोरनुत्पत्तिर्नास्तिच तत्र साजात्यस्यापि बाधइति सानुत्पत्तिः प्रामाणिकी भवद्भिरपि नान्यथाकर्तुं शक्येति भवद्भिरप्यगत्या प्रतिबन्धकत्वद्वयं शाब्दसामग्र्याः स्वीकरणीयमित्येवमपि न प्रतिबन्धकताधिक्यमिति प्रकारतावादिनामाशय इति नोक्तग्रन्थासङ्गतिः । ये तु ऋजवस्तान्प्रत्याह । भवताऽपि तादृशशाब्दंप्रतीत्यादि । राजपदस्य राजसंबन्धिनि स्वारसिकलक्षणाग्रहदशायामित्यादि । यद्यपि राज्ञः पुरुष इत्यादिवाक्यस्थले दर्शितरीत्या राजसंबन्धिभिन्नः पुरुषः सुन्दरः राजाभाववान् संबन्धः प्रमेय इत्यादिद्विविधप्रत्यक्षं प्रति संसर्गतावादिनां प्रतिबन्धकताद्वयादिकं प्रकारतावादिनां तु राजाभाववान् पुरुषः सुन्दर इत्याद्येकविधप्रत्यक्षं प्रति शाब्दसामग्र्या एकविधमेव प्रतिबन्धकत्वमित्यस्त्येव संसर्गतामते गौरवं तथापि ततोप्यधिकगौरवमेवं समासस्थले संसर्गतामते संभवतीति तदुपेक्षितं वाक्यस्थले च यथोक्तरीतेर्न संभवस्तथोक्तं प्रागेव । तत्सापेक्षत्वं च तदर्थान्वितस्वार्थपरत्वमित्यादि । विवृतं चैतत्प्रसङ्गात्प्रागेव ।

**उभयमतसिद्धतयेति** । विभक्त्यनुसन्धानेन भेदान्वयाभ्युपगन्तुरभेदान्वयाभ्युपगन्तुश्च यन्मतं तत्सिद्धतयेत्यर्थः नतु संसर्गतावादिप्रकारतावाद्युभयमतसिद्धतयेत्यर्थः । संसर्गतावादिना विभक्तिश्रवणस्थलेऽपि विभक्त्यर्थप्रकारकबोधानभ्युपगमेन यत्त्वित्यादिग्रन्थस्य तन्मतानवलम्बित्वात्तन्मतसिद्धत्वोद्भावनस्य प्रकृतानानुकूलत्वात् । अथ स्वारसिकलक्षणाग्रहस्थले उक्तवाक्ये तत्पुरुषत्वग्रहे राजसंबन्धिपुरुष इति समासस्थलवद्राजपदस्य राजसंबन्धिनि शक्तत्वभ्रमस्थलवद्वा राजसंब-

कारणताया: क्लृप्तत्वात्, तयैव निर्वाहेण सर्वत्र लुप्तविभक्तिस्मरणकल्पने मानाभावात् । न च स्वारसिकलक्षणाग्रहस्थले तत्र तादृशान्वयबोधस्योभयवादिसिद्धत्वेऽपि निरूढलक्षणामते संबन्धितात्पर्यज्ञानादित्वकल्पनागौरवम् अनादितात्पर्यविषयीभूतार्थनिष्ठलक्षणाया एव निरूढलक्षणात्वादिति वाच्यम् । राजपुरुष इत्यादिवाक्यजन्यशाब्दबोधात्पूर्वं नियमतो लुप्तविभक्तिस्मरणकल्पनापेक्षया तात्पर्यज्ञानादित्वकल्पनायां गौरवविरहादिति । न चैवं दधि पश्यतीत्यादावपि दध्यादिपदस्य दधिकर्मकादौ लक्षणां स्वीकृत्य धात्वर्थेन समं तस्याभेदान्वयबोधोपपादनसंभवात्तत्रापि लुप्तविभक्तिस्मरणकल्पनमनुचितमिति वाच्यम् । दध्यादिपदस्य दधिकर्मकादौ लक्षणाग्रहदशायामपि तस्य द्वितीयेतरविभक्त्यन्तत्वभ्रमदशायां दधिकर्मकः पश्यति दधिकर्मकेण पश्यतीत्यादाविव उक्तस्थलेऽपि दधिकर्मकदर्शनान्वयबोधानुदयात् भवन्मते दधिपश्यतीत्यादिस्थलीयदधिपदोत्तरपश्यतिपदत्वरूपाकाङ्क्षाज्ञानादिघटितसामग्रीसत्त्वाद्दधिकर्मकदर्शनान्वयस्यापत्तेर्द्वितीयान्तदध्यादिपदत्वावच्छिन्नधर्मिकतादृशधात्वादिसमभिव्याहारज्ञानस्य तादृशान्वयबोधे हेतुताया आवश्यकत्वात् दधि पश्यतीत्यादौ लुप्तद्वितीयानुसंधानस्यावश्यकत्वात् । राजसंबन्धिपुरुषाद्यन्वयबोधे च राजपदाव्यवहितोत्तरपुरुषादित्वप्रकारकज्ञानस्य हेतुतायाः स्वारसिकलक्षणाग्रहस्थलानुरोधेनावश्यकल्पनीयतया राजपुरुष इत्यादौ राजादिपदस्य तृतीयाद्यन्तत्वभ्रमदशायां राजसंबन्धिपुरुषाद्यन्वयबोधापत्त्यसंभवात् । तृतीयादिविभक्त्या व्यवधानात् । दधि पश्यतीत्यादौ दधिपदाव्यवहितोत्तरत्वप्रकारकधातुपदज्ञानस्य हेतुताया अक्लृप्तत्वात् । पश्यति दधि, पश्यति चैत्रो दधि, इत्यादावपि दधिकर्मकदर्शनान्वयबोधा[illegible] तादृशज्ञानहेतुताया अशक्यकल्पनीयत्वाच्चेति । तण्डुलं पचतीत्यादौ तण्डुलादिपदस्यैव तण्डुला[illegible]कर्मके लक्षणा विभक्तिस्तु साधुत्वार्था एवं राज्ञः पुरुष इत्यादावपि राजादिपदस्य संबन्ध्यादौ लक्षणा विभक्तिः साधुत्वार्था । तत्तद्विभक्त्यन्तसमभिव्याहारस्य तत्तल्लाक्षणिकार्थबोधनियामकत्व[illegible]तिप्रसङ्गः विभक्तेरेव प्रकृत्यर्थविशेषितस्वार्थे लक्षणेति तु न संभवति । विभक्तेः कुत्रापि शक्तेर[illegible]क्लृप्ततया तत्र शक्यसंबन्धरूपलक्षणाया असं-

---

न्धिसंबन्धप्रकारकस्य राजसंबन्धिसंबन्धिप्रकारकस्य च बोधस्योभयमते संभवो न राजसंबन्धिप्रकारकस्य कर्मधारयत्वग्रहे च विभक्त्यनुसन्धानवादिमते तादृशबोधसंभवेऽपि तत्रापि विभक्त्यनुसन्धानेन स्वन्तराजपदस्वन्तपुरुषपदसमभिव्याहारज्ञानस्य क्लृप्तस्यैव कारणत्वं वाच्यं नतु राजपदाव्यवहितोत्तरपुरुषपदज्ञानस्येति नास्ति तादृशसमभिव्याहारज्ञानस्योभयमतसिद्धं कारणत्वमिति चेन्न कर्मत्वादिविभक्त्यर्थस्य कर्मधारयस्थलेऽबुबोधयिषितत्वेन प्रातिपदिकार्थमात्रे प्रथमायाएव प्रसक्तेः कर्मधारयविग्रहस्य प्रथमान्तमात्रपदघटितत्वस्य सिद्धान्तसिद्धतया विशेषणपदोत्तरं प्रथमामात्रस्य स्मरणीयत्वाद्राजपुरुषस्येत्यादावाकाङ्क्षानुपपत्तेः विशेष्यपदोत्तरमपि प्रथमास्मरणे षष्ठ्याद्यर्थस्यान्वयानुपपत्तेः श्रुतपदार्थातिरिक्तार्थस्याप्रत्येतव्यत्वाच्च श्रुतसमभिव्याहारस्यैवाकाङ्क्षात्वकल्पनाया युक्तत्वात् तत्पुरुषस्थले च श्रुतपदार्थातिरिक्तस्य बुबोधयिषितस्य विभक्त्यर्थस्य विभक्तिस्मरणकल्पनया शक्त्या प्रतिपत्तिसंभवे लक्षणाया अयुक्तत्वेन विभक्त्यनुसन्धानस्य युक्तत्वाद्विभक्त्यनुसन्धानवादिनाऽपि कर्मधारयस्थले विभक्तेरनुसन्धानं विनैव राजपदाव्यवहितोत्तरपुरुषपदज्ञानाच्छाब्दस्वीकारेणोभयमतसिद्धत्वोक्तेरसङ्गतिविरहादिति भावः । **तण्डुलादिपदस्यैव तण्डुलादिकर्मके लक्षणेति** । नामार्थधात्वर्थयोर्भेदेनानन्वयनियममभ्युपेत्य कर्मत्वलक्षणां विहाय कर्मलक्षणानुधावनम् । **विभक्तेः कुत्रापि शक्तेरक्लृप्ततयेति** । नन्वावापोद्वापसहकृतोऽव्यवहारो व्याकरणादयश्च शक्तिग्राहकाः सन्त्येव प्रत्ययस्थलेऽपि तत्किमित्युच्यते शक्तेरक्लृप्ततयेति । तथाहि घटमानयेत्यत्र घटकर्मत्वस्य पटमानयेत्यत्र पटकर्मत्वस्य च प्रतीतिरुत्पद्यते तयोश्च घटपटविषयत्वतदभावौ नाविजातीयेन प्रत्ययेनाधातुंशक्यौ किन्तु घटपदतदभावाभ्यां पटपदतदभावाभ्यामेवेत्यावापोद्वापौ यथाप्रकृतिभूतघटपटादिशब्दानां शक्तिग्राहकौ यथाच कोषादिस्तथा घटमित्यत्र घटकर्मत्वस्य घटेनेत्यत्र घटकरणत्वस्य च प्रत्ययो जायते तयोश्च कर्मत्वकरणत्वविषयत्वतदभावौ नाविजातीयेन घटपदेनाधातुंशक्यौ किन्तु द्वितीयातदभावाभ्यां तृतीयातदभावाभ्यामित्यावापोद्वापौ द्वितीयादिप्रत्ययानां शक्तिग्राहकौ विद्येते एव तथा कर्मणि द्वितीयेत्यादिव्याकरणं च यदि तात्पर्यग्राहकद्वितीयादिसमभिव्याहारभिन्नमूर्तिकतया घटपदादिप्रकृतिपदेन स्वतोऽविजातीयेनापि कर्मत्वादिविषयत्वतदभावौ नियन्तुं शक्यावित्युक्तावापोद्वापावन्यथासिद्धौ न प्रत्ययशक्तिं परिच्छेत्तुमीशौ व्याकरणमपि तात्पर्यग्राहकमेवेत्युच्यते भवद्भिस्तदा तात्पर्यग्राहकप्रकृतिविशेषसमभिव्याहारभिन्नमूर्तिकतया स्वतोऽविशिष्टेनापि द्वितीयादि-

भवात् । तण्डुलः प्रमेय इत्यादौ विभक्त्यर्थामिश्रितस्यैव प्रकृत्यर्थस्य भानात् । प्रकृतिशक्तेः स्वार्थे क्लृप्ततया तत्र लक्षणासंभवादिति तु चिन्तनीयम् । राजादिपदस्य राजसंबन्ध्यादौ शक्तत्वभ्रमदशायामिव तदर्थलक्षणाग्रहदशायामपि राजसंबन्धिनः पुरुष इत्यादाविव राजसंबन्धिसंबन्धी-पुरुष इत्याद्यन्वयबोधस्य सर्वजनानुभवसिद्धत्वात् । पचति चैत्र इत्यादावपि कृतिसंबन्धेन पाकादेश्चैत्राद्यंशे विशेषणत्वोपगमे चैत्रो न पचतीत्यादावन्वयबोधानुपपत्तिर्द्रष्टव्या कृतिसंबन्ध-स्यापि वृत्त्यनियामकतया तत्संबन्धावच्छिन्नप्रतियोगिकाभावस्याप्रसिद्ध्या तद्बोधनासंभवात् । अथैवमपि चैत्रो जानातीत्यादौ चैत्राद्यंशे ज्ञानादेराश्रयतासंबन्धेनान्वयबोधोपगमे क्षतिविरहः । आश्रयतासंबन्धस्याभावप्रतियोगितावच्छेदकतया न जानाति चैत्र इत्यादावाश्रयतासंबन्धावच्छि-न्नप्रतियोगिताकज्ञानाद्यभावस्यैव भानसंभवात् । तथा च तत्राख्यातस्याश्रयत्वार्थकत्वं निर्युक्ति-कम् । न च धात्वर्थज्ञानादेराश्रयतासंबन्धेन चैत्रादिरूपप्रातिपदिकार्थे साक्षात्प्रकारकत्वोपगमे

---

प्रत्ययेन घटादिविषयत्वतदभावौ नियन्तुं शक्यावित्यन्यथासिद्धावावापोद्वापौ न प्रकृतिशक्तिं परिच्छेत्तुं समर्थौ कोषादिरपि तात्पर्यग्राहक एवेत्यस्माभिरप्युच्यते यथाच प्रकृतिरहितो न प्रत्ययो बोधकस्तथा प्रत्ययरहिता प्रकृतिरपि न बोधिकेत्यपि समान-मिति विनिगमकाभावान्नोभयत्रैव शक्तिः स्यात्स्याद्वा प्रतीत्यन्यथानुपपत्त्योभयत्रैव शक्तिः प्रत्ययानां प्रकृत्यपेक्षयाऽल्पत्वेन तेषां शक्तौ लाघवमिति प्रत्ययएव वा शक्तिः यश्च तण्डुलः प्रमेय इत्यादौ विभक्त्यर्थामिश्रितस्यैव प्रकृत्यर्थस्य भानात्प्रकृतिशक्तेः स्वार्थे क्लृप्ततयेत्याद्यग्रिमग्रन्थः सोप्यसङ्गत एव प्रागुक्तयुक्त्या स्वादेरेकत्वशक्तत्वे क्लृप्ते सत्येकत्वाद्यभानेऽपि स्वादिप्रत्ययतो लक्षणया प्रकृत्यर्थभाने क्षतिविरहाद् यद्यजहत्स्वार्थैव लक्षणा स्यान्न स्यादपि स्वार्थाघटितः प्रकृत्यर्थमात्रो लक्षणया प्रत्ययेन प्रतिपादयितुं शक्यः नह्येवं जहत्स्वार्थाया अपि लक्षणाया अङ्गीकारात् आवापोद्वापसहकृतव्यवहारव्याकरणादिशक्तिग्राहक-सद्भावेऽपि शक्तिस्तत्र न कल्प्यते यत्र बाधकं, यथोपसर्गाणां प्रतिष्ठते प्रहरति संहरतीत्यादौ प्राद्यर्थगत्यादावाख्यातार्थान्वया-संभवात् गत्याद्यर्थप्रतीतिर्धातुलक्षणयैवागत्या वाच्येति तत्र द्योतकत्वे ह्येकत्र निर्णीतन्यायेन सर्वत्र द्योतकताया एवाङ्गीकरणी-यत्वात् प्रत्ययस्य तु वाचकतायां नास्ति किमपि बाधकमितिचेत् उच्यते प्रकृत्यर्थतयोक्तग्राहकात्संप्रतिपद्यमानस्यार्थस्य सर्वत्रैव शाब्दबोधे भानं यथाप्रमितं नह्येवं प्रत्ययार्थतयोक्तग्राहकात्संप्रतिपद्यमानस्यार्थस्य तण्डुलः प्रमेय इत्यादौ संख्यादेरभानात् सतिचैवमुक्तशक्तिग्राहकप्रतिपत्तिमतां तद्विषयताप्रयोजकतया प्रकृतेः प्रतिपत्तिः प्रयोजकता चोपस्थितिद्वारैवेति प्रकृतिजन्यो-पस्थितेः शाब्दबोधसामग्रीनियतत्वे गृहीते प्रत्ययजन्योपस्थितेश्च तदभावे गृहीते शाब्दबोधविषयनियतोपस्थापकतया गृही-तायाः प्रकृतेरतथाभूतप्रत्ययार्थस्योपस्थापकत्वकल्पनं युक्तं पूर्वं प्रतिपत्तेरबाधात् प्रत्ययस्य प्रकृत्यर्थोपस्थापकत्वे च पूर्वप्रति-पत्तेर्बाधः स्यात्तत्रैव व्यभिचारेण नियमस्य बाधितत्वादिति प्रत्ययस्य च तत्वं न युक्तं । तथाच प्रकृत्योपस्थापकतया क्लृप्तया सर्वत्रैव प्रत्ययार्थत्वेन संप्रतिपन्नार्थस्य लभ्यत्वे प्रोक्तग्राहकः प्रत्ययांशेऽन्यथासिद्धो न प्रतिष्ठितां शक्तिप्रतिपत्तिमाधातुं समर्थः समर्थश्चानन्यथासिद्धः प्रकृत्यंशइति प्रामाणिकी प्रकृतिशक्तिर्न प्रत्ययशक्तिरिति सुष्ठूक्तं तण्डुलः प्रमेय इत्यादिकम् । अतएव प्रत्य-यानुपूर्वीणामल्पत्वात्प्रत्ययलाघवाच्छक्तिरित्यपि निरस्तम् । उक्तरीत्या प्रकृतिशक्तौ व्यवस्थितायां तत्र गौरवस्य फलमुखत्वेनादो-षत्वात् लाघवमात्रस्याग्राहकतया ग्राहकस्य च विघटितसामर्थ्यतया च प्रत्ययशक्तेरपरिच्छेदकत्वात् नच यथापूर्वप्रतीतिबाधः प्रकृतिशक्तेरनुग्राहकस्तथा ततोऽपि पूर्वाया आवापोद्वापादिसहकृतव्यवहारजनितप्रत्ययशक्तिप्रतिपत्तेः प्रत्ययस्याशक्तौ बाधः प्रत्ययशक्तेरस्त्वनुग्राहक इति वाच्यं तादृशव्यवहारतोहि तत्र तत्र तत्तदर्थप्रतिपादकत्वमात्रस्य ग्रहोऽनन्तरमन्यथानुपपत्त्यादितः शक्तेरुक्तप्रतिपादकत्वग्रहावसरएव चोक्तयुक्तेरवतारो न तदानीं शक्तिग्रहो येन तद्बाधः स्यादुक्तव्यवहारसहकृतोक्तयुक्त्यवतारा-नन्तरं जायमानश्च शक्तिग्रहः प्रकृतिविषयकएव जायते न प्रत्ययविषयक इति सिद्धं न प्रत्यये शक्तिरिति ।

**सर्वजनानुभवसिद्धत्वादिति ।** तण्डुलंपश्यतीत्यादौ तण्डुलपदस्य तण्डुलकर्मके शक्तिभ्रमदशायामिव लक्षणाग्रहदशाया-मपि तण्डुलकर्मककर्मकदर्शनबोधस्यानुभवसिद्धत्वादित्यस्योपलक्षकं तथाचागत्या विभक्तिशक्तिरङ्गीकरणीया तथासति राजमात्रस्य राजपदार्थत्वे राजसंबन्धी पुरुष इति बोधः राजसंबन्धिनो राजपदार्थत्वे राजसंबन्धिसंबन्धी पुरुषइतिबोध इति नानुभवापलाप इतिभावः । अत्रच विभक्तेरशक्तौ तण्डुलं पचतीत्यस्य तण्डुलपरस्य वाक्यस्य मुख्यप्रयोगत्वं माषादिपरस्य गौणप्रयोगत्वमिति सर्वानुभवसिद्धाया मुख्यामुख्यत्वव्यवस्थाया अनुपपत्तिरपि दोषो बोध्यः लक्षणाया उभयत्रैव सत्त्वात् मुख्यार्थघटितार्थे यत्र लक्षणा तत्र मुख्यत्वमित्यपि न वाच्यं तण्डुलपदस्य तण्डुलसंपृक्तमाषलक्षणास्थले मुख्यत्वापत्तेर्दुर्वारत्वात् विभक्त्यर्थमात्रघटि-तार्था यत्र लक्षणा तत्र मुख्यत्वमित्यपि न वचनीयम् भवन्मते विभक्त्यर्थस्यैवाभावात् विभक्त्यर्थतया पराभिमतत्वं यदि विभ-क्त्यर्थत्वं तदापि तण्डुलकर्मकादिलक्षणायां भवदभिमतायां मुख्यत्वं न स्यात् विभक्त्यर्थकर्मत्वातिरिक्तक्रियाघटितत्वादुक्ता-र्थस्य संप्रदानतण्डुलादिलक्षणायां क्रियाकर्मतण्डुलादिलक्षणायां न मुख्यत्वं स्यादिति । **अथैवमपीति ।** वृत्त्यनियामकस्याभाव-

ज्ञानं चैत्र इत्यादावपि तथान्वयबोधापत्तिरिति वाच्यम् तादृशान्वयबोधे आख्यातान्तधातुसमभिव्याहारज्ञानस्य हेतुत्वात् । भवतोप्याश्रयताप्रकारकबोधे तादृशसमभिव्याहारज्ञानस्य हेतुताया आवश्यकत्वात् । यत्तु पचति चैत्र इत्यादौ पाककृतिमांश्चैत्र इत्याकारकाख्यातार्थप्रकारकशाब्दबोधोत्पत्त्या तत्राख्यातजन्यकृत्युपस्थितेर्हेतुत्वकल्पनमावश्यकम् तथा च तत्तदर्थविशेषान्निवेश्यात्मनिष्ठप्रत्यासत्त्या पदार्थोपस्थितेर्हेतुत्वकल्पने शक्यलक्ष्यसहस्रार्थभेदेनाख्यातजन्योपस्थितेः कारणताबाहुल्यमित्यर्थविशेषाननिवेश्य धात्वर्थप्रकारकान्वयबोधं प्रति प्रत्ययजन्योपस्थितेः समानविशेष्यताप्रत्यासत्त्यैव हेतुत्वमुपेयते तथा च तादृशकारणबाधेन चैत्रादेर्धात्वर्थज्ञानविशेष्यताया भानं न संभवति । यदि च धातुत्वप्रत्ययत्वादीनामनुगतानां दुर्निर्वचतया नैतादृशानुगतकार्यकारणभावकल्पनं संभवतीति मन्यते तदापि यत्र ज्ञाधातोरेव पाकादौ लक्षणा तत्र जानातीत्यादिवाक्यात्पाककृत्यादिप्रकारकान्वयबोधोत्पत्त्या ज्ञाधात्वर्थप्रकारकान्वयबोधे तदव्यवहितोत्तरतिप्त्वादिप्रकारकज्ञानजन्योपस्थितेः समानविशेष्यत्वप्रत्यासत्त्या हेतुतायास्तत्र कल्पनीयतया तादृशकारणबाधाच्चैत्रो जानातीत्यादौ चैत्रादेर्ज्ञानविशेष्यतया भानानुपपत्तिर्दुर्वारैवेति तदप्यसत् । प्रत्ययान्तरार्थविशेष्यकशाब्दबोधे व्यभिचारवारणाय तादृशोपस्थितिवैशिष्ट्यस्य तादृशोपस्थितिजन्यतावच्छेदककोटौ अवश्यं निवेशनीयतया तदनुत्तरशाब्दबोधे चैत्रादेर्ज्ञानादिविशेष्यतया भाने तादृशकारणबाधस्याकिंचित्करत्वात् । तादृशानुपूर्वीघटकज्ञादिधातुजन्यज्ञानाद्युपस्थितिचैत्रादिरूपविशेष्योपस्थितियोग्यताज्ञानादिघटितसामग्र्या आश्रयतासंसर्गकशाब्दबोधजनने बाधकाभावात् । न चैतन्मते आश्रयतासंबन्धेन ज्ञानादिप्रकारकशाब्दबोधे तादृशयोग्यताज्ञानहेतुत्वान्तरकल्पनाधिक्यम् आश्रयतासंबन्धेन ज्ञानविशिष्टचैत्रादितात्पर्यकात् सर्वनाम्नः साङ्केतिकशब्दान्तराद्वा तादृशसंबन्धेन ज्ञानादिप्रकारकचैत्रादिविशेष्यकशाब्दबोधस्य सर्वमतएव प्रसिद्धावपि तादृशशाब्दबोधे पदार्थान्तरभाननैयत्येन तन्मिश्रितयोग्यताज्ञानस्य तत्र हेतुताया आवश्यकत्वात् । ज्ञानादिविशिष्टचैत्रादिमात्रविषयकयोग्यताज्ञानस्य ज्ञानादिविशिष्टचैत्रादिविषयकशाब्दबोधे हेतुतायाः कुत्राप्यक्लृप्तत्वादिति वाच्यम् । भवन्मतेऽपि ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकशाब्दबोधे तथाविधयोग्यताज्ञानहेतुताया आधिक्यात् । आश्रयतासंसर्गकज्ञानीयकारणतावच्छेदकस्य तदीयसंसर्गविषयताघटिततत्प्रकारकज्ञानकारणतावच्छेदकापेक्षया लघुशरीरतया आश्रयतायाः संसर्गतामतस्यैव लघुत्वात् । न च यत्राश्रयत्वे ज्ञाधातुसमभिव्याहृताख्यातस्य शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधस्योभयमतसिद्धतया तत्र तादृशयोग्यताज्ञानहेतुत्वमुभयतःसिद्धमेवेति वाच्यम् । आश्रयतायाः संसर्गतावादिना तत्राप्याश्रयताप्रकारकबोधस्यानभ्युपगन्तव्यत्वादिति चेत् । सत्यम् । एतदभिप्रायेणैव जानातीत्यादावाख्यातस्य निरर्थकतां मणिकार ऊरीचकार । तत्राश्रयत्वे निरूढलक्षणामभ्युपगच्छतां दीधितिकाराणां पुनरेष आशयः यत्र ज्ञाधातोर्ज्ञानाश्रयत्वे शक्तिभ्रमः स्वारसिकलक्षणाग्रहो वा तत्र चैत्राद्यंशे धात्वर्थैकदेशस्य ज्ञानादेरन्वयानुपपत्त्या स्वरूपसंबन्धेन ज्ञानाश्रयताप्रकारकचैत्रादिविशेष्यकान्वयबोध एव तत्र मणिकृता स्वीकरणीयः । तथा च तत्र ज्ञानाश्रयताप्रकारकशाब्दबोधे तत्प्रकारकयोग्यताज्ञानहेतुतायाः क्लृप्तत्वादाश्रयतासंसर्गकशाब्दबोधे तादृशयोग्यताज्ञानहेतुताकल्पनमधिकमेव मणिकृन्मते । नच दीधिति-

---

प्रतियोगितानवच्छेदकत्वेन पचतीत्यादावाख्यातस्य कृत्यर्थकत्वेपीत्यर्थः । **आवश्यकत्वादिति ।** अन्यथा ज्ञानमाश्रयत्वं चैत्र इत्यादावपि तादृशबोधप्रसङ्गादितिशेषः । नच प्रकारतामते धात्वर्थनामार्थयोर्नामार्थनामार्थयोश्च भेदेनान्वयस्यास्वीकारादेवोक्तस्थले न शाब्दबोधप्रसङ्ग इति वाच्यं तस्यापि तादृशसमभिव्याहारस्य निराकाङ्क्षत्वमूलकत्वान्नियममात्रस्याकिंचित्करत्वादितिभावः । **मणिकृता स्वीकरणीय इति ।** अथानवस्थितसंबन्धलक्षणायाः स्वीकर्तुमशक्यतया यत्रावस्थानं तादृशबोधस्यैव प्रकारतामतेऽधिकस्य स्वीकरणमिति नाधिक्यप्रसङ्गो मणिकारमत इति चेन्न लक्षणासंभावनयैव प्रकारतामताश्रयणस्य दीधितिकृता कृतत्वात्संभावनाया दोषत्वविघटकस्य प्रकृतेऽभावात्सामग्रीप्रतिबन्धकत्वगौरव एव निर्भरत्वाच्च ।

न्मते तादृशयोग्यताज्ञानहेतुत्वाकल्पनलाघवेऽपि जानातीत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुशक्तिज्ञानजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकतायां आख्यातजन्याश्रयत्वोपस्थितेर्निवेशनस्याधिक्याद्गौरवमिति वाच्यम् । भवन्मतेऽपि ज्ञानाश्रयत्वाभाववांश्चैत्रः सुन्दर इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षे, जानाति चैत्र, इत्याद्यानुपूर्वीज्ञानघटितज्ञाधातुजन्यज्ञानोपस्थितिघटितसामग्र्याः प्रतिबन्धकताधिक्येन गौरवात् । मन्मते च तादृशसामग्र्या विरोधिज्ञानाश्रयत्वाभाववत्तानिश्चयघटिततया तथाविधविशिष्टवैशिष्ट्यबोधसामग्र्यास्तादृशशाब्दसामग्र्या समं युगपदवस्थानासंभवेन तादृशप्रतिबन्धकत्वकल्पनाविरहादित्यधिकं दर्शितदिशाऽवसेयम् । अथैवं रीत्या भूतले न घट इत्यादौ घटादिपदस्य घटप्रतियोगिकादौ तदुत्तरसुब्विभक्तेरेव वा प्रतियोगितायां लक्षणामभ्युपेत्य तत्र घटप्रतियोगिकाभावो भूतलवृत्तिरित्याद्याकारकप्रतियोगिताप्रकारकशाब्दबोधोपगम एव समुचितः । तथा सति तथाविधसमभिव्याहारज्ञानघटितसामग्र्या घटप्रतियोगिकत्वाभाववानभावः प्रमेय इत्यादिविशिष्टवैशिष्ट्यबोधं प्रति प्रतिबन्धकत्वाकल्पनेन लाघवादित्युक्तनियमे निपातातिरिक्तत्वविशेषणवैयर्थ्यमिति चेन्न । भूतले न घट इत्यादौ घटाद्यभावे भूतलाद्यन्वितसप्तम्यर्थाधेयत्वस्येव तात्पर्यवशाद्घटादौ सप्तम्यन्तार्थभूतलादिवृत्तित्वाभावस्यान्वयबोधोऽप्यनुभवसिद्धः अन्यथा तादृशवाक्यजन्यस्याप्रामाण्यज्ञानानास्कन्दितबोधस्य भूतले घट इत्यादिवाक्यजन्यघटादिविशेष्यकभूतलाद्याधेयत्वप्रकारकबोधविरोधितायाः सर्वानुभवसिद्धाया अनुपपत्तेः । नञ्पदं विना यत्र धर्मिणि यस्य विशेषणतया भानं यादृशसमभिव्याहाराद्भवति तादृशसमभिव्याहारस्थले नञ्सत्त्वे तत्र धर्मिणि तदभावः प्रतीयते इत्यनुभवापलापप्रसङ्गाच्च । एवंच नञर्थाभावेऽनुयोगितया घटाद्यन्वयबोधोपपत्तये निपातातिरिक्तत्वविशेषणमावश्यकम् । एवं न पचति चैत्रः, चैत्रस्य न धनमित्यादौ पाककृतिचैत्रस्वत्वाद्यभावस्य नञर्थस्य चैत्रधनादावन्वयबोधोपपत्तये घटो न पट इत्यादौ नञर्थघटादिभेदस्यान्वयबोधोपपत्तये च तदावश्यकम् । न चोक्तस्थलेषु नञोऽभाववल्लाक्षणिकतयाऽभाववता सममनुयोगिनोऽभेदान्वयबोध

---

विरोधितायाः सर्वानुभवसिद्धाया अनुपपत्तेरिति । इदं च समानप्रकारकज्ञानस्यैव प्रतिबन्धकत्वमित्यभिप्रायेण, ह्रदोवह्निमानित्यादौ वन्ह्यभाववद्ध्रदस्येव ह्रदावृत्तिवह्नेर्वह्निव्यापकाभाववद्ध्रदस्य ह्रदनिष्ठाभावप्रतियोगिवह्नेश्च बाधकतायास्तत्रतत्रोक्ततयाऽसमानप्रकारकज्ञानस्यापि प्रतिबन्धकत्वेनाह—नञ्पदं विनेत्यादि । अथात्र सर्वं हि वाक्यं सावधारणमसतिबाधक इत्यभ्युपगमानुसारात्तत्र धर्मिणि तदभावएव प्रतीयत इति तदन्यधर्मिविशेष्यकप्रतीतिविषयत्वाभाववांस्तदन्याभावइत्यर्थो विवक्षितो व्युत्पत्तिवैचित्र्यादुत तदन्याभावे तदभावान्यस्मिन्वा तद्धर्मिविशेष्यकप्रतीतिविषयत्वाभावोऽथवा तद्धर्म्यनुयोगिकतदभावान्याभावे प्रतीतिविषयत्वाभावः उताहो नावधारणः सर्वत्रैव च तादृशसमभिव्याहार इति सप्तम्यर्थप्रयोज्यत्वस्य प्रतीतावन्वयस्तत्र नाद्यः सादृश्यप्रतियोगितया निर्देशादपिकाराच्च, प्रतीयमानेन घटाभावशाब्दबोधाभ्युपगमेन विरोधात् द्वितीयश्च घटाभावादेः प्रतीयमानत्वेऽपि तादृशप्रतीतिविषयत्वाभाववत्त्वेनावधारणफलाभावादेवाविवक्षणीयः तृतीयश्च तादृशाभावाप्रसिद्धिस्थलासंग्रहेणैव हेयः चतुर्थश्च यत्र क्वचन न पचतीत्यादौ कृतौ वर्तमानत्वाभावबोधाभ्युपगमादिनाप्यनुभवस्योपपत्तिसंभवेन घटवृत्तित्वाद्यभावबोधाभावेप्यपलापाभावान्न विवक्षितसाधकइति चेन्न यादृशयादृशसमभिव्याहार इत्यस्य तदभावोपीत्यस्य च विवक्षितत्वात् तथासति भूतले घटो नेत्यादौ सत्यपि तात्पर्ये कदाचिदपि घटवृत्तित्वाभावस्याप्रतीतावुक्तानुभवस्यापलापप्रसङ्गात् घटाभावबोधस्याप्यनुभवाविरोधित्वाच्च सर्वसामञ्जस्यम् । अपिना च सति तात्पर्येऽनुयोगिवाचकपदोत्तरसप्तमीविभक्तौ नञ्समभिहारस्थलीयविशेष्यात्यन्ताभावोऽव्यवस्थितः प्रतीयमानतया बोध्यत इत्यतो नाव्यवस्थाप्रसङ्गः अनया च वाचोभङ्ग्या विशेषणाभावप्रत्ययस्य बहुलीभूतस्य विनाकारणमपलापानौचित्यद्योतनमुखेन घटवृत्तित्वाभावप्रत्ययानुभवो दृढीकृतस्तेन घटवृत्तित्वाभावप्रत्ययस्यानुभूयमानत्वाच्चेत्येव कुतो नोक्तमिति निरस्तम् । ननु जातौजातिर्नास्तीत्यत्र जातिनिरूपितसमवायावच्छिन्नवृत्तित्वस्याप्रसिद्धेरिति उक्तनियमस्य संकोचो वाच्यः सचानुयोगिवाचकपदोत्तरसप्तम्यभाव इति सामान्यत एव वक्तुमुचितइति नानुभवस्य दार्ढ्यमिति चेन्न जातिनिरूपितवृत्तित्वस्य समवायावच्छिन्नवृत्तित्वीयस्वरूपेणाभावस्यैव तत्र बोधसंभवात्संकोचस्यानावश्यकत्वात् । विशेषरूपेण

एव तत्रोपेयते इति वाच्यम्। तथा सति सर्वत्राभाववत एव नञर्थतया मुख्यार्थपरनञो दुर्लभत्वापत्तेः। अभावस्य भेदान्वयबोधोपगमेऽपि कार्यकारणभावकल्पनाधिक्यविरहेणाभाववति लक्षणानौचित्यात् अभाववतोऽभेदान्वयबोधोपगमे भूतले घट इत्यादिवाक्यजन्यबोधे भूतले न घट इत्यादिवाक्यजन्यबोधस्याविरोधितापत्तेश्च, लाघवात् स्वरूपसंबन्धेन ग्राह्याभावनिश्चयस्यैव विशिष्टबुद्धिविरोधित्वान्न त्वभेदसंसर्गकग्राह्याभावाश्रयप्रकारकनिश्चयस्येति। नीलो घट इत्यादौ विशेषणविभक्तेरभेदार्थकत्वमतेऽपि यद्यप्युक्तरीत्या लाघवं संभवति तथापि तत्रापि न नो विद्वेष इति

---

संसर्गत्वानभ्युपगमे संकोचस्यावश्यकत्वादाह। **एवमिति। अभाववतोऽभेदान्वयबोधोपगम इत्यादि।** इदं चापातत उक्तम् अभाववतस्तादात्म्येन प्रकारत्वे धर्मिपारतन्त्र्येण स्वरूपेणाभावस्यापि प्रकारत्वाप्रतिबन्धकत्वसंभवात्। इदं रजतमित्यादि शाब्दे धर्मिपारतन्त्र्येण रजतत्वादेः प्रकारत्वं न्यायकौस्तुभे उक्तम् कथमन्यथा भूतलावृत्तिर्घट इत्यादि वाक्यजन्यबोधकाले भूतलवृत्तिर्घटइत्यादिवाक्यजन्यबोधानुत्पत्तिः सर्वानुभवसिद्धाप्युपपद्यते सामानाधिकरण्यानुरोधेन भूतलवृत्तिभेदवतएव तादात्म्येन प्रकारत्वस्य तत्र सर्वानुमतत्वात् एवं पर्वते वह्निर्नास्तीत्यादिबुद्धीनां वह्निमान्पर्वत इति वाक्यजन्यबोधोत्तरं वन्ह्यभाववान्पर्वत इत्यादि वाक्यजन्यबोधोत्तरं च पर्वतोवह्निमानित्यादिबुद्धीनामनुत्पत्तिः कथमुपपद्यते उक्तशाब्दबुद्ध्योर्मत्वर्थस्यैव तादात्म्येन प्रकारत्वस्य सर्वसंमतत्वात् तयोरतिरिक्तप्रतिबन्धकत्वे वा दर्शितनञ्समभिव्याहारस्थलीयबोधस्यातथात्वे कोविशेषः प्रदर्शनीयः स्यात् यद्यतिरिक्तप्रतिबन्धकत्वाकल्पनलाघवानुरोधेन दर्शितनञ्समभिव्याहारस्थलेऽभावस्यैव प्रकारत्वमुचितमित्युच्यते तदा मतुबादिसमभिव्याहारस्थलेऽपि तत एव लाघवात्प्रकृत्यर्थस्य भेदेनैव प्रकारत्वमुचितं निपातातिरिक्तत्ववत्किञ्चिद्विशेषणंप्रक्षिप्य व्युत्पत्तिनिर्वाहस्य समभिव्याहारविशेषकारणतयातिप्रसङ्गवारणस्य च संभवादित्येतदप्यकामेनाभ्युपेयंस्यादिति। **उक्तरीत्या लाघवं संभवतीति।** नीलतादात्म्याभाववान् घटःसुन्दर इत्यादिभिन्नविषयकप्रत्यक्षंप्रत्यधिकप्रतिबन्धकत्वाकल्पनेन लाघवं संभवतीत्यर्थः॥

**तत्रापि न नो विद्वेष इतिदिगिति।** अत्र नस्सम्मतिरित्यनभिधाय न नोविद्वेष इत्युक्त्येदमवगम्यते यन्नञोभेदार्थकत्वमभियुक्तैरुक्तं यच्च प्रत्यक्षादिना गृहीतस्य घटादौ पटादिभेदस्याभिलापत्वं घटःपटोनेत्यादीनां स्वरसतः सार्वज[illegible]म्। यच्च यत्र पृथिवी न तत्र गन्धइत्यादेः पृथिवीत्वत्वाद्यग्रहदशायामपि व्याप्तिपरिच्छेदकव्यतिरेकोदाहरणत्वमप्र[illegible]ध्यकस्थलेऽभियुक्तानुमतं यच्च धर्मात्यन्ताभावेन गतार्थयतो वादिनो विमतानां भेदानां स्वशब्दोल्लेखिप्रत्ययै[illegible]दवानित्याकारैरयं शशश्टङ्गवानित्यादीनामसाधकत्वेन संप्रतिपन्नानां सपक्षैः साधयितुमशक्यानां पृथक्त्व[illegible] नास्ति इदमिदं नेति प्रतीतिवैलक्षण्यैकशरणत्वं तैर्व्यवस्थाप्यमाना नञ्समभिव्याहारस्थले भगवती भेदानुभूतिः प्रा[illegible]दात्म्यशक्तिग्राहकशास्त्रयुक्त्याद्यभावेनासत्प्रतिपक्षतया प्रबलस्य प्रतियोग्यभावान्वयतुल्ययोगक्षेमतानियमस्य साहाय्यकमासादयन्ती लाघवसहस्रमपि बाधमाना विशेषणविभक्तेरभेदार्थकत्वमपाकर्तुमीष्टे कथमन्यथा नोपेयते वृत्तितादात्म्यवृत्तितादात्म्यवद्वृत्तित्वविशिष्टधर्मादेरेवोक्तरीत्या ततोप्यतिलाघवलोभेन विशेषणविभक्त्यर्थता। नचैवमुक्तलाघवमकिञ्चित्करमेव यत्र ह्यनुभूतिरेव नेतरैरेकत्र व्यवस्थापिता मानैः। तत्र तद्व्यवस्थापकतयोपयुज्यते। यथा षष्ठ्यादिसमभिव्याहारस्थले वृत्त्यनियामकस्याभावप्रतियोगितावच्छेदकत्वेऽपि विवादेन कवलीकृतेऽन्यैरव्यवस्थाप्यमानानुभूतिः प्रकारतया स्वत्वाद्यर्थे निरुक्तलाघवेन प्रतिष्ठाप्यते। नच स्वनिरूपिताधेयतावत्स्वामितानिरूपकाधिकरणत्वेऽधिकपदार्थघटिते स्वत्वाद्यर्थे ततोऽपि लाघवेन किमिति न तस्याव्यवस्थापनमिति वाच्यं यतो येभ्यएव स्वतोदृष्टेभ्यः परेण दर्शितेभ्यो वावलम्बितुमुपक्रान्तेभ्यो युक्तिविभीषिकां कामप्युद्भाव्य वादिभ्यां निवारिता व्याकुलीभवन्त्यनाकलिता परालम्बनतयोपजाततदन्यतमासक्तिरनुभूतिरुत्सार्य विभीषिकां यैर्न तेष्वेवैकं ग्राहिता तमेव बहुमन्यतेतरां नापरालम्बनप्रदर्शकम्। प्रतिष्ठिता च सती नापरमपरं बहुपदार्थतुन्दिल वारविलासिनीव मृगयते पर्यन्तविरसत्वात् संलग्नजगज्जालतया चालिङ्गितुमप्यशक्नुवाना विफलमनोरथैव हि स्यात्। नच पर्यन्तविरसपरिग्राहकसपक्षमनुचिन्त्योक्तलाघवमादावेव कुतोन। ततोजुगुप्सतेऽनुभूतिर्भवति च तादृशलाघवोपन्यासो जात्युत्तरं स्वपक्षव्याघातकत्वाद्वादिनोऽतएव संसर्गत्वलाघवमेवातथाभूतं स्वप्रतिष्ठापकतयाद्रियमाणां मन्यन्ते तां प्राञ्चोविचक्षणा इति वाच्यं यत् तण्डुलंपचति राज्ञः पुरुष इत्यादिवाक्यतो लब्धजनिरनुभूतिः किमालम्बनेतिजिज्ञासुभिर्भूसत्तायामेधवृद्धावित्यादि समानतया व्यवहारादिजन्मवाक्यघटकसकलपदसार्थकत्वप्राथमिकप्रतिपत्तियावत्संभवानुग्रहमूलनिरर्थकत्वकल्पनान्याय्यतया च लाघवसहकृतया ग्राहितभावप्रधानकर्मादिपदघटितत्वकर्मत्वाद्यर्थशक्तितत्परभावाः कर्मणिद्वितीयाशेषेषष्ठीत्यादिस्मृतय एवानुभूतिरहस्यवेदिन्यस्समाश्रियन्ते यावच्च तास्तत्त्वमावेदयेयुस्तावदेव कैश्चिल्लाघवेन कर्मादिशक्तिपरित्यागवदतिलाघवेन शक्तिसामान्यमेव परित्यजद्भिस्तासां द्वितीयादिनिष्ठाकाङ्क्षानिर्वाहकत्वज्ञापनपरत्वोद्भावनसमाश्वासनसहकारिणी तत्त्वाख्यानावचनकृतिकुशला संसर्गत्वाभ्युपगममात्रनिर्वाहितबुभुत्सितार्थप्रतिपत्तिवचनास्वलायुपस्थितिगर्भत्वकृतशाब्दसामग्रीप्रतिबन्धकत्व-

**दिक्। प्रत्ययाश्च विभक्तिकृत्तद्धितादिभेदेन नानाविधाः। विभक्तिश्च सुप्तिङ्भेदेन द्विविधा। सुब्विभक्तयः प्रथमाद्वितीयादयः सप्त, तत्र प्रथमार्थः प्रकृत्यर्थे विशेषणविधयान्वयिनी संख्यैव।**

---

गौरवोक्तिश्च महती कृत्यैव भवत्युत्थापिता। तत्प्रतिकृत्यैवोक्तलाघवोक्तिस्तत्त्वजिज्ञासूनामसौ सा चाधिकार्थस्याबुभुत्सितत्वेन निरुद्धाधिकार्थप्रसरापरकृत्योत्सादनमात्रार्था तज्जीवितभूतं संसर्गत्वलाघवमपकृत्य विलीयते ततश्च ताः स्मृतयः प्रभवन्ति तत्त्वाख्यानाय। गृहीततत्त्वालम्बना च ततोऽनुभूतिर्विद्योतमानोपासितासती परप्रतिनिवर्तितमपि प्रतिकृत्यासहस्रमपाकर्तुमीष्टेतराम्। इतीत्थमुपपादितपरिग्रहे उक्तलाघवे कुतश्चिदुपगतायाः प्रकारतया तादात्म्यानुभूतेस्तवसविधे प्रतिपक्षभूतस्य संसर्गतालाघवस्य व्याघातकर्त्व त्वयोपन्यस्यमानं न द्विष्मोवयं नापि चानुभूतिं तथाविधां श्रद्दधामइति। दिगित्युक्त्याचोक्तोविवेकएवात्रसूचितः॥

**तद्धितादीति**। आदिपदात्सनक्यच्क्यङ्यङादयोग्राह्याः। **नानाविधाइति। द्विविधेति**। प्रकारार्थकपदसमभिव्याहृतसंख्यापदार्थश्च उद्देश्यतावच्छेदकव्यापकोद्देश्यतावच्छेदकन्यूनवृत्तिमात्रवृत्तिवस्तुमदन्यसंख्यैव व्यापकताघटकश्च संबन्धः स्वाश्रयवत्त्वम् वस्तुमत्ताच स्ववृत्तित्वस्वभिन्नस्वसमानाधिकरणवृत्तित्वोभयसंबन्धेन। भवति चैवंविधासंख्योद्देश्यतावच्छेदकसमानाधिकरणपरस्परविरुद्धानेकप्रकारवृत्तिरेव तेन शब्दाश्रयत्वविभुत्वाभ्यामाकाशो द्विविधइति न प्रामाणिकः तद्भित्वस्य वस्तुमत्त्वात् पृथिवीत्वादिभिर्गुणत्वेन च द्रव्याणि दशविधानीत्यपि न गुणत्वादिसाधारणदशत्वसंख्याया उद्देश्यतावच्छेदकन्यूनवृत्तीतरगुणत्ववृत्तित्वात्। नचानेनैवशब्दाश्रयत्वविभुत्वगतद्वित्वस्यापि वारणान्नोपादेयं वस्तुमदन्यत्वमितिवाच्यम् तस्य घटत्वसहितपृथिवीत्वादिवृत्तिदशत्वसंख्यावारणार्थकत्वात् द्रव्यत्वादिगतैकत्वमादाय द्रव्यमेकविधमित्यस्यानिष्टत्वे न्यूनवृत्तित्वम् स्वसमानाधिकरणत्वेसति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमन्यथास्वसमानाधिकरण्यमात्रमनिष्टंच वस्तुत आकाशमेकविधमेवेति वद्द्रव्यमेकविधमेवेत्येव द्रव्यत्वसहितपृथिवीत्वादिगतदशत्वसंख्यावारणन्तु वस्तुमदन्यत्वविरहादेव। यत्तु घटत्वघटान्यपृथिवीत्वसहितजलत्वादिगतदशत्वसंख्यावारणाय वस्तुमत्त्वम् स्वन्यूनवृत्तिवृत्तित्वस्वानधिकरणवृत्तिवृत्तित्वोभयसंबन्धेन वाच्यं पृथिवीत्वरूपवस्तुमत्त्वाच्च तद्वारणम् घटत्वादिरूपवस्तुमत्त्वस्यं पृथिवीत्वादिगतनवत्वे वारणाय स्वसामानाधिकरण्यसहितस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वरूपन्यूनवृत्तित्वोपादानम् तत्रैव द्रव्यत्वादिरूपवस्तुमत्त्ववारणाय द्वितीयसंबन्धोपादानमेवंच द्रव्यत्वसहितपृथिवीत्वादिगतदशत्वसंख्यावारणायोद्देश्यतावच्छेदकन्यूनवृत्तित्वं भेदप्रतियोगितावच्छेदकत्वगर्भमेवोपादेयमिति तदनादेयम् पृथिवीजलान्यतरत्वमादाय पृथिवीत्वादिगतनवत्वस्यापि वस्तुमत्त्वापातात् पृथिवीजलान्यतरत्वरसवत्त्वरूपवत्त्वस्पर्शवत्त्वभूतत्वादिसहिततेजस्त्ववायुत्वाकाशत्वकालत्वादिगताष्टत्वसप्तत्वषट्त्वपञ्चत्वादिसंख्यानां पृथिवीजलतेजोऽन्यतमत्वरूपत्वाद्यात्मकवस्तुमत्त्वादिनैव वारणीयतया पृथिवीजलान्यतरत्वादिवारणप्रयासस्याकार्यत्वात् तस्मात्प्रागुक्तमेव वस्तुमत्त्वनियामकं संबन्धद्वयमुपादेयम् प्रागुक्तसंख्यामादाय दशविधत्वसप्तविधत्वादिकमिष्यत एव द्रव्यस्य अतएव पदार्थस्य भावाभावत्वाभ्यां द्विधाविभागः क्वचित्क्वचित्सप्तधा क्वचित्षोडशधा क्वचिच्चेतनाचेतनत्वाभ्यांद्विधेति षडेव भावा नवैव द्रव्याणीत्यादौ न संख्यान्तरव्यवच्छेदे किन्तु द्रव्यत्वादिरहितेभावत्वस्यपृथिवीत्वादिरहिते द्रव्यत्वस्य व्यवच्छेदे तात्पर्यम्। एतद्विचारश्च न्यायलीलावत्यां द्रष्टव्यः। एवञ्च सुप्तिङोर्भेदः परस्परवैलक्षण्यं सुप्तिङ्त्वात्मकं तदभिन्नोयोविभक्तित्वव्यापकविभक्तित्वन्यूनवृत्तिमात्रवृत्तिवस्तुमदन्यद्वित्ववत्प्रकारस्तद्वर्तीविभक्तिरिति विभक्तिश्च सुप्तिङ्भेदेनद्विधेत्यस्यार्थः। इत्यमेव सुब्विभक्तयः प्रथमादयस्सप्तेत्यस्याप्यर्थो विधेयः। तत्र तेषु मध्ये प्रथमाया अर्थः प्रकृत्यर्थएव विशेषणविधयैवान्वयिनी संख्यैवेत्यवधारणत्रये तात्पर्यम् तेन स्वाश्रयकर्तृकत्वसंबन्धेन संख्याया अपि सर्वतः प्रधानीभूतायां क्रियायामेवान्वय इति भ्रमोनिराकृतः एकपदोपात्तस्य झटित्युपस्थितेः संबन्धलाघवाच्च प्रकृत्यर्थएवान्वयौचित्यात् एतन्मूलकएव प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमः एवमितरसुबर्थवत्संख्यापि प्रकृत्यर्थविशेष्यतयैव भासते व्युत्पत्तिलाघवादिति विपर्यासोऽपि पराकृतः तण्डुलमित्यादौ संख्याकर्मत्वयोः प्रकृत्यर्थविशेष्यत्वे वाक्यभेदापत्तेः कर्मत्वस्य प्रकृत्यर्थे तस्य संख्यायामित्यभ्युपगम इतरसुबर्थवदिति दृष्टान्तासंगतेः क्रियायामन्वये संबन्धगौरवप्रसंगात् चैत्रः पचतीत्यत्र प्रथमान्तार्थस्य चैत्रीयैकत्वस्य क्रियायां क्रियाया वा तत्रान्वयेऽपि संबन्धगौरवप्रसङ्गाच्च संख्यायाः प्रकृत्यर्थविशेषणतयान्वये सिद्धे तदनुपातिनोव्युत्पत्तिगौरवस्य फलमुखत्वेनादोषात् एवं प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रदर्शनात् यथाश्रुतार्थग्राहिणां लिङ्गपरिमाणसंख्यानां प्रथमार्थत्वभ्रान्तिर्निरस्ता वेदितव्या। तटः तटीत्यादौ लिङ्गस्य बाधादेवाप्रत्ययात् प्रयोगसंस्कारार्थं पुंस्त्वादिना परिभाषितत्वमात्रस्यैव स्वीकारात् यस्य कस्यचित्पदार्थस्य लिङ्गस्य तत्र भानाभ्युपगमेऽपि तटान्तटीन्तटानि पश्येत्यत्राप्यनुभवानुरोधेन लिङ्गभानस्य स्वीकरणीयतया प्रथमाभावेनान्यथैव तदुपपादनस्य कर्तव्यतया प्रथमास्थलेऽपि तथैव निर्वाहे तत्र शक्तिकल्पनानौचित्यात् ब्राह्मणइत्यादौ पुंस्त्वस्य प्रातिपदिकार्थतायाः ब्राह्मणीत्यादौ स्त्रीत्वस्य स्त्रीप्रत्ययार्थताया एवाग्रे व्यवस्थापनीयत्वात् द्रोणोव्रीहिरित्यत्र द्रोणस्य परिमाणपरिच्छेदकस्याभेदेन बाधात् स्वपरिच्छेद्यपरिमाणवत्त्वसंबन्धेन नामार्थत्वात्चान्वयासंभवेन प्रथमार्थपरिमाणद्वारान्वय इत्यस्य वक्तुमशक्यत्वात् द्रोणोव्रीहिरित्यादिसामानाधिकरण्यानामिव द्रोणं व्रीहिमानयेत्यादिसामानाधिकरण्यानामपि प्रामाणिकत्वस्यानुभवानतिक्रमेणावश्यवक्तव्यत्वे प्रथमायास्तत्राभावेन द्रोणपरिच्छिन्नपरिमाणवति लक्षणया तत्रैव प्रथमास्थलेऽपि बोधनिर्वाहसंभवेन तत्र

**अतएव यत्र विशेष्यवाचकसमानविभक्तिकपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशे-**

---

ष्यत्वेनङ्गीकरणीयत्वात् संख्यायाश्च प्रथमार्थत्वमभ्युपेयते एवसिद्धान्तिभिरपि तस्याश्च यथा न प्रातिपदिकार्थत्वं तथाह्यनु-पदमेव वक्ष्यति । सूत्रार्थस्तु प्रातिपदिकार्थेतरेषु कर्मत्वादिष्वविवक्षितेषु प्रथमा भवतीति प्रातिपदिकार्थेतरस्य यस्य कस्या-प्यविवक्षितत्वं न प्रयोजकमिति सूचयितुं लिङ्गपरिमाणसंख्यानां विवक्षितत्वोपन्यासः वचनपदं तदर्थसंख्योपलक्षकम् अन-न्यलभ्यन्यायेन संख्यायाः प्रथमार्थत्वव्यवस्थितिरिति एवंच संख्याया अप्यविवक्षितत्वे नियतवचनस्थले क्वचिद्बाधितत्वेपि च प्रथमाभवत्येव तत्प्रयोजिकायाः कर्मत्वाद्यविवक्षायाः सत्त्वात् अर्थाभावेऽपि प्रथमामनुशासता सूत्रेण न केवलं प्रकृतिः प्रयोक्तव्येतिव्युत्पत्त्यंशः सूचितः अतो न सूत्रवैयर्थ्यं तदभावेनिर्विभक्तिकप्रयोगस्याप्यापत्तेः नापिच प्रत्ययइत्यंशश्च तत्प्रकृ-तिभ्यएव प्रत्ययानां विधानाल्लभ्यत इत्यलमनुप्रसक्तविचारबाहुल्येन ।

**अतएवेति** । प्रकृतत्वर्थे विशेषणविधयाऽन्वययोग्यायास्संख्याया एव प्रथमार्थत्वइत्यर्थः । एतेन चैत्रादीनामेकत्वमात्रबोध-नाय तत्तात्पर्येण चैत्र इतिवाक्यात्प्रथमान्तार्थचैत्रमुख्यविशेष्यकबोधस्य क्लृप्तत्वेन चैत्रः पचतीत्यादावपि सति संभवे प्रथ-मान्तार्थस्यैव मुख्यविशेष्यत्वमिति सूचितम् । अन्यथा संख्यायां प्रथमार्थत्वाभावे तत्त्वेऽपि वा विशेष्यत्वे अन्यस्य वा तत्त्वे प्रथमान्तार्थस्य मुख्यविशेष्यताया अक्लृप्तत्वेनोक्तार्थलाभो न स्यात् एवंच चैत्रःपचतीत्यादौ निपातपदस्य समानवि-भक्तिकपदान्तरस्याभावेऽपि च प्रथमान्तार्थस्य क्रियाविशेषणतया भानाभ्युपगमेन यत्र विशेष्यवाचकेत्यादिग्रन्थासङ्गतिशङ्कापि निरस्ता सतिसंभवइतिकथनान्नैयायिकैः प्रथमान्तार्थमुख्यविशेष्यकएव बोधः सर्वत्राङ्गीक्रियतइति भ्रमोनिराकृतोवेदितव्यः तेन पचतीत्यत्र पाककृतिमात्रस्य चैत्रेण सुप्यत इत्यत्र चैत्रकर्तृकशयनमात्रस्य प्रतीतावपि क्षत्यभावाच्चैत्रइत्यस्येति त्वंजानी-हीत्यादेरध्याहारस्याकल्पनान्नक्लृप्तदृष्टिकल्पनाप्रसङ्गः एवं यत्र न प्रथमान्तार्थस्यान्वयबोधे प्रवेशस्तादृशस्थलस्य पचतिभवति पक्ष्यतिभवत्यपाक्षीद्भवतीत्यादेरन्वेषणक्लेशः परेषां लेशतोऽपि न क्लेशातिरिक्तफलकः वर्त्तमानादिकालीनपाककृतिवृत्तिभव-नयुक्तत्वाद्याश्रयत्वमिति बोधस्य क्षत्यभावेनाभ्युपगमात् अतएव पचन्तिभवन्तीत्यादयो न प्रयोगाः संख्यान्वययोग्यस्याभावा-दुत्सर्गतएकवचनस्यैव प्रसक्तेः येषामपि कर्तृलक्षणा तेषामपि कर्तृर्भावनायामेवान्वयेन तस्याएव च भवनकर्तृत्वात् संख्यान्व-ययोग्यत्वाच्च भवतीत्येव सर्वत्र प्रयोगः कैव कथा कर्तृलक्षणानङ्गीकर्तृमते तस्य एतेन न यत्र कञ्चिदभिमुखीकृत्य तादृशप्रयोगस्तत्र त्वंजानीहीत्यादेरयोग्यतयाऽध्याहाराभावेऽपि न क्षतिः एवं पचतिकल्पमित्यादितद्धितकल्पप्रत्ययस्थले प्रथमान्तपदसत्त्वेऽपि न तस्य मुख्यविशेष्यत्वम् पाककृतिंप्रतीषदसमाप्तत्वस्यैकपदोपात्तत्वेन मुख्यविशेष्यत्वसंभवात् संभवेऽपि वा संख्यायाअपि तत्र प्रातिपदिकार्थत्वेनान्वययोग्यतया बहुत्वविवक्षायां पचति कल्पानीत्याद्यपिस्यादिति प्रथमान्तमुख्यविशेष्यत्वनियमहानिरित्यपि परास्तम् सतिसंभव इत्यस्योक्तत्वात् तदर्थस्य पाकेऽन्वयादीषदसमाप्तपाकलक्षणातात्पर्यग्राहकतत्पदसमभिव्याहारवशाद्वा तत्रेषदसमाप्तपाककृतेरुद्वतोब्राह्मणादेर्वा ...स्याभ्युपगमस्यादीषदसमाप्तपाकादेश्च संख्यान्वयायोग्यत्वाद्वचनान्तरप्रसक्तेरप्य-भावात् एवं पश्यमृगोधावतीत्यत्र मृगविशेष्यकबोधस्वीकारे धावन्तं मृगं पश्येत्येव स्यात् मृगनिष्ठदर्शनकर्मत्वस्यानुक्तत्वेनोक्ता-धिकारीयप्रथमाया असंभवात् क्रियामुख्यविशेष्यकबोधस्याभ्युपगमे तु तस्याएव दर्शनकर्मत्वेन तद्बोधकधातुपदाद्द्वितीयाया असं-भवादित्येतदप्युद्भावनं परेषां न दूषणायालम् उक्तदोषेण प्रथमान्तार्थस्य तस्य मुख्यविशेष्यत्वासंभवेन तत्र त्यागे क्षत्यभावात् नहि प्रथमान्तार्थमात्रस्य मुख्यविशेष्यत्वं कैश्चिदपि नैयायिकदेशिभिरपि प्रतिज्ञातम् नञ्समभिव्याहारस्थले विशेषणविभक्तिस्थले च तदनभ्युपगमात् तद्भङ्गमात्रफलकस्योक्तस्थलान्वेषणक्लेशस्य विफलत्वैव ह्येवं पश्यमृगोधावतीत्यत्राध्याहृतत्वमिति प्रथमान्तार्थस्य च भवत्येव विशेष्यत्वम् यद्वा इतिपदाध्याहारःकार्यस्तथासति तेनैव निपातेनाभिधानात्प्रथमोपपत्तिः प्रथमान्तविशेष्यत्वानुभवाविरो-धश्च । केचित्तु वाक्यार्थस्य च कर्मतया न द्वितीया अतएव "जानामिसीताजनकप्रसूता" इत्यादि "श्रुत्वामसैतन्माहात्म्यं तथाचोत्प-त्तयः शुभाः," इत्यादयः प्रयोगाः नच शुक्लस्तण्डुलःपचतीत्येवस्यात्तस्याचशुक्लंतण्डुलं पचतीति वाच्यं प्रथमस्येष्टत्वात् द्वितीयस्य तु विशिष्टस्य न कर्मत्वमपितु शुद्धतण्डुलस्यैव तस्य च विशेषणमात्रं शुक्लमिति विशेष्ये विशेषणमितिरीत्या बोधाभ्युपगमेन तण्डुलप-दस्यैव शुक्लतण्डुले लक्षणा शुक्लमिति तात्पर्यग्राहकमित्यभ्युपगमेन वा समाधेयत्वादिति वदन्ति । यत्तु मेघोगर्जति श्रृण्वित्यत्र मेघस्य गर्जनकर्तुर्वाक्यार्थत्वे तच्छ्रवणस्य बाधितत्वादप्रामाण्यं स्यादतोगर्जनक्रियाया एव वाक्यार्थमङ्गीकार्यमिति तन्मृगः पलायते अत्ति शस्यं मारयेत्यनेन तुल्यं क्रियाया मारणासंभवात् गतिरपि तुल्यैवोभयोः स्यात् ।

नतु भावप्रधानमाख्यातमितिस्मृत्यनुसाराद्भावपदस्य धात्वर्थपरतामभ्युपेत्य धात्वर्थस्यैवप्राधान्यंमुख्यविशेष्यत्वं वैयाकरणै-र्भावशब्दस्य भावनापरपर्यायकृत्यादिरूपाख्यातार्थपरतामभ्युपेत्य तस्य प्राधान्यं भाट्टैरभ्युपेयते तैश्चाख्यातार्थस्य प्राधान्यो-पगमे पचेत्र पचे कैत्रः चैत्रस्तण्डुलं शुक्लं काष्ठेन स्थाल्यां पचति न पचति घटोस्ति नीलोघटोस्तीत्यादौ सर्वत्रैव स्वज्ञानजन्येष्ट-साधनत्वाद्यनुमितिजन्यत्वरूपप्रयोज्यत्वसंसर्गेण लिङर्थप्रवर्त्तनायाः स्वकर्तृकत्वसंबन्धेनाधेयत्वपर्यवसितेन प्रथमान्तार्थस्य पच्यर्थ-व्यापारस्य च विषयत्वसहितानुकूलत्वपर्यवसितेन स्वसाध्यतृप्त्यादिफलोद्देश्यकत्वपर्यवसितेन वा करणत्वेन संसर्गेणाख्यातार्थ-कृतावेव नञ्समभिव्याहारस्थले निवर्त्तनायाः स्वज्ञानप्रयोज्यानिष्टसाधनत्वानुमितिप्रयोज्याभावप्रतियोगित्वसंसर्गेण तस्यामेव

ष्यभासकसामग्र्यभावादसौ मुख्यविशेष्यतयैव भासते। संख्यावाचकानां च एकवचनद्विवचन-

प्रथमान्तार्थस्य चैत्रस्य स्वकर्तृकत्वसंबन्धेन द्वितीयान्तार्थस्य तण्डुलकर्मत्वस्य शुक्लकर्मत्वस्य तृतीयान्तार्थस्य काष्ठकरणत्वस्य सप्तम्यन्तार्थस्य स्थाल्यधिकरणत्वस्य च स्वनिरूपकपाकविषयकत्वसंसर्गेण तस्यामेव नञ्समभिव्याहारस्थले चैत्रस्याधेयतयाभावेतस्य प्रतियोगितया तस्यां तण्डुलकर्मत्वादीनां प्रतियोगितया भावे तस्य स्वाश्रयपाकविषयकत्वेन तस्याम् अथवा स्ववृत्त्यभावप्रतियोगित्वस्वाभाववत्पाकादिविषयकत्वादिसंसर्गेण चैत्रतण्डुलकर्मत्वादेरपि तस्यामेव नीलपदार्थस्य घटपदार्थस्य च सत्ताश्रयत्वरूपायां धात्वर्थान्विताख्यातार्थभूतायां भावनायामेवान्वयः एवं पचत्येव चैत्रः पचत्यपि चैत्रश्चैत्र एव पचतीत्यादावपि स्ववृत्त्यभावप्रतियोगिक्रियाकर्तृत्वनिष्ठभेदप्रतियोगित्वादिसंसर्गेण चैत्रादेर्भावनायामेवान्वयः एवं कर्माख्यातस्थलेऽपि कर्त्राख्यातस्थले कर्तृलक्षणावत्कर्मलक्षणायामपि भावनाप्रतीयत एव तस्यामेव तण्डुलादेः स्वकर्मतानिरूपकपाकविषयत्वसंसर्गेण चैत्रकर्तृकत्वस्य चान्वय इति सर्वत्रैवाख्यातार्थस्य विशेष्यतयैव भानेन भावनाविशेष्यकशाब्दबोधं प्रत्याख्यातजन्योपरि[illegible]वं-नैकमेव कारणत्वं व्युत्पत्तेरपि नानेकत्वं न्यायमतवदिति महल्लाघवमित्युच्यते अभिधानानभिधाननिर्वचनस्य न्यायमतेऽनुपपत्तिश्चप्रपञ्चिता तत्कथं प्रथमान्तार्थस्य कुत्रापि मुख्यविशेष्यत्वमुररीक्रियत इति चेदुच्यते—संबन्धभेदेन शाब्दबोधस्य विजातीयत्वे तत्र तत्र शाब्दबोधे तत्तदाकाङ्क्षाज्ञानानां पृथक्पृथगेव कारणत्वं वाच्यमन्यथा संबन्धभाननियमो न स्यात्। नच शाब्दबोधे संबन्धत्वेनैव सामान्यतस्संबन्धभानम् पश्चाच्च योग्यत्वतात्पर्यविषयत्वाद्याकलनेन संबन्धस्यविशेषरूपेणावगाही बोधो मानस एव तेनैव बाधबुद्धिविरोधप्रवृत्तिनिवृत्त्यादिनिर्वाहः अतएव वह्निमान्पर्वतइत्यतः शाब्दबोधेऽपि संबन्धविशेषसंशयः संबन्धविशेषेण बाधग्रहेऽपि शाब्दबोधः एवं राज्ञःपुरुषइत्यादावपि स्वस्वामिभावजन्यजनकभावस्वामिभृत्यभावादौ संबन्धविशेषे संशयः एवंच न संबन्धभेदनिबन्धनो व्युत्पत्तिभेदइतिवाच्यं केषुचित्संबन्धविशेषेषु नियताभ्योवृत्तिभ्य आकाङ्क्षाभ्यश्च संबन्धविशेषभानस्य दुर्वारत्वात् योग्यतायास्तात्पर्यस्यापि प्रागेव ग्राह्यत्वात् तज्ज्ञानकारणताया व्यवस्थापितत्वात् मतुपः सामान्यतः संबन्धिशक्तत्वेन तत्र तद्विशेषसंशयस्योचितत्वात् राज्ञःपुरुष इत्यत्र पुत्रभृत्यादौ पुरुषविशेषे तात्पर्यग्रहे जन्यजनकभावस्वामिभृत्यभावादौ संबन्धेसंशयस्याभावात् अनुभवविरुद्धप्रतिबध्यबुध्यनुत्पादविलम्बप्रवृत्त्यादिविलम्बकल्पनायाश्चाप्रामाणिकत्वात् तदनुरोधेन सर्वत्र तादृशमानसकल्पनाया अप्यनुचितत्वात् सार्वत्रिकेण तेनैव शाब्दसकलफलसम्पादने कर्त्तव्येऽतिरिक्तशब्दप्रमाणविलयापत्तेश्च। अथच संबन्धस्य सामान्यभानेऽपि प्रकारविशेष्यन्यूनाधिकवैपरीत्यादिप्रयुक्तकार्यवैलक्षण्यस्य पदन्यूनाधिकभावपौर्वापर्यवैलक्षण्यप्रयुक्ताकाङ्क्षावैलक्षण्यस्य च दुर्वारतया कार्यकारणभावनानात्वस्य दुर्वारतैव एकशब्दोपबन्धादिना केषाञ्चिदनुगमसंभवेऽपि शब्दैक्यस्याकिञ्चित्करतायास्तत्र तत्र व्यवस्थापनेन तस्याप्यकिञ्चित्करत्वमेव। यच्च धात्वर्थाख्यातार्थकालादिकं प्रति भावनाया विशेष्यत्वे सिद्धेऽन्यस्य विशेष्यत्वविमर्शे झटित्युपस्थितविशेष्यभावाया भावनाया एव तथात्वमुचितमिति तदपि न रमणीयम् विवक्षितार्थप्रतिपत्तेः पुत्रस्ते जातः कन्या ते गर्भिणीत्यादौ प्रयुक्तशब्दमात्रादेव निष्पत्तौ क्रियापदाध्याहारस्य निष्प्रमाणिकतया प्रथमान्तार्थस्यापि मुख्यविशेष्यतायाः कुसत्वाद्विशेष्यतया तदुपस्थितेरपि झटिति संभवात्। नचास्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोप्यस्तीतिस्मृतिप्रामाण्यात्तत्राप्यस्तीतिक्रियापदाध्याहार इति वाच्यम् एतस्य विधायकत्वाभावात् अस्तित्वस्य चैत्रादौ विवक्षितत्वे विवक्षितबोधान्यथानुपपत्त्यैवास्तीत्यस्याध्याहारस्य सिद्धत्वादेतस्यानुवादमात्रत्वात्। नच तथात्वे वैयर्थ्यं शङ्क्यं वेदे क्रियान्तरस्य योगत्वेप्यस्त्यध्याहारनियामकत्वेन सार्थक्यस्योपपादयितुं शक्यत्वात् विधायकत्वेऽपि स्वस्य परस्य शौर्यमात्रं यत्र प्रतिपिपादयिषितंमतीतस्य स्वपित्रादेर्वा तत्र त्वंशूरोऽहंच मत्पिताचेत्यत्रास्तीत्यस्यायोग्यतया तदध्याहारस्यासंभवात्। नचास्तिरितिधातुसामान्यस्य प्रथमेति मध्यमोत्तमयोर्भवन्तीति लकारमात्रस्योपलक्षकमिति वाच्यं विधौ न परःशब्दार्थ इति तवैव सिद्धान्तात्। नच प्रातिपदिकार्थप्रकारकशाब्दबोधं प्रति प्रत्ययजन्यायाः सुबजन्याया वोपस्थितेर्वैशेष्यतया कारणत्वान्न शूरप्रकारकस्य युष्मदर्थादिविशेष्यकस्य बोधस्य संभवः चैत्रइत्यत्र प्रथमार्थे स्वरूपे चैत्रादेरन्वयः चैत्रपदं तात्पर्यग्राहकं प्रथमार्थ एववा चैत्रः प्रथमायाः प्रातिपदिकार्थेऽनुशिष्टत्वादिति वाच्यं विभक्त्यर्थसंसर्गतोपपादनप्रकरण उक्तकार्यकारणभावस्यनिराकृतत्वादङ्गीकृतस्यचाप्रतिकूलत्वात्। किञ्च सुन्दरश्चैत्रः शुक्लंतण्डुलंपचतीत्यत्र चैत्रतण्डुलगतसौन्दर्यशौक्ल्ययोः प्रतिपिपादयिषितयोः प्रतिपत्त्यर्थं सर्वत्रमानससामग्रीकल्पनस्य विषयान्तरसंचारानुभवापलापस्य श्रुतत्वानुभवकदर्थनस्य भावनामात्रविशेष्यत्वाग्रहप्रसंजितायाः संभवत्साक्षात्संबन्धोल्लङ्घनावर्जितानौचित्यायाः संसर्गघटकतयोपस्थितपदार्थस्याप्यनेकधाभानेन संजातगौरवकलुषितायाः संभवात्स्वार्थबोधतात्पर्यमात्रग्राहकत्वव्याजनिरर्थकत्वकल्पनादूषितायाःपरम्परासंबन्धविषयतायाः कल्पनस्य च शब्दव्युत्पत्तिमसृणीकृतहृदयारुन्तुदस्य तवमते प्रसङ्गएव हि संभवत्प्रथमान्तार्थविशेष्यत्वव्यवस्थापनायालम्। प्रकृतिप्रत्ययौ सहार्थं ब्रूत इत्यादिस्मृतिपर्यालोचनया भावप्रधानमाख्यातमिति स्मृतेऽपि धात्वर्थं प्रत्येव कालादिकं प्रत्येव वा भावनया विशेष्यत्वज्ञापकत्वं नतु सर्वथैवेत्यस्यापि सुवचत्वात्र ततोऽपि सर्वत्र न भावनाया मुख्यविशेष्यत्वसिद्धिः तथात्वे भावप्राधानं वाक्यमित्येव ब्रूयात् नहि धतुतिङ्संघातात्मकाख्याते क्रियाया भावनाया वा प्राधान्येऽपि वाक्यार्थे प्राधान्यं लभ्यते तस्या अन्यथा सत्त्वप्रधानानि नामानीत्यतोऽपि वाक्यार्थे सत्त्वस्य प्राधान्यमवगतं स्यादिति [illegible] सुन्दोपसुन्दाविव निहतौ स्याताम्

भावशब्दश्च क्रियायां कृतौ च भावनात्मिकायां वर्त्तते यथाप्रयोगं च व्यवस्था अतएव भावशब्दस्य यत्नार्थकत्वे भावविहिताख्यातस्य यत्नार्थकत्वेन तृतीयाद्यनुपपत्तिप्रभृतिदोषमुद्भाव्य भावशब्दस्य क्रियार्थकत्वं व्यवस्थाप्योक्तस्मृतेः क्रियाप्रधानत्वार्थकत्वव्यवस्थापनं वैयाकरणानां क्लेशैकफलत्वमापादितम् तावता वाक्यार्थे प्राधान्यालाभात् नामार्थं प्रति क्रियाया इव क्रियां प्रति नामार्थस्याप्यन्वययोग्यत्वेनार्थतोऽपि वाक्यार्थे प्राधान्यालाभाच्च भावशब्दस्य क्रियार्थकत्वेऽपि लः कर्मणीत्यादेः भावाख्यातस्य भावार्थपरत्वे क्रियाया द्विधाभानं दोष इति भावपदस्य कालातिरिक्तकर्तृकर्माद्यर्थकत्वव्यवच्छेदपरताया एव वाच्यत्वेन च क्रियाप्रधानमाख्यातमिति न्यायवार्त्तिकस्याप्युक्तार्थएव तात्पर्यम् । कृतेरप्याख्यातार्थभूतायालिङ्गसंख्यान्वयायोग्यत्वरूपसाध्यावस्थात्वेन क्रियापदार्थत्वात् । किंच परत्र स्वबोधसंक्रान्तये शब्दप्रयोग इति स्थितम् यत्र हि स्वस्य स्वविशेष्यकं तण्डुलकर्मकपाककृतिप्रकारकं ज्ञानं तण्डुलविशेष्यकं स्वकर्तृकपाककर्मत्वप्रकारकं ज्ञानं स्वकृतिविशेष्यकं तण्डुलपाकप्रकारकं वा ज्ञानं परस्य तादृशतादृशज्ञानगोचरेच्छया तत्तद्वाक्यं प्रयुङ्क्ते च तत्र वाक्यमात्रस्यैव त्वन्मते तादृशज्ञानाजनकतया तदनुपपत्तिः मन्मतेत्वहंपचामि मया तण्डुलः पच्यते तण्डुलपाककृतिर्ममेति वाक्यानां तादृशबोधानुकूलत्वात्तदुपपत्तिः । नच व्यञ्जनव्यापारमनभ्युपगच्छता भवताऽपि मानसबोधेच्छया वाक्यप्रयोगोऽभ्युपेय एव मानसस्यापि कथंचिच्छाब्दत्वादितिवाच्यं सम्भवन्त्यामपिगतौ सर्वत्र तथाकल्पनस्यानुचितत्वेनाप्रामाणिकत्वात् शाब्दभिन्नविषयकनक्षत्रादिबहिरर्थप्रत्यक्षसामग्रीवेधादिदृढव्याप्तृतं प्रत्यपि कार्यवशेन ज्ञात्वापि निरुक्तेच्छया वाक्यप्रयोगस्य दर्शनात् तस्यचोपपादनासंभवात् भिन्नविषये प्रत्यक्षे शाब्दसामग्र्याबलवत्त्वाच्छाब्दबोधस्य संभवेऽपि मानसे बहिरर्थलौकिकप्रत्यक्षसामग्र्या बलवत्त्वान्मानसस्योत्पत्तुमशक्यत्वात् एतादृशबलाबलज्ञानस्य वेधादिरूपदृढतरतादृशसामग्रीज्ञानस्य च प्रयोक्तुर्विद्यमानत्वात् विशेषदर्शिनस्तादृशप्रयोक्तुर्बलवत्प्रमाणं विना भ्रान्तिकल्पनाया नितरामनुचितत्वात् किंच विवरणवाक्यविव्रियमाणवाक्ययोस्सतिसंभवे समानार्थकत्वं तत्रापि यावत्संभवं विशेष्यविशेषणभावयोरनतिक्रमश्च युज्यते दृश्यते च पचतीतिपाचकइतिपच्यतइतिपक्वइतिविवरणं व्यवस्थितमुभयत्रापि क्रियामुख्यविशेष्यकबोधस्यैवाभ्युपगमे वैपरीत्येनापि तत्किं न स्यात् किंचाधीते वेद वा यइत्येतद्वाक्यार्थेऽध्ययनक्रियाकर्मवाचकपदादण्प्रत्ययोविहितस्तत्रास्मन्मते व्याकरणाध्ययनकर्तुरेव वाक्यार्थत्वेन वैयाकरणपदात्तस्य बोधोयुज्यते भवन्मते च व्याकरणाध्ययनस्य सकर्तृकस्य तद्भावनाया एव वा वाक्यार्थत्वेन वैयाकरणपदात्तद्बोधस्यैवौचित्यं स्यात् एवं तद्वहतीत्यादिसूत्रेण तद्वहति य इति वाक्यार्थे वहनक्रियाकर्मपदाद्यत्प्रत्ययोविहित इति रथ्योऽश्वइत्यादौ रथकर्मकवहनकर्तुरश्वस्य बोधो न स्याद् वैयाकरणनये । यत्त्वत्र वैयाकरणैः क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितमित्युपक्रम्यआख्यातं तद्धितकृतोर्यत्रार्थस्योपदर्शकम् गुणप्रधानाभावस्य तत्र दृष्टोविपर्यय इति हरिकारिकां तद्वहतीतिसूत्रभाष्यस्थां यएवार्थो रथं वहति स एवार्थो रथस्य वोढेत्युक्तिञ्चाकलय्य तद्धितादिविवरणस्थले आख्यातस्थलाद्विशेष्यविशेषणभावे वैपरीत्यमुरीकृत्य वैयाकरणादिपदानां व्याकरणाध्ययनकर्त्राद्यर्थकत्वमुपपादितम् । तत्तेषां स्वपक्षप्रतिकूलतामेवावहति तथाहि व्याकरणमधीते रथं वहतीत्यस्य यो यदाविवरणत्वं प्रतिसन्धे तं प्रति प्रथमान्तार्थमुख्यविशेष्यकबोधजनकत्वमितरप्रत्ययान्यदाचातथात्वमितिचेदभ्युपेयं कार्यतावच्छेदके तत्तत्पुरुषतत्तत्कालप्रवेशस्यावश्यकत्वान्महागौरवं स्यात् । यदि तादृशस्थले सर्वत्रैव प्रथमान्तार्थमुख्यविशेष्यकएव बोधोऽभ्युपेयः तदा तण्डुलं पचतीत्यत्र कस्मान्नाभ्युपेयः सः, क्रियाप्रधानमाख्यातं भावप्रधानमाख्यातमित्यादिस्मृतेः वाक्यार्थे क्रियाप्रधानत्वार्थकतायास्सार्वत्रिकत्वस्य त्वयैवोक्तस्थलानुरोधेन त्यागात् द्वयोः स्थलयोर्विशेषस्य चानाकलनात् विवरणत्वं विवरणजातीयत्वं वा विशेष इति चेत् न पचतीत्यस्यापि पाचकपदविवरणत्वस्य सत्त्वेन विशेषत्वासंभवात् । नच व्याकरणसूत्रभाष्यादिप्रतीयमानविवरणत्वं तथेति वाच्यं प्रामाणिकेऽन्यत्र दृष्टे विवरणे तथात्वत्यागस्यानुचितत्वात् उक्तस्मृतौ संकोचस्य त्वन्मते दोषस्य प्रसंगात् अस्मन्मते च तदभावात् संकोचे चावश्यं कर्त्तव्ये भावाख्यातस्थलविषयत्वेनैव सोऽङ्गीकरणीयः तत्र च भावपदस्य धात्वर्थपरत्वेपि न क्षतिः नवा सरूपवाक्ययोरर्थतोऽपि वैरूप्यम् । एवंच तण्डुलं पचती चैत्रश्चैत्रेण पच्यते तण्डुलइत्यत्र प्रथमान्तार्थस्यैव मुख्यविशेष्यत्वमनुभवविरोधस्मृतिविरोधगौरवादेरभावात् । अनुभूयमानवाक्यद्वयार्थवैलक्षण्यस्यान्यथानिर्वाहाच्च चैत्रेण सुप्यत इत्यादौ क्रियाया एवमुख्यविशेष्यत्वमध्याहारे गौरवादध्याहृतपदार्थस्यानाकाङ्क्षितत्वाच्चेति यत्र यादृशबोधाभ्युपगमे न काचिदनुपपत्तिस्तत्र तादृशएवाभ्युपेयते न कुत्रापि आग्रहइति । यत्तुयुष्मदस्मदर्थयोरेकत्वेऽपि वैकल्पिकं बहुवचनं विधाय सविशेषणयोस्तयोः तत्प्रतिषिद्धं तत्प्रतिषेधश्च प्रयोगानुसारात् क्रियायोगस्थल एवाभ्युपेयते धात्वर्थस्यैव मुख्यविशेष्यत्वे पटुरहंब्रवीमीत्यत्रेव वयमपि कुब्जाः किमौदास्यमित्यादावपि क्रियाध्याहारस्यावश्यकत्वेनैकवचनमेव स्यात् प्रथमान्तार्थप्राधान्यपक्षे क्रियाध्याहाराभावेन क्रियायोगाभावान्न तथात्वम् । किंच तदादेर्वाक्यार्थप्रधानपरामर्शकत्वेन क्रियातिरिक्तस्य तस्य पादयोरभिवादयेत्यादौ प्रातिपदितार्थस्य परामर्शो न स्यात् पूर्ववाक्ये क्रियाया एव प्राधान्यादिति तन्न युक्तम् विशेषणत्वस्य विधेयत्वातिरिक्तस्य प्रतिषेधापेक्षितत्वात् तत्र हि कुब्जात्वं विधेयमिति न प्रतिषेधप्रसक्तिः तदादीनां प्रधानपरामर्शकत्वे प्राधान्यं वृत्तिग्रहमुख्यविशेष्यत्वमेव विवक्षितमतएव न्यायमतेऽपि "दृशैते राजमातङ्गास्तस्यैवामीतुरङ्गमा" इत्यत्र तदा राजपरामर्शः नहि भवति प्रजावतीयं मे त्वं तस्मै देहि कम्बलमित्यत्र च तदा भ्रात्रादिपरामर्शः । नच प्रथमान्तार्थविशेष्यकबोधाभ्युपगमे कीदृशश्चैत्र इति प्रश्नस्य चैत्रः पचतीत्युत्तरापत्तिः

बहुवचनानामेकत्वत्वद्वित्वत्वबहुत्वत्वावच्छिन्नेषु शक्तिः । शक्तता च सुत्वौत्वजस्त्वादिना न तु स्वादितिबादिसाधारणैकवचनत्वादिना । एकवचनत्वादेर्दुर्वचत्वात् । न चैकत्वादिवाचकत्वं तत् । वाचकतायाः शक्ततावच्छेदकत्वे आत्माश्रयात् । बोधकतारूपत्वे शक्तिभ्रमेण द्विवचनादीनामपि एकत्वबोधकतया अतिप्रसक्तत्वात् । न चैकवचनत्वादिकं जातिविशेषः सुपूत्वादिना सांकर्यात् । न च शक्तिसंबन्धेन एकवचनादिपदवत्त्वं तत् । तादृशाज्ञानदशायां च सुत्वादिना शक्तिभ्रमादेवं शाब्दबोधः । एकवचनादिशब्दस्य पदद्वयात्मकतया तादृशसमुदायशक्तेरेवाप्रसिद्धिरिति तु नाशङ्कनीयम् । एकं वक्तीत्यादिव्युत्पत्त्या एकवचनादिशब्दस्य स्वादिबोधकत्वे एकादिशब्देऽपि तादृशव्यवहारापत्तेः । एकवचनादिशब्दस्य स्वादौ रूढिस्वीकारस्यावश्यकत्वादिति वाच्यम् । ग्रन्थकारीयसंकेतेनैवोपपत्तौ एकवचनादिपदे शक्तेरप्रामाणिकत्वात् । तान्येकवचनद्विवचनेत्यादिपाणिनिसूत्रस्य तदीयसंकेतग्रहपरतयाप्युपपत्तेः । न हि यू स्त्र्याख्यौ नदीत्यनुशासनात् स्त्र्याख्येदूदन्तादिशब्दे नद्यादिपदस्य शक्तिः सिद्ध्यति । किन्तु तदीयसंकेत एव । अतएव नद्यादिसंज्ञा आधुनिकसंकेतशालित्वात्पारिभाषिक्येव न त्वौपाधिकी । अथैवमपि पाणिनिसंकेतसंबन्धेन तादृशपदवत्त्वमेव एकत्वादिशक्ततावच्छेदकमस्त्विति चेन्न । तादृशसंकेतस्य केन रूपेण संबन्धता । संकेतत्वेनेति चेत्तर्हि कस्यचित्पुंस एकवचनपदात् सुऔजसादिर्बोद्धव्य इत्याकारकसंकेतस्यापि संभवादतिप्रसक्तिर्दुर्वारैव । पाणिनिसंकेतत्वेन तथेति चेत्तर्हि व्याकरणप्रणेतुः पुरुषान्तरस्यापि

---

मन्मतेतु चैत्रे पाककृत्यादिरूपधर्मावबोधकत्वान्नोत्तरत्वमिति वाच्यं प्रश्नवाक्ये हि कीदृशइति पदाज्जिज्ञासितधर्मवानितिबुध्यते तस्य चाभेदेन चैत्रपदार्थेऽन्वयो भवत्येवं सत्युत्तरवाक्ये चैत्रेऽभेदेनान्वयिनो धर्मविशेषवतो बोधकपदघटितत्वमपेक्षितमतो न पचतीत्युत्तरमपि तु पाककर्तेत्येव अन्यथा कीदृशी कृतिरित्यस्य चैत्रः पचतीत्युत्तरं तवापि मते स्यात् । यत्तु कीदृशी कृतिरित्यतोलिङ्गसंख्यान्विताकृतिः प्रतीता तादृशकृतिप्रत्यायकस्यैवोत्तरत्वमुचितमिति पचतीति नोत्तरमिति तन्न संख्यायाः प्रश्नवाक्येऽविवक्षितत्वे तदबोधकस्याप्युत्तरवाक्यत्वे बाधकाभावात् तस्माच्छन्दमर्यादैव हि शरणीकरणीया । यच्च तद्भूतानां क्रियार्थेन समाम्नायइति जैमिनीयानुभवः क्रियामुख्यविशेष्यकबोधेऽस्माकमस्तिप्रमाणं नैवं नैयायिकानां गौतमाद्यनुभवोऽस्ति प्रथमान्तार्थमुख्यविशेष्यत्वेप्रमाणमिति तदपि नोपादेयं वचः उक्तार्थस्यालौकिकत्वाभावेन 'पारमर्षानुभवैकशरणत्वाभावात् येन तदभावे तन्निर्णयो न स्यात् किञ्च तत्सूत्रमपि सिद्धार्थक्रिययोः क्रियाप्राधान्यपरमेव न मुख्यविशेष्यत्वपरं तस्य तत्त्वानियतत्वात् पर्वतो वह्निमान्पर्वते वह्निरित्युभयत्रैवविधेयत्वनिबन्धनप्राधान्यस्य वह्नावेवानुभूयमानत्वादित्यलम् ।

**एकत्वत्वेत्यादि** । एकत्वत्वं जातिरेव शक्यतावच्छेदकं लाघवाद्द्रव्यवाचकपदाद्युत्तरैकवचनादितः संख्याप्रतीतिर्लक्षणयैव येषामेकत्वत्वादिकं व्यापारत्वकर्मत्वादिवदखण्डोपाधिरपेक्षाबुद्ध्यनुपस्थितिकालेप्यद्रव्यगतसंख्यानुभवशालिनां तेषां मते सएवोपाधिस्तथागौरवाभावादिति शक्त्यैव सर्वत्र बोध इत्यन्यदेतदितिभावः । **शक्तताचसुत्वौत्वेत्यादि** । आदेशानां नानात्वेन तत्तदसाधारणधर्माणां प्रत्येकं तथात्वे गौरवात् शक्तिग्रहस्य हि सर्वत्रादेशिस्मृत्यासंभवात् क्वचिच्च श्रूयमाणधर्मावच्छिन्ने भ्रमस्यापि तस्याभ्युपेयत्वान्न काप्यनुपपत्तिरितिभावः । **दुर्वचत्वादिति** । शक्ततावच्छेदकत्वयोग्यस्येत्यादिः । **आत्माश्रयादिति** । नच प्रतियोगित्वकारणत्वादीनां स्वरूपविशेषात्मकत्वपक्षेऽवच्छेदकरूपताया एवसिद्धान्तत्वं तत्र यथात्माश्रयो दोषोऽवच्छेद्यावच्छेदकत्वयोरूपभेदाभ्युपगमेन परिह्रियते तथैव प्रकृतेऽपि तद्व्यक्तित्वेनावच्छेदकत्वमेकत्ववाचकत्वात्वादिनावच्छेद्यत्वमित्यभ्युपगमे को दोष इति वाच्यं घटत्वदण्डत्वादीनामखण्डस्वरूपाणामवच्छेदकनिरपेक्षाणां तद्व्यक्तित्वादिना स्वरूपतोवावच्छेदकत्वं भवति हि संभवदुक्तिकं प्रकृतेत्वेकत्ववाचकताया अवच्छेदकसापेक्षायास्तद्व्यक्तित्वेनावच्छेदकत्वस्याप्यवच्छेदकग्रहसापेक्षतया रूपान्तरस्यालब्धत्वात् । वाचकतात्वेन तस्यास्तदवच्छेदकत्वेऽन्योन्याश्रयात्तद्व्यक्तित्वेन तत्त्वेचात्माश्रयादितिभावः । **बोधकतारूपत्व इति** । एकवचनत्वस्यैकत्वबोधकतारूपत्वइत्यर्थः । एतद्घटितपञ्चम्यन्तवाक्यस्यदुर्वचत्वादित्यत्रैवान्वयः । यद्वा वाचकताया इत्यादि पूर्ववाक्ये शक्ततारूपत्व इति शेषः तथाच न संदर्भविरोधः पञ्चम्यन्तस्य नचेत्यत्रैवान्वय इति । **अतिप्रसक्तत्वादिति** । एकत्वशक्तताया इत्यादिस्तदवच्छेदकत्वासंभवादितिशेषः । **जातिविशेष इति** । लाघवसहकृतेनैकत्वशक्तताया अवच्छिन्नत्वग्राहकेण प्रमाणेनसिद्धोभ्युपेयइतिशेषः तेनाप्रामाणिकत्वादित्यनुपन्यस्य बाधकोपन्यासस्य सांकर्यादित्यस्य न संदर्भविरुद्धता । **सुत्वादिनेति** । नच जातिसांकर्यस्यैवजातिबाधकत्वमभ्युपेयमन्यथा घटजलसंयोगादिसांकर्यात्केषांचिदपिपृथिवीत्वादीनां जातित्वं न स्यात् । नहि कैश्चिदपिसुप्त्वादीनां जातित्वमभ्युपगतमित्यसंगतिरिति वाच्यम् एकत्ववाचकताया अवच्छिन्नत्वग्राहकप्रमाणेनैकवचनत्वस्येव सुप्पदवाच्यतादेस्त-

तादृशसंकेतस्य संभवात् । तदीयसंकेतसंबन्धेन तत्पदवत्त्वस्य डित्थादिपदात् स्वौजसादि-बोद्धव्य इत्याकारकपुरुषसंकेतसंबन्धेन डित्थादिपदवत्त्वस्य वा विनिगमनाविरहेण शक्ततावच्छेदकताप्रसङ्गः तथा चागत्या आनुपूर्वीविशेष एव शक्ततावच्छेदक इति । यत्तु संख्यापि प्रकृतेरर्थः । एकवचनादिकं च एकत्वाद्यर्थे तात्पर्यग्राहकमेव न चैवमेकप्रकृत्युपस्थाप्ययोरर्थयोः परस्परमन्वये आकाङ्क्षाविरहाद् घटादावेकत्वाद्यन्वयानुपपत्तिरन्यथा हर्यादिपदादुपस्थितयोरश्वसूर्ययोराधाराधेयभावेनान्वयापत्तिर्घटादिपदस्य एकत्वादिविशिष्टस्य घटादौ च न शक्तिसंभवः घटरूपं पश्येत्यादौ संख्यानवच्छिन्नघटादेरेवान्वयबोधादिति वाच्यम् । आकाङ्क्षावैचित्र्यादेकप्रकृत्युपस्थाप्ययोरपि घटैकत्वयोः परस्परमन्वयसंभवात् । अतएव खण्डशक्त्यैवकाराद्युपस्थाप्ययोरन्ययोगव्यवच्छेदाद्योः परस्परमन्वयबोधः । नचैवं कर्मत्वादिकमपि प्रकृत्यर्थ एवास्तु, किं तत्र द्वितीयादिशक्त्येति वाच्यम् । नामार्थधात्वर्थयोः साक्षाद्भेदान्वयबोधस्याव्युत्पन्नतया कर्मत्वादेर्नामार्थत्वे तेन समं धात्वर्थान्वयासंभवात् । न च संख्यायाः प्रातिपदिकार्थत्वे सति तात्पर्यज्ञाने विनैव शक्तिभ्रमं लक्षणाग्रहं वा द्विवचनाद्यन्तपदादेकत्वादिबोधसंभवादेकत्वा-

---

ग्राहकप्रमाणेन लाघवसहकृतेन सुप्त्वादेरपिजातिरूपत्वं स्याद्विशेषाभावात् इष्टापत्तौ भूतत्वमूर्तत्ववत्परस्परसांकार्यादुभयोरपिहिजातिरूपत्वं न स्यादितिभावः । यद्वा आदिपदादत्वमत्वादिपरिग्रहः अत्वाभाववति स्वादावेकवचनत्वस्यैकवचनत्वाभाववतिघटादिपदघटकाकारेऽत्वस्यामोऽकारेचोभयोस्सत्त्वेन सांकर्यात् अकाराव्यवहितोत्तरमकारस्यैव मकाराव्यवहितपूर्ववर्त्त्याकारेऽपि तस्य विनिगमकाभावेन सत्त्वस्याभ्युपेयत्वादन्यथा व्यासज्यवृत्तिजात्यभ्युपगमप्रसंगात् अन्त्यवर्णमात्रवृत्तित्वदुराग्रहेऽपि मत्वमादायसांकर्यस्य दुर्वारत्वादितिभावः । **डित्थादिपदात्स्वौजसादिर्बोद्धव्यइतीति** । अत्रस्वमादिर्बोद्धव्यइति वक्तुमुचितमन्यथोक्तसंकेतसंबन्धेन डित्थादिपदवत्त्वस्यौप्रभृतौ सत्त्वेनातिप्रसक्ततया तस्यावच्छेदकत्वासंभवादसंगतिः स्यात् यद्वा आदिपदस्य स्वादिभिः प्रत्येकं संबन्धः सुपदोत्तरादिपदादमादिरौपदोत्तरादिपदादौटादिर्जस्पदोत्तरादिपदाच्छसादिर्ग्राह्यः डित्थादिरित्यत्रादिपदाड्डवित्थादिर्ग्राह्यः तथाच संकेतत्रये तात्पर्यं पर्यवसितमिति नासंगतिः । **एकप्रकृत्युपस्थाप्ययोरिति** । एकप्रत्ययार्थयोः कालकृत्याद्योरन्वयस्य सर्वसंमतत्वात्प्रकृत्युपस्थाप्येत्युक्तम् । **आकाङ्क्षाविरहादिति** । नच घटपदसुपदसमभिव्याहारात्मिकैवास्त्वाकाङ्क्षा घटैकत्वयोरन्वयबोधानुकूलेतिकथमाकाङ्क्षाविरहइतिवाच्यंययोरर्थयोः परस्परमन्वयबोधस्तद्बोधकपदयोरेवसमभिव्याहारस्यतादृशान्वयबोधानुकूलाकाङ्क्षात्वस्योपेयत्वादन्यथातिप्रसङ्गात् प्रकृतेच घटैकैकत्वोभयोपस्थापकपदयोरभावादाकाङ्क्षायाअसंभवात् । नच पदद्वयार्थयोरन्वयबोधएवाकाङ्क्षावश्यकीप्रकृतेचैकपदार्थयोरेवान्वयइत्याकाङ्क्षाविरहेऽपि काक्षतिरिति वाच्यं तयोस्संबन्धस्याकाङ्क्षायाअभावे भानस्यैवासंभवात्पदवृत्त्याकाङ्क्षयोरेव संबन्धभासकतयाक्लृप्तत्वादिति भावः । **संख्यानवच्छिन्नघटादेरेवान्वयबोधादिति** । नच नीलो घटइत्यादौ क्लृप्तशक्तिकेन नीलपदेन लक्षणया नीलविशिष्टस्यैवशक्तिद्वयापेक्षया लाघवेन क्लृप्तविशिष्टैकशक्तिना घटादिपदेन लक्षणयैवास्तु शुद्धघटादिबोध इति वाच्यं समस्तघटपदप्रयोगस्यानादितया शुद्धघटतात्पर्यस्यानादित्वस्यावश्यंवाच्यत्वात् घटः घटौ घटाइत्यादौ सर्वत्रैव घटबोधस्याव्यभिचाराल्लाघवाच्चानादेरेकस्याईश्वरेच्छाया एव कल्पयितुमुचितत्वात् पश्चादेकत्वादिबोधानुरोधेनैकत्वादिशक्तेः कल्पनीयायाः शक्तिमत्तयाक्लृप्तेषु घटादिपदेष्वेवकल्पयितुमुचितत्वादुक्तशक्तिद्वयकल्पनायाः फलमुखत्वेनादोषात् । नच संख्याबोधानुरोधेन कल्प्यायाः शक्तेः विशिष्ट एवास्तु कल्पनमेवंहि समासस्थले शुद्धशक्त्या विभक्त्यन्तस्थले च विशिष्टशक्त्यैवविवक्षितार्थप्रतीतिर्भवत्युपपादितेतिवाच्यं विशिष्टशक्तिकल्पनायां गौरवाल्लाघवेन संख्यामात्रेशक्तिकल्पनाया एवोचितत्वात् विशिष्टप्रतिपत्तेराकाङ्क्षाकल्पनयाप्युपपादयितुं शक्यत्वात् विशिष्टशक्तिकल्पनाकाङ्क्षाकल्पनयोर्हिकल्पनालाघवेनाकाङ्क्षाकल्पनस्यैव न्याय्यत्वात्। शक्तिकल्पने हि भगवदिच्छायामेकत्वविषयतानिरूपितघटविषयत्वस्य विषयत्वतदवच्छेदकत्वादिकमुपस्थितिकारणतावच्छेदकत्वादिकं तादृशविषयत्वे पदार्थान्तरसंबन्धादिकञ्च कल्पितंभवतीति गौरवादाकाङ्क्षाकल्पनेच शक्तिकल्पनपक्षेऽपि कारणतया क्लृप्तस्य घटइत्यानुपूर्वीज्ञानस्याकाङ्क्षाज्ञानविधया चासंसृष्टतयैकपदोपस्थापितार्थयोस्संसृष्टतयाभाने कारणत्वमात्रं कल्प्यतइति कारणत्वकार्यत्वतदवच्छेदकत्वादीनांधर्मिणश्च शक्तिपक्षापेक्षया अधिकस्याकल्पनेनगौरवविरहात् । एतदभिप्रेत्यैवानुपदमेववक्ष्यत्याकाङ्क्षावैचित्र्यादिति वैचित्र्यं ययोरर्थयोः परस्परमन्वयस्तदुपस्थापकपदयोः समभिव्याहारादन्यत्राकाङ्क्षारूपादत्रवैलक्षण्यं ययोः परस्परमन्वयस्तदुपस्थापकस्यैकस्यैव पदस्य यानुपूर्वीतस्याएवाकाङ्क्षारूपत्वमिति बोध्यम् ।

**नामार्थधात्वर्थयोरिति** । यद्यपि नामार्थयोरपिभेदसंबन्धेनान्वयस्याव्युत्पन्नत्वं तत्रैकनामार्थयोरन्वयस्य भेदेन सविवादतया लाघवेन नामार्थयोर्भेदेन साक्षान्नान्वयइत्येव व्युत्पत्तिशरीरं वाच्यं निपातातिरिक्तत्वस्य विशेषणत्वादेवैवकारार्थयोरन्वयस्यनाव्युत्पन्नत्वं । नचैवं घटत्वघटयोः कथमन्वयइतिवाच्यं तस्यैकपदार्थत्वात्पदार्थयोरित्यत्र द्विवचनार्थद्वित्वस्यपदार्थत्वघटकवृत्तावेव

**दितातात्पर्येण एकवचनान्तस्येव द्विवचनान्तस्यापि पदस्य स्वारसिकप्रयोगापत्तिरिति वाच्यम् । अनादितात्पर्यस्यैव स्वारसिकप्रयोगप्रयोजकत्वादेकवचनाद्यन्तपदस्यैव एकत्वादावनादितात्पर्योपगमेनातिप्रसङ्गविरहात् । द्व्येकयोर्द्विवचनैकवचने इत्याद्यनुशासनं च तादृशतात्पर्यग्राहकमेवेति वैयाकरणमतम् । तदसत् । अनन्तानां प्रकृत्याद्यानुपूर्वीणां शक्ततावच्छेदकत्वापेक्षया अल्पतरविभक्त्याद्यानुपूर्वीणामेकत्वादिशक्ततावच्छेदकत्वस्यैवोचितत्वात् । न च प्रातिपदिकत्वमेव शक्ततावच्छेदकं न तु घटपदत्वादिकमिति न शक्त्यानन्त्यमिति वाच्यम् । प्रातिपदिकत्वस्य दुर्निर्वचत्वात् । तदज्ञानेऽपि एकत्वादिज्ञानस्यानुभविकत्वात् । पदत्वेन वर्णत्वेन वा शक्तत्वे विभक्तेरपि तद्वाचकतासिद्धेः । एकत्वादिशाब्दबोधात्पूर्वं वर्णत्वाद्युपस्थितेरप्यनावश्यकत्वाच्च ।**

---

फलतोऽन्वयाद्घटघटत्वयोरेकयैववृत्त्या पदार्थत्वात् एवं च संख्याया अपि न प्रातिपदिकार्थत्वसंभवः किंच संसर्गतामतप्रस्ताव उक्तव्युत्पत्तेरप्रामाणिकत्वसेद्धानिष्टप्रयोगगतेश्चोक्तत्वादिदमसंगतम् । ननैवं सति कर्मत्वेनान्वयापत्त्याप्रातिपदिकार्थत्वमपि कर्मत्वादीनां न स्यादिति वाच्यं प्रकारत्वपक्षव्यवस्थापकप्रतिबध्यप्रतिबन्धकभावलाघवगौरवस्य जागरूकत्वात् तथापि परमतस्य यथापराभ्युपगममियमसुक्तिरितिवेदितव्यम् । **स्वारसिकप्रयोगापत्तिरिति ।** स्वतोरसः स्वरसः रसइच्छा सा च प्रयोगमूलीभूता तात्पर्यापरपर्याया बुबोधयिषा स्वतस्त्वं च तस्यांशक्तिभ्रमाद्यनधीनत्वे सति प्रयोजनानुसन्धानाजन्यत्वमेवच्च यः स्याच्छक्तिभ्रममूलको यश्च शैत्यपावनत्वादिप्रतिपत्तिप्रयोजनाभिसन्धिजन्मा गङ्गायांघोषइत्याद्याधुनिकलक्षणामूलकः सएव न भवति स्वारसिक एकत्वतात्पर्येण घटाविति तु स्वारसिक एव स्यादिति भावः । लाघवादनादितात्पर्यमूलकत्वमेव स्वतस्त्वं वाच्यं शक्तिभ्रमस्थल एवाधुनिकलक्षणास्थले च तत्तदर्थेनास्त्यनादिस्तात्पर्यः क्वचिच्च तद्भ्रम एवेति घटावित्यस्यानादितात्पर्यमूलकबुबोधयिषाजन्यत्वाभावान्न स्वारसिकत्वमित्यभिप्रेत्याह—**अनादितात्पर्यस्येति ।** ननैवमपि तात्पर्यग्रहे घटावित्यतः शक्तिभ्रमं लक्षणाग्रहञ्च विना शाब्दबोधापत्तिर्दुर्वारैवेति वाच्यमिष्टत्वात् एकवचनान्तघटादिपदतात्पर्यस्यानादित्वे सूत्रेबोधितं घटादिविशेष्यैकत्वप्रकारकशाब्दबोधे स्वाद्यन्तघटपदधर्मिकतात्पर्यज्ञानस्य घटइत्यानुपूर्वीज्ञानस्य वा हेतुतया तत्र तद्भ्रमस्यावश्यकत्वादभ्रान्ततादृशशाब्दबोधस्यैवानिष्टत्वादितिभावः । **अवच्छेदकत्वस्यैवोचितत्वादिति ।** प्रागुक्तोपस्थितिलाघवापेक्षया प्रकृत्यानुपूर्व्योनन्त्यनिबन्धननिरूप्यनिरूपकभावभेदकृतानन्त्यवदीश्वरेच्छीयविषयताकल्पनगौरवस्य जघन्यत्वादिति भावः । धात्वादिभिन्नार्थवच्छब्दत्वस्वार्थनिष्ठमुख्यविशेष्यताप्रयोजकप्रथमानिष्ठविशेष्यतानिरूपिताव्यवहितोत्तरत्वसंबन्धावच्छिन्नप्रकारतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वादेः प्रातिपदिकत्वस्य सुवचत्वेपि तदज्ञानदशायामप्यभ्रान्तस्य शाब्दबोधात्र तस्य शक्ततावच्छेदकत्वम् येन रूपेण यतोज्ञायमानान्नियमेन यद्बोधः तद्रूपावच्छिन्नस्यैव तत्र शक्ततायाउचितत्वादव्यभिचरति ह्यानुपूर्व्यवच्छिन्नस्यैव ज्ञानन्न तु प्रातिपदिकत्वावच्छिन्नस्येत्यभिप्रेत्याह । **तदज्ञानेपीति ।** नन्वेकत्वांशशाब्दबोधः सर्वत्रैव घटः पट इत्यादौ परिदृश्यमानोनुगतं शक्तं स्वकारणमाक्षिपन् क्लृप्तशक्तिकपदरूपाश्रयोपस्थितिलाघवसहकारेण प्रातिपदिकत्वरूपानुगतधर्मोपगृहीतमेव व्यभिचारपरिहाराय शक्तं स्वकारणं कल्पयतीतिप्रातिपदिकत्वेन सिद्धे शक्तत्वे तदज्ञानदशायां जायमानशाब्दबोधकारणीभूतज्ञानस्य शक्ततावच्छेदकत्वांशे भ्रमत्वमेव कल्प्यते लघुधर्मस्य प्रतियोगितावच्छेदकत्वे व्यवस्थिते प्रतियोगितावच्छेदकत्वांशे कम्बुग्रीवादिमान्नास्तीत्यादिसार्वजनीनप्रतीतेर्भ्रमत्ववत् घटपदत्वादिना घटादिशक्तत्वे सिद्धेऽपभ्रंशस्थलीयबोधकारणज्ञानस्य बहुलीभूतस्यापि भ्रमत्ववद्वा अपि वालत्वेन कर्तृत्वादिशक्तत्वे सिद्धे सर्वत्रैव प्रयोगेष्वश्रूयमाणस्यापि तस्य तत्त्वेन ज्ञानकल्पनवत्प्रातिपदिकत्वेन तज्ज्ञानं कल्प्यत इत्यतआह । **पदत्वेनेति ।** व्यभिचारपरिहारक्षमत्वात्प्रातिपदिकत्वापेक्षया लघुत्वाच्चोक्तक्रमेण पदत्वस्यैव तत्सिद्धिः स्यादितिभावः । ततोपि लाघवादाह **वर्णत्वेनेति ।** नच वर्णत्वादिकं शक्ततव्यभिचारीतिवाच्यं शक्ततायाविषयतारूपत्वेन व्यभिचारस्यानवच्छेदकत्वेऽकिञ्चित्करत्वाद् यद्वानुगतधर्ममात्रस्यसर्वत्रैव फलोपधायकतारूपकारणताव्यभिचारित्वात्स्वरूपयोग्यतायाश्च प्रकृतेपि वर्णत्वादेरव्यभिचारित्वात्सहकार्यन्तरविरहाद्धि न यतः कुतश्चिद्वर्णाच्छक्यप्रतिपत्तिः तस्यैवहि रूपस्य न तत्वं यस्य कदाचिदप्यजनकेनित्ये साधारण्यमितिभावः । तेन रूपेण विभक्तेरपि शक्तत्वे परेषामिष्टापत्तिमाशङ्क्य प्रातिपदिकोक्तपक्षोक्तदोष एव स्मारयति एकत्वादिशाब्दबोधादित्यादिना । **अनावश्यकत्वाच्चेति ।** ननु येन रूपेण शक्तता तद्रूपेण ज्ञानस्य शाब्दात्प्रागनपेक्षितत्वे तदभावेन शक्ततावच्छेदकत्वनिराकरणमसङ्गतम् अपेक्षितत्वेचापेक्षितमनावश्यकञ्चेति व्याहतं वचः उपस्थितेरभावादित्येव हि वक्तुमुचितमितिचेत्सत्यं तदेव वक्तुमुचितमन्यथातु प्रमादादिति गृहाण । यद्वा यद्यानुपूर्वीमन्तरेण केवलवर्णत्वेन ज्ञानस्यैकत्वशाब्दसहचारः कार्यकारणभावकल्पनामूलं क्वापिचेत्परिदृष्टोवर्णत्वमन्तरेणानुपूर्वीज्ञानस्य चादृष्टस्तदा लाघवादृष्टसहचारस्थलेक्लृप्तकारणभावस्य व्यभिचारवारणायान्यत्रापिकल्पनं भवेदावश्यकन्तदभावाच्चानुपूर्व्याएव नियतसहचारावच्छेदिकाया ज्ञानेनोपपत्तिसंभवाद्वर्णत्वेनोपस्थितेरनावश्यकत्वन्तत्त्वादेव च न शक्ततावच्छेदकत्वं तेनरूपेण बोधजनकत्वस्येश्वरेच्छया ग्रहणेतस्याविसंवादित्वापत्तेः अनादावपिहि

फलानुरोधेन तत्कल्पने च कल्पनागौरवात् । एवमानुपूर्वीभिन्नधर्मस्य वाचकतावच्छेदकत्वे घटपदं सुपदं च न संख्यावाचकमिति विपरीतनिश्चयकालेऽपि तादृशधर्मावच्छिन्नस्य वाचकताग्रहसंभवाद् घटइत्यादौ संख्याया बोधापत्तिः । अथ विभक्तीनां संख्यार्थकतामते प्रकृतिविभक्त्योरेकवाक्यताविरहनिश्चयदशायां विभक्त्युपस्थाप्यैकत्वादेः प्रकृत्यर्थेऽन्वयबोधवारणाय तयोः समभिव्याहारज्ञानस्य घटादिविशेष्यकैकत्वान्वयबोधं प्रति कारणत्वमधिकं कल्पनीयम् । एकपदोपस्थापितयोः घटैकत्वाद्योरन्वयबोधोपगमे च न समभिव्याहारज्ञानस्य तत्र हेतुता कल्प्यते इति लाघवात्, प्रकृत्याद्यानुपूर्वीणां संख्यावाचकतावच्छेदकत्वमुपेयतइति चेन्न । आकाङ्क्षाविचारे समभिव्याहाराकाङ्क्षाज्ञानस्य हेतुताया निराकृतत्वात् । अथैवमपि विभक्तेः संख्यार्थकत्वे विनिगमनाविरहेण प्रकृतिधर्मिकस्य

---

शक्तिग्रहव्यवहारपरम्परायां व्यवहारेणैव सः व्यवहारश्च प्रत्यक्षसिद्धइति व्यवहारातिक्रमेण वर्णत्वेनापि जनकत्वावगाहिनी न भवति विसंवादिनीति वक्तुमशक्यमेवान्यथा सर्वापिशक्तिव्यवस्थाव्याकुलीभावमापद्येत वर्णत्वमात्रेणैव सर्वार्थशक्ततासात्स्याच्च सर्वेसर्वार्थवाचका न स्याच्च मुख्यगौणव्यवस्था नचानुपूर्व्यवच्छिन्नानांभूयोगृहीतत्वसमानोपकारकविधुरस्थलकार्यसहचाराणां पश्चात्परिदृश्यमानोपि व्यभिचारस्तृणारण्यादिवत्कार्यजननशक्तिमपाकर्तुमीष्टे लकारस्थलेपि च तिप्त्वादिनैव शक्ततेति गूढाभिसन्धिः । **फलानुरोधेनतत्कल्पनेचेति** । ननुवर्णत्वस्यापि योग्यतया कलादिग्राहकसामग्र्यैव ग्रहणसंभवात्किमितिफलानुरोधेन तत्कल्पनंकार्यमितिचेन्न नह्ययोग्यस्यापिहि सर्वत्र ग्रहणं संशयाद्यनुपपत्तेः ततश्च यथानुभवं प्रतिबध्यप्रतिबन्धकभावादिकल्पनेन क्वाचित्कत्वं समाधेयं दृश्यते च बाहुल्येन प्रवृत्त्याद्युपयोगिग्रहाणां मध्यविधधर्माणां ग्रहणं न सामान्यस्य नाप्यन्यस्यविशेषस्येति तत्तद्धर्मबुभुत्सापनेयदोषभावानां खरसवाहिमध्यविधर्मबुभुत्सानां संस्कारविशेषाणां वा दोषत्वं तत्तद्धर्मांग्रहे कल्प्यमावश्यकञ्चोभयमतएव कलादिवर्णत्वव्याप्यधर्मग्रहणमिति सर्वत्र वर्णत्वग्रहाय फलानुरोधेन तद्बुभुत्सादिकल्पनापत्तौन काचिदनुपपत्तिरित्यपरितोषादाह । **एवमानुपूर्वीत्यादि** । **एकवाक्यताविरहनिश्चयेति** । एकवाक्यत्वं संभूयैकार्थप्रतीतीच्छयोच्चरितत्वम् निरूप्यनिरूपकभावापन्नतत्तत्पदार्थद्वयविषयताकबोधजननयोग्यत्वं तदुत्थाप्याकाङ्क्षानिवर्तकत्वतन्निवर्तनीयाकाङ्क्षोत्थापकत्वान्यतरयोग्यत्वं वेत्यन्यदेतत्तत्त्वेकस्यापि ययोः पदयोरभावनिश्चयस्तत्तदर्थयोरन्वयबोधस्तु न भवत्येवानुभविक इतिभावः । **तयोः समभिव्याहारज्ञानस्येति** । अत्र समभिव्याहारो न पौर्वापर्यमात्रमुक्तैकवाक्यताविरहज्ञानकालेपि तज्ज्ञानसंभवेनोक्तापत्तेः समभिव्याहारज्ञानकारणत्वकल्पनयापि वारणस्यासंभवात् किन्त्विदं पदमनेन पदेन सहान्वयबोधं जनयत्वितीच्छारूपं यत्पदतात्पर्यन्तद्विषयत्वन्तेनोच्चरितत्वं वा तज्ज्ञानन्तु भवत्येवोक्तवाक्यताविरहनिश्चयविरोधिप्रथमैकवाक्यत्वस्य विरहः स्वतएव समभिव्याहारस्य विरोधी द्वितीयतृतीययोस्तु कथंचित् यत्रभवति तथाप्रतिपादनयोग्यं साकाङ्क्षं वा परस्परं कथंकारं तद्व्युत्पन्नानां तथेष्टं भवेदित्यनुभवसिद्धम् समभिव्याहारोपि वा तदनुसारेणैव निर्वाच्य इति ॥

**न समभिव्याहारज्ञानस्य तत्र हेतुतेति** । प्रथमायास्तात्पर्यग्राहकत्वात्प्रयोगसाधुत्वार्थत्वाच्च तदर्थमेवोच्चरितत्वेनार्थप्रतीतीच्छयोच्चरितत्वाभावात्तद्ग्रहेपि शाब्दबोधस्येष्टत्वात्समभिव्याहाराभावाच्च न तद्ग्रहस्य हेतुत्वमित्यर्थः । **हेतुताया निराकृतत्वादिति** । अयमेति पुत्रो राज्ञः पुरुषोपसार्यतामित्यादौ राज्ञः पुरुष इति नैकं वाक्यमिति ग्रहेपि राजसंबन्धवत्पुरुषादिबोधापत्तिः योग्यत्वासत्याकाङ्क्षादेः संभवादतः समभिव्याहारज्ञानस्य स्वातन्त्र्येण हेतुत्वमाकाङ्क्षाशरीर एव वा प्रवेश्यः समभिव्याहार इति तज्ज्ञानहेतुत्वं व्यवस्थाप्य नानार्थकशाब्दस्थलानुरोधेन तात्पर्यज्ञानस्य हेतुताया आवश्यकत्वे वाक्यमिदमेतदर्थान्वितैतदर्थविषयताकबोधं जनयत्वितीच्छयोच्चरितत्वरूपस्य तादृशेच्छाविषयत्वरूपस्य वा वाक्यतात्पर्यस्य बुद्धेरेव हेतुत्वं कल्पनीयं नत्विदं पदमेतदर्थबोधेच्छयोच्चरितमितिपदतात्पर्यज्ञानस्य नानार्थकानेकपदघटितवाक्यस्थलेऽनेककारणत्वापत्तेः पदतात्पर्यस्यानेकत्वात् वाक्यप्रयोजकबुबोधयिषातिरिक्तायास्तत्तत्पदे तत्तदर्थबोधजनकत्वप्रकारकेच्छाया अप्रामाणिकत्वाच्च एतेन वाक्यस्याखण्डस्याभावेन विनिगमकाभावेन तत्तत्पदविशेष्यकतात्पर्यज्ञानस्यानेकहेतुत्वेपि न क्षतिः । तथा सत्ययमेतीत्यादौ निरुक्तैकवाक्यत्वविरहनिश्चये राजसंबन्धान्वितपुरुषबोधेच्छयोच्चरितत्वरूपतात्पर्यग्रहरूपकारणविरहादेव शाब्दबुद्धेरसंभवः सति च कथंचित्तात्पर्यग्रह एकवाक्यत्वस्य समभिव्याहारस्य वा सन्देहे व्यतिरेकनिश्चयेपि शाब्दबोधइष्ट एवेति न समभिव्याहारज्ञानं कारणं तात्पर्यघटकंवाक्यत्वं च पूर्वापरीभूतपदसंघत्वमेवेत्येवं खण्डितम् एवञ्च घटपदस्यैवैकत्वं घटश्चार्थोभवतु प्रथमाया एकत्वं घटपदस्य घटइति वा सर्वथैव घटइति वाक्यमेकत्वविषयतानिरूपितघटविषयताकबोधेच्छयोच्चरितमिति तात्पर्यज्ञानमावश्यकन्तस्य कारणत्वात् तच्चैकवाक्यताविरहग्रहकाले न स्यादेव एकवाक्यत्वस्यार्थविशेषाघटितत्वेन सामान्यस्याभावनिश्चये तात्पर्यस्यार्थविशेषघटितत्वेन विशेषस्यापि ग्रहस्यासंभवात् सति च कथंचित्तद्ग्रहेशाब्दबोधोपीष्यत एवेति न समभिव्याहारज्ञानस्य कारणत्वं विभक्त्यर्थकत्वपक्षेपीत्यादायः ।

विभक्तिधर्मिकस्य च संख्याप्रकारकान्वयबोधपरत्वज्ञानस्य हेतुता कल्पनीया । विभक्तेर्द्योतकत्वमते तु विभक्तितात्पर्यविरहेण प्रकृतिधर्मिकमेव तात्पर्यज्ञानं तादृशान्वयधीहेतुरिति लाघवमिति चेन्न । विभक्तेः संख्यावाचकताविरहेऽपि प्रकृतिविभक्त्योरानुपूर्वीज्ञानस्य तादृशान्वयबोधहेतुताया निर्विम-

---

वस्तुतस्तु तण्डुलः पचति चैत्रेणेत्यादावयं पदसंघातो न तण्डुलकर्मकपाककृतिमच्चैत्रबोधे समर्थ इति नैकं वाक्यमिति ग्रहेपि निरुक्तेच्छोच्चरितत्वग्रहसंभवान्न तस्यैकवाक्यत्वरूपत्वमविसंवादितथाविधेच्छोच्चरितत्वं यथाकथंचिद्भवति तदात्मकमुक्तासामर्थ्यनिश्चय इच्छायां विसंवादित्वग्रहेण तद्ग्रहासंभवोपपत्तेः परन्तु विवक्षिततथाविधैकवाक्यत्वसत्त्वासत्त्वग्रहाग्रहप्रयोजकविवेके विवक्षितार्थप्रतिपत्तिजननयोग्यपदसमूहत्वमेव तथाव्यवतिष्ठतइति तस्यैवैकवाक्यत्वरूपत्वमुचितम् तद्ग्रहश्च कारणस्य कारणत्वग्रहरूपः सच कार्यजननेनापेक्षितस्तद्व्यतिरेकमग्रहोपिचानुत्पादेनहिकारणत्वेन ज्ञानमेव कार्यं जनयत्यकारणत्वेन ज्ञातन्नेत्यनुभवविरोधात् किन्तु कार्यकारणसंपादने प्रवर्तमानस्य क्वचित्प्रवृत्तौ क्वचिन्निवृत्तौ च तथेतिवक्तुरेवैकवाक्यत्वतद्विरहग्रहौ स्यातां किंचित्करौ न श्रोतुरिति नास्त्येव समभिव्याहारज्ञानकारणत्वकल्पनस्यावकाशः अनुभूयतेपिच येन कदाचित्तण्डुलंपचतीतिप्राथमिकवाक्यात्तदर्थोज्ञातः कालान्तरेच गृहीताव्युत्पन्नभावादुच्चरितं तथैव वाक्यं शृण्वन् कथंचिदनेनोक्तन्न प्रकृतार्थतात्पर्येणेति स्वतः नचेदमेकवाक्यमिति परवाक्याच्चानेकवाक्यतया परिच्छिन्दन्नपि वाक्यार्थमनुभवत्येव सः प्राग्वत्संपन्नसामग्रीकत्वात् नच प्रागेकवाक्यत्वनिश्चयो विशेषः मानाभावात् तद्वाक्यात्कार्यजन्मोत्तरं प्रत्यक्षप्रवृत्तेस्तेन प्रागेव कार्यकारणभावघटितैकवाक्यत्वस्य ग्रहासंभवात् प्राथमिकत्वादेवच जनितकार्यजातीयत्वस्याप्यग्रहेणानुमानासंभवात् गुरुतरानुमितिसामग्र्या असुलभत्वाच्च तस्माद्वाक्यस्वरूपं यदर्थबोधस्वरूपयोग्यं वस्तुतस्तद्ग्रहणमव्यवधानेन पदार्थानामुपस्थितिरितिद्वयमेवाविप्रतिपन्नं शाब्दसामग्रीतिव्यवस्थितम् विप्रतिपन्नंच योग्यताज्ञानं तात्पर्यज्ञानं चेत्यतएव तात्पर्यज्ञानस्याहेतुत्वपक्षे तात्पर्यज्ञानेनैकवाक्यताविरहनिश्चयकाले निरुक्तशाब्दापत्तेर्वारणासंभवादावश्यकमेव समभिव्याहारज्ञानस्य कारणत्वमित्यपिनिरस्तम् । ननु नचेत्समभिव्याहारघटिताकाङ्क्षाज्ञानं कारणमभिमतं प्राक् अत्रच तदुक्तिर्भूयः कथं संगच्छतेइतिचेदेकपदेऽपरपदवैशिष्ट्यमात्रस्य समभिव्याहारपदार्थत्वाभिप्रायेण वस्तुतस्तज्ज्ञानस्यापि नास्त्येव कारणत्वं किन्त्वानुपूर्वीज्ञानस्यैव तथाहि नीलपर्यायचतुष्टयं घटपर्यायचतुष्टयं चाश्रित्याकाङ्क्षाज्ञानकार्यकारणभावविचारे क्रियमाणे नीलोघटइत्यादिवाक्यज्ञानानां द्वात्रिंशत्कारणतापर्यवसानम् आनुपूर्वीज्ञानानां च नीलइत्यादीनामष्टावेव कार्यतावच्छेदकं चाव्यवहितोत्तरत्वमात्रमव्यवहितोत्तरत्वविशेषित्नीलत्वावच्छिन्नविषयकशाब्दत्वमव्यवहितोत्तरत्वविशेषितनीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दत्वं वा कारणतावच्छेदकश्च संबन्धः समवायमात्रं नीलपदवृत्तिज्ञानस्यजन्योपस्थितिः सहकारिणी स्वविषयनीलपदवृत्तिज्ञानजन्योपस्थितिमत्त्वसमवायोभयसंबन्धो वा स्वीयनीलपदवृत्तिविषयतानिरूपितनीलविषयताप्रयोज्यविषयताकत्वस्वसामानाधिकरण्योभयसंबन्धेन स्वविशिष्टोपस्थितिमत्त्वमात्रं वा वृत्तित्वस्याननुगतत्वे तद्भेदेन यावान्परमतेकार्यकारणभावस्तावानेव ममापि किन्तु वृत्तिविशेषघटितोपस्थितिघटिताव्यवहितोत्तरत्वविशेषसंबन्धेन तत्तदानुपूर्वीज्ञानविशिष्टत्वस्यैव कार्यतावच्छेदकत्वं बोध्यम् । नच नीलःघटमित्यानुपूर्वीद्वयज्ञानवतां कुतोननीलाभेदान्वयबोधः प्रत्येकं द्वयोरपिकारणत्वाद्विशिष्टज्ञानकारणतामतेतु तादृशविशिष्टज्ञानस्याकारणत्वात्कारणत्वेन क्लृप्तयोर्नीलोघटोनीलं घटमित्याकारकज्ञानयोरभावादितिवाच्यम् तन्मतेपि व्यभिचारवारणाय स्वस्वाव्यवहितोत्तरत्वावच्छिन्नं प्रत्येव विशिष्टज्ञानानां कारणतायावाच्यत्वेनापाद्यमानशाब्दबोधस्य तदनुत्तरतया तत्र तादृशकारणविरहस्याकिंचित्करत्वेपि तत्तद्विशिष्टज्ञानाव्यवहितोत्तराभेदान्वयबोधस्यैव प्रसिद्धत्वेन तत्तज्ज्ञानघटितैव सामग्री फलव्याप्यत्वेनक्लृप्ता नतु नीलोघटमितिज्ञानघटितापि काचित्सामग्रीति वस्तुतः सामग्र्यभावान्नतत्रापत्तिरितिवाचोयुक्तिः परेषामिवास्माकमपि नीलइतिज्ञानाव्यवहितोत्तरश्चान्वयबोधो घटःकलशइत्यादिज्ञानाव्यवहितोत्तरत्वेनैव घटमितिज्ञानाव्यवहितोत्तरश्च नीलंकृष्णमित्यादिज्ञानाव्यवहितोत्तरत्वेनैव क्लृप्तइतिनीलइतिघटइतिज्ञानद्वयादिघटिता नीलमितिघटमितिज्ञानद्वयादिघटितैव च सामग्रीफलव्याप्यत्वेन क्लृप्तेति नीलःघटमित्यत्रक्लृप्तफलोपधायकसामग्र्यभावान्नापत्तिरित्यस्तिवाचोयुक्तिः युज्यतेचैतत् यत्कार्यस्ययावत्कारणकार्यतावच्छेदकाक्रान्तत्वं तावत्कारणसद्भावादेव तदुत्पत्तिर्युक्तेतिनीलइतिज्ञानाव्यवहितोत्तरशाब्दमात्रस्य च घटइतिकलशइत्यादिज्ञानानांयस्यकस्यचित्कार्यतावच्छेदकेन तत्तदव्यवहितोत्तरत्वेनाक्रान्ततया तेषामन्यतमाभावे तस्योत्पत्तेरयुक्तत्वात्कार्यतावच्छेदकेभूक्तेपूत्तरस्यैव तत्त्वं युक्तिमत् पूर्वकल्पयोः पदार्थद्वयसंसर्गभानस्यानियम्यत्वप्रसंगात् शोभनस्तण्डुलंपचति चैत्रइतिवाक्योत्तरशाब्दबुद्धेः शोभनइतिज्ञानाव्यवहितोत्तरत्वात्तण्डुलमितिज्ञानाव्यवहितोत्तरत्वाच्च तदुभयज्ञानघटितसामग्र्युत्तरशाब्दबोधस्य चैत्रशोभनतादात्म्यावगाहित्ववच्छोभनतण्डुलतादात्म्यावगाहित्वस्यापि प्रसंगाच्च तदुभयसंसर्गभानस्य तदुभयोपस्थितौ योग्यताज्ञानेऽयोग्यत्वनिश्चयविरहे वा तत्तदुपस्थापकतत्तदानुपूर्वीज्ञानसहकृत एव वक्तव्यत्वात्प्रकृतेपि तत्सम्पत्तेर्विद्यमानत्वात् उत्तरकल्पे च शोभनाभिन्नतण्डुलशाब्दबुद्धेर्नियमेन तण्डुलमितिशोभनमित्यादिज्ञानद्वयस्य शोभनइतितण्डुलइत्यादिज्ञानद्वयस्यैव च कार्यत्वावच्छेदकाक्रान्तत्वात्तदुभयैकतरघटिताया अपि सामग्र्या अभावेन प्रयोजकाभावाच्छोभनतण्डुलतादात्म्यावगाहित्वप्रसंगासंभवात् शोभनचैत्रतादात्म्यावगाहित्वप्रयोजिकायाः शोभनइतिचैत्रइतिज्ञानद्वयघटितसामग्र्याः सत्त्वेन तत्संपत्तिसंभवाच्च । वस्तुतस्तु नीलइत्यानुपूर्वी-

क्तिकादिपदज्ञानादन्वयबोधवारणायावश्यकल्पनीयतया संख्यावाचकप्रकृतेरिव तदवाचकविभक्तेरपि संख्यान्वयबोधकत्वप्रकारकेच्छाविषयत्वरूपतादृशबोधपरत्वसंभवेन विभक्तिधर्मिकतज्ज्ञानहेतुताया विनिगमनाविरहेणावश्यकत्वात् । अथ स्वादीनां संख्यावाचकत्वकल्पनापेक्षया प्रकृतेस्तत्र

---

विषयकत्वेसतिघटइत्यानुपूर्वीज्ञानत्वेनैकं कारणत्वंकल्पनीयं तत्र यद्यपि षोडशकार्यकारणभावाः प्रसज्यन्ते तथापि शाब्दसामग्रीप्रतिबन्धकतास्थले ज्ञानद्वयस्य सामग्र्यां प्रवेशे विशेष्यविशेषणभावविनिगमनाविरहप्रयुक्तप्रतिबन्धकताबाहुल्यस्य न प्रसंगः नचव्यासज्यवृत्त्यवच्छेदकत्वास्वीकारपक्ष एकविशेषितापरस्यैवावच्छेदकत्वस्य वाच्यतया विशेष्यविशेषणभावव्यत्यासात्तवपक्षे द्वात्रिंशतस्तस्यप्रसंगइतिवाच्यम् स्वन्तनीलपदविशिष्टघटपदज्ञानस्याव्यवहितोत्तरत्वाव्यवहितपूर्वत्वरूपसंवन्धद्वयभेदाद्वैविध्यं तथैव स्वन्तघटपदविशिष्टस्वन्तनीलपदज्ञानस्यद्वैविध्यमिति विषयत्वविशेष्यविशेषणभाववैपरीत्यप्रयुक्तं यत्रहि तवाष्टौ तत्र ममतु द्वैविध्यमेव । नच संवन्धस्यान्यतरत्वेनैव प्रवेशइति वाच्यमव्यवहितोत्तरत्वत्वादिनातदवगाहिज्ञानासंग्रहापत्तेः अन्यतरनिष्ठत्वेन तत्प्रवेशस्यकालिकत्वादिना तदवगाहिज्ञानसंग्राहकत्वेन वक्तुमशक्यत्वात् अन्यतरत्वेन संसर्गावगाहिज्ञानस्यापि कारणत्वस्यात्रानुभविकत्वेन तद्घटितस्यापि कारणत्वचतुष्टयस्य स्यादप्यधिकस्य प्रवेशइति । अथ सांसर्गिकविषयताया मध्यपातितया स्वन्तनीलविषयतानिरूपिताव्यवहितोत्तरत्वत्वावच्छिन्नसांसर्गिकविषयतानिरूपितस्वन्तघटपदविषयताकज्ञानत्वादिरूपेण त्रितयमेव कारणत्वमिति चेत्सत्यम् तथापि तव गुरुधर्मावच्छिन्नषट्कारणत्वानि ममतु लघुधर्मावच्छिन्नं द्वयमेवमूलभूतं वृद्धिचिन्तायां तु कियदाधिक्यमिति स्वयमेवविचारणीयमेवमेव च तण्डुलंपचतिचैत्रइत्यादिस्थलेपि च कारणत्वं निर्वाच्यमत्रचव्यवधानकृतोदोषआसत्त्यैवपरिहरणीयः तत्तत्पदजन्यपदार्थोपस्थितीनां ह्येकत्रसमाजे संपन्ने पदानि व्यवधानेनाव्यवधानेनतदुभयौदासीन्येन वा ज्ञायन्तान्न ततः किंचिदपि हीयते कारणानां व्यापारसंमिलनमेवहिसंमिलनम् कारणतावच्छेदकसंवन्धपक्षेपि तृतीयएवाभ्यर्हितः शाब्दसामग्रीप्रतिवन्धकतालाघवस्य संभवात् उपस्थितेः स्वातन्त्र्येणकारणत्वेतदाधिक्यात् प्रतिबन्धकतायाः सामग्र्यामधिकपदार्थप्रवेशे विशेष्यविशेषणभावव्यत्यासप्रयुक्ताधिक्यस्य दुर्वारत्वात् यदि तस्याः कारणताग्राहकःस्वातन्त्र्येणान्वयव्यतिरेकग्रहस्स्यादानुभविकस्तदाभ्युपगम्यतांकारणत्वं न नोस्तिविद्वेषःसंबन्धविषयत्वेनापि हि तस्य लब्धपदत्वेविशेषणज्ञानकारणतापरिच्छेदकत्वेनैव वाक्तार्थत्वे मास्त्वेदवाकारणत्वं व्यापारकारणतालोपविभीषिका तु लाघवानुभवदृढीकृतसाहसान्प्रतिन किंचित्करीत्यलमत्रप्रसंगागतविचारवाहुल्येन । **आवश्यकत्वादिति** । ननु तात्पर्यज्ञानस्य कारणत्वएवेदंसंभवति तत्रैव न मानमिति चेदत्रप्राञ्चः सैन्धवमानयेत्यादिनानार्थस्थलेलवणाश्वयोरुपस्थितावप्येकस्यैव कस्यचिदर्थस्य शाब्दबोधविषयत्वमित्यत्र नियामकं किंचित्कल्पनीयं तदेवच तात्पर्यं तज्ज्ञानस्याकारणत्वे तस्य नियामकत्वासंभवात् तत्र तात्पर्यज्ञानंकारणम् नचनियमएवमानाभावः शब्दश्रवणानन्तरंनियतार्थगोचरप्रवृत्तेरेवमानत्वात् शब्दस्यच तदर्थत्वात् यत्रार्थेप्रवृत्तिस्तस्यैवहिशब्दव्यापारगोचरत्वमुचितम् शब्दस्य चान्वबोधादन्योस्तिव्यापारः । नचस्मृतिर्भवत्यसाधारिणी संस्कारोद्बोधकसत्त्वनियतोत्पत्तेस्तस्याअसाधारणत्वासंभवात् संयोगविप्रयोगादिज्ञानानांनियामकत्वस्यादृष्टचरकल्पनाप्रसंगेनासंभवान्नहिसंस्कारोद्बोधकसमवधानेस्मृतेर्विलम्बः क्वापिदृष्टः तस्मात्संयोगादिग्राहिततात्पर्येणनियन्त्रितोबोधएवतथावाच्यो येनप्रवृत्तिनियमोपपत्तिः किंचान्यार्थपरत्वज्ञाने तदर्थबोधानुदयस्यसर्वानुभवसिद्धत्वात्तदर्थबोधेऽन्यार्थपरत्वज्ञानस्यप्रतिबन्धकत्वेतदभावस्यकारणत्वेच गौरवात्तदर्थतात्पर्यज्ञानस्यैवहेतुत्वंवाच्यम् नचतत्कारणप्रकरणज्ञानस्यैव कारणत्वमितिवाच्यम् प्रकरणादीनामनेकत्वेनानेककारणत्वापातात् नचैवमपिनानार्थस्थलएवास्तुतत्कारणमितिवाच्यम् । यद्विशेषयोरितिन्यायेनसर्वत्रतत्सिद्धेरित्याहुः नव्यास्त्वेके तात्पर्यज्ञानस्यकारणत्वेपिसैन्धवमानयेतिवाक्यत्वावच्छिन्नधर्मिकलवणाद्यर्थपरत्वज्ञानत्वेन न कारणत्वमवच्छेदकावच्छेदेनतद्ग्रहस्यनियमेनभ्रमत्वात् विशेषदर्शिनामसंभवात्सामानाधिकरण्येनग्रहस्येदंवाक्यंनलवणपरमितिविग्रहेपिसंभवेनतदानीमपितच्छाब्दबोधापत्तेः किंत्विदं वाक्यमेतत्परमितिज्ञानत्वेनैवकारणत्वंवाच्यं तच्च तत्तद्वाक्यव्यक्तिभेदेनभिन्नमितितत्कारणीभूतप्रकरणादिव्यक्तेरेवतत्वमुचितमावश्यकत्वाद्गौरवाभावात् प्रत्युत तात्पर्यज्ञानकारणत्वएवनियमेनतत्कल्पनेनक्षणविलम्बकल्पनेनचगौरवप्रसंगादितितात्पर्यज्ञानन्न कारणमन्यार्थपरत्वग्रहस्थलेतदर्थनिस्तात्पर्यकत्वग्रहस्थलेचानिष्टनिवारकतयोरीक्रियमाणतात्पर्यग्रहकारणप्रकरणादिग्रहव्यक्तिविलम्बाभावाभ्यामेवास्माकमपिशाब्दविलम्बानुत्पत्त्योरुपपत्तिसंभवइतिवदन्ति । नचात्रपक्षेप्रकृतग्रन्थासंगतिरितिवाच्यम् प्रकृतग्रन्थस्यविभक्तिसंख्यावाचकत्वमतेऽधिककारणत्वाभावएवमुख्यतात्पर्यात्तस्यचात्रपक्षेसर्वथैवनिर्वाहात् । परे पुनस्तात्पर्यज्ञानस्य कारणत्वे मूर्खशुकाद्युच्चरितवाक्यस्थलेशाब्दानुपपत्तिः नचशिक्षकतात्पर्यज्ञानान्निर्वाहः प्रत्युच्चारणंवाक्यभेदात् नचानुपूर्व्यैक्याददोषः तथासति चैत्रगृहीतलवणतात्पर्यकशिक्षकपुरुषीयसैन्धवमानयेतिवाक्यमूलकगमनावसरप्रयुक्तमैत्रीयसैन्धवमानयेतिवाक्ये लवणतात्पर्याभावनिश्चयेपि स्मृतलवणतात्पर्यस्यचैत्रस्यलवणशाब्दवोधापत्तेस्तवदुरुद्धरत्वात्किञ्चाप्राकरणिकार्थस्यसर्वथैवानवगमे सुरभिमांसंभक्षयेतिवाक्यश्रवणानन्तरमुपहासाद्यनुपपत्तिः व्युत्पन्नचैत्रनिर्णीतैकार्थशक्तिग्रहविरहपुरुषोच्चरितघुणाक्षरन्यायसम्पन्नश्लिष्टवाक्याज्जाततदर्थतात्पर्यविरहग्रहस्यापि चैत्रस्य तदर्थग्रहजनितानन्दप्रशंसाविस्मयादीनामन्यथानोपपत्तिः श्लिष्टार्थान्तरध्वनिनिर्वाहाय तादृशकाव्ये सहृदयकविसंरम्भानुपपत्तिश्च । नचतत्रमानसाद्युक्तिजाद्वाबोधान्निर्वाहइतिवाच्यं नियमेनतादृ-

**लक्षणैवोचिता । शक्यलक्ष्ययोः परस्परमन्वयोपगमे क्षतिविरहात् । प्रथमाविभक्तेः कुत्रापि शक्तेरक्लृप्ततया तस्याः शक्यसम्बन्धरूपा लक्षणा न संभवति । द्वितीयादेः कर्मत्वादौ शक्तत्वेऽपि तादृशविभक्तेस्तत्समभिव्याहृतप्रकृतेर्वा संख्यायां लक्षणा इत्यत्र विनिगमकं दुर्लभम् न चैकत्वाद्यन्वयबोधे घटपदादिज्ञानजन्योपस्थितित्वेनानन्तहेतुताकल्पनमपेक्ष्य स्वादिपदज्ञानजन्यतदुपस्थितित्वेन कतिपयहेतुताकल्पनायां लाघवात्कतिपयशक्तिकल्पने गौरवमकिंचित्करम् सामान्यतः पदवृत्तिज्ञानजन्यतदुपस्थितित्वेनैककारणताकल्पनन्तु न सम्यक् निर्विभक्तिककुम्भपदादितः संख्योपस्थितौ तदगृहीतवृत्तिकघटादिपदे तत्तद्विभक्त्यन्तत्वज्ञानवतः पुंसो घटादौ संख्यान्वयबोधप्रसङ्गात् घटपटादिज्ञानजन्यैकत्वाद्युपस्थितित्वेनैकत्वादिविषयकशाब्दबोधहेतुतां कल्पयित्वा विभक्तिघटादिपदानुपूर्वीज्ञानतादृशोपस्थित्योः परस्परसहकारेण फलजनकताया अवश्याभ्युपेयत्वादिति ज:**

---

शार्थप्रतिपत्तिस्वीकारेगौरवमात्रफलकस्य तात्पर्यज्ञानकारणत्वस्य शपथमात्रनिर्णेयक्षणविलम्बस्य मानसादिसामग्र्याश्चकल्पनवाचोयुक्तिरुचितावभासेततदन्तेवासिनमृते कस्यविचारकुशलस्य तस्मात्प्राकरणिकस्याप्राकरणिकस्यच सर्वस्यार्थस्यभवत्येवशाब्दबोध इति न तत्र तात्पर्यज्ञानंकारणं किन्तु प्रामाणिकत्वाप्रामाणिकत्वनिर्णये तदुपयोगि यस्यहि वाक्यस्य तात्पर्यविषयीभूतोर्थो न बाधितस्तत्प्रमाणमन्यदप्रमाणमतएवच प्रामाणिकत्वग्रहात्प्रवर्त्तकाभिप्रायग्रहायत्तप्रवृत्तिनियमस्यापिनिर्वाहः । एवं शाब्दसामग्रीप्रतिबन्धकतायामपि भवतिलाघवमेवमेतस्माद्वाक्याच्छ्रुतोयमर्थोऽत्राप्यस्ति ते तात्पर्यन्नवेत्यादिवाचोयुक्तिरप्यक्लेशेन भवत्युपपादितेति प्राहुः । **लक्षणैवोचितेति** । क्लृप्तशक्त्यावाक्यार्थबोधनिर्वाहे सति च तात्पर्यानवधारणे लक्षणाया अनौचित्यम् । लक्षणयावाशक्तिकल्पनया वा वाक्यार्थबोधे उपपादनीये शक्तिःकल्पनीया तस्याउपस्थितिद्वाराशाब्दानुकूलज्ञानविषयत्वंचेति तदपेक्षया क्लृप्तशक्यार्थसंबन्धरूपायालक्षणायाउपस्थितिद्वाराशाब्दानुकूलज्ञानविषयत्वकल्पने लाघवमितितस्यानानौचित्यमिति भावः । **क्षतिविरहादिति** । नचवृत्तिद्वयोपस्थापितार्थयोरेकशब्दस्य शाब्दमतौ भाने अत्र घटपटौस्तइति वाक्यविषये घटौस्तइतिवापटौस्तइतिवावाक्यं कदाचित्प्रयुक्तं नायुक्तंभवेदितिवाच्यमेकवृत्त्योपस्थापितार्थयोरप्यन्वयस्वीकारेहरिरित्यस्याश्वाधिष्ठितसप्ताश्वपरस्ययुक्तत्वप्रसंगेसत्यप्याकाङ्क्षावैचित्र्येणैवयथाक्वचित्तत्स्वीक्रियते तथैवाकाङ्क्षावैचित्र्येणैवप्रकृतेऽपितत्स्वीकारेक्षतिविरहात् । स्वीकृतविचित्राकाङ्क्षाया अन्यत्राभावेनानिष्टप्रसञ्जकाभावादिति भावः । ननु लक्षणापिप्रथमाया एवास्तु न तत्र युगपद्वृत्तिद्वयप्रसंगो नवात्यन्तपारार्थ्यप्रसंगोऽपि कस्यचित्पदस्येत्यतआह । **प्रथमाविभक्तेरिति । अक्लृप्ततयेति** । इदंच विशेषणविभक्तेरभेदार्थकत्वाभावपक्षे अभेदार्थकतामते तु विशेषणविभक्तित्वाद्यग्रहे सुत्वादिमात्रग्रहेऽपि शाब्दबोधोपपत्तये सुत्वादिनैव शक्तत्वस्य वाच्यत्वाद्विशेष्यविभक्तेरपिशक्तिर्दुर्वारैव । तादात्म्याप्रतीतिश्च ततः प्रतियोग्युपस्थापकपदाभावान्निष्प्रतियोगिकस्य तस्याव्यावर्त्तकत्वेनाबुभुत्सितत्वादितिबोध्यम् । **कर्मत्वादौशक्तत्वेपीति** । यथेयमुक्तिः कथंचित्संगच्छते तथोक्तमधस्तात् । **लक्षणेत्यत्रविनिगमकंदुर्लभमिति** । नच लक्षणाशक्यसंबन्धात्मिका साच युगपदेवास्तिद्वयोरपीतिकथं तत्रविकल्पावकाश इतिवाच्यं गृह्यतइतिशेषात् तथाच घटमित्यादौ एकतरलक्षणाग्रहोत्पत्तिप्रतिबन्धकविशेषकल्पनस्याप्रामाणिकत्वात् विनिगमकाभावादुभयलक्षणाग्रहध्रौव्ये तत्रैकत्वोपस्थितेः क्लृप्तया घटपदलक्षणाग्रहजन्यैकत्वोपस्थितित्वेन हेतुतयैव निर्वाहेऽमादिलक्षणाग्रहजन्योपस्थितित्वेन हेतुत्वं न कल्पनीयं यद्यमादिलक्षणाग्रहमात्रस्योत्पत्तौ स्याद्विनिगमकं तदा तत्रैकत्वशाब्दबोधनिर्वाहायामादिपदलक्षणाजन्योपस्थितित्वेन हेतुत्वं दुर्वारं स्यात्स्याच्च विभक्तेर्न संख्याबोधकत्वमपि तु तात्पर्यग्राहकत्वमेवेत्यभ्युपगतपक्षस्यहानिस्तत्रास्तीतिभावः । यत्तुलक्षणेति । शक्यसंबन्धात्मिकावृत्तिरित्यर्थः । वृत्तित्वं च शाब्दबोधानुकूलसंबन्धत्वम् । तथाच प्रथमास्थले यथाप्रातिपदिकलक्षणायाएववृत्तित्वे विशेषदर्शिनां प्रथमालक्षणाग्रहासम्भवोविनिगमकम् तत्स्थलेविभक्तिलक्षणाग्रहविरहस्योभयमतसिद्धत्वेन प्रातिपदिकलक्षणाग्रहस्य हेतुताया अवर्जनीयत्वात् प्रातिपदिकलक्षणाग्रहविरहस्थलस्यचोभयवादिसिद्धत्वाभावात् प्रथमालक्षणाभ्रमस्थलेपि प्रातिपदिकलक्षणाग्रहसंभवात् । नैवं द्वितीयादिस्थले तत्र प्रातिपदिकलक्षणाग्रहस्येवामादिलक्षणाग्रहस्यापिविशेषदर्शिनांसंभवात् प्रतिबन्धकवशाच्चोभयोरपि परस्परविविक्तस्थलस्य हेतुत्वसाधकस्य संभवात् एवंच द्वितीयादिस्थलेचोभयस्य बोधकत्वेपि प्रथमास्थले प्रातिपदिकमात्रंबोधकं विभक्तिस्तु तात्पर्यग्राहिकैवेतिभाव इतिव्याख्यानं तन्नातिमनोरमम् अप्रामाणिकप्रतिबन्धककल्पनासद्भावात् अमा[illegible]गायाः सामानाधिकरण्यात्मकगुरुसंबन्धघटितत्वेन साक्षात्संबन्धात्मकप्रातिपदिकलक्षणाया लाघवस्य विनिगमकस्य सद्भावाच्च । नच संबन्धत्वेनैवविषयतायाः करणतावच्छेदकत्वाद्गौरवमकिंचित्करमितिवाच्यम् अधिकपदार्थघटितसम्बन्धस्यलक्षणात्वेतच्छाब्दबोधप्रयोजकतायाअधिकपदार्थे कल्पनीयतयागौरवात् तात्पर्यनिर्णयस्थलएवतद्गौरवस्याकिंचित्करत्वात् । किञ्चविभक्तिमात्रसंख्याद्योतकत्वोपक्रमे प्रथमामात्रस्य तद्व्यवस्थापने हि सन्दर्भविरोधः शक्तत्वेपीत्यपिस्वारस्यस्यापिहि न सामञ्जस्यम् एवं घटःप्रमेयइत्यादिस्थलोपदर्शितावश्यकताकहेतुभावायाः प्रकृतिजन्यैकत्वोपस्थितेर्विलम्बेन शाब्दविलम्बो युज्यते नत्वतथाभूतायाः प्रत्ययजन्योपस्थितेरिति प्रत्ययजन्यैकत्वो-

च्यम् । घटादिपदस्यैकत्वादौ लक्षणाग्रहणसत्वे घटः प्रमेय इत्यादिवाक्यादेकत्वं प्रमेयमित्याद्यन्वयबोधस्य सर्वसंमततया तदनुरोधेनैकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितित्वेन हेतुतायाः सर्वसंमतत्वात् । मैवम् यादृशयादृशपदानां लक्षणया एकत्वादिशाब्दधीजनकत्वं नोभयवादिसिद्धं तादृशानन्तपदज्ञानजन्यैकत्वाद्युपस्थितीनां तच्छाब्दहेतुत्वकल्पनं प्रकृतेः संख्यावाचकतावादिनामधिकमिति तत्कल्पनापेक्षया चाल्पतरस्वादिपदजन्यैकत्वाद्युपस्थितिहेतुताकल्पनमेव लाघवम् । एतेन संख्याविशेषावच्छिन्नघटादिर्लक्षणया प्रकृतेरर्थः न तु संख्याविभक्त्यर्थः शाब्दबोधे विभक्तिजन्यसंख्योपस्थितिहेतुताकल्पनाधिक्येन गौरवात् । घटादिपदस्यैकत्वादिविशिष्टघटादौ लक्षणाग्रहदशायां सर्वमतएव तज्जन्यविशिष्टविषयकोपस्थित्या विशिष्टविषयकशाब्दधीजननात्तथाविधोपस्थितिहेतुतायाः सर्वानुमतत्वात् । पदान्तरासमभिव्याहृताद्घट इत्यादिपदादेकत्वादिविशिष्टघटादिशाब्दबोधस्त्वलीक एव । तद्विषयकस्मरणस्य तत्रोपगमात् । तथाचोक्तं, सर्वं हि वाक्यं क्रियायां परिसमाप्यते इत्यपि निरस्तम् । यादृशपदानां लक्षणया एकत्वादिविशिष्टस्वार्थबोधहेतुत्वं नोभयवादिसिद्धं तादृशानन्तपदजन्यविशिष्टोपस्थितीनां शाब्दधीहेतुताकल्पनमपेक्ष्य विभक्तिजन्यसंख्योपस्थितीनामल्पानां तत्कल्पने लाघवात् । इदं पुनरिहावधेयम् विभक्तेः संख्या-

---

पस्थितिमात्रसत्त्वसंभावनास्थलेशाब्दविलम्बानुत्पत्त्यादेर्वक्तुंशक्यत्वान्नसंभवत्येवामादिजन्यैकत्वोपस्थितिहेतुत्वमिति ॥ **यादृशयादृशपदानामित्यादि** । अथ यादृशयादृशेत्यादिना संख्योपस्थापकलक्षणाग्रहविधुरतया संभावितमात्रं पदकदम्बं नतु किंचित्प्रदर्शितं तथाभूतमतः साच संभावनाघटःप्रमेयइतिस्थलवत्पुरुषकालयोरानन्त्यान्निखिलानुपूर्व्यवच्छिन्नसंख्यालक्षकत्वसंभावनया विपरीतया निरुद्धप्रसरैवस्यात्स्याद्वोपक्रान्तकल्पनासाहायकाचरणप्रच्याविता न यावत्संभावितपदानामुक्तघटादिपदतोवैलक्षण्यं प्रदर्श्यते नच तद्दर्शयितुं शक्यमित्युक्ताभिधानस्यासङ्गतिरितिचेत्पुरुषकालवच्छब्दस्याप्यानन्त्यात् केचन शब्दाः शक्तिमात्रेण व्यवहारतां केषांचिदेव वक्तृश्रोतॄणांश्रुतिपथगता नेतरेषामिति संभावनायाः प्रतिपक्षसंभावनानभिभूताय संभवात्संगतिरुक्ताभिधानस्येति गृहाण । यद्वा आधुनिकसंकेतिताः प्रकृतिप्रत्ययविभागरहिताः केचनशब्दा गृहीतताशसंकेतद्वित्रादिपुरुषमात्रगोचरास्तादृशास्संभाव्यन्ते । नच तत्र लक्षणासंभवः तन्मूलस्य पुरुषाभिप्रायस्य तत्प्रांकूलस्यैव ग्रहणादिति संगतिरित्यत्र सन्तोष्टव्यम् । येषामेकशब्दस्य युगपद्वृत्तिद्वये विमतेः शाब्दबोधपूर्वं वृत्तिद्वयजन्योपस्थितिसद्भावसंपादनक्लेशवैफल्यमतेश्च विशिष्टे लक्षणासंप्रतिपत्तिः तन्मतमुपन्यस्य दूषयति—**एतेनेत्यादिना** । ननु घटइत्यत्रघटपदस्यैकत्वविशिष्टलक्षकत्वे संप्रतिपन्नशाब्दबोधानुपपत्तिः तस्यपदार्थद्वयसंसर्गावगाहित्वनियमादतोघटपदाद्घटोपस्थितिरेकवचनाच्च संख्योपस्थितिः स्वीकरणीयेति विभक्तिजन्योपस्थितिकारणताक्लृप्तैवेति तवैवगौरवमतआह । **पदान्तरासमभिव्याहृतेत्यादि** । तथाच तत्र संख्याविशिष्टप्रतिपत्तिश्चेत्संप्रतिपन्ना कस्यचिल्लक्षणासंबन्धग्रहरूपोद्बोधकास्मृतिरेव शाब्दत्वेन तदनुभवश्च शब्दसमनन्तरजन्मरूपदोषजत्वाच्छाब्दत्वांशे भ्रमएवेति भावः । एतेनेत्यनेनातिदिष्टं दोषं विवृणोति । **यादृशपदानामिति । इदं पुनरिहावधेयमिति** । प्रदर्शितलाघवस्यानुपदाभिधीयमानगौरवेणाकिंचित्करत्वे विभक्तेः संख्यायां शक्तिर्नसिध्यति गौरवाद्विवक्षितप्रतिपत्तेर्लक्षणयापि संभवादिति भावः । इदन्तुचिन्त्यते शक्तिग्राहकप्रमाणानि शक्ततावच्छेदकशक्यतावच्छेदकं लाघवगौरवप्रतिसंधानाभ्यामुपस्थितिहेतुत्वतदवच्छेदकत्वलाघवगौरवग्रहाभ्यां च सहकृतान्यर्थविशेषे शब्दविशेषस्य शक्तिपरिच्छिन्दन्ति नेतराणि परिकरीकुर्वन्ति शक्ततावच्छेदकशक्यतावच्छेदकयोः शरीरघटकत्वाद्वृत्तिकल्पनस्योपस्थित्यर्थत्वेनोपस्थितेश्चफलत्वाच्छक्तिकल्पनान्तरंगत्वात्तेषामेवोपस्थितत्वध्रौव्येण तल्लाघवगौरवग्रहस्यापेक्षणीयत्वादन्यस्य तदानीमनुपस्थितत्वेन तल्लाघवगौरवस्यापेक्षणीयत्वाच्च घटत्वापेक्षया कार्यान्वितघटत्वस्यशक्यतावच्छेदकस्यैव गुरुत्वादावापोद्वापाभ्यां प्राग्गृहीतापि शक्यतावच्छेदकतार्थवादस्थले कार्यत्वव्यभिचारदर्शनादावापोद्वापयोः क्षीणबलत्वेन शक्यतावच्छेदकगौरवग्रहेणैव त्याज्यते नान्येन 'व्यवस्थितायां च शक्तौपश्चाज्जायमानापि यतः कुतश्चिद्गौरवबुद्धिः फलमुखगौरवविषयकत्वादकिंचित्करीतादृशलाघवबुद्धिश्च परिपोषिकासिद्धस्यान्यथाभावकरणे तर्कशतस्याप्यसामर्थ्यात् यथा शब्दस्यानित्यत्वे साधकप्रमाणैः सिद्धे पश्चाज्जायमानापितद्ध्वंसतत्प्रागभावानन्त्यकल्पनागौरवमतिरकिंचित्करी कथमन्यथा शब्दत्वावच्छिन्नं प्रति वायुविशेषादीनां कारणत्वापेक्षया शब्दप्रत्यक्षत्वावच्छिन्नंप्रतिकारणत्वे गौरवेणसत्तर्काणीति बलवन्त्यनित्यत्वसाधकमानानि नतु तावदानन्त्यकल्पनागौरवेण महत्तरेणापि नित्यत्वसाधकानि प्रमाणानीति एवंच घटआनीयतां पटआनीयतां घटावानय पटावानय तण्डुलान् पच यवान् पच तण्डुलैर्ब्राह्मणाँस्तोषय यवैस्तोषयेत्यादिभिरावापोद्वापिभिर्व्यवहारैर्द्व्येकयोर्द्विवचनैकवचने बहुषुबहुवचनं कर्मणिद्वितीया कर्तृकरणयोस्तृतीयेत्या-

बोधकत्वे समानविषयकानुमित्यादिकं प्रति शाब्दसामग्रीप्रतिबन्धकतायां या प्रातिपदिकजन्या घटाद्युपस्थितिर्या च विभक्तिजन्या संख्योपस्थितिः प्रवेश्या तयोश्चमिथोविशेष्यविशेषणभावे विनिगमनाविरहात्प्रतिबन्धकताबाहुल्यम् । प्रकृतेर्विशिष्टलाक्षणिकत्वे तु तदुभयस्थलीयविशिष्टविषयकोपस्थितिरेकैव सामग्र्यामन्तर्भवति इति लाघवम् । न च विशिष्टविषयकोपस्थितेरपि एकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशेष्यतानिरूपितैकत्वादिविषयताशालित्वेन वा प्रवेश इति विनिगमनाविरहात्साम्यमिति वाच्यम् । भवन्मते योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कं मन्मते तत्र योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं दर्शितोभयरूपेण वैशिष्ट्यं निवेश्य तदुभयं प्रत्येकं तादृशरूपद्वयावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यं निवेश्य च द्वयमिति तच्चतुष्टयमात्रमितिरीत्यास्माकमल्पतरतत्कल्पने महालाघवम् । तादृशरीत्यैव च प्रणमतीत्यादौ प्रकर्षविशिष्टनतिर्धातूनामेवार्थः प्रादयो द्योतका एव न तु प्रकर्षादिवाचका इति सर्वानुमतः पन्थाः परिष्कर्तुं शक्यते अन्यथानन्तधातुजन्यप्रकर्षादिविशिष्टतत्तत्स्वार्थोपस्थितीनां शाब्दधीजनकतामपेक्ष्य कतिपयोपसर्गाधीनप्रकर्षाद्युपस्थितीनां तज्जनकताकल्पने लाघवात् । स्वादीनामिव प्रादीनामपि वाचकता निराबाधा सिद्ध्येतेति संख्यायाश्च प्रकृत्यर्थे पर्याप्तिसंबन्धेनैव विशेषणत्वं न तु समवायादिना । तथासति एकव्यक्तिबोधपरादाकाशशब्दादपि द्विवचनबहुवचनाद्यापत्तेः । तत्तदर्थयोर्द्वित्वबहुत्वयोः समवायादिना आकाशाद्यन्वययोग्यत्वात् । न च पर्याप्तेः संसर्गत्वेऽपि तद्दोषतादवस्थ्यम् घटाकाशादौ द्वित्वादेः पर्याप्तिसत्त्वे प्रत्येकमाकाशादौ तत्पर्याप्तिर्नास्तीति वक्तुमशक्यत्वात् प्रत्येकस्योभयानतिरिक्तत्वादिति वाच्यम् । उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेरेव संसर्गतोपगमात् । आकाशत्वादिव्याप्यताया द्वित्वादिपर्याप्तावसत्त्वेनातिप्रसङ्गविरहात् । वैशिष्ट्यं

---

दिस्मृतिभिर्वाकोषैश्च शक्यतावच्छेदकादिलाघवोपदर्शितोपस्थितिकार्यकारणभावलाघवग्रहसहकृतैर्घटादिप्रातिपदिकानां घटादौ स्वार्थेकवचनादीनामेकत्वादावमादिद्वितीयादेः कर्मत्वादौ शक्तिषु परिच्छिन्नासु पश्चादुपनिपतितं प्रतिबन्धकत्वगौरवं फलमुखगौरवत्वात्प्रतिसन्धीयमानमप्यकिञ्चित्करं प्रकारतामतव्यवस्थापनावसरोक्तमपि लाघवगौरवं न स्वतः शक्तिव्यवस्थापकमपितुव्यवस्थितायाएवानुग्राहकं प्रपञ्चितं चैतत्तद्व्याख्यानावसर एव । अथोक्तव्यवस्थामतिक्रम्य पश्चादुपनिपातिभिरुक्तलाघवगौरवग्रहैर्यदिशक्तिव्यवस्थास्वीक्रियेत तदा स्वादिसमभिव्याहृतघटपदादीनामेकत्वविशिष्टघटइवामादिसमभिव्याहृतानां तेषां घटकर्मत्वादौ लक्षणां स्वीकृत्य विभक्तिमात्रस्य निरर्थकतैवोचिताङ्गीकर्त्तुम् विशिष्टोपस्थितिप्रयुक्तप्रतिबध्यप्रतिबन्धकभावलाघवग्रहेण कर्मत्वादिशक्तिग्राहकस्य दुर्बलीकरणात् नामार्थधात्वर्थयोरित्यादिनियमादपि न भेतव्यम् तत्प्रसञ्जितानिष्टवारके संसर्गतावादिदर्शिताकाङ्क्षावैचित्र्याभ्युपगमे जाग्रति नामार्थधात्वर्थयोर्न भवति साक्षादन्वयोविभक्तिग्राहितात्पर्यकविशिष्टांशकर्मत्वाद्यर्थमन्तरीकरणं विनेत्यर्थकतयाऽपि तस्य गतेः संभवात् बिभेषिचेत्ततोल्पानां विभक्तीनामेव प्रकृत्यर्थत्वेन पराभिमतविशेषितकर्मत्वादावङ्गीकुरुलक्षणाम् । तत्र प्रतिबन्धकत्वलाघवमिवानन्तानां प्रकृतीनां शक्यकल्पनालाघवमप्यधिकं भविष्यति । नच विभक्तीनामक्लृप्तशक्तिकत्वान्नैवमिति वाच्यं प्रकृतिं विना कृतस्य प्रत्ययस्य प्रत्ययं विना कृतायाः प्रकृतेरपि प्रयोगविरह दुभयवादिसंप्रतिपन्नतदुभयविविक्तस्थलाभावात् लाघवेन लक्षणानिर्वाहाय संख्यामात्रे कतिपयविभक्तीनां शक्तिकल्पनाया एव न्याय्यत्वात् विभक्त्यर्थघटितार्थेप्रकृतिलक्षणानिर्वाहाय प्रकृतिशक्तौ कल्पनीयायामनन्तशक्तिकल्पनाप्रसंगेन गौरवात् । नच प्रकृतेस्तत्रलक्षणाग्रह उभयवादिसंप्रतिपन्नशाब्दनिर्वाहाय तस्य क्लृप्तत्वमिति वाच्यं विभक्तेर्न तत्रलक्षणाग्रह इत्यत्रविनिगमकस्य दुर्लभत्वात् । नच समासस्थले लाघवेनानुपलब्धविभक्तिकतदेकदेशस्य स्वार्थबोधानुरोधेन शक्तिरावश्यिकीति वाच्यं समासोत्तरविभक्तेर्विशिष्टलक्षणयैव तदर्थस्यापि प्रतिपत्तिसंभवात् नच प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमभंगात् तत्राप्यस्ति भीः संसर्गतावादिना विभक्तेरर्थस्यैवानभ्युपगमेन तस्य मूलतएवसमुच्छेदनात् प्रकृत्यर्थत्वेन प्राक्प्रतीयमानान्वितार्थपरतया तस्य समाश्वासनीयत्वाच्च विभक्त्यर्थानुशासनानामिव प्रातिपादिकार्थानुशासनानामपि तात्पर्यग्राहकत्वोक्तेः संभवान्नतद्वैयर्थ्याप्रामाण्यप्रसंगादपि करणीया भीतिः । अस्तुवा धातूनामेव तण्डुलकर्मकपाकाद्यर्थे लक्षणा विभक्तिमात्रार्थबोध इव न तत्र तवाप्यस्ति विमतिः प्रातिपदिकानुपूर्व्यपेक्षया धात्वानुपूर्वीणामल्पत्वेन तत्रशक्तिकल्पने लाघवात् पचतीत्यादिस्थलानुरोधेन तच्छक्तेः क्लृप्तत्वात् बहुतरलाघवप्रयोजकलक्षणानुरोधेनैव वा कल्प्यत्वात् एतेन तण्डुलमित्यादिस्थलानुरोधेन कर्म-

स्य वैज्ञानिकं न तु वास्तवम् । तेन यत्र योग्यताभ्रमजन्य अत्राकाशावित्यादिवाक्यजन्यद्वित्वादिप्रकारकाकाशबोधस्तत्र विशिष्टसंसर्गाप्रसिद्धावपि न क्षतिः । द्वित्वादिपर्याप्तावन्यत्र प्रसिद्धस्याकाशत्वादिव्याप्यत्वस्य भ्रान्तेस्तत्रोपगमात् । संबन्धतावच्छेदांशे प्रकारतायां भ्रमस्य सर्वानुभवसिद्धत्वेपि व्याप्यत्वांशे भ्रमत्वस्यान्यत्रोपपादितत्वात् । नच प्रकृत्यर्थतावच्छेदक एव व्यापकतासंबन्धेन द्वित्वान्वयधीः किं नोपेयते इति वाच्यम् । घटावित्यादौ घटत्वादीनां स्वरूपत एवोपस्थिततया तत्रोक्तान्वयबोधस्यासंभवात् । स्वव्यापकीभूतोद्देश्यतावच्छेदकवत्त्वरूपपरंपराया एव

---

त्वादावेव शक्तिसिद्धिरित्यपास्तम् क्रियाकारकपदयोर्नित्यसाकाङ्क्षत्वात्कथमन्यथा केवलात् घटइत्यादिवाक्याच्छाब्दानुरोधेनैकत्वे घटे च प्रकृतिप्रत्यययोः सा न सिध्येत् उक्तंचानुपदमेव तत्र शाब्दानभ्युपगमनमस्तु वा धात्वपेक्षयापितिङानुपूर्वीणामल्पत्वेन तिङामेव विशिष्टकृत्यादौ लक्षणाअस्तुवा प्रथमान्तपदस्य मुख्यविशेष्यसमर्पकत्वात्प्रधानतया तवाप्यनुमतस्य घटकीभूतायाः प्रथमाया एव सर्वत्र तण्डुलकर्मकपाककर्तृचैत्रादौलक्षणा तदर्थंच प्रथमामात्रस्य संख्यायां शक्तिः यत्रापि क्वचिन्न प्रथमान्तन्तत्रापि तत्कल्पनं चाकार्यम् अत्र च विशिष्टोपस्थितिमूलकप्रतिबन्धकत्वलाघवस्यशक्तिलाघवस्य च परा विश्रान्तिः । नचैवमुपस्थितिमात्रेणैव कृतकृत्यतास्तु कृतं शाब्दबोधेनेतिवाच्यम् मानसेन शाब्दानुमित्यादेर्गतार्थत्वसंभवेप्याकाङ्क्षाव्याप्तिज्ञानाद्यन्वयव्यतिरेकानुविधानानुरोधाद्विलक्षणानुव्यवसायानुरोधात्सर्वत्र ज्ञानादिमानसप्रसंगवारणाय मानसत्वावच्छिन्नं प्रति कल्पनीये प्रतिबन्धकत्वे शाब्दनुमित्यन्यत्वादेः प्रतिबध्यतावच्छेदकत्वे गौरवाच्च मानसव्यतिरिक्तस्यैवताभिरेव युक्तिभिः स्मृत्यन्यस्य शाब्दस्य स्वीकरणीयत्वात् अन्विताभिधानपक्षवद्गृहीतग्रहणेपि न क्षतिः तथाविधविशिष्टस्मृतिसामग्र्याकाङ्क्षाज्ञानादिसहकृतयोपस्थितिक्षण एव शाब्दस्य स्वीकारे वा न काचिदनुपपत्तिः । उक्तलाघवसाम्राज्याद्विशिष्टवैशिष्ट्यबोधकार्यकारणभावसंकोचगौरवं नितराम्भविष्यति हि तिरस्कृतम् नचापूर्ववाक्यार्थस्थले विशिष्टलक्षणाग्रहस्यैव न संभव इति वाच्यं सजातीयद्वितीयराहित्यरूपमेकत्वं घटादौ येन घटइति वाक्यात्प्रागेव गृहीतं तस्यापि ततः शाब्दबोधस्यानुभवसिद्धतया विशिष्टे लक्षणाग्रहस्यासंभवाद्येन कर्मत्वादौ घटीयत्वं न प्रतिपन्नं घटमित्यादिपदघटितवाक्यात्प्राक् तस्यापि तच्छाब्दबोधस्यानुभवसिद्धत्वाच्च विशिष्टे लक्षणाग्रहस्यासंभवात्प्रत्येकोपस्थितिकारणतायां ध्रौव्ये प्रागुपदर्शितलाघवेन विभक्तेः संख्यादौ शक्तेः स्वीकरणीयत्वापत्तेरतोमहीयः प्रतिबन्धकत्वलाघवानुरोधेन प्रकृतेरेव लक्षणातोनियमेन विशृङ्खलतदुभयविषयणीमेकामेवस्मृतिं कल्पयित्वा व्यासज्यवृत्त्यवच्छेदकतांच स्वीकृत्योपस्थितेरेककारणत्वकल्पनया पूर्वस्थलीयशाब्दबोधनिर्वाहेणानभिमतशक्त्यनभ्युपगमनिर्वाहस्य त्वयोपपादनीयतया मयाऽपि तथैव स्वीकरणीयत्वात् अनेकपदार्थोपस्थितीनां पृथक्तया शाब्दात्प्रागेव स्थानासंभवात्समूहालम्बनताया आवश्यकत्वान्नियममात्रस्यैवाधिकस्य कल्पनात् तत्रहि गृहीतग्राहित्वप्रयुक्तकुसृष्टिकल्पनाया अपि नावकाशः किम्बहुना तवोपदर्शितलाघवमधुमत्तोविभेदितनियमनिगडोयथारुचिकल्पनाप्रसरसिन्धुरःसर्वतन्त्रनयनगरीमेवमाकुलीकुर्यादित्यलम् । **वैज्ञानिकमिति** । पर्याप्त्यंशे ज्ञाने भासमानमर्थाज्ज्ञानीयपर्याप्तिनिष्ठसंसर्गतोद्देश्यतावच्छेदकव्याप्यत्वावच्छिन्नाभनतीतियावत् । **नतु वास्तवम्** । वस्तुभूतपर्याप्तिधर्म इत्यर्थः । **अन्यत्रोपपादितत्वादिति** । संसर्गकोटौ प्रकारविशेष्यभावाभावेन प्रकारत्वघटितभ्रमत्वस्यासंभवेऽपि विशेष्यविशेषणभावस्यतत्राप्यभ्युपगमेन विशेषणत्वगर्भस्य विशेषणताविशिष्टविशेष्यताकत्वरूपस्य भ्रमत्वस्योपपादितत्वादित्यर्थः । वैशिष्ट्यञ्च स्वनिरूपितत्व स्वविशिष्टनिरूपकताधिकरणत्वाभाववद्वृत्तित्वोभयसंबन्धेन स्ववैशिष्ट्यंच स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वानवच्छेदकधर्मानवच्छिन्नत्वोभयसंबन्धेनेति । यद्वाऽन्यधर्मस्योपस्थितस्यासति विशेषादर्शनेऽन्यत्रावभासोऽन्यथाख्यातिरितिभ्रमलक्षणानुसाराद्विशेषादर्शनविशेषणोपस्थितिदोषादिघटिताभ्रमसामग्र्यवधार्यते । नच संसर्गविशेषणस्याप्युपस्थितिरितिकथं तत्र भ्रमसंभव इति शङ्कायां प्रमायामप्युपस्थितस्यैव तद्धर्मस्य तदंशे भानेन संसर्गांशे भानस्य प्रमात्वमपि न स्यात् नचेष्टापत्तिर्निर्विकल्पकातिरिक्तज्ञानस्य स्वविषयेप्रमात्वाप्रमात्वान्यतरनियमात् तदंशेविशेषणीभूयभासते तदबाधितश्च तत्रहि ज्ञानं न प्रमेति विप्रतिषिद्धमेतत्, स्यादेवं हि संसर्गस्याखण्डस्यैव भानं न विशिष्टस्य तथासति प्रतियोगित्वादीनामखण्डस्यैव संसर्गत्वेन तत्र धर्मविशेषावच्छिन्नत्वादीनामप्रामाणिकत्वापत्त्या विशेषस्य वक्तुमशक्यतया घटोनास्तीत्यत्र विशेषाभावोऽपि विषयः स्यात् एवं सामानाधिकरण्येनावच्छेदकावच्छेदेनानुमित्योरपि भेदोनस्यात् तथाच संसर्गांशे भातस्यविशेषणस्याबाधे यथाप्रमात्वं तथा तस्य बाधे भ्रमत्वमपि यथाच विशिष्टसंसर्गभानप्रयोजिकासामग्री गुणसहिता तदंशे प्रमामुत्पादयन्ती तस्य प्रकारत्वाभावेन तस्यास्तद्विशिष्टबुद्धित्वाभावाद्विशेषणज्ञानात्मकतदुपस्थितिं नापेक्षते तथा विशिष्टसंसर्गभानप्रयोजिकासामग्री दोषसहिता तदंशे भ्रान्तिमप्युत्पादयन्ती तस्यास्तद्विशिष्टबुद्धित्वाभावेन न तदुपस्थितिमपेक्षत इति तद्भ्रमसामान्यसामग्रीतद्भानप्रयोजकविशेषविशेषादर्शनदोषघटितैव नोपस्थितिघटिताप्यनुभवस्य दुरपह्नवत्वात् विशेषणस्य प्रकारत्वे हि तद्भ्रमस्य तद्विशिष्टबुद्धित्वेन विशेषणज्ञानविधयातदुपस्थितिरपेक्ष्यत इत्येवं संसर्गतावच्छेदकांशे भ्रमत्वस्योपपादितत्वादित्यर्थः । **असंभवादिति** । अन्वयितावच्छेदकरूपेणान्वय्युपस्थितेः कारणस्याभावादित्यर्थः । अथघटावित्यादौ यत्रानेकवृत्तिधर्मस्यो-

प्रकृत्यर्थे द्वित्वादेः संबन्धतास्वीकारे च व्यापकतारूपसंबन्धतावच्छेदकांशे भ्रमत्वस्यावश्यकतया उद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तेः संबन्धतोपेक्षाया निर्बीजत्वात् । अथात्रव्याप्तिर्व्यापकसामानाधिकरण्यरूपैव वाच्या, न तु तद्वदन्यावृत्तित्वरूपा, केवलान्वयिधर्मस्य प्रकृत्यर्थतावच्छेदकता यत्र तत्राप्रसिद्धेः । एवं चोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्त्यपेक्षया लघोः स्वव्यापकतादृशधर्मवत्त्वस्यैव संबन्धत्वमुचितमिति चेत्तर्हि आकाशो न द्वावित्यादिवाक्यजन्यशाब्दबोधदशायामपि आकाशावित्यादिवाक्याद् द्वित्वबोधापत्तिः । तथा हि । आकाशो न द्वावित्यादितो द्वित्वावच्छिन्नभेदः प्रतीयते । स च न स्वव्यापकाकाशत्ववत्त्वादिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकः । तादृशसंबन्धेन द्वित्ववतोऽप्रसिद्धेः । अपि तु पर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताक एव तत्काले च पर्याप्तिसंबन्धेन द्वित्वविशिष्टबुद्धिरेव प्रतिबध्यते न तूक्तपरंपरासंबन्धेन तद्विशिष्टबुद्धिरपीति । अथाकाशो न द्वावित्यादौ केवलपर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदो यत्र बोधयितुं न शक्यते । आकाशेऽप्युक्तयुक्त्या द्वित्वपर्याप्तेः सत्त्वेन तत्र तेन संबन्धेन तद्भेदस्य वक्तुमशक्यत्वात् । आकाशत्वव्याप्यपर्याप्तिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वादिमद्भेदश्चाप्रसिद्ध एवेति चेन्न । द्वित्वादिपर्याप्तेरुभयादिवृत्तिधर्मेणैवावच्छेदात् । तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन तद्भेदस्य तेनसंबन्धेन द्वित्वादिमद्भेदस्य च तद्वतिवृत्तौ बाधकाभावात् । न चैवं घटपटौ न द्वाविति प्रयोग आपद्येत । घटपटयोरपि प्रत्येकं द्वित्वावच्छिन्नभेदसत्त्वादिति वाच्यम् । द्विवचनाद्युपस्थापितद्वित्वावच्छेदेनैव द्वित्वावच्छिन्नभेदस्य बाधेन तादृशप्रयोगाभावोपपत्तेः । नञा व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदश्च उद्देश्यतावच्छेदकावच्छेदेनैव बोध्यत इति व्युत्पत्तेर्द्वित्वसामानाधिकरण्येन तदबाधस्याकिंचित्करत्वात् । न च घटत्वादेरतिप्रसक्ततया द्वित्वादिपर्याप्तेरनवच्छेदकत्वात्तदवच्छेदेन द्वित्ववद्भेदस्य भवतामप्यनुमतत्वात् प्रकृत्यर्थगतैकत्वाविवक्षायां घटो न द्वावित्यादिप्रयोगापत्तिरिति वाच्यम् । तादृशप्रयोगाभावे घटत्वादेर्द्वित्वपर्याप्तेरिव द्वित्वादिमद्भेदस्याप्यनुयोगितावच्छेदकताया अप्रामाणिकत्वात् प्रतियोगितावच्छेदकानवच्छेदकताया भेदावच्छेदकतानियतत्वासिद्धेः । अस्तु वातिप्रसक्तोऽपि घटत्वादिर्द्वित्वपर्याप्तेरवच्छेदकः घटावित्यादिप्रतीतिबलात् । वस्तुतस्तु घटत्वादेः प्रत्येकं द्वित्वपर्याप्त्यनवच्छेदकत्वेऽपि द्वित्वपर्याप्तित्वावच्छिन्नानतिप्रसक्ततया तदवच्छिन्नावच्छेदकत्वमव्याहतमेव । अथ पर्याप्त्याख्यविलक्षणसंबन्ध एवाप्रामाणिकः तत्कथं तत्संबन्धता आकाशो न द्वाविति प्रतीतिस्तु समवायसंबन्धावच्छिन्नप्रतियोगितावच्छेदकताकद्वित्वावच्छिन्नभेदविषयकैवास्ताम् आकाशादौ द्वित्वसमवायसत्त्वेपि द्वित्वादेरेवोभयादिवृत्तिधर्मानुयोगितावच्छेदकत्वोपगमात्तदनवच्छेदकाकाशत्वाद्यवच्छेदेन समवायसंबन्धेन तद्वतो भेदस्य वृत्तौ बाधकाभावादिति चेन्न । आकाशावित्यादिवाक्यजन्यशाब्दबोधस्याप्रमात्वानुपपत्त्यैव तादृशसंबन्धसिद्धेः । तादृश-

---

द्देश्यतावच्छेदकत्वं तत्र शुद्धपर्याप्तेरेवास्तु संसर्गतालाघवात् यत्रैकमात्रवृत्तिधर्मस्यानुयोगितावच्छेदकत्वं तत्रैवोक्तव्यापकत्वस्य भानमुपेयं तथाच घटावित्यादेरसङ्गतिरितिचेन्न पदार्थयोः संसर्गभानप्रयोजिकाह्याकाङ्क्षा साचेदुभयत्र तुल्या कुतः स्यात् संसर्गभाने वैषम्यं कथमन्यथा घटावित्यत्र घटत्वादेरन्वयितावच्छेदकरूपेणानुपस्थित्या तत्र द्वित्वभानासंभवेन सत्यपि लाघवे किञ्चिद्रूपेणोपस्थितआकाशत्वादावपि न द्वित्वभानं स्यात् आकाङ्क्षायां हि समानाया पदार्थसंसर्गभानवैषम्ये प्रामाण्यप्रामाण्ययोरेवमेवधारणमपि न स्यात् आकाशत्वेनेकवृत्तित्वग्रहे शुद्धपर्याप्तिसंबन्धेन तदवच्छिन्ने द्वित्वभानस्यौचित्यापत्त्याकाशानित्यस्य हि प्रामाण्यप्रसङ्गः एकमात्रघटसत्वेप्यत्र घटावित्यस्य हि प्रामाण्यप्रसङ्गति घटावित्यादावपि व्यापकत्वभानस्यावश्यकतया नासङ्गतिः । **विशिष्टपर्याप्तेरिति** । साक्षात्संबन्धस्येतिशेषः । **व्यापकसामानाधिकरण्यरूपेति** । भासमानप्रकारप्रतियोगिकत्वविशिष्टपर्याप्तिव्यापकत्वस्य तत्रासंभवेपि न क्षतिः । **लघोरिति** । [illegible]विशिष्टपर्याप्तेरप्रवेशेन लघोरित्यर्थः ॥

बुद्धेः समवायविषयकत्वे प्रमात्वनिराकरणस्य कर्तुमशक्यत्वात्। उद्देश्यतावच्छेदकव्याप्तिविशिष्टसमवायस्य संसर्गतोपगमे घटावित्यादिवाक्यस्याप्यप्रमाणतापत्तिः। समवायस्यैक्येन घटादिनिष्ठस्य द्वित्वादिसमवायस्य पटादावपि सत्त्वेन घटत्वाद्यव्याप्यत्वात्। न चोद्देश्यतावच्छेदकव्याप्यद्वित्वादिसमवायत्वेनैव संबन्धतास्तु द्वित्वादिसमवायस्य घटत्वाद्यव्याप्यत्वेपि द्वित्वादेस्तद्व्याप्यतया न घटावित्यादेरप्रमाणतेति वाच्यम् एवं सति तथाविधद्वित्वादेरेव लाघवेन द्वित्वादिसंबन्धतौचित्यात्। अथास्त्वेवमेव तावतापि पर्याप्तिसंबन्धस्य विलयादिति चेन्न द्वित्वादिस्वरूपस्यैव द्वित्वादिपर्याप्तितयाभिमतसिद्धेः। उक्तं च दीधितिकृता, पर्याप्तिश्चायमेको घट इमौ द्वावित्यादिप्रतीतिसाक्षिकः स्वरूपसंबन्धविशेष इति। समवायस्य नानात्वमते च द्वित्वादिसमवाय एव तत्पर्याप्तिर्न तु स्वरूपमतिरिक्तपदार्थौ वेत्यन्यदेतत्। यत्तु आकाशं न द्वे इत्यादिप्रतीतिवदाकाशं न द्वित्ववदिति प्रतीतेः प्रमात्वस्य वारणाय समवायेन द्वित्वादिमद्भेद आकाशत्वावच्छेदेन न स्वीकर्त्तव्यः। तथा च पर्याप्तेरविलक्षणत्वे आकाशो न द्वे इत्यादिप्रतीतेरप्यप्रमात्वापत्तिरिति। तन्न। आकाशं न द्वित्ववदिति प्रतीतौ द्वित्वसमवायावच्छिन्नभेद एव विषयः मतुपा संबन्धयुल्लेखात् न तु द्वित्वाद्यवच्छिन्नभेदः। एवं चाकाशत्वाद्यवच्छेदेन द्वित्वाद्यवच्छिन्नभेद एव स्वीकर्त्तव्यः न तु तत्संबन्धावच्छिन्नभेद इत्याकाशं न द्वे इति प्रतीतेरप्रमात्वस्याकाशं न द्वित्ववदिति प्रतीतेर्वा प्रमात्वस्य न प्रसङ्ग इति। अथोद्देश्यतावच्छेदकव्याप्यपर्याप्तेर्द्वित्वसंबन्धत्वे धवखदिरौ छिनत्तीत्यादौ उद्देश्यतावच्छेदकीभूतधवत्वखदिरत्वव्याप्यं द्वित्वादिद्वयमेव प्रत्येतव्यम् न तु धवखदिरादिपर्याप्तद्वित्वादिकं तथा चैकैकधवखदिरादितात्पर्येण तथा प्रयोगानुपपत्तिरिति द्वित्वान्वयितावच्छेदकमपेक्षाबुद्धिविशेषविषयत्वादिरूपमुभयादिनिष्ठं साहित्यं द्वन्द्वसमासार्थो वाच्यः तथा च मीमांसकमतप्रवेश इति चेन्न। यत्र एकधर्मस्य द्वित्वाद्युद्देश्यतावच्छेदकता तत्रैवोद्देश्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमः। यत्र धर्मद्वयादेस्तथात्वं तत्र केवला पर्याप्तिः समवाय एव वा संसर्ग इत्यभ्युपगमाद्, विनैव साहित्यस्यान्वयितावच्छेदकतां एकैकतात्पर्येण धवखदिरावित्यादिप्रयोगोपपत्तेः।

---

**यत्र धर्मद्वयादेस्तथात्वं तत्र केवलपर्याप्तिरिति** विरुद्धधर्मद्वयादेरित्यर्थस्तेन विभुत्वनित्यत्वाकाशत्वानामुद्देश्यतावच्छेदकतास्थलेकेवलपर्याप्त्यभानेपि न क्षतिः अथैवं कालाकाशा इत्यपि स्यात् कालाकाशात्मादिगतबहुत्वस्य शुद्धपर्याप्त्या कालाकाशयोः सत्त्वाद्धर्मद्वयस्योद्देश्यतावच्छेदकत्वेन विशिष्टपर्याप्तेर्भानासंभवादिति चेन्न यत्र हि धर्मद्वयस्योद्देश्यतावच्छेदकत्वं तत्र द्विवचनमेव द्वित्वसंख्याबोध एव साकाङ्क्षं यत्र धर्मत्रयादिकमुद्देश्यतावच्छेदकं तत्र बहुवचनमेव बहुत्वबोध एव साकाङ्क्षमित्याकाङ्क्षाविरहादेव न शाब्दबोधस्तत्र अतएव कालाकाशा द्वौकालाकाशौ त्रयः कालाकाशात्रय इत्यादयो निराकाङ्क्षत्वादेव न शाब्दबोधे समर्थाः नचैवं बहुघटपटबोधतात्पर्यकं घटपटाइत्यपि न स्यान्निराकाङ्क्षत्वादिति वाच्यमिष्टापत्तेः यदिहि घटस्य पटस्य च बहुत्वं विवक्षितं तदा घटाः पटा इत्येव प्रयोक्तुमुचितं तत एवासंदिग्धविवक्षितप्रतिपत्तेः घटपटाइत्यतो जायमानायाः प्रतिपत्तेर्घटपटयोरेकस्यैकत्वेऽन्यस्य द्वित्वे द्वयोर्वा द्वित्वेपि विषयाबाधादात्मलाभेन घटपटयोर्द्वयोर्बहुत्वस्यासंदिग्धप्रत्ययाजनकत्वात् यदि घटपटयोर्मिलितयोर्बहुत्वं प्रतिपादनीयं तदापि जात्येकत्वविवक्षावज्जात्योर्द्वित्वं विवक्षित्वा घटपटावित्येवप्रयोक्तुमुचितम् श्रोतुर्वक्तृतात्पर्यग्रहे घटपटयोरेवात्रसत्त्वे जातौ द्वित्वविवक्षा निरर्थिका स्यादेवं घटस्य पटस्य च बहुत्वे घटाः पटा इत्येव प्रयुञ्जीत तस्मान्मिलितस्य बहुत्वमाकलय्यानेन जात्योर्द्वित्वं विवक्षितमित्येवं कथंचिन्मिलितबहुत्वप्रतिपत्तिसंभवाद्घटपटावित्यतोऽसंदिग्धमिलितबहुत्वस्य प्रतिपत्तेरसंभवे घटपटाइत्येतद्वाक्यतोपि प्रतिपत्तेरसंदिग्धाया असंभवात् घटस्य पटस्य वा बहुत्वेपि प्रतिपत्तेरात्मलाभात् घटपटावित्यस्यैव युक्तता असंदिग्धप्रतिपत्तये वात्र घटौस्तः पटश्चास्त्यतो घटपटयोर्बहुत्वन्नैकैकस्येत्येव प्रयोक्तव्यम् सामान्यतोमिलितबहुत्वप्रतिपत्तेः प्रयोजनन्तु नाकलयामो येन तादृशप्रयोगमप्युपगच्छामः अथैतदपि विचारणीयम् घटपटाइत्यत्र कीदृशं विग्रहवाक्यं व्युत्पन्नः प्रयोक्ता प्रतिसंधत्ते यदि घटश्च पटश्चेति तदैकस्य घटस्य पटस्य च मिलिततयापि द्वित्वमेवोचितम् मत्वा द्विवचनमेव प्रयुञ्जीत यदिच हरीच हरयश्चेति 'विग्रहे हरय इत्येकशेषदर्शनादेकशेषस्य च द्वंद्वप्रसक्तिविषयत्वात् द्वन्द्वस्थलेपि तादृशविग्रहमुरीकृत्य घटश्च पटाश्चेति घटौ च पटाश्चेति घटाश्च पटाश्चेति विग्रहवाक्यमेषितव्यंतदपिनैतद्युक्तम् तादृशस्थले विग्रहवाक्यघटकविभक्त्यर्थसङ्ख्याविशिष्टस्वार्थे समासघटकपदस्य लक्षणाया एवोक्तत्वेन समासोत्तरविभ-

न चैवमेकैकधवखदिरादितात्पर्येण धवौ खदिरावित्यादिप्रयोगापत्तिः तादृशवाक्यद्वयविषयकसमूहालम्बनजन्यसमूहालम्बनशाब्दबोधस्य नानाधर्मावच्छिन्नोद्देश्यताकतया शुद्धपर्याप्तेरपि संसर्गतया ऽवगाहनसंभवादिति वाच्यम् यत्र नानाधर्मावच्छिन्नविशेष्यतानिरूपिता एकद्वित्वादिप्रकारता तत्रैव शुद्धायाः पर्याप्तेः समवायस्य वा संसर्गतया भानाद्, धवौ खदिरावित्यादिनानावाक्यजन्यसमूहालम्बनशाब्दबोधे विशेष्यताभेदेन प्रकारताभेदेन चोद्देश्यतावच्छेदकधवत्वादिव्याप्तिविशिष्टपर्याप्तेः संसर्गतानियमेन एकैकधवखदिरादितात्पर्येण तथा प्रयोगासंभवात् । धवखदिरावित्यादिसमासोत्तरद्विवचनेन धवत्वखदिरत्वाद्यवच्छिन्ननानाविशेष्यतानिरूपितैकद्वित्वादिप्रकारताशालिज्ञानमेव जन्यते तादृशवाक्यजन्यबोधस्य समूहालम्बनानात्मकतया विशेष्यताभेदेन प्रकारताभेदाभावात् । यथाहि समूहालम्बनानात्मके खड्गी चैत्रः कुण्डलीत्याकारकनानाविशेषणकैकविशेष्यकज्ञाने नानाप्रकारतानिरूपिता एका विशेष्यता तथा तथाविधे धवखदिरावित्याद्याकारके नानाविशेष्यकैकविशेषणकज्ञाने विशेष्यताभेदेऽप्यभिन्नैव द्वित्वादिप्रकारता अन्यथा समूहालम्बनतस्तद्वैलक्षण्यानुपपत्तेः समासघटकधवखदिरादिपदानामेकवाक्यतानुपपत्तेश्च । तत्प्रयोज्यविषयतया साक्षात्परम्परया वा निरूपिता या विषयता तत्प्रयोजकत्वस्यैव तदेकवाक्यतापदार्थत्वात् न चैतादृशैकवाक्यताविरहेपि क्षतिविरहः तथासति समासस्यैवानुपपत्तेः अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यादौ राजपुरुषपदादीनां समासवारणाय समर्थपदानामेव समासानुशासनात् सामर्थ्यस्य च निरुक्तैकवाक्यतारूपत्वात् जलपृथिव्योः स्नेहगन्धावित्यादितोऽपि न जले स्नेहः, पृथिव्यां गन्ध इत्याकारकसमूहालम्बनबोधः किन्तु तद्विलक्षणो द्वित्वादिनिष्ठैकप्रकारतानिरूपितजलत्वपृथिवीत्वाद्यवच्छिन्नविशेष्यतात्मकप्रकारताद्वयनिरूपिताधेयत्वप्रकारतानिरूपितं यद्धर्मितावच्छेदकद्वित्वादिनिष्ठैकप्रकारतानिरूपकं स्नेहत्वगन्धत्वाद्यवच्छिन्नविशेष्यताद्वयं तद्वानिति अतो न कुत्राप्येकवाक्यताभङ्गः चैत्रो मैत्रश्च गच्छत इत्यादावाख्यातार्थद्वित्वादिप्रकारेण भासमाने चैत्रमैत्रोभयादौ गमनाश्रयत्वाद्यन्वयेन निरुक्तैकवाक्यतासंभवेपि समासविधेर्विभाषाधिकारीयत्वादसमासः तत्र विशेष्यताभेदभिन्नद्वित्वनिष्ठप्रकारताद्वयप्रतियोगी समूहालम्बनात्मकबोध इति तु न सम्यक् । तथा सत्युक्तयुक्त्या एकैकचैत्रमैत्रादितात्पर्येण तथाप्रयोगानुपपत्तेः । आख्यातो-

---

त्त्यर्थसङ्ख्यायाअनेकोद्देश्यतावच्छेदकत्वविरहाद्विशिष्टपर्याप्तेः पदार्थभूतसङ्ख्यासंसर्गत्वाद्वोक्तप्रसङ्गे तदुद्भावनस्यायुक्तत्वात् एवमेव कालाकाशा इत्यत्राप्यनेकस्योद्देश्यतावच्छेदकत्वाभावप्रसक्तौ विभक्तिबोध्यबहुत्वस्य विशिष्टपर्याप्तिभानात्पदार्थभूतसङ्ख्यासंसर्गस्य विशिष्टपर्याप्तेर्भानाद्वाऽप्रामाण्यसंभवात् घटपटा इत्यस्य साकाङ्क्षत्वे यद्याग्रहः कस्यचित्स्यात्तदास्वोद्देश्यतावच्छेदकधर्माभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिसङ्ख्यावच्छिन्नाधिकरणावृत्तित्वविशिष्टपर्याप्तेरेव संसर्गत्वेन भानमुरीकरणीयम् स्वपदश्च संसर्गप्रतियोगिपरम् तथाच कालाकाशवृत्तित्रित्वमात्रस्यैव स्वोद्देश्यतावच्छेदककालत्वाकाशत्वाभावद्वयाधिकरणघटादिवृत्तित्वेन तत्पर्याप्तेरपि तथात्वेन तादृशावृत्तित्वस्य बाधात् कालाकाशाइत्यस्य न प्रामाण्यम् उद्देश्यतावच्छेदकघटत्वपटत्वाभावद्वयवद्वृत्तित्वस्य घटपटमात्रवृत्तित्रित्वपर्याप्तावबाधितत्वेन घटपटाइत्यस्यप्रामाण्यम् यत्र घटत्वाद्येकएव धर्मउद्देश्यतावच्छेदकस्तत्रैकत्वसङ्ख्यैव तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनीति घटौ घटा इत्यादेः प्रामाण्योपपत्तिः । नच केवलान्वयिधर्मस्योद्देश्यतावच्छेदकस्थले का गतिरितिवाच्यं यत्रैकधर्मस्योद्देश्यतावच्छेदकत्वं तत्र तद्गतैकत्वस्य यत्र धर्मद्वयस्य तत्र तदन्यतरत्वस्य यत्र धर्मत्रयादेस्तत्र तद्गतान्यतमत्वस्य व्यापकतावच्छेदकतया संबन्धकोटौ भानाभ्युपगमात् यस्य यद्रूपावच्छिन्नस्य यादृशरूपावच्छिन्नस्येत्यादिग्रन्थेन विशेषव्याप्तौ व्याप्त्यननुगमस्य दीधितिकृतोक्तत्वेन शाब्दानुगमस्यात्यन्तिकस्याभावेपि क्षत्यभावात् । नच परिमाणवदाकाशावित्यत्र कर्मधारयस्थले धर्मद्वयस्यावच्छेदकत्वेन तदन्यतरत्वस्य घटाकाशगतद्वित्वव्यापकतावच्छेदकत्वेन प्रामाण्यापत्तिरिति वाच्यम् विरुद्धधर्मद्वयादेरवच्छेदकतास्थलएवान्यतरत्वादेर्व्यापकतावच्छेदकतया भानाभ्युपगमात् सामानाधिकरण्यधर्मद्वयाद्युद्देश्यतावच्छेदकस्थलउद्देश्यतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपएव व्यापकतावच्छेदकत्वभानाभ्युपगमात् । नचैवमपिकेवलपर्याप्तिरेवेति ग्रन्थासङ्गतिरिति वाच्यम् तद्ग्रन्थस्य विरुद्धधर्मद्वयस्य यत्र विभक्त्यर्थद्वित्वोद्देश्यतावच्छेदकत्वं तत्स्थलीयत्वादिति दिक् ॥

पस्थापितद्वित्वादिकं चोभयादिरूपान्वयितावच्छेदकावच्छिन्नएवान्वेतीति व्युत्पत्तिः। तेनोक्तप्रयोगदर्शनात् क्रियापदस्य विशेष्यवाचकपदसमानवचनकत्वानियमेऽपि घटद्वयादितात्पर्येण घटस्तिष्ठत इत्यादयो न प्रयोगाः एकवचनान्तक्रियापदे च तादृशविशेष्यवाचकपदप्रयोगएव साधुः अतो घटास्तिष्ठतीत्यादयो न प्रयोगाः। अथैकघटादिव्यक्तेरेतद्देशवृत्तितादशायामत्र घटौ स्तः घटाः सन्तीति कथं न प्रयोगाः घटादौ घटत्वादिव्याप्तिविशिष्टपर्याप्तिसंबन्धेन द्वित्वादेः स्वरूपादिसंबन्धेन तद्देशवृत्तित्वाश्रयत्वादेश्चसत्त्वात्। न च द्वित्वेनोपस्थितयोर्द्वयोरेव व्यक्त्योरेवं बहुत्वेनोपस्थितासु बहुषु व्यक्तिषु विधेयान्वयात् व्यक्त्यन्तरेष्वेतद्देशवृत्तित्वादिबाधान्न तादृशप्रयोग इति वाच्यम् व्यक्त्यन्तरेऽयोग्यतया तादृशविधेयानवगाहिन एकघटे तदवगाहिनो बोधस्योत्पत्तौ बाधकाभावात्। तथा तात्पर्येण तथा प्रयोगस्य दुर्वारत्वात्। न च व्यासज्यवृत्तिधर्मो यत्रान्वयितावच्छेदकस्तत्र यावत्सु अन्वयितावच्छेदकस्य पर्याप्तिस्तावतामेव पदार्थान्तरेणान्वय इति व्युत्पत्तिस्तन्निर्वाहाय च तादृशधर्मावच्छिन्नइतरान्वयबोधजनकसामग्र्या उभयादिविषयकपदार्थान्तरान्वयबुद्धित्वमेव जन्यतावच्छेदकं वक्तव्यमिति द्वित्वादिनैकघटादिमात्रविषयकैतद्देशवृत्तित्वाद्यन्वयबोधो न संभवतीति न तादृशबोधतात्पर्येण तादृशप्रयोगापत्तिरिति वाच्यम् योग्यताभ्रमेणाकाशावत्र स्त इत्यादिवाक्याद् द्वित्वादिना एकव्यक्तिमात्रविषयकपदार्थान्तरान्वयबोधात्तादृशव्युत्पत्तेस्तन्निर्वाहककार्यकारणभावस्य च कल्पनासंभवात्। यत्तु द्वित्वाद्यवच्छिन्नोद्देश्यताकबुद्धावुद्देश्यतावच्छेदकव्यापकता नियमतो विधेयसंसर्गे भासते इति व्युत्पत्तिः यत्र चोद्देश्यतावच्छेदकविशिष्टाधिकरणाप्रसिद्ध्या तद्व्यापकत्वमप्रसिद्धत् तत्रापि खण्डशः प्रसिद्धानां तत्तद्घटकपदार्थानां विशेष्यविशेषणभावापन्नानां भानसंभवान्न पीतशङ्खावत्रेत्यादौ तादृशव्युत्पत्तिभङ्गः। एवं चैकघटादिव्यक्तिमात्राधिकरणपरस्यात्र घटौ स्त इत्यादिवाक्यस्याप्रामाण्यं सुघटमेव उद्देश्यतावच्छेदकीभूतघटमात्रवृत्तिद्वित्वव्यापकतायास्तादृशवाक्यप्रतिपाद्याया विधेयसंसर्गे बाधादिति तदपि तुच्छम् अत्र घटौ स्त इत्यादौ द्वित्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य द्वित्ववद्घटनिष्ठाभावप्रतियोगितानवच्छेदकत्वस्य च तदधिकरणावृत्तिघटादिनिष्ठाभावप्रतियोगितावच्छेदकीभूते तत्तद्विधेयसंसर्गतावच्छेदके बाधाद्घटद्वयाधिकरणपरतादृशवाक्यस्याप्रामाण्यापत्तेः। तत्तद्द्वित्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य तत्तद्विधेयसंसर्गांशे भानोपगमस्तु न संभवति तत्तद्द्वित्वत्वेनानुपस्थितेः। नच तदवच्छिन्नस्य संसर्गतया भाने तेन रूपेणोपस्थितिर्नापेक्ष्येति वाच्यम् तत्संसर्गावच्छिन्नतत्प्रकारतानिरूपिततत्तद्विशेष्यताशालिशाब्दबोधपरमित्याकारकतात्पर्यज्ञाने संसर्गस्य विशेषणतया तद्भाननिर्वाहाय संसर्गघटकोपस्थिते-

---

**उभयादिरूपेति**। असमानवचनविशेष्यवाचकपदस्थल इत्यादिस्तेन घटौ स्त इत्यादेरुभयस्यान्वयितावच्छेदकत्वविरहेपि नानुपपत्तिः विशेष्यवाचकपदस्य समानवचनत्वात् आदिपदोपादानाद्द्वित्वान्वयोधर्मद्वयमन्वयितावच्छेदकीकृत्यैव त्रित्वान्वयश्च धर्मत्रयं वैकत्वान्यस्वन्यूनवृत्तिसंख्याधर्मान्तरञ्च वान्वयितावच्छेदकीकृत्य जायत इत्यर्थोलभ्यते तेन चैत्रोमैत्रश्च गच्छन्तीत्यस्य नापत्तिः यथा चैत्रोमैत्रोदेवदत्तश्च गच्छन्तीति प्रयोगो जायते तथा घटौ पटश्च सन्तीति प्रयोगस्यानुभविकत्वे एकत्वान्येत्याद्युपात्तम् तत्र घटत्वव्याप्यपर्याप्तिसंबन्धेन द्वित्वस्य धर्मान्तरस्य पटत्वस्य चान्वयितावच्छेदकत्वात्। नच कथंद्वित्वस्य त्रित्वान्वयितावच्छेदकत्वमिति वाच्यम् स्वरूपसंवन्धविशेषरूपावच्छेदकत्वरूपस्यैव तस्य घटौ त्रयः पटौ सन्तीत्यादिप्रयोगाभावेन द्वित्वे त्रित्वादेरनभ्युपगमात् धर्मान्तरस्यान्वयितावच्छेदकत्वस्थले तद्भानस्यायोग्यत्वात्सामानाधिकरण्यमात्ररूपस्यैव तस्य भानोपगमात् अतएव धर्मान्तरञ्चेत्येतल्लाभायोपात्तम् घटाः पटश्च सन्तीत्यत्रापिघटगतत्रित्वस्य घटत्रयपटगतबहुत्वन्यूनवृत्तित्वसंभवात्तदुपपत्तिः। नच द्वित्वघटत्वपटत्वानां त्रयाणामन्वयितावच्छेदकत्वात्पूर्वकल्पेनैव निर्वाह इति वाच्यम् विभुनित्याकाशः सन्तीत्यस्य वारणाय विरुद्धत्वेन धर्मस्य विशेषणीयत्वात् उभयत्वादिरूपान्वयितावच्छेदकेत्यादिरपपाठ एव चकारस्य साहित्यबोधकस्य कथंचित्तद्बोधकत्वसंभवेपि द्विधातद्भानस्यायुक्तत्वेन हेयत्वात् आख्यातद्विवचनादेर्द्वित्वाद्यर्थकत्वव्यवस्थापकस्याग्रिमग्रन्थस्य विरोधाच्च चकारेणैव द्वित्वादिप्रत्ययसंभव आख्यातस्य तदर्थकत्वकल्पनानौचित्यात् चकारं विनापि तादृशप्रयोगे क्षत्यभावात् चकारस्य सङ्ख्यावोधकत्वासंभवाच्चेति। **तात्पर्येणेति**। एकत्वविवक्षायां जात्येकत्वविवक्षायांवेतिशेषः। **तिष्ठतीत्यादयइति**।

रपि शाब्दबोधात्प्रागावश्यकत्वात् प्रकृतसंसर्गेण एकपदार्थविशिष्टापरपदार्थबोधपरत्वज्ञानस्य प्रकृतवाक्यार्थविषयकतया प्रागसंभवेनोपदर्शिततात्पर्यज्ञानस्यैव शाब्दधीहेतुत्वोपगमात्। एवं वाक्यार्थघटकसंसर्गस्याननुगमे घटौ स्त इत्यादौ वाक्यभेदप्रसङ्गाच्च। अत्रोच्यते। व्यासज्यवृत्तिधर्मावच्छिन्नोद्देश्यताकशाब्दबुद्धौ स्वव्याप्यतादृशधर्मवत्त्वमपि विधेयसंसर्गतया भासते इति व्युत्पत्तिः। व्याप्यत्वं च तद्वदन्यावृत्तित्वम् व्यतिरेकिविधेयस्थले तादृशधर्मवत्त्वं चोद्देश्यतावच्छेदकताघटकसंबन्धेन बोध्यम्। अत्र घटौ स्त इत्यादौ एतद्देशवर्त्तमानत्वादिरूपविधेयस्य तद्वदन्यावृत्तित्वरूपव्याप्तिमच्चैतद्देशस्यैकघटादिव्यक्तिमात्राधिकरणत्वे घटपटादिनिष्ठद्वित्वमेव घटत्वव्याप्तपर्याप्तिरूपोद्देश्यतावच्छेदकताघटकसंबन्धावच्छिन्नम् तद्वत्त्वं च घटादौ बाधितमिति न तादृशवाक्यस्य प्रामाण्यम्। अधिकरणस्य घटद्वयादिमत्त्वे च घटत्वादिव्याप्यं द्वित्वमेव तथेति घटत्वादिव्याप्यपर्याप्तिसंबन्धेन तद्वत्त्वं घटादावबाधितमिति तादृशवाक्यस्य प्रामाण्यं निर्वहति केवलान्वयिविधेयकस्थले च द्वित्वत्वाद्यवच्छिन्नव्यापकत्वमेव संसर्गघटकम् केवलान्वयिनि तादृशव्यापकतायाः अक्षतत्वात्। न तु तत्तद्द्वित्वत्वावच्छिन्नव्यापकत्वमिति न पूर्वोक्तदोषावकाशः। घटावानयति चैत्र इत्यादौ चैत्रकर्तृकानयनकर्मत्वादिव्याप्यद्वित्वादिमन्निष्ठनिरूपकताकाधेयत्वादिसंबन्धेन कर्मत्वादौ घटादेरन्वयो व्युत्पन्नः तेन चैत्रादौ एकघटादिव्यक्तिमात्रानयनकर्तृत्वे न तादृशप्रयोगः। द्वित्वादिमत्त्वं च प्रकारतावच्छेदकीभूतघटत्वादिव्याप्यपर्याप्तिसंबन्धेन बोध्यम् तेन चैत्रस्य पटादिसहितैकघटादिव्यक्त्यानयनकर्तृत्वेऽपि न तादृशप्रयोगः। एवमन्यत्राप्यूहनीयम्। यत्रानेकवृत्तिधर्मो द्वित्वान्वयितावच्छेदकतया भासते तत्रोभयादिनैव समं पदार्थान्तरस्यान्वयः। यत्रैकमात्रवृत्तिधर्मस्तथा तत्रैकेनापि व्युत्पत्तिभेदावलम्बनात्कार्यकारणभाववैचित्र्याच्च सर्वं समञ्जसमित्यपि वदन्ति। अथ घटादिव्यक्तिभेदेनानयनकर्मता भिन्नेति प्रतिसंदधानस्य पुंसो घटावानयतीति वाक्याच्छाब्दबोधानुपपत्तिः तस्य कर्मतात्वावच्छेदेनाधेयतासंसर्गावच्छिन्नप्रतियोगिताकस्य द्वित्वाद्यवच्छिन्नघटाद्यभावस्य निश्चयसंभवात् तस्य द्वित्वादिना तादृशसंसर्गकघटादिविशिष्टधीविरोधित्वादिति चेन्न उभयत्वाद्यवच्छिन्नाभाववत्ताज्ञानमुभयत्वावच्छिन्ननिरूपिताधेयतासंसर्गावगाहिज्ञानमेव प्रतिबध्नाति न तु केवलं विशेष्ये विशेषणमिति रीत्या जायमानमुभयत्वादिविशिष्टज्ञानम्, अतो विशेषदर्शिनां तादृशवाक्याद्दोपायत्तमाधेयत्वांशे उभयत्वाद्यवच्छिन्ननिरूपितत्वावगाहिभ्रमात्मकज्ञानं न भवत्येव। अपि तु तदंशे तदनवगाहिप्रमात्मकं ज्ञानमिति उभयत्वावच्छिन्ननिरूपिताधेयत्वं चोभयादिवृत्तावेकस्मिन्धर्मे एव न तु प्रत्येकमात्रवृत्ताविति कर्मत्वांशे तादृशाधेयत्वावगाहिज्ञानस्य भ्रमत्वमित्यवधेयम्।

संख्याश्च प्रकृत्यर्थतावच्छेदकगताः क्वचित्प्रतीयन्ते यथा संपन्नो व्रीहियवावित्यादौ। एतत्तत्वं प्रागेवाभिहितम्। विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेति यथा शतमेकं द्वे शते त्रीणि शतानीत्यत्र शतत्वादौ एकत्वद्वित्वबहुत्वानामन्वयः अतएव च एकशतद्विशततात्पर्येण न शतानीति प्रयोगः तत्र प्रकृत्यर्थस्य शतस्य बहुत्वाद्यन्वययोग्यत्वेऽपि प्रकृत्यर्थतावच्छेदकशतत्वांशे बहुत्वाद्यन्वयएव बहुवचनस्य साकाङ्क्षत्वात्

---

एकत्वाविवक्षायामपीतिशेषः। यत्रैकमात्रवृत्तिधर्मस्तथेति। इदञ्च योग्यताभ्रमेणाकाशावत्रस्त इत्यत्र शाब्दस्यानुभविकत्वात् तत्रानेकवृत्तिधर्मस्योद्देश्यतावच्छेदकत्वविरहात्तदसङ्ग्रहप्रसङ्गात्तत्सङ्ग्रहायोपात्तम्। नच घटावत्रस्त इत्यत्र योग्यताभ्रमेणैकघटविषयकशाब्दस्थले का गतिरुद्देश्यतावच्छेदकस्यानेकवृत्तित्वात् विषयस्यैकत्वादिति वाच्यम् योग्यताभ्रमोहि द्वेधासंभवति द्वयोरेतद्देशवृत्तित्वभ्रम एकस्य द्वित्वभ्रमश्च तत्र प्रथमभ्रमस्थले द्वयोरेव विषयत्वमनेकवृत्तिधर्मश्चोद्देश्यतावच्छेदकइति न कापि क्षतिः द्वितीयभ्रमस्थले चाकाशत्वस्येव तत्त्वेदन्त्वादेरेवद्वित्वोद्देश्यतावच्छेदकतायाः समुचितत्वेन घटपदस्य तत्र लक्षणायाएवोभेयतस्यैकमात्रवृत्तेरुद्देश्यतावच्छेदकत्वमेकस्यैव विषयत्वमिति नानुपपत्तिः यदि घटत्वेनैवैकस्य विषयत्वं घटत्वस्य द्वित्वोद्देश्यतावच्छेदकत्वञ्चानुभविकमुक्तञ्च प्राक् ग्रन्थएव द्वावत्रस्तइत्यादिवाक्याद्द्वित्वादिनानेकव्यक्तिमात्रविषयकपदार्थान्तरान्वयबोधादिति न.दैदमनुचिन्तनीयमनेकवृत्तिधर्मेणानेकावगाहनमेव द्वित्वादिबोधानामौत्सर्गिकं तदेकव्यक्त्यवगाहनञ्च कस्माच्चिद्दोषा-

तत्र च योग्यताविरहात् । न चैकशतेऽपि नानापुरुषीयापेक्षाबुद्धिजन्यनानाशतत्वसंभवादेकशतनिष्ठशतत्वेऽपि बहुत्वान्वययोग्यताऽक्षतैवेति वाच्यम् परस्परसमानाधिकरणद्वयावृत्तिबहुत्वस्यैव शतादिपदोत्तरबहुवचनार्थत्वात् तादृशबहुत्वस्य चैकशतादिवृत्तिनानाशतत्वादौ बाधात् । अथ वा तत्रापि बहुत्वमेव बहुवचनार्थः । परस्परसमानाधिकरणद्वयावृत्तिपर्याप्तिरेवाकाङ्क्षानिरूपकः संबन्धः । यत्तु द्वे शते त्रीणि शतानीत्यादौ संख्यैव शतादिशब्दार्थः, न तु संख्येयं, संख्येयस्य तदर्थत्वे "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययो" रित्यनुशासनविरोधात् द्विवचनादिसाधुतानुपपत्तेः गवां शतानीत्यादौ षष्ठ्यर्थान्वयानुपपत्तेश्च । न चाभेदः षष्ठ्यर्थः, तथा सति ब्राह्मणा दश इत्यत्र ब्राह्मणानां दशेत्यपि स्यात् । अस्माकं चादशतः संख्याः संख्येये वर्त्तन्ते, अतः परं संख्याने संख्येये चेत्यनुशासनाद्दशादिशब्दानां शतादिशब्दवत्संख्यानार्थकत्वाभावाद्दशत्वादिसंख्यायाः पदार्थतावच्छेदकत्वेन तत्र षष्ठ्यर्थसंबन्धान्वयासंभवेन न तथा प्रयोग इति । तदसत् । गवां शतानीत्यादौ संख्यायाः प्राधान्येन शतादिशब्दवाच्यत्वे गवां शतं दद्यादित्यादौ शतादिपदार्थस्य संख्याया दानादिकर्मत्वान्वयायोग्यतया प्रामाण्यानुपपत्तिः गवां शतं शुक्लमित्यादौ संख्यायां शुक्लाद्यभेदान्वययोग्यताविरहात्तदनुपपत्तिश्च । तस्माद्दशादिशब्दा इवशतादिशब्दा अपि संख्यावच्छिन्नवाचका एव नतु धर्मिविशेषणतानापन्नसंख्यावाचकाः स्वार्थैकदेशेऽपि संख्यायां स्वप्रकृतिकविभक्त्यर्थसंख्यान्वयसाकाङ्क्षतयान्यप्रकृतिकषष्ठ्यर्थसंबन्धान्वयसाकाङ्क्षतया तेषां संख्यानार्थकताप्रवादः, न तु दशादिशब्दानां तथात्वं दशादिब्राह्मणतात्पर्येण ब्राह्मणानां दशेत्यादिप्रयोगविरहादिति तेषां संख्येयमात्रवाचिताप्रवाद इति "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः संख्यायां द्विबहुत्वे स्त" इत्यनुशासनमप्युक्तार्थे तात्पर्यग्राहकम् । एकद्विबहुशब्दोत्तरैकवचनद्विवचनबहुवचनानि च न संख्याबोधकानि उद्देश्यतावच्छेदकविधेययोरैक्येनैकत्वान्वये आकाङ्क्षाविरहादिति, तदुत्तरप्रथमाविभक्तिः साधुतामात्राय नित्यबहुवचनान्ताबादिशब्दपरं प्रथमाबहुवचनमपि क्वचिन्निरर्थकमेव, यत्रैकव्यक्तिमात्रतात्पर्येण तादृशशब्दः प्रयुज्यते तत्र बहुत्वान्वये योग्यताविरहात् । यत्तु तद्गतगुणादिसाधारणबहुत्वस्य तत्रान्वय इति तन्न शोभनम् प्रकृत्यर्थतावच्छेदकव्याप्यपर्याप्तिसंबन्धेनैवानेकवृत्तिसंख्यान्वयस्य व्युत्पन्नतया तादृशसंबन्धेन तथाविधबहुत्वान्वये योग्यताविरहात् अन्यथोदासीनघटपटादिसाधारणबहुत्वस्याप्यन्वयसंभवेन तद्गतगुणादिसाधारणबहुत्वानुधावनस्याकिंचित्करत्वात् । अथाजहत्स्वार्थलक्षणया गुणादिसाधारणधर्मावच्छिन्न एव प्रकृत्यर्थ इति चेत्तर्हि बहुत्वेन भासमानेषु गुणादिष्वपि पदार्थान्तरान्वयः स्यात् तथा चापो द्रव्याणि दारा अत्र गृहे सन्तीत्यादिवाक्यानामप्रमाणतापत्तिः । गुणादिषु द्रव्याभेदे गृहवृत्तितादेर्बाधात् मुख्यार्थमात्रपरतादृशशब्दानां बहुवचनान्ततानुपपत्तेश्चेति न किंचिदेतत् । अबादिपदार्थे एकत्वद्वित्वान्वययोग्यतासत्त्वेऽप्यसाधुत्वादेव तदुत्तरमेकवचनं न प्रयुज्यते इति ध्येयम् ।

आख्यातैकवचनस्य संख्यार्थकत्वे विवदन्ते निष्कर्षानुसारिणः । घटोऽस्तीत्यादौ सुबेकवचनादेव संख्याबोधसंभवात् चैत्रेण दृष्टो घट इत्यादिस्थलानुरोधेन तस्य तद्बोधकताया आवश्यकत्वात् ।

---

त्तद्बाधकादृते तत्रैकस्यैवानेकतया ग्रहाद्द्वित्वादिधर्मितावच्छेदकस्यानेकवृत्तित्वेन ज्ञानम् तथाच यत्रैकमात्रवृत्तीत्यादेरयमर्थः यत्र द्वित्वाद्युद्देश्यतावच्छेदकीभूतो धर्मः यथाकथंचित् प्रकृतशाब्दप्रयोजकस्य स्वविषयवृत्तिनिरूपकैकव्यक्त्यन्यनिरूपितवृत्तित्वानवगाह्यनेकवृत्तित्वावगाहिज्ञानस्य विषयस्तत्रैकेनाप्यन्वय इति घटत्वादीनामनेकवृत्तित्वावगाह्यपि ज्ञानमेकनिरूपितस्यैव न तदन्यनिरूपितस्य वृत्तित्वस्यावगाहीति तत्रैकस्य शाब्दविषयतायुज्यत एव अथाकाशत्वादेरेकमात्रवृत्तित्वग्रहे द्वित्वान्वयितावच्छेदकतयाकाशभानमनुभवविरुद्धमिति तादृशग्रहाभावमात्रमपेक्षणीयन्न तत्रानेकवृत्तित्वग्रहापेक्षेति चेन्न आकाशस्यैकतयाकाशत्वस्यानेकवृत्तित्वाग्रहेप्येकमात्रवृत्तित्वग्रहविरहमात्रादाकाशत्वेनैकमात्रस्याकाशस्य हि द्वित्वबोधविषयता युज्यते घटादीनांत्वनेकत्वादुक्तग्रहविरहमात्राद्घटत्वेनैकस्य द्वित्वशाब्दबोधविषयताकस्य सचेतसोनुभवपथारोहिणीस्यादाकाशावित्यत्र तादृशग्रहस्यानपेक्षत्व उक्तज्ञानविषयत्वैकमात्रवृत्तित्वान्यतरवत्तयाधर्मोविवक्षणीय इति ।·आख्यातैकवचनस्य संख्यार्थकत्वइति ।

न चैकवचनत्वेनानुगतेनैकत्वशक्यत्वात्तिङेकवचनस्याप्येकत्ववाचकत्वमक्षतमिति वाच्यम् एकवचनत्वस्यैकत्वशक्तताच्छेदकतायाः प्रागेव निराकृतत्वात् अस्तु वा तेन रूपेण तिङेकवचनस्याप्येकत्वे शक्तिस्तथापि तज्जन्यैकत्वोपस्थितेः शाब्दबोधोपयोगित्वे मानाभावः । नहि सामान्यत एकवचनज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुतासंभवः । तथा सत्येकत्वेऽगृहीतसुपदवृत्तिकस्य पुंसः सुपदप्रकृतिघटादिपदोपस्थाप्यघटादौ पटादिपदोत्तरामादिपदोपस्थाप्यैकत्वाद्यन्वयबोधप्रसङ्गः किन्तु सुपदत्वादिप्रकारकज्ञानजन्यतदुपस्थितित्वादिनैव तथा सति घटादिपदोत्तरसुपदत्वादिरूपानुपूर्वीविशेषरूपाकाङ्क्षाज्ञानघटितायां घटादावेकत्वान्वयबोधस्य सामग्र्यां सुपदत्वादिप्रकारकधीजन्योपस्थितेरन्तर्भावात्तादृशापत्तेरनवकाशात् । एवं तिवादिपदत्वप्रकारकज्ञानजन्योपस्थितित्वेन तच्छाब्दबोधहेतुत्वे मानाभाव इति । यत्तु तिबादेः संख्यानभिधायकत्वे चैत्रः पचति तण्डुलं चैत्रेण पच्यते तण्डुल इत्यादौ कर्तृकर्मवाचकपदात्तृतीयाद्वितीययोरापत्तिः कर्तृकर्मगतसंख्याया अनभिधाने 'कर्तृकरणयोस्तृतीये'ति "कर्मणिद्वितीये" ति सूत्राभ्यां तयोरनुशासनात् । नैयायिकमते लकारस्य कर्तृकर्मावाचकतया तदनभिधानस्य द्वितीयातृतीयानियामकत्वासंभवात् । न च कर्त्रादिगतसंख्यानभिधानमेव कथं कर्त्रादिवाचकपदोत्तरतृतीयादिनियामकं, चैत्रेण पच्यते तण्डुल इत्यादिस्थलेऽपि लकारस्य चैत्रादिगतसंख्याभिधायकत्वादेकत्वत्वादिना एकत्वादिसामान्यस्यैवैकवचनाद्यभिधेयत्वादिति वाच्यम् यतस्तद्गतसंख्यानभिधायकत्वं प्रकृते न तद्गतसंख्यानिष्ठवृत्त्यनिरूपकत्वमपि तु तद्विशेष्यकसंख्याप्रकारकशाब्दबोधाननुकूलत्वमेव तथा च कर्त्रादिविशेष्यकसंख्यान्वयबोधाजनकलकारादिसमभिव्याहृतकर्त्रादिवाचकपदात् तृतीयादयो भवन्तीत्यत्र तदनुशासनतात्पर्यम् । चैत्रेण पच्यते तण्डुल इत्यादौ चैत्रादिविशेष्यकं संख्यान्वयबोधकत्वं नाख्यातस्य, आख्यातार्थभावनाया यत्रान्वयस्तद्विशेष्यकसंख्यान्वयबोधस्यैवाख्यातेन जननात्तादृशभावनान्वयबोधे विशेष्यश्च प्रथमान्तपदोपस्थाप्य एव । चैत्रःपचति तण्डुलमित्यादौ चैत्रादिः साक्षादेव भावनाविशेष्यः चैत्रेण पच्यते तण्डुल इत्यादौ तु परम्परया चैत्रादिनिष्ठभावनाजन्यफलशाली तण्डुल इत्याकारकबोधस्यैव तत्रोदयात् । तस्मात्तिबादेरपि संख्याबोधकत्वमावश्यकमिति तन्न विचारसहम् । तथा हि कर्त्रादिनिष्ठसंख्यान्वयबोधाननुकूलत्वं यदि तादृशबोधोपधायकज्ञानविषयत्वाभावस्तदा यादृशतिबादिज्ञानेन सहकार्यन्तरविरहात्तादृशबोधो न जनितस्तद्योगे तृतीयाद्यापत्तेः । यदि च तादृशबोधस्वरूपयोग्यज्ञानविषयत्वाभावस्तदा यगादिसमभिव्याहृतात्मनेपदादिज्ञानस्यापि तादृशबोधस्वरूपयोग्यत्वात्तत्स्वरूपयोग्यज्ञानाविषयतिबाख्यातस्यैवाप्रसिद्धेः । अथ कर्त्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकविषयित्वानिरूपकत्वमेव तादृशबोधाननुकूलत्वम् चैत्रः पचतीत्यादिवाक्यघटकतिबादिविषयिता चैत्रादिविशेष्यकसंख्यान्वयबुद्धित्वावच्छिन्नजनकतावच्छेदिकातादृशान्वयबुद्धित्वावच्छिन्नं प्रति चैत्रादिपदसमभिव्याहृततिबादिपदज्ञानस्य हेतुत्वात् । चैत्रेण पच्यते तण्डुल इत्यादिवाक्यघटकतयादिपदविषयिता च न तादृशी चैत्रादिपदसमभिव्याहृततादृशपदज्ञानत्वेन तादृशबुद्धित्वावच्छिन्नं प्रत्यहेतुत्वात् । न च चैत्रः पचते इत्यादौ चैत्रविशेष्यकाख्यातार्थसंख्यान्वयबोधोत्पत्त्या चैत्रादिपदसमभिव्याहृततयादिपदज्ञानत्वेन तादृशान्वयबुद्धित्वावच्छिन्नहेतुताऽक्षतैवेति चैत्रेण पच्यते इत्यादिवाक्यघटकीभूततयादिपदविषयितापि तादृश्येवेति वाच्यम् चैत्रेण पचते चैत्रः पच्यते इत्यादि वाक्याच्चैत्रादिविशेष्यकस्य भावनायाः संख्यायाश्चान्वयबोधस्यानुदयात् । तद्विशेष्यकतदुभयान्वयबोधे प्रथमान्तचैत्रादिपदसमभिव्याहृतशबादिविकरणोत्तरतत्तदाख्यातपदज्ञानत्वेन हेतुत्वाच्चैत्रेण पच्यते तण्डुल इत्यादिवाक्यघटकतयादीनां तादृश-

---

यद्यपीदं सुबर्थविचारे न वक्तुमुचितमप्रकृतत्वापातात्तथापि आख्यातैकवचनस्य सङ्ख्यार्थकत्वे प्रथमैकवचनस्य तत्समभिव्याहृतस्य नैकवचनार्थकत्वस्यान्तस्य तथात्वे स्यादित्येतदर्थमेवोक्तग्रन्थस्य प्रवृत्तत्वेन संभवतिप्रकृतत्वमितिबोध्यम् ॥ अतः परमकिमपिव्याख्येयमस्त्याख्यातविचारस्याग्रेग्रन्थकृताकर्तव्यतया तत्रैव तस्य कर्तव्यत्वादिति ॥

समभिव्याहारादिशून्यतया तद्विषयिताया अताद्दशत्वात्। चैत्रः पक्ष्यते इत्यादितस्तण्डुलः पक्ष्यत इत्यादितश्चैत्रतण्डुलादिविशेष्यकसंख्यान्वयबोधोत्पत्त्या चैत्रः पक्ष्यते तण्डुल इत्यत्र उभयविशेष्यकसंख्यान्वयबोधौपयिकसमभिव्याहारज्ञानविषयितायाः तदित्यादौ सत्त्वेन कर्तृकर्मणोस्तृतीयाद्वितीययोरप्रसक्तावपि न ताद्दशवाक्यं व्युत्पन्नाः प्रयुञ्जते। कर्त्तरि साक्षात्कर्मणि च दर्शितपरंपरया युगपद्भावनाविशेषणकान्वयबोधजनकताया आख्यातस्याव्युत्पन्नतया ताद्दशवाक्यादुभयविशेषणकान्वयबोधासंभवात्। न चाकाङ्क्षायोग्यतादिसत्त्वात्कथन्न ताद्दशान्वयबोध इति वाच्यम् अगत्या एकविधान्वयबोधेऽन्यविधान्वयबोधसामग्र्यास्तद्घटकतात्पर्यज्ञानस्य वा प्रतिबन्धकत्वोपगमात्। न च चैत्रेण तण्डुलः पक्ष्यते चैत्रस्तण्डुलं पक्ष्यते इत्यादिवाक्यद्वयविषयकसमूहालम्बनदशायामपि उभयविधान्वयबोधानुपपत्तिरिति वाच्यम् ताद्दशैकविधान्वयबोधे ताद्दशान्यविधान्वयबोधपरत्वेनागृह्यमाणतथाविधाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुतया चैत्रः पक्ष्यते तण्डुल इत्यादिवाक्यात्ताद्दशद्विविधान्वयबोधवारणस्य दर्शितवाक्यात्तदुपपादनस्य शक्यत्वात्। न च निरुक्तसंख्यानभिधानस्य तृतीयाद्वितीयानियामकत्वे चैत्रेण त्वं दृश्यते, चैत्रः त्वं पश्यतीत्यादौ तृतीयाद्वितीययोरनुपपत्तिः। कर्त्रादिविशेष्यकसंख्याप्रकारकान्वयबोधौपयिकाकाङ्क्षाज्ञानीयविषयत्वनिरूपकत्वस्य तत्राख्याते सत्त्वादिति वाच्यम् कर्त्रादिपरयत्पदाख्यातपदयोः समभिव्याहारः संख्यान्वयबुद्धित्वावच्छिन्नप्रयोजकविषयित्वाऽनिरूपकस्तत्पदोत्तरं तृतीयाविभक्तिरित्येवं नियमोपगमेन प्रथमस्थले चैत्रपदत्वपदाख्यातपदयोर्द्वितीये च तत्परचैत्राख्यातपदयोः समभिव्याहारस्यैव तद्विशेष्यकसंख्यान्वयबोधप्रयोजकतया क्रमेण चैत्रपदत्वपदाभ्यां तृतीयाद्वितीययोरनुपपत्त्यनवकाशादिति चेन्न। अनभिहित इत्यधिकारे कर्तृकरणयोस्तृतीयेत्याद्यनुशासनस्य किं प्रयोजनमिति वक्तव्यम् चैत्रः पचति तण्डुलः पच्यते, इत्यादौ चैत्रतण्डुलपदाभ्यां द्वितीयातृतीययोरप्रयोग इति चेत् तर्कि मणिमन्त्रादिन्यायेन ताद्दशानुशासनस्य तथाविधप्रयोगविरोधिता येन तदभावस्तत्प्रयुक्तः स्यात्। न चैवं संभवति पचति पच्यते इत्यादिक्रियायोगे कर्तृकर्मवाचकपदानन्तरतृतीयाद्वितीययोरसाधुत्वस्य तत्कर्तृत्वतत्कर्मत्वादिबोधौपयिकाकाङ्क्षादिरहितत्वादिरूपस्य प्रतिपत्तिः प्रयोजनं तस्येति चेत्तर्हि उक्तनियमपरतयापि न ततस्तल्लाभः प्रथमान्तचैत्रतण्डुलपदतत्तदाख्यातपदयोः समभिव्याहारस्यैव चैत्रतण्डुलादिविशेष्यकतत्तदाख्यातार्थसंख्यान्वयबोधप्रयोजकतया चैत्रेण पचति तण्डुलं पच्यते इत्यादिवाक्यघटकचैत्रतण्डुलादिपदतिबादिपदयोः समभिव्याहारस्यातथात्वेन तद्घटकतृतीयाद्वितीययोः साधुत्वस्योक्तनियमाव्यवच्छेद्यत्वात्। तस्मान्मुख्यभाक्तसाधारणकर्तृत्वकर्मत्वयोः कर्तृकर्मवाचकपदसमभिव्याहृतलकृत्तद्धितसमासैरनभिधानमेव तृतीयाद्वितीयादिनियामकं शिरोमणिभिरत्रैव निर्भरो विहितः। लादीनां तदनभिधायकत्वं च न तदवाचकत्वं तन्निष्ठवृत्त्यनिरूपकत्वं वा। आख्यातसामान्यस्याप्याख्यातत्वेन तेत्वादिना वा कर्तृत्वादिनिष्ठशक्तिलक्षणानिरूपकत्वात्। कर्तृत्वानभिधायकाख्यातस्यैवाप्रसिद्धेः तच्छाब्दबोधौपयिकाकाङ्क्षाशून्यत्वमेव तत्। चैत्रेण पच्यते तण्डुलइत्यादावाख्यातस्य कर्तृत्वादिवाचकत्वेऽपि तच्छाब्दबोधौपयिकाकाङ्क्षाराहित्यं तत्राक्षतमेव चैत्रादिपदोत्तरतृतीययैव कर्तृत्वबोधनसंभवात् तत्र ताद्दशाकाङ्क्षाया अकल्पनात् इत्यपि न। चैत्रेण पक्ष्यते इत्यादौ तृतीयानुपपत्तेः पक्ष्यते चैत्र इत्यादितश्चैत्रादौ पाककृतेः केवलात्पक्ष्यतइत्यादितश्च मुख्यविशेष्यतया तस्य बोधात्ताद्दशाख्यातधात्वोरानुपूर्वीविशेषाकाङ्क्षायाः कृतिबोधौपयिकत्वात्। न च समभिव्याहाररूपाकाङ्क्षैव विवक्षणीया प्रकृते प्रकृतिप्रत्यययोरानुपूर्वीरूपाकाङ्क्षा न तु समभिव्याहार इति नोक्तानुपपत्तिरिति वाच्यम् तथा सति चैत्रेण पचतीत्यादावपि तृतीयायाः साधुतापत्तेः। ताद्दशचैत्रपदाख्यातपदयोः समभिव्याहारस्य कृतिबोधानौपयिकत्वात् चैत्रेण विजेष्यते मैत्र इत्यादौ तृतीयानुपपत्तेश्च विजेष्यते मैत्र इत्यादितः मैत्रकृतिबोधात्ताद्दशाख्यातमैत्रपदयोः समभिव्याहारस्य कृतिबोधौपयिकत्वात्। किं तु तत्तात्पर्यशून्यत्वमेव। तथा च चैत्रेण पक्ष्यतइत्यादावाख्यातस्य कर्तृत्वादितात्पर्यकत्वे तृतीया असाधुरेव। तथाच चैत्रेण पचतीत्यादावाख्यातस्यार्थाविवक्षायां तृतीयायाः साधुत्वेऽपि परस्मैपदस्यासाधुत्वान्न प्रयोगः। परस्मैपदस्यासाधुत्वं च धात्वर्थविशेष्यस्य प्रत्ययेनाविवक्षणे भावकर्मणोरिति सूत्रेणात्मनेपदनियमात्। आख्यातार्थविवक्षायां न चैत्रेण पचते इत्यादिप्रयोगः, शबादिविकरणस्यासाधुत्वात्। कर्तृत्वतात्पर्यकसार्वधातुकयोगएव तत्साधुत्वात्। कर्तृत्वकर्मत्वोभयतात्पर्येण

मैत्रः पक्ष्यते तण्डुल इत्यादयस्तु न प्रयोगाः। तदेकतरबोधेऽन्यपरत्वेनागृह्यमाणाख्यातधर्मिकप्रकृतान्वयबोधपरत्वज्ञानस्य हेतुत्वात् चैत्रेण पक्ष्यते तण्डुल-इत्यादौ कर्तृत्वाद्याख्यातस्य तात्पर्यग्रहे कर्मत्वाद्यन्वयबोधोऽपि न भवत्येव। अथ पक्वानि भुङ्क्ते चैत्र, ओदनः पक्त्वा भुज्यते इत्यादौ कृतां क्रमेण कर्तृकर्मत्वानभिधानाच्चैत्रपदौदनपदाद्युत्तरं तृतीयाद्वितीये कथन्न स्याताम्। न च कृतानभिधानेऽपि आख्यातेन तदभिधानान्नानभिहितत्वं समभिव्याहृतपदाभिहितत्वसामान्याभावस्यैवानभिहितपदेन विवक्षणात् समभिव्याहृतेतिकरणाच्च चैत्रेण गम्यते ग्रामस्तं मैत्रो गच्छतीत्यादौ न तृतीयाद्वितीययोरनुपपत्तिः गच्छति गम्यतइत्याख्यातस्य तत्तत्पदासमभिव्याहृतत्वादिति वाच्यम् तथा सति भुञ्जानेन चैत्रेण पच्यते भोक्तव्यमोदनं पचतीत्यादौ तृतीयाद्वितीययोरनुपपत्तिः कृता कर्तृत्वकर्मत्वयोरभिधानात्। कृता तत्र भोजनकर्तृत्वतत्कर्मत्वयोरभिधानेऽपि पाककर्तृत्वं तत्कर्मत्वं वानभिहितमिति चेत्तर्हि प्रकृतेऽपि तदनभिहितमेव। न च प्रधानक्रियानिरूपितकर्तृत्वाद्यनभिधाने तृतीयादेः साधुतेति तदुक्तम् प्रधानशक्त्यभिधानेगुणशक्तिरभिहितवत्प्रकाशते इति शक्तिः कर्तृत्वादिकमिति वाच्यम् तथापि चैत्रेण दृश्यमानं घटं मैत्रः पश्यतीत्यादौ ज्ञानभेदेन विषयताभेदाभावात्। चैत्रदर्शनमैत्रदर्शनोभयनिरूपितविषयत्वरूपकर्मतायाः कृताभिधानाद् द्वितीयाद्यनुपपत्तिरिति चेन्न। तत्तत्प्रातिपदिकार्थविशेषणत्वमात्रेण कर्तृकर्मत्वाद्यविवक्षाया एव तदनभिधानपदार्थत्वात्। तत्तत्प्रातिपदिकार्थविशेष्यतया कर्मत्वकर्तृत्वादिविवक्षया द्वितीयाविभक्तेः साधुत्वमित्यर्थे तात्पर्यस्य पर्यवसितत्वात्। शेषमाख्यातार्थविचारे विवेचयिष्यतइत्यलमत्राधिक्येन।

आख्यातद्विवचनबहुवचनयोस्तु संख्याबोधकत्वमावश्यकं चैत्रो मैत्रश्च गच्छतः चैत्रो मैत्रो देवदत्तश्च गच्छन्तीत्यादौ "चन्द्रे कलङ्कः सुजने दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला। मुखाप्रसादः सधनेषु सर्वदा यशो विधातुः कथयन्ति खण्डितम्" इत्यादौ च द्वित्वबहुत्वबोधकसुपोऽभावात्। न च तत्र सुबेकवचनस्यैव द्वित्वबहुत्वादौ लक्षणास्त्विति वाच्यम् आनुशासनिकातिरिक्तार्थे सुब्विभक्तेर्लक्षणाया अनभ्युपगमात्। अन्यथा चैत्रो मैत्रश्च गच्छत इत्यादावविवच्छन्दसि लक्षणयैव स्वादिना द्वित्वादिबोधनसंभवात्। औजसादिरूपादेशस्मृतिद्वारा द्वित्वादिबोधनिर्वाहाय छन्दसि सुपां सुलुगित्यादिसूत्रेण औजसादिस्थाने स्वाद्यादेशस्य वैयर्थ्यात्। चैत्रादिपदोत्तरैकवचनस्य द्वित्वादिलाक्षणिकत्वे तदप्रकृत्यर्थमैत्रादिसाधारणद्वित्वादिबोधस्योक्तव्युत्पत्तिविरोधेनानुपपत्तेश्च। आख्यातार्थसंख्यान्वयबोधे च समानविशेष्यकतदर्थभावनान्वयबुद्धिसामग्री अपेक्षिता भावनाया बाधादिग्रहकाले तात्पर्यशून्यकाले वा उक्तस्थले द्वित्वान्वयाबोधात्। भावनाया अविशेष्ये धात्वर्थादौसंख्यान्वयबोधाच्च तादृशसामग्र्याः संख्यान्वयबुद्धित्वावच्छिन्नं प्रति स्वातन्त्र्येण हेतुता तदकल्पनेऽपि आख्यातजन्यसंख्योपस्थितियोग्यताज्ञानविशेषादिघटितसामग्र्या भावनानवगाहिसंख्यान्वयबोधस्य कदाप्यजननात्। संख्यान्वयबोधसाधारणभावनान्वयबोधत्वावच्छिन्नहेतूनामपि तादृशसामग्रीघटकत्वेनापत्त्यभावात्। न च तादृशकारणानां भावनान्वयबुद्धित्वं संख्यान्वयबुद्धित्वं वा जन्यतावच्छेदकमुपेयते इत्यत्र विनिगमनाविरहः। संख्यामविषयीकृत्यापि भावनान्वयबोधस्यानुभवसिद्धत्वात्। द्वितीयस्य जन्यतावच्छेदकत्वासंभवादिति दिक्। अथ गुणादिवाचकपदोत्तरद्विवचनबहुवचनयोः कथं द्वित्वादिबोधकता संख्यागुणत्वेन गुणादौ बाधात्। न च तत्र स्वाश्रयसमवेतत्वादिसंबन्धेन द्रव्यगतं द्वित्वादिकमेव भासते इति वाच्यम्। एकव्यक्तावपि तादृशसंबन्धेन द्वित्वादेः परिसमाप्ततया एकमात्रतात्पर्येणापि द्विवचनाद्यापत्तिरिति चेत्। अपेक्षाबुद्धिविषयत्वमेव तदुत्तरद्विवचनादिना बोध्यते। तच्चैकमात्रवृत्तिधर्मस्य प्रकृत्यर्थतावच्छेदकस्थले प्रकृत्यर्थतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसंबन्धेन प्रकृत्यर्थेऽन्वेति अन्यत्र शुद्धपर्याप्तिसंबन्धेनेति। न द्वन्द्वादिस्थलोक्तदोष इति विदुषां परामर्शः॥ इति प्रथमा॥

इति व्युत्पत्तिवादगूढार्थतत्वालोकेमैथिलभूसुरश्रीधर्मदत्तविरचिते प्रथमालोकः।

**कर्मणि द्वितीयेत्यनुशासनात्कर्मत्वं द्वितीयार्थः । तत्र कर्मपदस्य धर्ममात्रपरत्वात् सप्तम्या वाचकतार्थकत्वात् । कर्मणश्च न तथात्वं कर्मणि नामार्थस्य ग्रामादेरभेदान्वयसंभवेपि धात्वर्थगमनादिनातदन्वयासंभवात् गौरवाच्च । कर्मत्वं च क्रियाजन्यफलशालित्वम् । तत्र च क्रिया धातुत एव**

---

कर्मत्वं द्वितीयार्थइति द्वितीयामुख्यशक्यइत्यर्थः । अथामादिशक्यसंख्यासंबन्धरूपलक्षणातः कर्मत्वप्रतिपत्तिसंभवात्तत्र शक्तिस्वीकारो नोचितोऽनन्यलभ्यस्य शब्दार्थत्वादितिचेन्न शक्तिग्राहकस्य व्याकरणस्योभयत्र तुल्यतयैकत्र शक्तिरेकत्र लक्षणेत्यत्र विनिगमकस्य दुर्लभत्वात् अन्यथा कोषस्य शक्तिग्राहकस्यानेकार्थे सत्त्वेपि हर्यादिपदानामेकत्रार्थे क्वचिच्छक्तिरन्यत्र लक्षणैव स्यात् किंच यस्यार्थस्य यतो नियमेन प्रतीतिस्तस्यतत्र शक्तिरेवोचिता न लक्षणाभ्युपेयते हि विपरीतम् यतोऽमादितः क्वचित्संख्याया अप्रतीतौ प्रातिपदिकमात्रार्थे प्रथमैव स्यादिति नियमेन कर्मत्वप्रतीतेरुपेयत्वात् बहुघटादिदर्शनस्थल एकत्वाविवक्षया प्रयुक्ताद्घटं पश्यतीत्यादितस्संख्यामविषयीकृत्यापि घटकर्मत्वबोधजननान्नशक्तिः कर्मत्वेऽपि तु लक्षणेति ।

**धर्ममात्रपरत्वादिति ।** भावप्रधाननिर्देशेन कर्मत्वपरत्वात् मात्रपदेन तदाश्रयस्य शक्यत्वव्यवच्छेदः । अथैवं स्वायत्ते शब्दप्रयोगे कर्मत्वे द्वितीयेत्यभियुक्ततमो भगवान् पाणिनिः किमिति नासूत्रयदिति चेन्न कर्मणि द्वितीयेत्यस्यैव धर्मजनकत्वात् वर्णपदलाघवपक्षपातित्वाद्वा सूत्रकर्तुस्तथाप्रणयनात् एकत्र हि णकारेकारावन्यत्र तकारवकाराकाराः एवं कर्मपदाल्लक्षणया कर्मत्वबोधो न्यूनविषयकः कर्मत्वपदाच्च कर्मत्वविशिष्टासाधारणधर्मत्वेन तद्विषयकतयाऽधिकविषयकः कर्मत्वस्य कर्मत्वेन भानमुभयत्र समानमित्यतोऽपि कर्मणीत्येव वक्तव्यम् किञ्च कर्मणिद्वितीयेत्युक्तौ कर्मत्वबोधिका द्वितीया कर्मबोधकप्रकृत्युत्तरं साध्वीतिबोध्यते नच वाक्यभेदः कर्मबोधकप्रकृतिपदमुद्दिश्यकर्मत्वबोधकत्वसाधुत्वोभयविशिष्टद्वितीयाविधानात् साधुत्वाविधाने कर्मबोधकप्रकृत्युत्तरं लक्षणया कर्मत्वं बोधयन्ती प्रथमापि साधुतामापद्येत कर्मत्वबोधकत्वाविधाने द्वितीयायाः कर्मत्वबोधकत्वमप्राप्तं स्यात् घटादिपदानां घटत्वविशिष्टबोधकत्वस्येव व्यवहारतएव प्राप्तस्य कर्मत्वबोधकत्वस्यास्त्वनुवादएव तथाचोद्देश्यतावच्छेदकघटकतैव तस्योक्तबोधस्य च कर्मणीति पदावृत्त्यादिना कथञ्चित्संपाद्यत्वमवसेयम् । अथकर्मपदशक्यार्थस्य कुतोन द्वितीयाशक्यत्वमित्यत आह । **कर्मणश्चनतथात्वमिति ।** स्वनिष्ठकर्मतानिरूपकत्वसंबन्धेनान्वयसंभवादाह । **गौरवाच्चेति ।** अथैदंकर्मैदंकर्मेति व्यवहारात्प्रतियोगित्वविषयित्ववदखण्डं यत्कर्मत्वमुपाधिः स्वरूपतस्तद्विशिष्टे शक्तौ कर्मतात्वविशिष्टशक्त्यपेक्षया नास्ति गौरवम् । नच यदिदं कर्मत्वमनुगतव्यवहारानुरोधादुपगतं तस्यैकतया सर्वक्रियां प्रति सर्वस्य कर्मत्वापातऐन्द्रियकत्वे चक्षुरादिसंबन्धानन्तरमेवायं घट इतिवदिदं कर्मेतिव्यवहारापत्तिरतीन्द्रियत्वे क्रियातत्फलदर्शनादावपि स न स्यादिति वाच्यं तत्तत्क्रियानिरूपितस्य नियतनिरूपकनिरूप्यस्यानेकस्यैवोपगमेन दोषाभावादिति चेन्न पाकक्रियानिरूपितकर्मत्व एकस्मिन् मम शक्तिरेकस्मिन् तादृशकर्मतात्वे शक्यतावच्छेदकत्वं तव त्वनेकस्मिन् तण्डुलद्विदलादौ शक्तिः शक्यतावच्छेदकतैव परमेकस्मिन्निति गौरवस्य व्यक्तत्वात् । नच्चैवंविधेन गौरवेण गोघटादिपदानामपि गोत्वघटत्वादिष्वेव शक्तिः स्यान्नतु गोत्वादिविशिष्टइति वाच्यं स्वरूपतोगोत्वादौ शक्त्यसंभवाद्गोत्वत्वस्य शक्यतावच्छेदकत्वेऽतीवगौरवात् गोत्वादेरेकत्वेन स्वतएवानुगततयानुगमकशक्यतावच्छेदकं विनाऽपि शक्यत्वेपि गामानय गौर्नश्यति गौर्गच्छतीत्यादीनां गोत्वस्यानयनकर्मत्वनाशादिप्रतियोगित्वादेः स्वरूपतः शाब्दमुख्यविशेष्यत्वस्य चासंभवेनागत्या गोत्वादिविशिष्टे शक्त्युपगमात् प्रकृते च तादृशानुपपत्तेरभावेन द्वितीयायाः कर्मत्वएव शक्त्यभ्युपगमात् वस्तुतस्तु कॢप्तपदार्थेष्वन्तर्भावासंभवादखण्डोपाधेः कस्यचिदभ्युपगमो नान्यथाऽत्रतु प्रकृतधात्वर्थक्रियाजन्यस्य प्रकृतधात्वर्थतावच्छेदकस्य वा फलस्याश्रयत्वेन कॢप्तेनैवकर्मत्वव्यवहारोपपत्तेरखण्डोपाधौ तत्र मानाभावः । नच यत्र मते धातूनां व्यापारमात्रे शक्तिस्तत्र नोक्तकर्मत्वस्य संभव इति वाच्यं प्रकृतधातुप्रयोज्यविषयताविशिष्टतात्पर्यीयविषयतानिरूपितविषयताश्रयफलाश्रयत्वस्य प्रकृतधातुकर्मत्वरूपताया वक्तुं शक्यत्वात् इदं द्वितीयादिकं गम्यादिधात्वर्थव्यापारनिष्ठविषयतानिरूपितसंयोगादिनिष्ठविषयताकबोधं जनयतु गम्यादिधातुर्वा संयोगादिविषयतानिरूपितव्यापारनिष्ठविषयताकबोधं जनयत्वितीच्छायास्तात्पर्यात्मिकायास्सत्त्वात् एतेन क्रियाजन्यफलाश्रयत्वस्य कर्मत्वे विभागरूपफलमादाय पूर्वदेशस्य तथात्वापत्तिरिति निरस्तम् । तात्पर्यस्याहेतुत्वे प्रकृतधातुप्रयोज्यविशेष्यतानिरूपितद्वितीयाप्रयोज्यप्रकारताश्रयफलवत्त्वं तद्वाच्यं तथाच तदादिवत्प्रकृतधात्वर्थतावच्छेदकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न एकैव शक्तिः स्वरूपतः संयोगत्वादिविशिष्टे शक्तिग्रहात्तादृशस्योपस्थितिः स्वरूपतः संयोगत्वादिविशिष्टे नानैव वा शक्तिर्मम । तव तु तादृशधर्मावच्छिन्नविशिष्ट एका संयोगादिविशिष्टे नानावेति कर्मत्वशक्त्यपेक्षया कर्मशक्तौ गौरवं हि स्फुटम् । ममत्वाधेयत्वं जनकत्वञ्च संसर्गस्तव तादात्म्यं स्ववृत्तिसंयोगजनकत्वञ्च संसर्ग इत्यपि गौरवमवसेयम् आधेयत्वे द्वितीयायाः शक्तिपक्षे लाघवंत्वधिकं स्फुटमेवेति भावः ।

क्रियाजन्यफलशालित्वमिति । ननुकाशींगच्छन् पथिमृत इत्यादौ काश्याःकर्मत्वं न स्याद्गमनजन्यसंयोगानाश्रयत्वादिति चेन्न यथाहि रथादेः क्रियाजनकत्वभावेन रथोगच्छतीत्यादावमुख्यमेव कर्तृत्वं तथा काश्यादेरपिक्रियाजन्यफलानाश्रयत्वेना-

लभ्यते जन्यजनकभावस्य च विनैव पदार्थत्वं संसर्गमर्यादया भानं संभवतीति फलमात्रं कर्मप्रत्ययार्थः । नच संयोगविभागरूपफलमपि धातुलभ्यमेव गमित्यजिप्रभृतीनां तदवच्छिन्नस्पन्दादिरूपव्यापारवाचकत्वादिति वाच्यम् व्यापारमात्रस्य धात्वर्थत्वात् । फलविशेषान्वयबोधे च धातुविशेषजन्यव्यापारोपस्थितेर्हेतुतया ग्रामं त्यजतीत्यादौ धात्वर्थस्पन्दे ग्रामनिष्ठविभागजनकत्वमेव ग्रामं गच्छतीत्यादौ च धात्वर्थस्पन्दे ग्रामनिष्ठसंयोगजनकत्वमेव प्रतीयते नतु विपरीतम् । ग्रामं गच्छतीत्यादिवच्च ग्रामं स्पन्दतइत्यादयो न प्रयोगाः द्वितीयादेर्गम्याद्युपस्थापितस्पन्दादावेव फलान्वयबोधकत्वात् । नतु स्पन्दिप्रभृत्युपस्थापिते तस्मिन् द्वितीयादिना फलान्वयबोधजननासंभवात् । न हि येन केन चिदुपस्थापितयोरेवार्थयोः परस्परमन्वयः प्रतीयते तथा सति घटकर्मत्वादिपदोपस्थापितयोरपि घटकर्मत्वाद्योः परस्परमन्वयबोधप्रसंगात् कृञादिसमानार्थकधातूपस्थाप्ययत्नेविषयितार्थकद्वितीयार्थान्वयसंभवेन घटं करोतीतिवद् घटं यतते इत्यादिप्रयोगप्रसङ्गाच्च अपि तु ययोर्यादृशान्वयबोधे आकाङ्क्षा तदुपस्थापितयोरेव तादृशान्वयबोधः आकाङ्क्षा च द्वितीयादेर्गम्यादिना कृञादिना च कल्पते न तु तत्समानार्थकेनापि स्पन्दियतिप्रभृतिनेति । न चाकाङ्क्षात्र समभिव्याहारः, स च गम्यादिनेव स्पन्दादिनापि समान एवेति वाच्यम् यतो द्वितीयादेर्गम्यादिसमभिव्याहारस्यैव फलबलादन्वयबोधौपयिकत्वमुपगम्यते नतु स्पन्दिप्रभृतिसमभिव्याहारस्येति न तस्याकाङ्क्षात्वमन्वयबोधौपयिकसमभिव्याहारस्यैव तथात्वात् । अतएव समानार्थकत्वेऽपि गम्यादेरिव न स्पन्द्यादेः सकर्मकत्वव्यवहारः फलान्वितव्यापारबोधकधातुत्वस्यैव तन्नियामकत्वात् ।

---

मुख्यमेव कर्मत्वं तच्च प्रकृतक्रियाकर्तृसमवेतेच्छीयक्रियाजन्यफलाश्रयत्वप्रकारतानिरूपितमुख्यविशेष्यताश्रयत्वं काश्यां च तदस्ति उभयसाधारणञ्च स्वाश्रयत्वस्वनिष्ठतादृशेच्छीयप्रकारतानिरूपितविशेष्यताश्रयत्वान्यतरसंबन्धेन क्रियाजन्यफलवत्त्वं तत् अत्रच यत्र न फले प्रकृत्यर्थत्ववृत्तित्वस्य बाधग्रहस्तत्राधेयत्वमेव संसर्गतया भासते यत्र बाधग्रहस्तत्र स्वनिष्ठविशेष्यतानिरूपिततादृशेच्छीयप्रकारत्वमितिबोध्यम् । नामार्थधात्वर्थयोः साक्षाद्भेदसंबन्धेनानन्वयनियमः प्रतिबध्यप्रतिबन्धकभावलाघवेन प्रथमायां व्यवस्थापित इति कर्मत्वस्य विभक्त्यर्थत्वमावश्यकं नतु तस्य संसर्गत्वसंभवस्तत्र तद्घटकस्य समभिव्याहृतपदेनान्येन यस्य लाभस्तस्य तदर्थत्वन्नोचितमिति फलमात्रस्य तथात्वमाह । **तत्र च क्रियेत्यादिना ।** एतेन जन्यजनकभाववत् फलस्यापि स्ववृत्तिफलजनकत्वरूपपरम्परासम्बन्धघटकतया भानसंभवात्तस्यापि पदार्थत्वं नोचितमिति निरस्तम् फलमात्रस्य तथात्वेप्यनन्यलभ्योहि शब्दार्थइति नियमभङ्गं निराकरोति । **नचेत्यादिना ।** एतेन यद्युक्तग्रन्थस्य फलस्याप्यनन्यलभ्यतया निरुक्तकर्मत्वस्य समस्तस्यैवानन्यलभ्यत्वाद्द्वितीयायाः कोपि नार्थ इत्येतत्परता तदाऽसङ्गतिः नामार्थधात्वर्थयोर्भेदेनान्वयाभावपक्षावलम्बनेनैव विचारस्योपक्रान्तत्वादन्यथाफलस्य धात्वलभ्यत्वेपि तद्घटितसम्बन्धेनान्वयादेव निर्वाहेण गौरवेण फले शक्तेरसंभवात्तदभिधानानुपपत्तेरतः कस्यापि तदर्थताया अवश्यं वाच्यत्वादिति निरस्तम् उक्तनियमभङ्गप्रसङ्गनिराकरणमात्रपरत्वादुक्तग्रन्थस्येति । **व्यापारमात्रस्यधात्वर्थत्वादिति ।** मात्रपदेन फलस्य धात्वर्थताव्यवच्छेदः नतु व्यापारत्वरूपसामान्यधर्मावच्छिन्नस्येत्यर्थस्तस्य ज्ञानत्वप्रयत्नत्वाद्यवच्छिन्ने ज्ञानादेः शक्त्यभ्युपगमात् सामान्यस्य शाब्दबोधविषयीभूतस्य व्यापारत्वस्वरूपस्य निर्वक्तुमशक्यत्वाच्च । व्यापारपदार्थस्त्वत्र न क्रियात्वरूपतृतीयपदार्थविभाजकधर्माश्रयो ज्ञानादेरपि धात्वर्थत्वात् यदि धातुपदेन प्रकृतत्वात्त्यजिगम्यादेरेव ग्रहणं तदा स्यादपि कथञ्चिन्नान्यथा नापि धात्वर्थः धात्वर्थस्य धात्वर्थत्वादित्यस्य निराकाङ्क्षत्वात् । नापि फलानुकूलः सः सुखं साक्षात्करोतीत्यादौ चरमफलस्य सुखसाक्षात्कारस्य धात्वर्थत्वानापत्तेः नापि साध्यावस्थापन्नः फलस्यापि तादृशत्वात् नापि तिङन्तार्थजन्यबोधे भावनायां प्रकारीभूतोऽर्थः फलावच्छिन्नव्यापारस्यापि तादृशत्वादपितूक्तबोधीयभावनानिष्ठविशेष्यतानिरूपितप्रकारत्वावच्छिन्नविशेष्यताश्रयः तादृशश्च व्यापारमात्रं न फलावच्छिन्न इति उक्तवाक्यस्य धातुशक्यतानुकूलत्वसंबन्धावच्छिन्नकिञ्चिन्निष्ठावच्छेदकत्वानिरूपितेति तात्पर्यार्थ इति । **फलविशेषेति ।** द्वितीययेत्यादिः । **हेतुतयेति ।** अथ निराकाङ्क्षैः प्रकृतिद्वितीयाधातुभिस्तत्तदर्थोपस्थितावपि शाब्दबोधानुदयाद्ग्रामवृत्तिसंयोगजनकव्यापारानुकूलकृतिविशिष्टचैत्रादिबोधे ग्रामं गच्छति चैत्र इत्यादिसमभिव्याहारज्ञानत्वेन कारणताया आवश्यकतया ततएव गम्याद्यर्थे विभागादेरन्वयबोधवारणसंभवात् उपस्थितेरुक्तहेतुताकल्पनमनर्थमितिचेन्न उक्तसमभिव्याहारज्ञानसत्त्वे त्यजधातुतो व्यापारोपस्थितौ च निरुक्तशाब्दबोधापत्तेर्वारणाय निरुक्तहेतुत्वस्याप्यावश्यकत्वात् । **बोधप्रसङ्गइति ।** द्वितीयादेरभावेन तदुपस्थापितफलविशेषविषयकत्वलक्षणवैलक्षण्यासंभवादिति भावः । अविलक्षणबोधप्रसंगइत्यतो विलक्षण-

अथ धातोर्व्यापारमात्रवाचित्वे त्यजति गच्छति त्यागो गमनमित्यादिवाक्यादविलक्षणबोधप्रसङ्गः नहि शक्तिभ्रमाद्यजन्मनोस्तादृशवाक्यजन्यबोधयोरवैलक्षण्यं कश्चिदभ्युपैति तथासति त्यागादितात्पर्येण गमनादिपदं व्युत्पन्नाअपि प्रयुञ्जीरन्। नच तत्र फलविशेषावच्छिन्नव्यापारे लक्षणा स्वीक्रियते इति विलक्षणबोधोपपत्तिरितिवाच्यम् लक्षणया विलक्षणबोधजननेऽपि शक्त्याविलक्षणबोधजननसंभवेन दर्शितातिप्रसङ्गस्य दुर्वारत्वात्। नच गम्यादिशक्तिज्ञानजन्यार्थोपस्थित्या फलाविषयबोधस्य कुत्राप्यजननात् तादृशोपस्थितिघटितसामग्रीशरीरे फलविशेषबोधकसामग्रीनिवेश्यते तथाच त्यागगमनादिपदयोः शक्त्यानाविलक्षणबोधजनकतेति वाच्यम् त्यजिगम्योरेकार्थवाचकतारूपपर्यायतां विपर्यस्यतोगमनादिपदात् त्यागादिपदजन्यबोधसमानाकारकबोधस्य सर्वानुभवसिद्धतया गम्यादिशक्तिज्ञानात्फलाविषयकबोधस्यापि प्रसिद्धेः फलविशेषबोधकसामग्र्या गम्यादिशक्तिज्ञानजन्यबोधनियामकताया वक्तुमशक्यत्वात्। तथा चाभ्रान्तस्यापि भवन्मते ततोऽविलक्षणबोधसंभवेन एकविधबोधतातात्पर्येण व्युत्पन्नानां तादृशप्रयोगप्रसङ्गो दुर्वार इति चेत् मैवम् कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते न तु केवलव्यापारे। अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमिति एकार्थतात्पर्येण प्रामाणिकानां स्वारसिको न

---

बोधाभावप्रसङ्गमवगतवतः शङ्का। **तत्र फलविशेषेति।** शक्तिभ्रमंलक्षणाग्रहञ्च विनापि विलक्षणो बोध इष्टस्तत्र शक्तिप्रमया जातयोर्बोधयोर्वैलक्षण्यप्रयोजकाभावेन तयोरवैलक्षण्यापत्तिरेवाभिमतेत्यभिप्रायेण निराकरणं। **नच वाच्यमिति।** ननु यथाविशिष्टशक्तिवादिनस्तव शक्तिज्ञानान्नियमेन गम्यादितः फलविशेषविषयकएव बोधस्तथाशुद्धशक्तिवादिनो ममापि व्यापारबोधस्याकिञ्चित्करतया फलविशिष्टव्यापारविषयकएव गम्यादिशक्तिज्ञानतो बोधः इयांस्तु विशेषो यदस्मन्मते तत्पूर्वं ग्रामं ग्रामस्येत्यादिफलविशेषबोधकद्वितीयान्तादिसमभिव्याहारज्ञानद्वितीयादिजन्यफलाद्युपस्थित्यादिकल्पनं तवतु नेति तथाच गम्यादिशक्तिज्ञानजन्यव्यापारविषयकशाब्दबोधस्य संयोगादिविषयकशाब्दत्वाश्रयतानियमेन तदवच्छिन्नप्रयोजकद्वितीयादिशक्तिज्ञानजन्यफलविशेषोपस्थित्यादिघटितसामग्र्यास्तदुत्पत्तौ नियमेनापेक्षणीयतया गम्यादिशक्तिज्ञानजन्यशाब्दसामग्र्याः फलविशेषविषयकशाब्दसामग्रीविशिष्टतयैव कार्यव्याप्यतायाः स्वीकरणीयत्वात् कथं शक्तिज्ञानजन्ययोस्त्यजिगमिधातुजबोधयोरवैलक्ष्ण्यप्रसंग इत्यभिप्रेत्याशङ्कते**गम्यादिशक्तिज्ञानेति त्यजिगम्योरेकार्थ वाचकतेति** अथ त्यजिगम्योरेकार्थवाचकत्वमभ्युपगम्यैव शक्तिग्रहाधीनतज्जनितबोधस्य नियमेन फलविशेषबोधत्वमभ्युगम्यं तथाचैकार्थवाचकत्वरूपपर्यायताया विशिष्टशक्तिवादिमते वाच्यतावच्छेदकभेदेन त्यजिगम्योस्तदभावेन विपर्यासेपि व्यापारमात्रशक्तिवादिमते शक्यतावच्छेदकस्यापि भेदाभावात्त्यजिगम्योस्तत्सत्त्वेन तद्विपर्यासासंभवः तादृशपर्यायत्वस्य तत्र सत्त्वेपि केवलव्यापारमात्रशक्त्यङ्गीकर्तृस्वीकरणीयस्य पदान्तरसमभिव्याहारसाम्ये येन सह यस्य नियमेनान्यूनानतिरिक्तविषयकबोधजनकत्वं साम्यं तत्त्वरूपस्य पर्यायत्वस्य यद्यपि न त्यजिगम्योस्संभवः ग्रामंगच्छति ग्रामस्य गमनं ग्रामं त्यजति ग्रामस्य त्यागइति समभिव्याहारसाम्येऽपि बोधस्यान्यूनानतिरिक्तविषयकत्वविरहात् तथापि तद्विपर्याससंभवेपि तद्वतः पुंसः त्यजिगमिजन्यशाब्दबोधस्यान्यूनानतिरिक्तविषयकस्य संयोगविभागान्यतरैकविषयकत्वनियमात्फलाविषयकशाब्दबोधप्रसिद्धेरित्यस्यासङ्गतिरिति चेन्न फलाविषयकेत्यत्र फलपदस्य तत्तद्धातुशक्तिज्ञानजन्यशाब्दबोधनियतविषयत्वेनाभिमतफलपरत्वात् तदविषयकत्वस्यैकधातुजन्यशाब्दबोधे संभवात् गमेस्संयोगविशेषितव्यापारबोधकत्वग्रहवतस्तत्पर्यायत्वस्य त्यजिग्रहे त्यज्धातुजन्यबोधे विभागविषयकत्वस्य त्यजेर्विभागविशिष्टव्यापारबोधकत्वग्रहे तत्पर्यायत्वस्य गमिग्रहे गमधातुजन्यबोधस्य संयोगाविषयकत्वस्य च सत्त्वात्। एवञ्च गमधातुशक्तिज्ञानजन्यशाब्दसामग्र्यां द्वितीयाजन्यसंयोगोपस्थितेस्त्यजधातुशक्तिज्ञानजन्यशाब्दसामग्र्यां द्वितीयाजन्यविभागोपस्थितेर्व्यभिचारेण निवेशयितुमशक्यतया त्यजति गच्छतीत्याभ्यां त्यागोगमनमित्याभ्याञ्च शक्त्याद्यविशेषबोधप्रसङ्गः पर्यायत्वप्रसंगश्च दुर्वारः। यद्वा सर्वानुभवसिद्धतयेति तृतीया यथाकथञ्चित्प्रयोजकत्वार्थिका तथाच विशिष्टशक्तिवादिमते व्यापारत्वरूपैकधर्मावच्छिन्नशक्तत्वेन त्यजिगम्योर्यदापर्यायत्वभ्रमस्तदा स्यन्दत इत्यत इव गच्छतित्यजतीत्यतोऽपि केवलव्यापारबोधस्सर्वानुभवसिद्धो यथा तथा द्वितीयादितः फलानुपस्थितौ केवलव्यापारशक्तिवादिमते त्यजिगम्योः सदिसमानार्थत्वग्रहे ताभ्यामपि फलाविषयकबोधोऽनुभवसिद्धः कुतो न भवेत् पर्यायत्वग्रहस्य हि भ्रमत्वप्रमात्वाभ्यां वैलक्षण्यमकिञ्चित्करमिति कथञ्चिदुक्तस्य प्रयोजकत्वेन पर्यायताभ्रमत्वोक्तिः फलाविषयकत्वोक्तिश्च नासङ्गतिरेवं सर्वत्र द्वितीयान्तसमभिव्याहारस्य नियमेनानुसन्धानकल्पनेऽपि न मानं तत्कल्पने च संयोगादिफलस्य ग्रामादिप्रकृत्यर्थविशेषितस्यैव भानस्योपगन्तव्यतया गमनमित्यतः शाब्दबोधे जाते कस्येत्याकाङ्क्षायास्सर्वानुभवसिद्धाया अपलापप्रसङ्गो ग्रामादेस्तत्र भानादिति फलाविषयकबोधप्रसिद्धे-

त्यागगमनादिप्रयोगः । एवं त्यजिगमिप्रभृतिसमभिव्याहृतकर्मप्रत्ययस्य फलविशेषएव नियतं तादृशं तात्पर्यमिति न विभागादितात्पर्येण ग्रामं गच्छतीत्यादिप्रयोगः । तदर्थबोधकत्वमात्रं तु न तदर्थतात्पर्येण स्वारसिकप्रयोगनियामकं तथा सति शक्तिभ्रमादिना घटपदस्यापि पटादिबोधकतया पटेऽपि घटादिपदप्रयोगापत्तिः । नापि शक्त्या बोधकत्वं तथा निरूढलक्षणयापि स्वारसिकपदप्रयोगात् । शक्तिभ्रमं लक्षणाज्ञानं चान्तरेण गम्यादेर्विभागादिरूपफलविशेषितस्पन्दादिबोधकत्वाभावनियमोऽसिद्ध एवेति तात्पर्यभ्रमसहकृतशक्तिप्रमया तादृशबोधजननेऽपि न क्षतिः । विना लक्षणाग्रहं भ्रमानधीनतादृशबोधो गमिप्रभृतितो न संभवतीत्येव नियमः स च तात्पर्यभ्रमेणैव निर्वहति विभागाद्यर्थे पूर्वपूर्वेषामनादितात्पर्यभ्रमवतो वक्तुः स्वकीयतात्पर्येण ग्रामं गच्छतीत्यादिप्रयोगो यत्र तत्रश्रोतुस्तात्पर्यभ्रमासंभवेऽपि वक्तृतात्पर्यानादित्वभ्रम एव प्रयोगसंपादनद्वारा तदर्थशाब्दबोधप्रयोजक इति न तादृशनियमक्षतिरिति प्राचीनपथपरिष्कारप्रकारः

नव्यास्तु संयोगादिरूपफलविशेषावच्छिन्नस्पन्दो गम्याद्यर्थः तद्धात्वर्थतावच्छेदकफलशालित्वमेव तद्धातुकर्मत्वं नातो गम्यादिकर्मत्वस्य पूर्वदेशादौ प्रसङ्गः । न वा स्पन्दे: सकर्मकत्वं तत्र फलस्य धात्वर्थतानवच्छेदकत्वात् । एवं च धातोरेव फलविशेषलाभात्, फलान्वयिनी वृत्तिरेव द्वितीयार्थः । न च कर्मणि द्वितीयेत्यनुशासनविरोधः तस्य कर्मणि फलनिष्ठाधेयत्वान्वयिनि प्रकृतितात्पर्ये तदुत्तरं द्वितीयेत्यर्थकत्वात् । न चैवं तस्य शक्तिग्राहकत्वानुपपत्तिः अनादितात्पर्यग्रहसंपादकत्वेन परंपरया शक्तिग्राहकत्वसंभवात् । न च फलस्य पदार्थैकदेशतया तत्र द्वितीयार्थवृत्तेरन्वयासंभवः व्युत्पत्तिवैचित्र्येण प्रकृते एकदेशान्वयस्वीकारात् । अथ गमनं न स्पन्द इत्यादितो धात्वर्थतावच्छेदके भेदान्वयबोधसंभवेन एतादृशप्रयोगस्य वारणाय फलवि ष्यकान्वयबोधे तद्विशेष्यकवृत्तिज्ञानजन्यफलोपस्थितित्वेन हेतुत्वकल्पनस्यावश्यकत्वात् तादृशकारणबाधेन धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयासंभवः । न च यादृशपदसमभिव्याहारज्ञानात् फलविशेष्यकस्पन्दभेदान्वयबोधः प्रसिद्धः तादृशपदसमभिव्याहारज्ञानतादृशपदज्ञानजन्यफलाद्युपस्थितिघटितसामग्र्यास्तादृशान्वयबोधोत्पादप्रयोजिकाया असत्त्वेनोक्तस्थले तदापत्त्यसंभव इति वाच्यम् यत्र गमनादिपदादेव लक्षणया शक्तिभ्रमेण वा स्वातन्त्र्येण फलोपस्थितिस्तत्र फलविशेष्यकस्पन्दभेदान्वयबोधप्रसिद्ध्या गमनपदसमभिव्याहारतज्जन्यफलोपस्थितिघटितसामग्र्या फलविशेष्यकस्पन्दत्वाद्यवच्छिन्नभेदान्वयबोधप्रयोजकताया आवश्यकत्वात् तद्बलेन शक्तिप्रमाधीनबोधेऽपि फलांशे स्पन्दभेदादिभानप्रसङ्गः । एवं च फलव्यापारयोः पृथक्शक्तिस्वीकारपक्षेऽपि न निस्तारः । तथात्वेऽपि हि गमनं न स्पन्द इत्यादौ फले शक्तिप्रमया स्पन्दभेदान्वयबोधसंभवेन तादृशप्रयोगापत्तेर्दुर्वारत्वादिति चेन्न । तद्विशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिजन्यतावच्छेदककोटौ तादृशोपस्थित्यव्यवहितोत्तरत्वनिवेशनमावश्यकम् । विशिष्य तत्तत्पदमन्तर्भाव्यैव पदार्थोपस्थितेरेकैकविधबोधे नानाहेतुताया व्यवस्थापितत्वात् एकपदाधीनतद्विषयकशाब्दबोधे पदान्तरवृत्तिज्ञानजन्यतदुपस्थितेर्व्यभिचारस्य प्रकारान्तरेण वारणासंभवात् । एवं च धात्वर्थतावच्छेदकफले द्वितीयार्थान्वयबोधेऽपि क्षतिविरहात् तत्र तादृशकारणस्य व्यभिचाराप्रसक्तेरिति वदन्ति ।

---

रित्यस्य नासङ्गतिरित्यपि बोध्यमिति । **परम्परया शक्तिग्राहकत्वसंभवादिति** । द्वितीयाधेयत्वशक्ताऽसति बाधके स्वघटितवाक्यघटकपदान्तराबोध्याधेयत्वान्वितस्वार्थतात्पर्यविषयप्रकृतिकत्वादित्यनुमानस्य शक्तिग्राहकस्य तात्पर्यघटितोक्तहेतोर्ग्रहोपयोगितात्पर्यग्रहसम्पादकत्वेनेत्यर्थः । **यादृशपदसमभिव्याहारज्ञानादिति** । संयोगो न स्पन्दइत्यादिसमभिव्याहारज्ञानादित्यर्थः । **व्यवस्थापितत्वादिति** । कारणतावच्छेदककोटौ पदविशेषस्याप्रवेशे पदान्तरात्तदर्थोपस्थितौ तदर्थागृहीतशक्तिकपदसमभिव्याहारज्ञानात्तदर्थविशेष्यकशाब्दापत्तेर्वारणाय पदविशेषवृत्तिज्ञानघटितधर्मेण कारणताया व्यवस्थापितत्वादित्यर्थः । तादृशहेतुत्वे च पदविशेषघटितयोस्समभिव्याहारज्ञानोपस्थित्योरेव सहकारित्वकल्पनेन नोक्तापत्तिरिति भावः **व्यभिचाराप्रसक्तेरिति** । विशिष्टशक्तिपक्षे फलविशेष्यकाधेयत्वप्रकारकबोधस्य फलविशेष्यकवृत्तिज्ञानजन्योपस्थित्यव्यवहि-

अत्रेदं चिन्त्यते। व्यापारमात्रस्य धात्वर्थतायामपि सर्वानुपपत्तीनामुद्धृतत्वात् फलावच्छिन्नव्यापारस्य गुरुतया तथात्वमनुचितम्। अथ फले द्वितीयादेः शक्त्यन्तरकल्पनामपेक्ष्य धातोर्विशिष्टशक्तिकल्पनमेवोचितम्। नच भवन्मतेऽप्याधेयत्वे द्वितीयादेः शक्त्यन्तरस्य कल्पनीयत्वात्तदंशे साम्यमिति वाच्यम् ग्राममध्यास्ते ग्राममधिशेते ग्राममधितिष्ठतीत्यादौ द्वितीयायाः सर्वमतएवाधेयत्वबोधकतया द्वितीयादेः फलवाचकत्वमतेऽपि आधेयत्ववाचकताया आवश्यकत्वात्। न च द्वितीयायाः संयोगादिवाचकत्वमते आधेयत्वे तस्या लक्षणैव न तु शक्तिरिति वाच्यम् आधेयतात्वस्याखण्डतया संयोगत्वादिसमशरीरत्वात् संयोगत्वाद्यवच्छिन्ने तदवच्छिन्ने वा शक्तिः कल्प्यते इत्यत्र विनिगमकासंभवात्। अस्तु वा ममाप्याधेयत्वे लक्षणैव शक्तिस्तु संख्यायामेव। यदि च द्वितीयादेः फलबोधकतामते फलेपि तस्या लक्षणैव न तु शक्तिः शक्तिस्तु संख्यायामेव संयोगविभागादिकप्रत्येकफलापेक्षया संख्यायां तत्प्रयोगप्राचुर्यस्य विनिगमकत्वादित्युच्यते तथापि तन्मते धातुजन्यशुद्धव्यापारोपस्थितेः शाब्दबोधहेतुताकल्पनमधिकं द्वितीयाद्यसमभिव्याहारस्थलानुरोधेन फलविशेषावच्छिन्नव्यापारे धातोर्लक्षणया भवतामप्यावश्यकत्वाद्धातुजन्यतादृशव्यापारोपस्थितिहेतुताया उभयसिद्धत्वात्। यदि च स्पन्दतइत्यादित इव शक्तिभ्रमाद्गच्छतीत्यादितोऽपि शुद्धव्यापारबोध आनुभविक इति मन्यन्ते तथापि तन्मते शाब्दबुद्धौ द्वितीयादिजन्यफलोपस्थितेः कारणतायाः कल्पनाधिक्यं तज्जन्याधेयत्वोपस्थितिहेतुत्वकल्पनस्य चोक्तस्थलानुरोधेन उभयमतएवावश्यकत्वादिति चेत् अस्तु तन्मते तादृशकारणताया आधिक्यं नव्यमते तु ग्रामं गच्छतीत्यादिवाक्यज्ञानघटितशाब्दसामग्र्याः समानविषयकानुमित्यादिप्रतिबन्धकतायां फलप्रकारतानिरूपितव्यापारविशेष्यताशालित्वेन धातुजन्योपस्थितेर्निवेशनीयतया तस्यास्तादृशविशेष्यताशालित्वेन व्यापारविशेष्यतानिरूपितफलप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमनाविरहात् सामग्रीप्रतिबन्धकताधिक्यमवच्छेदकगौरवं च। प्राचीनमते द्वितीयजन्यफलोपस्थितेः सामग्र्यन्तर्निवेशस्तु नव्यमतसिद्धतज्जन्याधेयत्वोपस्थितिनिवेशस्थलीय इति। नव्यमते तादृशस्थले शाब्दबोधस्याधिकविषयतया तात्पर्यज्ञानादिकमप्यधिकविषयकमेव शाब्दधीहेतुर्भविष्यति, प्रतिबन्धकसामग्र्यामप्यन्तर्भविष्यतीतिगौरवम्। अथ फलस्य द्वितीयार्थत्वे भूमि

---

तोत्तरत्वरूपकार्यतावच्छेदकानाक्रान्तत्वात् पृथक् शक्तिपक्षे कार्यतावच्छेदकाक्रान्तत्वेऽपि कारणस्यापि सत्त्वाद्व्यभिचाराप्रसक्ते-
रित्यर्थः। अथविशिष्टशक्तिपक्षे गमधातोस्संयोगेलक्षणायां गमनं न स्पन्द इत्यत्र संयोगविशेष्यकबोधस्येष्टतया फलव्यापारयोः
शक्तिपक्षे संयोगविशेष्यकशक्तिप्रमयैव संयोगोपस्थितौ गमनं न स्पन्द इति शाब्दबोधापत्तिः स्वरसस्तादृशप्रयोगापत्तिश्चेतिचेन्न
विभक्त्यर्थान्यनिष्ठप्रकारतानिरूपितधातुप्रयोज्यफलनिष्ठविशेष्यताकशाब्दबोधे धातुजन्यव्यापारोपस्थितत्वेन प्रतिबन्धकत्वस्य
कल्पनात् व्यापारविशेष्यकफलविशेषणकबोधतात्पर्यज्ञानप्रतिबन्धकत्वस्य वक्ष्यमाणत्वाच्च। व्यापारशक्तिग्रहाभावकाले चेष्टापत्तेः
स्वारसिकप्रयोगेपि व्यापाराशक्तधातुधर्मिकफलशक्तिज्ञानस्य हेतुत्वात्स्वारसिकप्रयोगानापत्तेश्चेति। ननु द्वितीयाया आधेयत्वे-
शक्तौ धातोः फलावच्छिन्नव्यापारत्वरूपगुरुधर्मावच्छिन्ने शक्तिः फलेशक्तौ च व्यापारत्वरूपलघुधर्मावच्छिन्ने शक्तिरिति लाघव-
गौरवमेव विनिगमकमित्यत आह। **अस्तुवेति। फलेऽपि तस्यालक्षणैवेति।** एतेनाधेयतात्वरूपैकाखण्डधर्मावच्छिन्ने द्विती-
याया ममैकैवशक्तिस्तवतु संयोगत्वविभागत्वाद्यनेकधर्मावच्छिन्नेऽनेकाशक्तिरिति गौरवमिति निरस्तम्। **अन्तर्भविष्यतीति**
**गौरवमिति।** ननु भिन्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वमस्तीति प्राचीनमत एव गौरवम् तथाहि आधेयत्व-
संबन्धावच्छिन्नग्रामाभाववत्संयोगः प्रमेयो वाच्य इत्याद्यनेकभिन्नविषयकप्रत्यक्षप्रतिबन्धकत्वस्य नव्यमतकल्पनीयस्य निरूपि-
तत्वसंबन्धावच्छिन्नग्रामाभाववदाधेयत्वं प्रमेयं वाच्यमित्यादिभिन्नविषयकप्रत्यक्षप्रतिबन्धकतया प्राचीनमतकल्प्यया समानत्वे-
ऽपि प्राचीनमते ग्रामविशिष्टाधेयत्वाभाववान् संयोगः प्रमेयोवाच्य इत्याद्यनेकभिन्नविषयकप्रत्यक्षं प्रति प्रतिबन्धकत्वमधिकं क-
ल्पनीयमिति तन्मत एव गौरवम्। नच प्राचीनमते ग्राममित्याद्यानुपूर्वीज्ञानघटितशाब्दसामग्र्या ग्रामाभाववदाधेयत्वं प्रमेयमि-
त्यादि प्रत्यक्षं प्रत्येव प्रतिबन्धकत्वं नवीनमते च ग्रामाभाववान् संयोगः प्रमेयो ग्रामाभाववान् विभागः प्रमेयइत्याद्यनेकफल-
विषयकप्रत्यक्षेष्वनेकं प्रतिबन्धकत्वमिति वाच्यम्। नवीनमते आधेयत्वतात्पर्यज्ञानग्राममित्यानुपूर्वीज्ञानघटिताह्येकैवसामग्री तस्या
ग्रामाभाववत्संयोगादिफलदशकविषयकप्रत्यक्षदशकं प्रति प्रतिबन्धकत्वदशकं प्राचीनमते द्वितीयाया नानार्थकत्वात्संयोगादिफल-

गच्छति न महीरुहमित्यादौ महीरुहवृत्तिसंयोगाद्येजनकतासंबन्धावच्छिन्नाभाव एव नञर्थो वाच्यः, स च वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया अप्रसिद्धः। नव्यमते तु द्वितीयार्थस्याधेयत्वस्य फलनिष्ठाभाव एव तथेति नानुपपत्तिः। न च भूमिकर्मकगमनकर्त्रादौमहीरुहकर्मकगमनकर्तृत्वाद्यभावः प्रतीयते इति वाच्यम् कर्तृवाचकपदासमभिव्याहारस्थले तदसंभवात्। न च तत्रा प्याख्यातार्थान्वयबोधानुरोधेन कर्तृवाचकपदाध्याहारस्यावश्यकतया अध्याहृतपदोपस्थाप्यकर्तर्येव तादृशाभावो नञा बोधयिष्यते इति वाच्यम् आख्यातार्थविशेष्यकस्याप्यन्वयबोधस्य संभवेनाध्याहारस्यानावश्यकत्वाद्भूमेर्गमनं न महीरुहस्येत्यादौ द्वितीयासमानार्थकषष्ठ्यर्थाभावबोधकताया आवश्यकत्वाच्च। न हि तत्राप्याश्रयतासंबन्धावच्छिन्नप्रतियोगिताकगमनाभावः प्रतीयते इति सम्यक्। अनुयोग्यनुपस्थितेर्नञोऽनुयोगिविनिर्मोकेनाभावबोधकताया अव्युत्पन्नत्वादिति चेन्न। वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे दोषः कः। अथ जनकतादिसंबन्धावच्छिन्नप्रतियोगिताकसंयोगाद्यभावस्यातिरिक्तस्य कल्पने गौरवमिति चेन्न। तादृशाभावस्य संयोगजनकत्वाद्यभावसमनियतत्वेन तत्स्वरूपत्वात्तस्य चोभयवादिसिद्धत्वादतिरिक्तप्रतियोगिताकल्पने गौरवमिति चेदस्त्वेतद् गौरवम्। उपदर्शितबहुविधलाघवेन ईदृशगौरवस्याकिंचित्करत्वात्। अथ फलस्य द्वितीयार्थत्वे वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेऽपि द्रव्यं गच्छति न गुणमित्यादौ गुणादिनिष्ठस्य संयोगादिरूपफलस्याप्रसिद्ध्या नञर्थान्वयबोधानुपपत्तिरिति चेन्न। तत्राधेयतासंबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावस्यैव द्वितीयार्थे फले नञा बोधनोपगमात्। गुणो न गुणं गच्छतीत्यादिवाक्यस्य उभयमत एवाप्रमाणत्वात्। अस्तु वा तत्राभावस्य द्विधाभानोपगमेन गुणाभाववत्फलानुकूलस्पन्दाश्रयत्वाभाववान् गुण इत्याकारक एवान्वयबोधः।

परेतु वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वे नव्यमतेऽपि द्रव्यं गच्छति नाभावमित्यादौ गतिविरहस्तथा हि। समवायसंबन्धावच्छिन्नाधेयतैव द्वितीयार्थो वाच्यः। अन्यथा कालिकादिसंबन्धावच्छिन्नग्रामादिवृत्तिसंयोगादिकमादायातिप्रसङ्गात्। तथा चाभावादिनिरूपितत-

---

दशकतात्पर्यज्ञानग्राममित्यानुपूर्वीज्ञानघटितसामग्रीदशकस्य ग्रामाभाववदाधेयत्वविषयकप्रत्यक्षं प्रति प्रत्येकमेकैकम्प्रतिबन्धकत्वं तात्पर्यविषयफलान्यफलनवकविषयकप्रत्यक्षनवकं प्रति प्रत्येकं प्रतिबन्धकत्वनवकमिति सङ्कलने शतं प्रतिबन्धकत्वानीति विपरीतगौरवात् ग्रामं गच्छतीत्यादिसमभिव्याहारज्ञानघटितसामग्रीप्रतिबन्धकत्वचिन्तायां गौरवातिशयस्य प्राचीनमते हि स्फुटतरतैवेतिचेन्न प्रतिबध्यतावच्छेदककोटाविच्छावदन्यत्वनिवेशेन भिन्नविषयकप्रत्यक्षप्रतिबन्धकत्वैक्योपपादने गौरवानवकाशात् तन्निवेशप्रकारस्य प्रथमाव्याख्याने दर्शितत्वात् तत्र प्रदर्शिततत्खण्डनरीत्यनुसरणे गौरवस्य दुर्वारत्वाभिप्रायेण वा चिन्त्यत इत्यस्योक्तत्वादिति अत एवाग्रे वस्तुतस्तु शाब्दबुद्धेरधिकविषयत्व इत्यादिना प्राचीनमते गौरवं दर्शयिष्यति गुणो न गुणं गच्छतीति। **द्रव्यंगच्छति नाभावामिति**। ननु गुणाभावपदोत्तरं कथं द्वितीया गुणस्याभावस्य च गमनकर्मत्वविरहात्कर्मबोधकपदोत्तरद्वितीयाया एव साधुत्वस्य कर्मणि द्वितीयेति सूत्रेण बोधितत्वादिति चेन्न कर्मत्वान्वयितया तात्पर्यविषयार्थकपदाद्द्वितीयायाः साधुत्वे सूत्रतात्पर्यात् कर्मत्वान्वयित्वं च साक्षान्नञर्थद्वारा वा बोध्यम् बीजंत्वत्र प्रतियोग्यभावान्वययोस्तुल्ययोगक्षेमत्वम् यत्र प्रकृतधात्वर्थकर्मत्वंयस्य कदाचिदपि प्रसिद्धं तत्र तत्कर्मत्वस्याभावप्रकृतधात्वर्थेबोध्यतइति तत्र कर्मत्वसाक्षादन्वयित्वादेव द्वितीया यत्र यस्य प्रकृतधात्वर्थकर्मत्वं बाधितमेव तत्र तस्याभावस्य कर्मत्वएवान्वयोपगमेन नञर्थद्वारा कर्मत्वान्वयाद्द्वितीया साध्वीति। यत्तु यत्र प्रकृतक्रियाकर्मत्वं प्रसिद्धं तत्र नञ्समभिव्याहारस्थले तस्यैवाभावो यत्र 'त्वप्रसिद्धं तत्र प्रकृत्यर्थे प्रसिद्धं यादृशं कर्मत्वं तस्यैवाभावो धात्वर्थे बोध्यते तथाच ग्रामं गच्छति न महीरुहमित्यादौ पक्ष्यादिगमनकर्मत्वस्य महीरुहादौ प्रसिद्धस्याभावबोधनाद्भवत्येव द्वितीयासाधुः अभावादौ च गमनकर्मत्वमप्रसिद्धमिति प्रसिद्धस्य ज्ञानादिकर्मत्वस्याभावबोधनात्तादृशकर्मत्व एव द्वितीयासाधुरत एव ग्रामं गच्छति नाभावमपितु तंजानात्येवेत्यादिकं प्रयुञ्जतेऽभियुक्ताः प्रकृतधात्वर्थक्रियाकर्मत्वान्यकर्मत्वाभावबोधने प्रकृत्यर्थे प्रकृतधात्वर्थक्रियाकर्मत्वाभावनिश्चयस्य हेतुत्वोपगमात् ग्रामनिष्ठज्ञानादिकर्मत्वाभावतात्पर्येण ग्रामं गच्छत्यपि चैत्रे ग्रामं न गच्छतीति न प्रयोगस्तादृशभ्रमे चेष्यत एव भ्रमं विना तादृशप्रयोगस्यैवानिष्टत्वादिति तन्न कर्मतात्वस्याखण्डस्यानभ्युपगमादभावनिष्ठविषयत्वानिरूपकगमकर्त्तेति बोधस्यानुभवविरुद्धत्वादिति। **अतिप्रसङ्गादिति**। ग्राममगच्छत्यपि चैत्रे ग्रामं गच्छतीति प्रयोगप्रसंगादित्यर्थः।

थाविधाधेयताप्रसिद्ध्या तदभावबोधासंभवः। निरूपितत्वसंबन्धस्य च वृत्त्यनियामकतया समवायसंबन्धावच्छिन्नाधेयतायां तत्संबन्धावच्छिन्नप्रतियोगिताकप्रकृत्यर्थाभावबोधो न संभवत्येवेत्याहुरिति। अत्रोच्यते। वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वे आधेयत्वं संसर्गः विभक्तेः संख्यामात्रमर्थः फलावच्छिन्नो व्यापारो धात्वर्थ इत्येवोचितम्। अस्तु च व्युत्पत्तिवैचित्र्येण नामार्थधात्वर्थयोरपि साक्षादन्वयबोधस्तथा सत्यतिप्रसङ्गस्य प्रागुपदर्शितप्रकारेण वारणसंभवात्। न चैतत्कल्पे लाघवानवकाशः फले स्वतन्त्रशक्त्यकल्पनेन सामग्रीप्रतिबन्धकतायां द्वितीयादिजन्यफलोपस्थितिधातुजन्यव्यापारोपस्थित्युभयनिवेशापेक्षया धातुजन्यविशिष्टविषयकोपस्थितेरेकस्या निवेशेन च लाघवात्। वस्तुतस्तु, शाब्दबुद्धेरधिकविषयत्वे राज्ञः पुरुष इत्यादौ स्वत्वादेः संसर्गतानिराकरणावसरे सामग्रीप्रतिबन्धकतायां लाघवस्य दर्शितत्वाद् द्वितीयादेराधेयत्वमर्थः फलावच्छिन्नव्यापारश्च धातोरित्येव युक्तम्। कर्माख्यातस्य फलमर्थः। अन्यथा ग्रामो गम्यते इत्यादौ ग्रामादेः व्यापारजन्यफलाश्रयत्वरूपकर्मत्वप्रतीत्यनुपपत्तेः। यादृशविशेष्यविशेषणभावापन्नयोः पदशक्यता, तादृशविशेषणविशेष्यभावापन्नयोरेव शाब्दबोधे भानसंभवात्। न तु विपरीतविशेषणविशेष्यभावापन्नयोः। यत्तु फले धातोः पृथक् शक्त्युपगमात् व्युत्पत्तिवैचित्र्येण कर्त्राख्यातसमभिव्याहारस्थले व्यापारविशेषणतया भासमानस्य फलस्य कर्माख्यातस्थले तद्विशेष्यतया भानमिति। तन्न। पृथक् शक्तिस्वीकारे शाब्दसामग्र्याः प्रतिबन्धकतायां विशिष्टविषयकोपस्थितिस्थले उपस्थितिद्वयकल्पने गौरवात्। गम्यादेः सम्पूर्वयुजिप्रभृतिसमानार्थकताभ्रमवतामिव विशेषदर्शिनामपि गमनं न स्पन्द इत्यादिवाक्यात्संयोगादौ स्पन्दभेदान्वयबोधापत्तेर्दर्शिताया दुर्वारत्वाच्च। संयोगादिविशेष्यकवृत्तिज्ञानजन्यतदुपस्थितिघटितायास्तथाविधान्वयबोधसामग्र्या अक्षतत्वात्। तत्तद्धातूपस्थाप्यव्यापारांशे तत्तद्विशेषणकबोधतात्पर्यज्ञानस्य तादृशान्वयबोधे प्रतिबन्धकताकल्पने गौरवादिति। फलस्य द्विधा भानं चेदनुभवविरुद्धं तदा पुनरनायत्या फलव्यापारयोः खण्डशःशक्तिद्वयमेव धातोः स्वीकरणीयम्। आख्यातस्याश्रयत्वमेव तत्रार्थः अधिकमग्रे वक्ष्यते।

अथ द्वितीयाया आधेयतार्थकत्वे व्यापारे तदन्वयतात्पर्येण सप्तम्या इव द्वितीयाया अपि प्रयोगापत्तिः। न हि गृहे पचतीत्यादिवद्गृहं पचतीति कश्चित्प्रयुङ्क्ते। मैवं धात्वर्थतावच्छेदकफलांशे आधेयत्वान्वयएव तादृशद्वितीयायाः साकाङ्क्षत्वकल्पनाद्व्यापारे तदुपस्थापिताधेयत्वान्वयासंभवात्। सप्तम्यधीनाधेयत्वोपस्थितिसप्तमीसमभिव्याहारज्ञानघटिताया एव सामग्र्यास्तादृशान्वयबोधनियामकत्वात्। द्वितीयासप्तम्योः समानार्थकत्वेऽपि व्युत्पत्तिभेदज्ञापनायैव पृथक् पृथक् सूत्रेण तयोर्विधानात्। अथाधःसंयोगावच्छिन्नस्पन्दस्य पतधात्वर्थत्वात्, धात्वर्थतावच्छेदकीभूतफले आधेयत्वान्वयतात्पर्येण भूमिं पततीति प्रयोगापत्तिः। न च द्वितीयोपस्थिताधेयत्वप्रकारकफलवि-

---

**व्युत्पत्तिवैचित्र्येणेति।** आधेयत्वसंबन्धावच्छिन्नग्रामादिनिष्ठप्रकारतानिरूपितधात्वर्थफलनिष्ठविशेष्यताकशाब्दबोधे द्वितीयान्तग्रामादिपदगम्यादिधातुसमभिव्याहारज्ञानत्वादिना कार्यकारणभावोपगमेनेत्यर्थः। **अतिप्रसंगस्येति।** ग्रामो गच्छतीत्यादौ ग्रामादिप्रकारकसंयोगादिविशेष्यकबोधप्रसंगस्येत्यर्थः। **स्वतन्त्रशक्त्यकल्पनेनेति।** विशिष्टशक्तिपक्षे फले न स्वतन्त्रशक्तिरपितु फलावच्छिन्नव्यापरविषयकबोधजनकत्वप्रकारतानिरूपितगम्यादिधातुनिष्ठविशेष्यतानिरूपकेच्छैव विषयताविशेषसंबन्धेन फलेऽपि स्वतन्त्रशक्तिपक्षे च फलविषयताकबोधजनकत्वप्रकारतानिरूपितगम्यादिविशेष्यताकत्वस्येश्वरेच्छायामधिकस्य कल्पनेन तादृशविलक्षणविषयतासंबन्धेन सा फलेशक्तिः व्यापारविषयकबोधजनकत्वप्रकारतानिरूपितगम्यादिनिष्ठविशेष्यताकत्वकल्पनेन तादृशविषयताविशेषसंबन्धेन व्यापारे सेति तादृशानेकविषयत्वाकल्पनेनेत्यर्थः। **उभयनिवेशापेक्षयेति।** सामग्रीप्रतिबन्धकतायां विशिष्टोपस्थितेर्विशेष्यविशेषणभाववैपरीत्येन द्विधाप्रवेशेऽपि योग्यताज्ञानेनैकेन सह विशेष्यविशेषणभावे विनिगमनाविरहेण चत्वारिप्रतिबन्धकत्वान्युभयोपस्थितिप्रवेशे षट्प्रतिबन्धकत्वानीत्येवमधिककारणैस्सहोक्तरीत्या विशेष्यविशेषणभावचिन्तायामाधिक्यस्य प्रस्फुटावगमात्तदपेक्षयालाघवेनेत्यर्थः। **व्युत्पत्तिवैचित्र्येणेति।** फलविशिष्टव्यापार विषयकशाब्दबोधे द्वितीयान्तकर्त्राख्यातसमभिव्याहारज्ञानस्य व्यापारविशिष्टफलवियकशाब्दबोधे कर्माख्यातप्रथमान्तसमभि-

शेष्यकान्वयबोधे गम्यादिजन्यफलोपस्थितितत्समभिव्याहारज्ञानघटितसामग्र्येव प्रयोजिका न तु पतधातुजन्यतदुपस्थितिघटिता सामग्रीति नातिप्रसङ्ग इति वाच्यम् पतधातुनैव यत्र संयोगावच्छिन्नगमनं लक्षणादिनोपस्थापितं तत्र संयोगे द्वितीयार्थाधेयत्वान्वयात् । अत्राहुः । धातुजन्यशुद्धसंयोगावच्छिन्नस्पन्दोपस्थितेः शाब्दबोधकारणताया अवच्छेदकघटकसंयोगविषयतायां अधिकरणानवच्छिन्नत्वं विशेषणं देयम् । तथा च तादृशविषयताशालिसंयोगाद्युपस्थित्यादिघटितसामग्र्या एव संयोगविशेष्यकद्वितीयोपस्थाप्याधेयत्वान्वयबोधप्रयोजकत्वोपगमान्नातिप्रसङ्गः । न चैवमपि फलावच्छिन्नव्यापारबोधकतया पतेः सकर्मकत्वव्यवहारापत्तिर्दुर्वारेति वाच्यम् । आश्रयानवच्छिन्नफलावच्छिन्नव्यापारबोधकत्वस्यैव तादृशव्यवहारनियामकत्वात् । उत्तरदेशानवच्छिन्नसंयोगः फलं गम्यर्थतावच्छेदकमिति नानुपपत्तिः । अत एवाग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारस्य जुहोत्यर्थतया धात्वर्थतावच्छेदकसंयोगाश्रयस्याप्यग्नेर्न तत्कर्मता । आश्रयानवच्छिन्नावच्छेदकताश्रयफलवत्त्वविरहात् । संयोगनिष्ठाया अवच्छेदकताया आश्रयेणाग्निनाऽवच्छिन्नत्वात् । न चाग्निविशेषितसंयोगस्य धात्वर्थतावच्छेदकत्वेऽग्नौ घृतं जुहोतीत्यत्रानन्वयप्रसङ्गः, उद्देश्यतावच्छेदकविधेययोरैक्यादिति वाच्यम् तत्र संयोगनिष्ठायामुद्देश्यतायां वन्हेराधेयतासंसर्गेणावच्छेदकतया सप्तम्यर्थस्याग्निवृत्तित्वस्य च विधेयतया उद्देश्यतावच्छेदकविधेययोरैक्यानवकाशात् । वस्तुतस्तु तत्र वह्नेरनन्वयेऽपि न क्षतिः व्युत्पन्नानां तादृशप्रयोगस्याप्रामाणिकत्वात् । संस्कृते वह्नौ जुहु-

---

व्याहारज्ञानस्य च कारणत्वाभ्युपगमेनेत्यर्थः । **अग्निसंयोगावच्छिन्नक्रियानुकूलव्यापारस्येति** । नयतिजुहोत्योस्समानार्थतावारणायाग्निसंयोगावच्छिन्नेति तथा चाग्निं घृतं नयतीतिवदाग्निं घृतं जुहोतीतिप्रयोगस्य नापत्तिः अग्निसंयोगावच्छिन्नक्रिया च पतनरूपा घृतादिनिष्ठा तदनुकूलो व्यापारो मन्त्रकरणकप्रक्षेपरूपः पुरुषस्य बोध्यः । न च पदे जुहोति जलेऽन्नाहुतिद्वयं जुहुयादित्यादौ का गतिस्तत्र संयोगस्याग्न्यनवच्छिन्नत्वात् संयोगावच्छिन्नक्रियामात्रपरत्वे पदं जुहोतीत्यस्यापत्तेरिति वाच्यम् आधारावच्छिन्नसंयोगानुकूलक्रियानुकूलव्यापारे लक्षणोपगमात् । प्राणान् प्राणेषु जुह्वतीत्यादौ सुतरांलक्षणेति अग्निवृत्तित्वं धात्वर्थतावच्छेदकघटकं सप्तम्यन्तार्थस्याग्निवृत्तित्वस्य तद्विशिष्टेन्वयमाधेयतासंबन्धेनाग्नेर्धात्वर्थतावच्छेदकघटकत्वं सप्तम्यन्तार्थाधेयत्वस्यापि वह्निसंसर्गतयैव भानं वाभिप्रेत्याशङ्कते । **नचाग्निविशेषितेति** । साक्षादाधेयत्वद्वारा वाग्निविशेषितेत्यर्थः । लाघवादाधेयत्वसंसर्गेणाग्नेर्धात्वर्थतावच्छेदकघटकत्वं विभक्त्यर्थस्याधेयत्वस्य प्रागुक्तलाघवेन प्रकारत्वमेवेत्यभिप्रायेण समाधत्ते । **तत्रसंयोग निष्ठायामिति** । अथसप्तम्यर्थाधेयत्वस्य व्यापार एवान्वयस्य प्रागुक्तत्वादिदमसंगतमितिचेन्न द्वितीयाधेयत्वस्य फलेन्वयबोधं प्रति हि स्वप्रकृत्यर्थरूपाधिकरणानवच्छिन्नफलनिष्ठविषयताकोपस्थितित्वेन कारणत्वमुक्तं नच संयोगत्वाद्यतिरिक्तधर्मानवच्छिन्नत्वेन सामान्यतोधिकरणानवच्छिन्नत्वेन वा फलविषयतायाः कुतो न प्रवेश इति वाच्यम् आधेयतयोर्ध्वादिदेशावच्छिन्नसंयोगानुकूलक्रियाघटके लोष्टमुत्क्षिपतीत्यादावूर्ध्वदेशादिरूपाधिकरणावच्छिन्नतयोपस्थिते संयोगे लोष्टादिवृत्तित्वस्यानन्वयापत्तेः । एवं च सप्तम्यर्थाधेयत्वस्य फलेन्वयं प्रति स्वप्रकृत्यर्थरूपाधिकरणावच्छिन्नफलविषयताकोपस्थितित्वेन कारणत्वान्तरमप्युपक्षिप्तं भवति साक्षात्संबन्धेनान्वये सम्भवत्यपि सर्वत्र व्यापारेऽन्वयस्य परम्परासंबन्धेनाप्यन्वयस्य परम्परासंबन्धावच्छिन्नाधेयत्वस्य विशेषणताविशेषसंबन्धस्य वाऽप्रामाणिकस्य कल्पनया संपादनस्यानुचितत्वात् । मैवं धात्वर्थतावच्छेदकफलांशइत्यादिपूर्वग्रन्थादुक्तकारणत्वव्यवच्छेदाप्रतीतेः प्रथमैवकारेण व्यापारे द्वितीयार्थाधेयत्वान्वयव्यवच्छेदस्य द्वितीयैवकारेण व्यापारे विभक्त्यर्थाधेयत्वान्वये द्वितीयासमभिव्याहारादिघटितकारणकलापस्य सामग्रीत्वव्यवच्छेदस्य प्रतीतेः न चान्वयोपपत्तावपि पौनरुक्त्यमर्थतोदुर्वारमिति वाच्यं व्यापारेऽन्वयपक्षेऽपि तस्य समानत्वात् । नच सप्तम्यधिकरण इतिसूत्रे वाक्यभेदापत्तिरिति वाच्यम् व्यापारनिष्ठाधेयत्वाधिकरणावच्छिन्नफलनिष्ठाधेयत्वान्यतरान्वयित्वेन तात्पर्यविषये प्रकृत्यर्थे सप्तमीभवतीत्यर्थे तदसम्भवात् । नच फलेऽधिकरणावच्छिन्नत्वप्रवेशो व्यर्थइति वाच्यं ग्रामवृत्तित्वस्य संयोगेन्वयतात्पर्ये द्वितीयासप्तमीप्रयोगयोर्विनिगमकाभावात्तत्रानध्यवसायापत्तेः सर्वत्रव्यापारएव सप्तम्यर्थान्वयो व्युत्पत्तिभेदश्च नाभ्युपेय इत्यभिप्रायेणेति वाच्यमित्युत्तरं सप्तम्यर्थाधेयत्वस्य धात्वर्थतावच्छेदकफलेऽन्वयस्याव्युत्पन्नत्वादग्नौ जुहोतीत्यादौ हुधातुशक्तिविशेष्ये संयोगानुकूलक्रियाजनकपुरुषव्यापारएवान्वयेन तत्रान्वयानवकाशात् तादृशव्यापारेऽग्निवृत्तित्वं च कर्मघटितपरम्परासंबन्धेन गृहे पचतीत्यादौ तण्डुलादिनिष्ठधात्वर्थाग्निसंयोगव्यापारे गृहवृत्तित्ववदिति क्वचित्पुस्तके पाठः अर्थतः पौनरुक्त्यस्य दोषतामाकलय्याह । **वस्तुतस्त्विति** । अनन्वयेपीत्यपिनाऽनुपदोक्तान्वयोपपादनं सूचितम् । **अप्रामाणिकत्वादिति** । अप्रामाणिकत्वोपगमादित्यर्थः । वस्तुतस्त्वित्यादिनास्त्येवानुपपत्तिरित्येतत्स्थाने अतएव विवेचका वह्नौ जुहोतीति

यादित्यादिस्थले च विधेयांशेऽधिकावगाहनान्नास्त्येवानुपपत्तिः घृतादेश्चाश्रयानवच्छिन्नधात्वर्थतावच्छेदकक्रियारूपफलाश्रयत्वात् कर्मत्वोपपत्तिः । यत्तु धात्वर्थतावच्छेदकत्वं धातुवृत्तिग्रहविशेष्यांशे साक्षात्प्रकारत्वं तच्च क्रियायामेव न संयोगांशेऽपीति नाग्नेर्जुहोतिकर्मतापत्तिरिति । तदसत् । अजां ग्रामं नयतीत्यादौ संयोगावच्छिन्नक्रियानुकूलव्यापारादिरूपे धात्वर्थे संयोगादेः साक्षादप्रकारतया तदाश्रयीभूतग्रामादेः कर्मत्वानुपपत्त्या नीवहादेर्द्विकर्मकत्वव्याघातात् । अथात्र ग्रामादेः प्रधानकर्मत्वं नास्त्येवापि तु गौणकर्मत्वमेव । अतएव तादृशकर्मत्वमाख्यातेन नाभिधीयते "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामि" त्यनुशासनादिति । अजांग्रामोनीयते इत्यादिको न प्रयोग इति चेत्तर्हि तत्र ग्रामादेरिवात्रापि धात्वर्थतावच्छेदकतावच्छेदकफलशालित्वेन गौणकर्मत्वापत्त्या वह्निं घृतं जुहोतीति प्रयोगापत्तिर्दुर्वारैवेति । अस्मन्मते चाश्रयानवच्छिन्नसंयोगविषयताशालिधातुजन्योपस्थितिघटितसामग्र्या एव संयोगे द्वितीयार्थान्वयबोधप्रयोजकतया नैतादृशप्रयोगापत्तिः । यत्तु अधःसंयोगावच्छिन्नस्पन्दोन पतत्यर्थः, अपि तु गुरुत्वजन्यतावच्छेदकजातिविशेषावच्छिन्न एव । अतएव फलावच्छिन्नव्यापाराबोधकत्वान्न सकर्मकत्वमिति तन्न फलस्य धात्वर्थाघटकत्वे स्पन्द एव सप्तम्यर्थान्वयस्योपगन्तव्यतया पर्णादिनिष्ठस्य तस्य भूतलावृत्तितया भूतले पततीति प्रयोगानुपपत्तिः । पर्णादिगतस्पन्दस्य परम्परया भूतलादिवृत्तित्वमिति चेत्तर्हि वृक्षात्पततीतिवत् वृक्षे पततीत्यपि स्यात् । अस्मन्मते चान्यत्र व्यापारे सप्तम्यर्थान्वयेऽपि अत्र व्युत्पत्तिवैचित्र्यादधःसंयोगरूपधात्वर्थतावच्छेदकएव तदन्वयबोध इत्यदोषः । अन्येतु भूम्यादेः कर्मत्वविवक्षायां भूमिं पततीति प्रयोग इष्ट एव । अतएव द्वितीयाश्रितेत्यादिसूत्रेण नरकं पतित इत्यादिस्थले द्वितीयासमासविधानमुपपद्यते । धात्वर्थतावच्छेदकतावच्छेदकफले द्वितीयार्थान्वयएवाश्रयानवच्छिन्नफलोपस्थितेरपेक्षा अग्निं जुहोतीति वारणाय स्वीक्रियत इति वदन्ति । तदपि न शोभनम् । तथा सति भूम्यादिपदोत्तरं कदाचित्सप्तमी कदाचिद्द्वितीयेत्यत्र नियामकाभावप्रसङ्गात् । व्यापारांशे आधेयत्वविवक्षायां सप्तमी फलांशे तद्विवक्षायां द्वितीयेत्यस्योक्तयुक्त्या फलांशएव सप्तम्यर्थान्वयस्यावश्यं स्वीकरणीयतया वक्तुमशक्यत्वादिति । ब्राह्मणाय धनं ददातीत्यादौ

---

न प्रयुञ्जते प्रयुञ्जते च संस्कृते वह्नौ जुहोतीत्यादिकमेव तत्र वह्नावित्यनुक्तेऽग्नौ संस्कृतत्वालाभात् तदुक्तिरावश्यकी नहि धात्वर्थतावच्छेदकवह्नौ संस्कृतादिपदार्थान्वयसंभवइति क्वचित्पाठः सच संदर्भशुद्धतयोपादेयः प्रथमतोऽन्वयमुपपाद्यान्वयेऽपि न क्षतिरित्युक्तेस्सन्दर्भाशुद्धेर्व्यक्तत्वात् आधेयतासंबन्धेन तद्विशिष्टे तदाधेयत्वस्याप्याधेयतासंबन्धेन तदन्वयवदेवानुभवविरुद्धतयाऽनन्वयेपीति चानन्वयपक्षः कथञ्चिदुपपादनीयः अत एवेत्यस्य धातुतएव वह्निवृत्तित्वस्य लाभाद्वह्नावित्युक्तेरनावश्यकत्वादेवेत्यर्थः । नहीति । धात्वर्थेऽभेदसंबन्धेन प्रातिपदिकार्थान्वये द्वितीयान्तत्वग्रहस्यापेक्षितत्वेऽपि फले व्यापारे वा तदन्वय एव न तदतिरिक्तधात्वर्थान्वये तेन यथा तादृशान्वये वह्निमिति द्वितीयान्तस्य निराकाङ्क्षता तथा सप्तम्यन्तस्याप्यभेदान्वये समानवचनविशेष्यवाचकपदविरहान्निराकाङ्क्षतेति नहि वह्नौ धात्वर्थतावच्छेदके संस्कृतान्वयसंभवइत्यर्थः । **धातुवृत्तिग्रहविशेष्यांश इति** । स्यन्दिप्रभृतेस्संयोगावच्छिन्नव्यापारे लक्षणाग्रहे ग्रामादेस्तत्कर्मत्वोपपत्तये लघुभूतमपि धातुसङ्केतमुख्यविशेष्यत्वं परित्यज्य वृत्तिग्रहमुख्यविशेष्यत्वमुपात्तम् । अत्र यदा गमधातुस्संयोगावच्छिन्नव्यापारतात्पर्येण प्रयुज्यते तदान पूर्वदेशे यदाविभागावच्छिन्नव्यापारतात्पर्येण न तदोत्तरदेशे तत्कर्मत्वव्यवहार इति तदुपपत्तये तत्तद्धातुप्रयोजकतात्पर्यज्ञानसहकारितत्तद्धातुवृत्तिज्ञानमुख्यविशेष्यांशे साक्षात्प्रकारीभूतफलाश्रयत्वं तादृशवृत्तिज्ञानसहकारितात्पर्यप्रयुक्तधातुकर्मत्वं बोध्यम् सामान्यतस्तत्तद्धातुकर्मत्वं शक्तिलक्षणारूपवृत्तिग्रहमुख्यविशेष्यप्रकारीभूतसंयोगविभागादिफलमादाय पूर्वोत्तरदेशयोरपीष्यतएवेति । **व्याघातादिति** । इदमुपलक्षणं भूम्यादेः पतधातुकर्मत्वस्यावारणादित्यपि द्रष्टव्यम् । नचाधिकरणानवच्छिन्नत्वमपि विशेषणमिति वाच्यं वक्ष्यादेः कर्मत्वस्य तावतैव वारणात्साक्षादित्यस्यवैयर्थ्यापत्तेः । **गौणकर्मत्वमेवेति** । तथा च मुख्यकर्मत्वस्यैवोक्तरूपस्याभिहितत्वेन ग्रामे तदभावेपि न क्षतिरितिभावः । **वक्तुमशक्यत्वादिति** । अथाधिकरणानवच्छिन्नधात्वर्थतावच्छेदकफलाश्रयत्वस्य कर्मत्वरूपतापक्षस्यैव निर्दुष्टतापर्यवसानान्नरकं पतित इत्यस्यानुपपत्तिरिति चेन्न अधस्संयोगावच्छिन्नक्रियार्थकपतधातुसमभिव्याहृतादेकान्तदुःखभोगावच्छेदकप्रदेशविशेषार्थकनरकपदाद्धि द्वितीया नेष्यत एव सप्तम्या एव तत्रेष्टत्वात् भोगानुकूलपातित्यार्थकपतधातुसमभिव्याहृतात्सुखासंभिन्नदुःखार्थकनरकपदादेव च भोगान्वितवि-

**स्वस्वत्वध्वंसविशिष्टपरस्वत्वानुकूला इच्छा धात्वर्थः तादृशस्वत्वरूपधात्वर्थतावच्छेदकफलपव द्वितीयार्थान्वयः उपेक्षायामतिप्रसङ्गवारणाय परस्वत्वनिवेशः । दानं च न संप्रदानस्वत्वजनकमपि तु तत्स्वीकार एवेति मते तु स्वस्वत्वध्वंसानुकूलापरस्वत्वप्रकारिका इच्छैव ददात्यर्थः । तत्र स्वस्वत्वध्वंस-**

---

पयत्वरूपकर्मत्वार्थिका भवति हि द्वितीया भोगश्च साक्षात्कारस्तत्रैव च नरकं पतित इतिविग्रहे द्वितीयाश्रितेत्यादिसूत्रेण समासविधानादनुपपत्त्यभावादिति ।

**स्वस्वत्वध्वंसविशिष्टेति** । एतदनुपादाने यत्र स्वधनस्य परसाधारणीकरणं तत्रापि परस्वत्वेऽनुकूलेच्छासत्वाद्दान-व्यवहारस्यादिति तदुपादानम् । नच परस्वत्वोत्पत्तौ तत्र प्राग्वत् यथेष्टविनियोगाभावात्तत्प्रयोजकपूर्वस्वत्वस्य विनाशोऽवश्यं वाच्योऽन्यथा तदापत्तेरिति वाच्यं पूर्वस्वत्वविनाशस्वत्वान्तरोत्पत्त्युभयकल्पनापेक्षया पूर्वस्वत्वस्य यथेष्टविनियोगं प्रति स्वसमा-नाधिकरणपरस्वत्वासदीभूतधनविषयपरानुमतिरूपप्रतिबन्धकाभावसहितस्य कारणताया एव वक्तुमुचितत्वात् अनेकभ्रात्रादि-साधारणधनस्थल उक्तप्रतिबन्धकत्वस्य क्लृप्तत्वादननुमतिरपि भावरूपैव तेनानुत्पन्नकनिष्ठानुमत्यभावकाले ज्येष्ठस्य पितुराज्ञया पैतामहधनस्य न यथेष्टविनियोगानुपपत्तिः वैशिष्ट्यं चानुकूलत्वरूपमिच्छायामेव तद्बोध्यम् । यदिच फलद्वयस्य तुल्यवद्धात्वर्थता-वच्छेदकत्वे तत्रोभयत्र कर्मणएकपदोपस्थाप्यस्यान्वयप्रसंगोदूषणत्वेनाभिमतस्स्याद्गतिसंभवे सकृदुच्चरितइत्यादिन्यायविरोधात् । न च तात्पर्यस्यैव विनिगमकत्वादेकत्रैवान्वय इति वाच्यं परकीयपशुकामनया यागस्थले यागस्य प्रदेयद्रव्यगतस्वत्वनिवृत्त्यनुकूले-च्छारूपस्य पशुगतपरस्वत्वस्याप्यनुकूलतया पशुं ददातीत्यापत्तेर्वारणाय स्वत्वध्वंसेऽपि कर्मान्वयस्य वाच्यत्वात् यागानुकूलपर-कीयपशुकामनैव यत्र कस्यचित्स्वद्रव्यस्योपेक्षात्मिका तत्र स्वत्वध्वंसमात्रेऽन्वयेप्युपेक्षणीयं ददातीत्यस्यापत्तेः स्वत्वेप्यन्वयस्य कर्मणोवाच्यत्वात्तदा स्वत्व एव सामानाधिकरण्यं तद्वैशिष्ट्यं बोध्यम् । तचस्वविक्रीतधनस्य पुनः पुरुषान्तरसाधारण्येन क्रयस्थले दानव्यवहारवारणायैकक्षणावच्छिन्नत्वेन विशेषितं वस्त्वन्तरविक्रयकालीनापरवस्तुपुरुषान्तरसाधारणक्रयस्थले क्रयगोचरवस्तुदान-व्यवहारवारणायस्वाश्रयविषयवृत्तित्वरूपम् । **उपेक्षायामिति** । सा च ममेदं माभूदित्यादिस्वस्वत्वनिवृत्त्यनुकूलेच्छैवेति तत्र दानत्वप्रसंगोमाभूदिति परस्वत्वानुकूलेति यदिसाधारणधन एकस्यासाधारण्यप्रयुक्तोद्वेगादुपेक्षायां प्रतिग्रहीतुरुपेक्षायामिव सत्या-मपिपुरुषान्तरस्य सर्वथैव तत्स्वेदमस्तु न ममेतीच्छातः पुरुषान्तरानुमत्यपेक्षां विनैव यथेष्टविनियोगप्रयोजकस्य स्वस्वत्वान्तर-स्योत्पत्तिः पूर्वस्वस्वत्वविनाशश्च प्रामाणिकः स्यात् तदा दानव्यवहारवारणायपरेतिविशेषणम् । अथ यदिकदाचिदर्पितस्यपुरुषा-न्तरीयतादृशेच्छाया न ज्ञानन्तदायथेष्टविनियोगरूपकार्याभावात् स्वत्वानुत्पत्तिरेव तस्य ज्ञानेपि वा पौर्विकत्वस्यैव प्रतिबन्धका-भावरूपसहकारिसम्पादने तादृशेच्छाया उपयोगो न पूर्वस्वत्वनाशे लाघवात्तादृशेच्छाज्ञानपूर्वत्वाभावविशिष्टाया एवोपेक्षाया ना-शकत्वोपगमादिति चेदभ्युपगमो न तर्हि परत्वं व्यावर्तकतया विशेषणमपितु स्वत्वस्य सनिरूपकत्वेन तद्बोधस्य नियतनिरूप-कगोचरत्वात्परस्यैव च निरूपकत्वेन नियतबोधविषयतया नचानन्यलभ्यस्यैव शब्दार्थतया परस्य संप्रदानस्य चतुर्थीप्रकृत्यैव लाभान्न तस्य ददात्यर्थत्वमुचितमितिवाच्यं धनं ददातीत्यत्र ततस्तत्प्रतीत्यभावाद्धात्वर्थत्वस्य वाच्यत्वात् वस्तुतः परस्यनास्त्येव धात्वर्थघटकतात एव ब्राह्मणाय धनं ददातीत्यत्र न पौनरुक्त्यम् । धनं ददातीत्यत्र लक्षणयैव तद्बोधः । नच तत्र तद्बोध एव नास्तीति वाच्यम् परस्य सामान्यतोऽप्रतीतौ कस्माइति तद्विशेषाकाङ्क्षया अनुपपत्तेः स्वत्वानुकूलत्वेनेच्छाया धात्वर्थतापक्षे स्वीकारमन्तरेणापि दात्रिच्छात एव प्रदत्तधने संप्रदानस्वत्वमुत्पद्यत एव नच दानसमकालं संप्रदानत्वेनाभिमतस्य यत्र ममेदं माभवत्वितीच्छारूपोपेक्षा तत्र विनाशकत्वात्कथं स्वत्वोत्पत्तिरिति वाच्यम् स्वत्वकालीनतादृशेच्छाया एव स्वत्वनाशकत्वात् नच दानस्य स्वत्वनाशकतैव स्वत्वजनकता तु प्रतिग्रहस्यैव "सप्तवित्तागमाधर्म्या" इति वाक्येदानस्यापरिगणनादिति वाच्यम् "प्रदानं स्वाम्यकारणमिति" वचनात् चैत्रमुद्दिश्य त्यक्ते धने चैत्रस्येदं धनन्न ममेत्यबाधितसार्वजनीनप्रत्ययात् स्वीकारमन्तरेणापि पितुः पित्रुद्देशेन त्यक्तधनस्य पुत्रैर्विभागकरणाच्च "लब्ध्वाचाष्टगुणं फलमिति" स्मृत्या प्रतिग्रहस्य दातृफलविशेषं प्रति हेतुत्वान्न वैयर्थ्यम् नच "याजनाध्यापनप्रतिग्रहैरेव ब्राह्मणोधनमर्जयेदिति" वचनात् प्रतिग्रहस्यापि धनहेतुत्वमिति वाच्यं यथाहि याज-नाध्यापनयोर्याज्याध्येतृपुरुषेच्छोत्थापकतया कथञ्चित्स्वत्वानुकूलत्वं तथाफलविशेषहेतुप्रतिग्रहज्ञानोत्थापितदानद्वाराप्रतिग्रह-स्यापि कथंचिदेवानुकूलत्वम् अथवा प्रतिग्रहप्रयोज्योधनगतस्वत्वविशेषस्तद्दानयज्ञादिप्रयोज्यधर्मविशेषप्रयोजकोवश्यमुपेयो-न्यथाप्रदेयस्य स्वरूपतोविशेषाभावाद्दानस्य प्रदेयत एव विशेषात् प्रतिग्रहस्याविद्यमानत्वादुपलक्षणतया विशेषकत्वे जन्मा-न्तरप्रतिगृहीतैतज्जन्मक्रीतद्रव्यप्रदानयज्ञादिस्थल एतज्जन्मप्रतिगृहीतविक्रीतपुनःक्रीतद्रव्यप्रदानादिस्थलेपिप्रतिग्रहस्य विशेषकत्वा-पत्तेर्द्धर्मादौ विशेषो न स्यात् तथाच स्वत्वविशेष एव प्रतिग्रहस्य कारणत्वेन तं विनापि दानात्स्वत्वोत्पत्तौ न क्षतिरिति दानात्स्व-त्वध्वंस एव जायते न स्वत्वोत्पत्तिरिति पक्षे च प्रदानं स्वाम्यकारणमित्यस्य स्वत्ववति स्वत्वान्तरानुत्पत्तेः स्वाम्यनिर्वाहकस्व-त्वहेतुस्वत्वध्वंसहेतुतया स्वाम्यप्रयोजकमित्यर्थः । प्रदानानन्तरं न ममेत्येवानुभवः प्रामाणिकश्चैत्रस्येति तु चैत्रस्वत्वापादकस्वी-कारस्थलसाधारणचैत्रीदेयत्वप्रहदोषजनितो व्यामोह एव प्रागुक्तपुत्रादिकृतविभागश्च पितृस्वत्वभ्रमादेवास्वामिकतया न स्तेयादि-दोषइति बोध्यम् । **स्वस्वत्वध्वंसानुकूलापरस्वप्रकारिकेच्छेति** । उपेक्षावारणाय परस्वत्वेत्यादि चैत्रस्य धनं भव-

**रूपफलाश्रयत्वाद्धनस्य कर्मता। धनं प्रतिगृह्णातीत्यादौ स्वस्वत्वजनकेच्छारूपस्वीकारविशेषो धातोरर्थः स्वस्वत्वरूपफले च द्वितीयार्थाधेयत्वान्वयः तण्डुलंपचतीत्यादौ रूपादिपरावृत्तिजनकतेजःसंयोगो धातोरर्थः। रूपादिपरावृत्तिफले च तण्डुलादिवृत्तित्वान्वयः। ओदनं पचतीत्यादौ ओदनादिपदस्य तन्निष्पादकतण्डुलादौ लक्षणा। अवयविनि पाकानभ्युपगमे च तण्डुलं पचतीत्यादौ तण्डुलादिपदस्य तदारम्भकपरमाणुषु लक्षणा। ओदनं भुङ्क्ते इत्यादौ गलाधोनयनं धात्वर्थः। तच्च गलाधःसंयोगावच्छिन्नक्रियानुकूलव्यापारः। तादृशक्रियारूपफलएव ओदनवृत्तित्वान्वयः। उक्तयुक्त्या गलाधोदेशस्य न कर्मत्वम्। एवमन्यसकर्मकधातूनामप्यर्थाः स्वयमूह्याः।**

---

त्वितीच्छामात्रस्थले च चैत्राय धनं ददातीति प्रयोगवारणाय स्वस्वत्वेत्यादिनिवेशः। अथ गौर्मम मास्तु हिरण्यं चैत्रस्य भव-
त्वितीच्छायाउपेक्षारूपाया गवि स्वस्वत्वध्वंसानुकूलत्वात् चैत्रसंबन्धिभाविस्वर्णनिष्ठचैत्रनिरूपितस्वत्वप्रकारकत्वाच्च चैत्राय गां
ददातीतिप्रयोगापत्तिरिति नच व्युत्पत्तिवैचित्र्यात् कर्मणःस्वत्वध्वंसे स्वत्वेचान्वयोपगमान्नोक्तदोष इति वाच्यमियङ्गौर्नममास्तु सा
चैत्रस्य भवत्वितीच्छास्थले सामान्यतो गां ददाति चैत्रायेति प्रयोगापत्तेः गोपदार्थस्य गोद्वयस्योभयत्रान्वययोग्यत्वात्
सामानाधिकरण्येन स्वस्वत्वध्वंसस्य प्रकारीभूतस्वत्वे विशेषणत्वस्य विशिष्टरूपेण सर्वत्रेच्छाया स्वत्वस्याविषयीकरणेन वक्तुम
शक्यत्वादिति चेन्न स्वत्वप्रकारकत्वविशिष्टेच्छायां स्वस्वत्वध्वंसस्यानुकूलत्वेन शाब्दमतौ भाने सामानाधिकरण्येन तत्र तस्य
स्वत्वेपि भानाभ्युपगमात् एवं च स्वत्वध्वंसे फल एव कर्मणोन्वये तस्य स्वत्वे सामानाधिकरण्यभाने सत्युक्तदोषस्यासंभवादिति
परश्च संप्रदानीभूतो न कर्तृभिन्नमात्रम् तेन संप्रदानबोधकपदस्थले तदर्थस्य संप्रदानतावच्छेदकावच्छिन्ननिरूपितत्वसंबन्धाव-
च्छिन्नविषयतानिरूपितत्वेन स्वत्वप्रकारतायामन्वयलाभात् ब्राह्मणस्येदन्न ममेतीच्छाया चैत्राय ददातीत्यस्य नापत्तिः तत्र ब्राह्म-
णाय ददातीत्येव प्रयोगः यदि चैत्रस्येदन्न ममेतीच्छायां ब्राह्मणाय न ददातीत्यस्याप्रामाण्यमानुभविकं तदा नञ्समभि-
व्याहारे स्वनिरूपितत्वेन स्वत्वे स्वनिष्ठविषयतानिरूपितत्वेन प्रकारतायामेव वान्वयः संप्रदानपदार्थस्योपेयः यदि वा ब्राह्मणस्य
भवतु न ममेतीच्छायां चैत्रेणस्वीकारे कृते चैत्राय ददातीत्यस्य चैत्रस्य भवतु न ममेतीच्छायां ब्राह्मणाय ददातीत्यस्य च
प्रामाणिकत्वे नञोऽसमभिव्याहारेपि स्वत्व एव तदानिरूपितत्वेन संप्रदानान्वयः स्वनिष्ठविषयतानिरूपितत्वेन स्वत्वप्रकारतायां
वाभ्युपेयः अथ परशब्दः कर्तृभिन्नपरः तथाच परस्वत्वानुकूलेच्छाया अपि धात्वर्थत्वे संप्रदानेनास्वीकारे कृतेपि "सर्वस्यब्राह्मणः
प्रभुरिति"वचनात् कर्तृभिन्नब्राह्मणनिरूपितत्वस्य सत्वाद्दानप्रसिद्धेः कुतस्तत्परित्यागः। नच संप्रदानेनास्वीकारे कृते तन्निरूपितस्व-
त्वानुत्पत्तेर्ब्राह्मणान्तरस्वत्वेपि चैत्राय ददातीत्यस्यानुपपत्तिरिति वाच्यं तस्यापि ब्राह्मणत्वेन तन्निरूपितस्यापि सामान्यस्वत्वस्य
त्यक्तधनउत्पत्तिस्वीकारात् तादृशस्य च स्वत्वस्य कदाचित्तद्धनपरिग्रहेपि स्तेयाद्यप्रसञ्जकत्वात्स्वीकाराभावस्य तत्र यथेष्टविनि-
योगार्हत्वाभावबुद्धौ प्रयोजकत्वादिति चेन्न चैत्रस्य भवतु न ममेतीच्छायां चैत्रेणास्वीकारे कृते साधारणस्वत्वस्य मैत्रस्याप्युत्पत्ते-
मैत्रा॰य ददातीति प्रयोगापत्तेः शूद्रस्यान्नं भवतु न ममेतीच्छायां शूद्रेणास्वीकारे कृते सर्वस्य ब्राह्मणः प्रभुरिति वचनवच्छूद्र-
साधारणस्वत्वे प्रमाणाभावाच्छूद्राय ददातीत्यस्यानुपपत्तेश्च। नच परस्वत्वप्रकारकेच्छाया धात्वर्थेऽप्युक्तदोषतादवस्थ्यम् स्वत्वनिष्ठ-
प्रकारताया मैत्रनिष्ठविषयतानिरूपितत्वाभावात् स्वत्वप्रकारतायाःशूद्रनिष्ठविषयतानिरूपितत्वाच्चेति। **स्वीकारविशेषइति।**
विशेषपदोपादानाद्दानप्रयोज्यस्वत्वजनकेच्छात्वलाभाद्वलक्रयादितोधनस्वीकारस्थले प्रतिग्रहादिव्यवहारस्य नापत्तिः। **रूपादिपरा-**
**वृत्तिजनकतेजस्संयोगोधातोरर्थ इति।** पाके सति रूपरसगन्धस्पर्शादिचतुर्णां परावृत्तेविनिगमकाभावात्सर्वेषां
धात्वर्थघटकता तत्र तादृशसमुदायावच्छिन्नतेजःसंयोग एका शक्तिश्चेद्विशेष्यविशेषणभावे विनिगमनाविरहात् गुरुधर्मावच्छि-
न्नशक्तिचतुष्टयापत्तेः मुख्यविशेष्यांशे मुख्यप्रकारस्य क्वचिदेकत्र द्वयमिति रीत्या भानेप्यन्यत्र तथा भानस्यानुपगमात्तेजः-
संयोगस्य शक्यतावच्छेदकत्वात् प्रत्येकमेव रूपादिपरावृत्त्यवच्छिन्ने तेजस्संयोगे शक्तयइष्यत एव नानार्थतातात्पर्याद्बोधनियमः अत
एव यत्र रूपपरावृत्तेः स्फुटमुपलब्धिस्तत्र तद्घटितार्थस्य यत्र रसादिपरावृत्तेः स्फुटमुपलब्धिस्तत्र तद्घटितार्थस्य प्रतीतिः पचती-
त्यादितोनुभवसिद्धोपपद्यते अत्राग्नेर्व्यापारान्तरासत्त्वेपि पाचकत्वव्यवहारोपपत्तये व्यापारमनन्तर्भाव्यरूपपरावृत्तिफलकतेजः-
संयोगमात्रस्य धात्वर्थतोक्ता लाघवाच्च अग्निः पचतीत्यादौ तण्डुलादिव्यावृत्तं संयोगस्याश्रयत्वमाख्यातेनोच्यते तेन तण्डुलः
पचतीति न प्रयोगः चैत्रः पचतीत्यादौ च मुख्यमेव कर्तृत्वं चैत्रादौ पाकानुकूलकृतेः सत्त्वात् यद्यपि चैत्रादिकृतिर्न साक्षा-
द्रूपपरावृत्तिफलोद्देश्यकतेजस्संयोगोपादानगोचरा फूत्काराधिश्रयणादिद्वारैव पुरुषेण तेजःसंयोगस्य सम्पादनीयत्वात् तथापि
तादृशकृतौ स्वानुकूले निरुक्तव्यापारनिष्ठविषयताविशेषसंबन्धेनान्वयान्नक्षतिः तादृशव्यापारस्य शाब्दमतावश्यविषयतां तादृश-
व्यापारज्ञानेनैव पचतीत्यादिप्रयोगश्चाकलय्य तादृशसंयोगानुकूलव्यापारस्य धात्वर्थतां केचिदाहुः काष्ठपाटनादिव्यापारस्य कथंचि-
त्तादृशानुकूलत्वेपि काष्ठपाटककृते रूपपरावृत्तिफलकतेजःसंयोगानुकूलत्वेन तादृशव्यापाराविषयकत्वान्न काष्ठपाटकादौ पच-
तीति व्यवहारइति भावः। **उक्तयुक्त्येति।** अधिकरणानवच्छिन्नसंयोगाश्रयत्वस्यैव कर्मत्वरूपताव्यवस्थापनेनेत्यर्थः।

गां दोग्धि पय इत्यादौ द्विकर्मकधातुसमभिव्याहृतगवादिपदोत्तरद्वितीया क्रियाजन्यफलशालित्वादन्यदेव कर्मत्वं बोधयति । कारकाधिकारीयेणाकथितंचेति सूत्रेणापादानत्वादिभिन्नधातुप्रतिपाद्यान्वयिधर्मान्तरावच्छिन्नस्यापि कर्मसंज्ञाभिधानात् । गवां पयो दोग्धीत्यादौ धातुप्रतिपाद्यान्वयिगवादिसंबन्धो न विवक्षितः, अपि तु क्षीराद्यन्वयी स इति कर्मत्वाविवक्षया द्वितीयानवकाशः, किन्तु शैषिकी षष्ठ्येवेति । अत्र धातुप्रतिपाद्यत्वतदर्थतावच्छेदककोटिप्रविष्टसाधारणम् । गां दोग्धीत्यादौ धात्वर्थतावच्छेदककोटिप्रविष्टएव द्वितीयार्थान्वयात् । तथाहि । क्षरणानुकूलव्यापारो दुहेरर्थः । द्वितीयार्थश्च जनकत्वसंबन्धेन क्षरणान्वयी विभागः । विभागे चाधेयतया प्रकृत्यर्थगवादेरन्वयः ॥ एवं च धात्वर्थतावच्छेदकक्षरणरूपफले प्रधानकर्मक्षीराद्यन्वितद्वितीयार्थवृत्त्यन्वय इति गोनिष्ठविभागानुकूलपयोनिष्ठक्षरणानुकूलव्यापारकर्ता मैत्र इति गां पयो दोग्धि मैत्र इति वाक्याधीनो बोधः न च विभागोपादानत्वमेवेति तद्विवक्षायां द्वितीयानवकाशेति वाच्यम् । धातुवृत्तिग्रहविशेष्यान्वयिनो विभागस्यैवापादानत्वरूपत्वात् । वृक्षात्पर्णं पततीत्यादौ स्पन्दरूपविशेष्यांशे एव पञ्चम्यर्थविभागान्वयात् । वस्तुतो विभागावच्छिन्नक्षरणानुकूलो व्यापारो दुह्यर्थः । गोपदोत्तरद्वितीयार्थश्च विभागान्वयिनी वृत्तिरेव । न चैवं धात्वर्थतावच्छेदकफलशालित्वरूपं कर्मत्वमेवात्रापि प्रतीयते इति नाकथितं चेत्यस्य विषय इति वाच्यम् । धात्वर्थतावच्छेदकत्वस्य धातुवृत्तिग्रहविशेष्यांशे साक्षाद्विशेषणत्वरूपत्वात् । यत्र च क्षरणानुकूलव्यापारमात्रं धात्वर्थतया विवक्षितं क्षरणान्वयिविभागश्च विभक्त्यर्थतया तत्रापादानत्वबोधिका पञ्चमी । एतेन कदाचिद्गां दोग्धि पयः, कदाचिच्च गोभ्यो दोग्धि पय इत्यत्र नानियमः । अथ वा गोभ्यो दोग्धि पय इत्यत्रापि विभागो धात्वर्थतावच्छेदककोटिप्रविष्ट एव वृक्षाद्विभजते इत्यत्रेवावधित्वरूपापादानत्वविवक्षायां पञ्चमी, आश्रयत्वविवक्षायां च द्वितीया, अवधित्वं चाश्रयत्वादन्यदेव संबन्धविशेषः । अत्र क्षरणान्वयिनः परसमवेतत्वस्य द्वितीयार्थत्वात् पयोनिष्ठक्षरणस्य पयोनिष्ठविभागजनकत्वेऽपि न पयः पयो दोग्धीति प्रयोगः । परत्वं विभागान्वयितावच्छेदकावच्छिन्नापेक्षया बोध्यम् । दुह्यते गौः क्षीरमित्यादौ क्षरणजन्यविभागाश्रयत्वं गवादिनिष्ठमप्रधानकर्मत्वमाख्यातार्थः । अप्रधाने दुहादीनामित्यनुशासनात् । क्षीरवृत्तित्वस्य धात्वर्थक्षरण एवान्वयः । आख्यातार्थक्षरणे च धात्वर्थव्यापारान्वयः । तथा च विभागावच्छिन्नक्षीरनिष्ठक्षरणानुकूलव्यापारजन्यक्षरणजन्यविभागाश्रयो गौरित्याकारको बोधः । अथ वा विभागक्ष-

---

क्षरणानुकूलव्यापार इति । यद्यपिक्षरणमन्तःप्रदेशविभागानुकूलो द्रवद्रव्यनिष्ठो व्यापारविशेषस्तथापि तस्य तत्त्वेन न धात्वर्थघटकताऽपितु स्यन्दत्वव्याप्येन पयःक्षरतीतिप्रतीतिसिद्धेन जातिविशेषेण लाघवादिति बोध्यम् । अत्र पक्षे गोः कथंचिदपि न धात्वर्थतावच्छेदकफलाश्रयत्वेन कर्मत्वमपितु तदन्वितविभागान्वयित्वरूपं यद्धातुमुख्यार्थानन्वयित्वेनापादानत्वाद्यनात्मकं गौणकर्मत्वमकथितंचेति सूत्रप्रतिपाद्यं तदेवास्तीति । यत्तु मोचनानुकूलव्यापारो दुहेरर्थः मोचनञ्च दुग्धादेर्यत्क्षरणं तदनुकूलो व्यापारः गवादिनिष्ठः यदभावाद्दोग्धृव्यापारेपि न क्षरणं तथाच गवादेर्मुख्यकर्मत्वमेवेति मतन्तन्न लाघवेन क्षरणानुकूलव्यापारत्वेन धात्वर्थत्वौचित्यात् । नचैवं गौः पयोदोग्धीति प्रयोगापत्तिः पयोनिष्ठं यत्क्षरणं तदनुकूलस्य मोचनाख्यव्यापारविशेषस्य गवि सत्त्वादितिवाच्यम् योहि गोर्व्यापारः स्वतन्त्रमेव क्षरणानुकूलो गोपव्यापारं विनापि बहुक्षीराया वत्सावलोके क्षीरक्षरणदर्शनात् तस्य तेन क्षरणानुकूलत्वेन न धात्वर्थताऽपि तु गोव्यापारद्वारा दोग्धृव्यापारस्य यद्विलक्षणं क्षरणानुकूलत्वं तेनैवेत्युक्तदोषविरहात् पाणिनेरप्यकथितञ्चेति सूत्रयतोऽस्यैव धात्वर्थत्वे तात्पर्यम् । अथ क्षरतीत्यतः केवलादप्यन्तःप्रदेशावच्छिन्नविभागानुकूलव्यापारत्वेन क्षरणस्य प्रतीतेर्गांदोग्धि पय इत्यत्र क्षरणस्य दुह्यर्थघटकतोक्तव्यापारत्वेनैव वाच्या तथाच विभागस्यापादानत्वेपि तस्य धातुत एव लाभान्न विभक्त्यर्थता विभक्त्यर्थस्याधेयत्वस्य फलान्वयिनः कर्मत्वरूपतैव कर्मनिष्ठता च निरूपकत्वेन नाश्रयतयेति तस्य गौणकर्मत्वरूपता तादृशस्य तस्याकथितञ्चेति सूत्रविषयतेत्यभिप्रायेणाह । **वस्तुतो विभागेत्यादि । यत्रच क्षरणानुकूलव्यापारमात्रमिति ।** मात्रपदेन विभागावच्छिन्नत्वव्यवच्छेदः अत्र क्षरणत्वस्य यदि जातिरूपता तदा लाघवात्तेन रूपेण क्षरणानुकूलव्यापारे दुहेः शक्तिः विभागावच्छिन्नव्यापारावच्छिन्ने लक्षणैव यदि न सा जातिस्तदाविभागघटितार्थे शक्तिः स्यन्दत्वेन क्षरणघटितेलक्षणैव तत्र विभागबोधाय पञ्चम्यपेक्षा पञ्चम्यर्थविभागान्वये च नात्र पक्षे मुख्यविशेष्यतया धातुजन्योपस्थितेरपेक्षा पयोदोग्धीत्यतः स्वरसतः पयोवृत्तिस्पन्दानुकूलव्यापारमात्रस्याप्रतीतेर्गुरुभूतेप्युक्तविभागघटितार्थ एव शक्त्यभ्युपगम इति

रणव्यापारेषु विशकलितेषु धातोः शक्तित्रयं; विशिष्टलाभोऽन्वयबलात्। कर्माख्यातस्थले चाकाङ्क्षावैचित्र्येण तेषां विशेष्यविशेषणभाववैपरीत्यात्। व्यापारजन्यक्षरणजन्यविभागपर्यन्तस्य धातुत एव लाभः आश्रयत्वमेवाख्यातार्थः। एवं च क्षरणविभागयोर्न द्विधा भानम्। गौणकर्मासमभिव्याहृते दुह्यन्ते क्षीराणीत्यादौ आत्मनेपदेन केवलेन धातुसहितेन वा विभागावच्छिन्नक्षरणाश्रयत्वरूपप्रधानकर्मत्वस्य बोधनेऽपि एकदा उभयविधकर्मत्वबोधनस्याव्युत्पन्नतया दुह्यन्ते क्षीराणि गौरित्यादयो न प्रयोगाः।

पौरवं गां याचते विप्र इत्यादौ स्वोद्देश्यकदानेच्छा याचत्यर्थः। प्रधानकर्मगवाद्यन्वितद्वितीयार्थः विषयत्वं धात्वर्थतावच्छेदकदानेऽन्वेति। सविषयकज्ञानादिरूपविषयोपहितइच्छाबोधकधातुस्थले इच्छाविषयविषयत्वमेव प्रधानकर्मत्वम् अतएव घटो जिज्ञास्यते इत्यादौ घटादेः सन्नन्तकर्मता। अथैवं यद्वस्तुविषयकं दानमप्रसिद्धं तद्वस्तुरूपकर्मसमभिव्याहृतधातुघटितवचसः का गतिरिति चेद् या गतिर्गगनं दिदृक्षते इत्यादिकस्य भ्रान्तपुरुषीयगगनादिप्रकारकदर्शनेच्छाबोधकवाक्यस्य, गगनविषयकत्वप्रकारकदर्शनेच्छाबोधस्तत्रेति चेदिहापि गोविषयिताप्रकारतानिरूपितस्वत्वेच्छानिष्ठविषयताशाली बोधस्तद्वाक्यस्य। विशेषादर्शिविषयता च समा। विवेचनीयं चेदमग्रे। पौरवपदोत्तरद्वितीयायास्तु वृत्तिरेवार्थः। तस्या दानेऽन्वयः। पौरवस्य तादृशदानाश्रयत्वमेवाप्रधानकर्मत्वम्। न चैवमिच्छाविशेषरूपदानस्याश्रयत्वं कर्तृत्वमेवेतिवाच्यम्। धातुजन्यप्रतिपत्तिविशेष्यीभूतदानाश्रयत्वस्यैव तत्कर्तृत्वरूपत्वात्। अत्र च दानस्य तादृशप्रतिपत्ताविच्छारूपधात्वर्थे विशेषणत्वात्। चैत्रेण पौरवो गां याच्यत

---

बोध्यम्। **स्वोद्देश्यकदानेच्छेति**। स्वनिरूपितस्वत्वप्रकारकत्वविशिष्टपरस्वत्वनिवृत्त्यनुकूलेच्छाविषयिणीच्छेत्यर्थः स्वपदा-
र्थोयाचकः परश्च तदन्योदातृत्वेन तदिष्टः यत्र साधारणस्वत्वस्य क्रयणसंपत्तये चैत्रस्यास्यापीदं भवत्वितीच्छा मैत्रस्य जायता-
मितीच्छा तत्र चैत्रोमैत्रं याचत इतिमाभूदतः परस्वत्वेत्यादिविशेषणम् यत्र चैत्रस्य स्वनिष्ठदानस्येच्छा मैत्रस्येदं न ममेतीच्छा
मे जायतामित्याकारिका तत्र चैत्र आत्मानं याचत इति माभूदिति स्वोद्देश्यकेति स्वनिष्ठदानस्य स्वोद्देश्यकत्वाभावात्तद्वारणमत्र।
नचैवं परगतदानेत्येव वाच्यमितिवाच्यम् परोद्देश्यकदानस्य परगतस्येच्छायां चैत्रोदाता भवत्वितीच्छायां मैत्रस्य मैत्रश्चैत्रं याचत
इति प्रयोगवारणाय स्वोद्देश्यकेत्यस्यैव वक्तव्यत्वात्। यदिच न स्वार्थमयं याचतेऽपितु परार्थमिति व्यवहारः प्रामाणिकस्तदा
परोद्देश्यकदानेच्छाया याचनात्वनिर्वाहाय स्वविषयकत्वस्वासामानाधिकरण्योभयसंबन्धेन दानविशिष्टेच्छाया धात्वर्थतालाभाय
स्वोद्देश्यकत्वमुपात्तमिति मन्तव्यम्। अतएव दानाय प्रेरणन्धात्वर्थं इति सामान्यत एव दानायेत्युक्तम् शब्दशक्तिप्रकाशिकायां।
अथ तत्र प्रेरणा दीयतामित्याद्यभिलापरूपेत्युक्तम् युज्यते च तत्दीयतां मह्यमित्यभिलापे सत्येव हि याचते धनमयमिति व्यव-
हारो नान्यथेति चेन्न व्यवहारम्प्रति व्यवहर्तव्यज्ञानस्य हेतुतयेच्छाबोधकाभिलापाभावे परगतेच्छायाः परस्य ज्ञानाभावात्तादृश-
व्यवहारासंभवइति तादृशेच्छाज्ञापनएवाभिलापस्य व्यापारो न स एव याचनेति वक्तुमुचितं गौरवादन्यथा चैत्रायाहं दद इत्य-
भिलापाभावे चैत्राय ददातीति व्यवहाराभावाद्दानमप्यभिलाप एव स्यात् यथाकथंचिद्दातुः स्वस्वत्वनिवृत्त्यनुकूलपरस्वत्वप्रकार-
केच्छाया यस्य ज्ञानं तस्यायं ददातीति व्यवहारस्योक्ताभिलापं विनापि दर्शनान्निरुक्तेच्छैव ददात्यर्थइतिचेत्तत्र मतिस्तदा याचक-
स्येङ्गितादिना दानेच्छां ज्ञातवतो विनापि तादृशाभिलापं याचते धनमयमिति व्यवहारात्तादृशेच्छैव याचतेरर्थइति मतिः कुतो
नाद्रियते व्यवहारं प्रति ज्ञापकत्वेनाभिलापस्यान्यथासिद्धिरप्युभयत्रैव समाना याचनास्थलीयप्रायस्तादृशाभिलापदर्शनदोषनिबन्ध-
नैव जगदीशोक्तिरिति मन्तव्यम्। **यद्वस्तुविषयकमिति**। इदमुपलक्षणम् यत्र याच्यमानस्य दानमप्रसिद्धं तत्रापि का गति-
रित्यपिबोध्यम्। **बोधइति**। वृत्तित्वप्रकारतानिरूपितायाः स्वस्वत्वप्रकारतानिरूपितविशेष्यताकत्वावच्छिन्नेच्छानिष्ठविशेष्यता
तन्निरूपकेच्छाया याचतेरर्थत्वात् तद्घटकवृत्तित्वे पौरवादिपदोत्तरद्वितीयार्थनिरूपितत्वस्य स्वत्वप्रकारतानिरूपितविशेष्यत्वेग-
वादिपदोत्तरद्वितीयार्थाधेयत्वस्य चान्वयोपगमात् यत्रापि दाने याच्यमानविशेषव्यक्तिवृत्तित्वाभावरूपस्य विशेषस्य वस्तुविशेष-
कर्मकत्वाभावरूपस्य विशेषस्य ययोर्दर्शनं तयोरपि तादृशवाक्यप्रयोगतज्जन्यशाब्दबोधयोर्नानुपपत्तिः पौरवगवादिपदोत्तरद्वितीय-
योराधेयत्वविषयत्वार्थकत्वकथनं यथाश्रुताभिप्रायेण गगनं दिदृक्षत इत्यस्याविशेषदर्शिप्रयोगरूपत्वं तादृशस्यैव शाब्दबोधजन-
कत्वं च विशेषदर्शिनां न तादृशप्रयोगो नापि ततोबोधो धात्वर्थस्तु यथाश्रुतएवाप्रामाण्यमेवच तस्येष्टमित्यभ्युपगमो यदि
प्रामाणिकानां सच तदोक्तस्थले याचतइत्यत्रापि समान इत्याह—**तद्वाक्यस्येत्यादिना**। **अप्रधानकर्मत्वमिति**।
सविषयकस्य धात्वर्थस्य विषयत्वस्यैव प्रधानकर्मत्वरूपत्वादितिशेषः तेन दानस्य साक्षाद्धात्वर्थतावच्छेदकत्वेपि न क्षतिः।

इत्यादावप्युक्तक्रमेण चैत्रवृत्तीच्छाविषयगोकर्मकदानाश्रय इत्यन्वयबोधो बोध्यः । यद्यपि निरुक्तया-प्वाभिक्षैवेति दुहियाचिरुधिप्रच्छिभिक्षिचिञामित्यत्रार्थपरभिक्ष्युपादानेनैव चरितार्थतया याचेरुपादानमनर्थकं तथापि याचमानः शिवं सुरानित्यादौ याचतेर्न निरुक्तभिक्षार्थकतेति तदुपादानम् । तत्र हि व्यापारजन्यत्वप्रकारकेच्छा धात्वर्थः।इच्छायां प्रधानकर्मकल्याणान्वितद्वितीयार्थविषयिताया अन्वयः व्यापारे च सुरान्वितवृत्तित्वस्य द्वितीयार्थस्यान्वयः तथा च सुरवृत्तिव्यापारजन्यत्वप्रकारककल्याणेच्छाश्रय इत्यन्वयबोधः । गां व्रजं रुणद्धीत्यादौ देशान्तरसंचारविरोधिव्यापारो धात्वर्थः संचारविरोधित्वं संचारानुत्पादप्रयोजकत्वम् । अनुत्पादे प्रधानकर्मगोवृत्तित्वान्वयः । देशविशेषणभेदे व्रजमिति द्वितीयान्तार्थव्रजप्रतियोगित्वान्वयः रुध्यते गां व्रजइत्यादावन्वयबोधः स्वयमूहनीयः ।

गुरुं धर्मं पृच्छतीत्यादौ जिज्ञासाबोधकव्यापारो धात्वर्थः । बोधे गुरुवृत्तित्वस्य जिज्ञासायां धर्मविषयकत्वस्यान्वयः । शिष्यं धर्मं ब्रूते इत्यत्र ज्ञानानुकूलशब्दप्रयोगो धात्वर्थः । ज्ञाने धर्मविषयत्वस्य शिष्यवृत्तित्वस्याप्यन्वय इति तन्न चारुतरम् । तथा सति यत्र जिज्ञासाविषयकचैत्रज्ञानेच्छया प्रश्नस्तादृशशब्दाच्च सामग्रीबलेन मैत्रस्यापि पृच्छकजिज्ञासाज्ञानं तत्र मैत्रं पृच्छतीति प्रयोगस्य, एवं यत्र चैत्रज्ञानेच्छया ब्रूते दैववशाच्च मैत्रस्यापि ज्ञानं तत्र मैत्रं ब्रूते इति प्रयोगस्य चापत्तेः । साक्षाद्धात्वर्थविशेषणज्ञानरूपफलाश्रयतया तत्र गुर्वादीनां प्रधानकर्मतया अप्रधाने दुहादीनामित्यनुशासनविरोधेन पृच्छते गुरुर्धर्मं "स पृष्टस्तेन कस्त्वं भो । शिष्यउच्यतेधर्ममित्यादिस्थले च लकारादिना तत्कर्मत्वाभिधानानुपपत्तेश्च । परं तु जिज्ञासाज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दः पृच्छतेरर्थः । ज्ञाने गुरुवृत्तित्वस्यान्वयः । शब्दे च धर्मविषयकत्वस्यान्वयः । शब्दस्य च विषयता व्यापारानुबन्धिनी ज्ञानस्य परस्परया शब्दरूपधात्वर्थविशेषणत्वात् । तदाश्रयीभूतगुरोर्गौणकर्मता । धर्मस्य च धात्वर्थविषयतया प्रधानकर्मता ब्रूञश्च ज्ञानोद्देश्यकप्रवृत्त्यधीनशब्दोर्थः ज्ञाने शिष्यवृत्तित्वस्य शब्दे च धर्मविषयकत्वस्यान्वयः अजां ग्रामं नयतीत्यादौ ग्रामं भारं वहतीत्यादौ च उत्तरदेशसंयोगावच्छिन्नक्रियानुकूलव्यापाररूपं प्रापणं धातोरर्थः तत्र क्रियारूपे फले अजाभारादिवृत्तित्वान्वयः । संयोगरूपफले च ग्रामादिवृत्तित्वस्यान्वयः । तथा च ग्रामवृत्तिसंयोगजनकाजादिवृत्तिक्रियानुकूलव्यापारानुकूलकृतिमानित्यन्वयबोधः । अजा ग्रामं नीयते, उह्यते भारो ग्रामं चैत्रेण इत्यादावुत्तरसंयोगावच्छिन्नक्रियारूपं फलं कर्माख्यातार्थस्तत्र च धात्वर्थस्य तादृशव्यापारस्य जन्यतासंबन्धेन तस्य चाश्रयतासंबन्धेन अजाभारादिरूपप्रधानकर्मण्यन्वयः ग्रामादिवृत्तित्वान्वयस्तु संयोग एव एवं च चैत्रकृतिजन्यो यः संयोगावच्छिन्नक्रियानुकूलव्यापारस्तज्जन्यग्रामवृत्तिसंयोगानुकूलकर्मवानजादिरित्यन्वयबोधः । नच कारकविभक्त्यर्थस्य धात्वर्थएवान्वयनियमात्प्रत्ययोपस्थाप्यसंयोगे कथं ग्रामादिवृत्तित्वान्वय इति वाच्यम् । भूतले घट इत्यादौ घटादिपदार्थेप्यधिकरणसप्तम्यर्थान्वयात्तादृशनियमासिद्धेः । अस्तु वा धात्वर्थतावच्छेदकतावच्छेदकतया भासमाने संयोगएव तदन्वयः । फलव्यापारयोः पृथक्शक्तिमते चाश्रयत्वमेवात्मनेपदार्थः । संयोगावच्छिन्नक्रियारूपधात्वर्थ एव व्यापाररूपधात्वर्थविशेष्यतया आश्रयत्वविशेषणतया चान्वेति । तदेक-

---

**याचेरुपादानमनर्थकमिति ।** अथ याचेरर्थपरस्योपादानमवश्यङ्कार्यमन्यथा नृपमर्थं प्रार्थयते इति न स्यात्तथाच भिक्षेरुपादानमनर्थकमित्येव वक्तुमुचितम् प्रथमोपात्तस्य याचेर्ग्रहकाले भिक्षेरनुपस्थितेस्तेन तद्वैयर्थ्यबुद्धेरसंभवाद्भिक्षेर्ग्रहकाले चार्थपरस्य याचेरुपस्थितेस्तेन भिक्षेरानर्थक्यस्य शंकितुमर्हत्वादिति चेन्न सकलकर्मप्रकरणपर्यालोचनं विना न याचनार्थकसकलधातूनां भवत्यनुपादानग्रहस्तदग्रहे च नार्थपरत्वग्रहस्तदग्रहेच न वैयर्थ्यशङ्कापीति तस्यां सकलप्रकरणपर्यालोचनस्यापेक्षितत्वे याचेरपि वैयर्थ्यस्य शङ्कितुं शक्यत्वात्प्रथमोपात्तस्य प्रथमं सार्थकत्वे प्रायशोजिज्ञासोदयात्तत्सार्थक्याय याचेरुपादावमनर्थकमित्याशङ्काया अप्युचितत्वादिति । **प्रधानकर्मतयेति ।** इदमापाततउक्तम् । सविषयकस्य धात्वर्थस्य विषयताया एव प्रधानकर्मरूपत्वात् अतएव साक्षाद्धात्वर्थतावच्छेदकदानाश्रयस्य पौरवस्यानुपदमेव गौणकर्मतोक्ता । **उत्तरदेशसंयोगावच्छिन्नक्रियेति ।** एषाच क्वचिद्गमनरूपा क्वचित्तादृशावस्थित्यादिकं विनोत्तरसंयोगो नोपपद्यते तादृशावस्थित्यादिर्निसन्देपि

देशे संयोगएव ग्रामादिवृत्तित्वान्वयः। चैत्रीयकृतिजन्यव्यापारजन्यग्रामवृत्तिसंयोगानुकूलक्रियाश्रयवानजादिरित्याकारको बोधः ज्ञानानुकूलशब्दश्च द्रव्यं निरूपयतीत्यादौ धातोरर्थः। तादृशविशिष्टैकार्थस्य एकदेशे ज्ञाने आधेयत्वान्वयबोधे च न द्वितीयायाः साकाङ्क्षता स्वीक्रियते, अपि तु विषयतया अन्वयबोधएवेति शिष्यं द्रव्यंनिरूपयतीत्यादिर्न प्रयोगः। यत्तु धात्वर्थो ज्ञानमेव तदनुकूलव्यापारश्च णिजर्थ इति। तदसत्। धातोश्चुराद्यन्तर्गततया स्वार्थएव णिचोविधानात्। अन्यथा निरूपयतीत्यस्य ज्ञापयतीत्यादिसमशीलतया शिष्यं ज्ञापयतीत्यादिवच्छिष्यं निरूपयतीति प्रयोगस्य दुर्वारत्वात्। अजां ग्रामं यापयति शिष्यं शास्त्रं ज्ञापयति ब्राह्मणमन्नं भोजयति यजमानं मन्त्रं पाठयति घटं जनयति नाशयतीत्यादौ णिच्प्रत्ययप्रकृतिभूतधात्वर्थकर्तृवाचकाजादिपदोत्तरद्वितीयायाः मुख्यभाक्तसाधारणं कर्तृत्वमेवार्थः। गतिबुद्धीत्यादिसूत्रेण कर्तुः कर्मसंज्ञाविधानात्। गतिज्ञानोत्पत्त्यादिनिरूपितं कर्तृत्वं चाश्रयत्वमेव गलाधःसंयोगानुकूलक्रियानुकूलव्यापाररूपभोजनकण्ठताल्वाद्यभिघातरूपपाठनिरूपितं च तदनुकूलकृतिमत्त्वं नाशनिरूपितं च प्रतियोगित्वम् तस्य च निरूपकतासंबन्धेन धात्वर्थेऽन्वयः। नव्यमते च यत्राश्रयत्वं कर्तृत्वं तत्राधेयत्वं द्वितीयार्थः। यत्रानुकूलकृतिमत्त्वं तत्र कृतिजन्यत्वं यत्र प्रतियोगित्वं तत्रानुयोगित्वं तेषां चाश्रयतासंबन्धेनैव धात्वर्थेन्वयः गत्यर्थादिभ्योऽन्यत्र च णिच्प्रत्ययप्रकृतिधात्वर्थकर्तृवाचकपदाद् न द्वितीया, तादृशकर्त्तुः कर्मतातिदेशाविषयत्वात्। तेन पाचयत्योदनं सहायेनेत्यादय एव प्रयोगाः, न तु पाचयत्योदनं सहायमित्यादयः। केचित्तु पाकादिकर्त्तुः पाकादिकर्मत्वविरहेऽपि ण्यन्तसमुदायस्यापि धातुत्वेन तत्कर्मतया सहायादेः पाचयत्योदनं सहायमित्यादयः प्रयोगा अपि साधवः। अतएवाजिग्रहत्तं जनको धनुस्तदित्यादयो भक्तिप्रयोगाः। गतिबुद्धीत्यादिसूत्रं च नियमपरतया गत्यर्थधातुयोगे कर्तृप्रत्ययासाधुत्वज्ञापकम्। तेन पाचयत्योदनं सहायेनेत्यादिवद् अजया ग्रामं यापयतीत्यादयो न प्रयोगा इत्याहुः। एषामयमाशयः। हेतुमति चेत्यनुशासनात् णिजर्थो हेतुकर्तृत्वम् तच्च स्वतन्त्रकर्तृप्रेरणा अन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा, कर्तृत्वं क्वचित्प्रयत्नः क्वचिदाश्रयत्वादिकं, यादृशधातूत्तराख्यातेन यादृशकर्तृत्वं बोध्यते तदुत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहकव्यापारो बोध्यते। अतएव पाचयतीत्यादौ पाकादिकृतिनिर्वाहकः, ज्ञापयतीत्यादौ ज्ञानाश्रयत्वनिर्वाहकः, नाशयतीत्यादौ नाशप्रतियोगित्वनिर्वाहको व्यापारः प्रतीयते। निर्वाहकत्वं च स्वरूपसंबन्धविशेषः। नतु जनकत्वम्। अतो न नाशयतीत्यादावनुपपत्तिः। एवं च ण्यन्तधातुप्रतिपाद्यतावच्छेदकं फलं कर्तृत्वमेव निर्वाह्यस्यैव फलत्वात्। तदाश्रयतया स्वतन्त्रस्य कर्त्तुः कर्मता, तादृशफलविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षायां पाचयत्योदनं सहायमित्यादयः प्रयोगाः यदा तु पाकादिविशेषणतया सहायादिकर्तृत्वं विवक्षितं तदा पाचयत्योदनं सहायेनेत्यादयः। अथ यत्र चैत्रमैत्रोभयकर्तृकएक एव पाकस्तत्र चैत्रमात्रं प्रयोजयति यज्ञदत्तो मैत्रेणान्नं पाचयतीति प्रयोगापत्तिरिति, तत्रापि ण्यर्थकृतावेव तृतीयान्तार्थमैत्रादिवृत्तित्वस्यान्वयोवाच्यः। एवं च मैत्रं पाचयतीत्यादिवाक्यजन्यबोधावैलक्षण्याद् द्वितीयातृतीययोस्तात्पर्यभेदेन व्यवस्थाया न संगतिरिति चेन्न। अगत्या तत्र पाकादिविशेषणकृतेः पारतन्त्र्येण व्यापारविशेषणीभूतणिजर्थकृतावभेदान्वयमुपगम्योक्तातिप्रसङ्गस्य वारणीयत्वात्। पदार्थैकदेशे कृतौ पाकादेरिव कृतेरप्यन्वयो व्युत्पत्तिवैचित्र्यात्। वस्तुतः कर्तृत्वं व्यापारश्च पृथगेव णिजर्थः विशिष्टलाभोऽन्वयबलात्। केचित्तु, अनुकूलव्यापार एव णिजर्थः, तदन्वयिनी गमनभोजनक्रियैव धात्वर्थतावच्छेदकं फलं, तत्संबन्धिनस्तादृशक्रियाकर्तुर्ण्यन्तकर्मता। तादृशक्रियासंबन्धश्चाश्रयत्वकृतिमत्त्वान्यतरो ग्राह्यः। अतो गमनादिसंबन्धिकालादौ नातिप्रसङ्ग इत्याहुः। अत्र च तादृशकर्मतावाचकपदात् कदाचिद्द्वितीया कदाचित्तृतीया इत्यत्र नियामकाभावः। तादृशपदोत्तरयोस्तयो-

स्तुल्यार्थकतया विवक्षाभेदरूपनियामकाभावादिति तु चिन्तनीयम् । अजा ग्रामं याप्यते चैत्रेणेत्यादौ चैत्रकर्तृकव्यापारनिर्वाह्यं यद्ग्रामवृत्तिसंयोगानुकूलक्रियाकर्तृत्वं तदाश्रयोऽजा इति बोधः । तत्र संयोगावच्छिन्नक्रिया धातुलभ्या, संयोगे ग्राममित्यादिद्वितीयान्तार्थग्रामादिवृत्तित्वान्वयबलात् ग्रामादिवृत्तिसंयोगावच्छिन्नक्रिया लभ्यते तादृश्या णिजर्थकर्तृत्वेऽन्वयः । कर्माख्यातादिसमभिव्याहारनियन्त्रितव्युत्पत्तिबलाच्च तादृशक्रियान्वितकर्तृत्वं तृतीयान्तार्थचैत्रादिकर्तृत्वविशेषितव्यापाररूपापरणिजर्थे निर्वाह्यत्वसंबन्धेन विशेषितम् अजादिरूपकर्मीभूतकर्तृविशेषणीभवदाख्याताश्रयत्वे विशेषणतया भासते । ये तु गतिबुद्धीत्यादिसूत्रस्य संज्ञाविधायकत्वं वर्णयन्ति तेषामयमाशयः । व्यापार एव णिजर्थः तत्र धात्वर्थक्रियायाः स्वकर्तृत्वनिर्वाहकत्वं संसर्गः । अतो न कर्तुः कर्मत्वं सूत्रान्तरप्राप्तम् । याप्यते ग्राममजा इत्यादौ स्वनिर्वाह्यकर्तृतानिरूपकत्वसंबन्धेन व्यापारविशेषितधात्वर्थः कर्तृत्वेऽन्वेति तच्चाश्रयत्वसंबन्धेन अजादौ विशेषणतया भासते । तादृशव्यापारे तृतीयान्तार्थस्य चैत्रादिकर्तृत्वस्य धात्वर्थैकदेशे संयोगादिफले च द्वितीयान्तार्थस्य ग्रामवृत्तित्वस्य विशेषणतया भानं ण्यन्तोत्तराख्यातस्यापि कर्तृत्वमेवार्थः । तत्रच तस्य वृत्तिः क्लृप्तैव । तच्च उक्तस्य धात्वर्थस्य विशेष्यतया प्रथमान्तपदार्थस्य च विशेषणतया भासते । न च यक्समभिव्याहृताख्यातोपस्थाप्यकर्तृत्वस्यान्वयबोधोपगमे गम्यते चैत्र इत्यतोऽपि गमनकर्ता चैत्र इत्यन्वयबोधः स्यादिति वाच्यम् । ण्यन्तोत्तरयक्समभिव्याहृताख्यातस्यैव कर्तृत्वान्वयबोधनियामकत्वात् । अथैवमजा याप्यते इत्यादौ कर्तृत्वस्याख्यातबोध्यत्वे कर्त्तरिशबित्यपवादविषयतया यकोऽसाधुतापत्तिः । न च यादृशधातूत्तरं यत्सार्वधातुकं विहितं तादृशधात्वर्थनिरूपितकर्तृत्वस्य तेन विवक्षायामेव कर्त्तरि शबित्यादेः शबादिविधायकत्वात्, प्रकृते ण्यन्तसमुदायस्य उत्तरमेवाख्यातं तेन तदर्थनिरूपितकर्तृत्वं च न बोध्यते अपि तु ण्यर्थविशेषितधात्वर्थान्वितकर्तृत्वमेवेति न तादृशापवादविषयतेति वाच्यम् । कर्माख्यातस्थले विशेष्य विशेषणभाववैपरीत्येन व्यापारविशेषितक्रियाया अपि ण्यन्तधात्वर्थत्वात् । मैवम् । लकारसामान्यवृत्त्या यत्र कर्तृत्वं प्रतीयते तत्रैव कर्त्तरिशबित्यस्य शब्विधायकता, अत्र कर्मत्वसमशीले कर्तृत्वे आत्मनेपदत्वेन शक्तिः । वस्तुतः फलव्यापारयोः पृथक् धात्वर्थतामते गच्छतीत्यादाविव गम्यते इत्यादावपि लकारेणाश्रयत्वरूपकर्तृत्वाभिधाने यगनुपपन्न इति, परस्मैपदसमभिव्याहृतधातुना यादृशविशिष्टोऽर्थः प्रत्याय्यते, तादृशविशिष्टार्थान्वितकर्तृत्वाभिधानमेव शब्विषयः । एवं च प्रकृतेऽपि नानुपपत्तिरिति ध्येयम् । ग्रामो याप्यते, अर्थो बोध्यते, इत्यादौ भावनाविशेष्यतया ग्रामादेर्भानेऽपि गमनादिकर्तुः कर्मत्वविवक्षायां तस्यैवाख्यातार्थविशेष्यतया बोधोऽव्युत्पन्नः । ण्यन्ते कर्तुश्च कर्मण इत्यनुशासनादतोऽजां ग्रामो याप्यते शिष्यमर्थो बोध्यते इत्यादयो न प्रयोगाः । ग्रामो याप्यते, अर्थो बोध्यते, इत्यादौ फलविषयत्वादिरूपं मुख्यभाक्तसाधारणं कर्मत्वमेवाख्यातार्थः । फलव्यापारयोः पृथक्धात्वर्थतामते आश्रयत्वमेवाख्यातार्थः । धात्वर्थव्यापारविशेष्यतया तादृशाश्रयत्वविशेषणतया च धात्वर्थफलस्य भानेऽपि, ण्यर्थव्यापारस्य जन्यतासंबन्धेनैव धात्वर्थक्रियाज्ञानादिविशेषणत्वं पूर्ववदेव । अजां ग्रामो याप्यते इत्यादिकस्तु न प्रयोगः द्वितीयया कर्मत्वबोधने धात्वर्थव्यापारविशेष्यतया ण्यर्थबोधसामग्र्याः प्रयोजकत्वात् । यगादिसमभिव्याहृतस्थले च धात्वर्थविशेषणतयैव ण्यर्थस्य बोधात्, ण्यन्तधातोः सकर्मकत्वे तदुत्तरभावाख्यातस्य भावे चाकर्मकेभ्य इत्यनुशासनेनासाधुत्वाच्च न तादृशप्रयोगः । ग्रामं याप्यते इति भावाख्याते प्रयोगस्त्विष्ट एव ण्यन्तकर्मासमभिव्याहारात् । एकदा कर्तृत्वकर्मत्वबोधकताया आख्यातस्याव्युत्पन्नतया अजा

---

नेतृपुरुषस्कन्धाद्यवस्थितवस्तुनिवर्ततइति बोध्यम् । ण्यन्तधातोः सकर्मकत्वइति । तत्कर्मणो विवक्षितत्वइत्यर्थः । ण्यन्तकर्मासमभिव्याहारादिति । तत्कर्माविवक्षानिबन्धनस्य तस्याकर्मकत्वस्य सत्त्वादित्यर्थः अविवक्षातः कर्मणोऽक-

ग्रामो याप्यते इत्यादयो न प्रयोगाः । एवं तण्डुलः सहायेन पाच्यते, चैत्रेणेत्यादौ धात्वर्थे सहायादिकर्तृत्वस्य तद्विशेषणण्यर्थव्यापारे च चैत्रादिकर्तृत्वस्य तृतीयान्तार्थस्य बोधः । शेषं पूर्ववदिति दिक् ।

ग्रामं गच्छतीतिवत्स्वं गच्छतीति प्रयोगवारणाय परसमवेतत्वमपि द्वितीयार्थ इष्यते । तस्य च धात्वर्थेऽन्वयः । परत्वे चैकदेशेऽपि आकाङ्क्षावैचित्र्यात् प्रकृत्यर्थस्य प्रतियोगितयान्वयः । एवं च ग्रामं गच्छति चैत्र इत्यादौ ग्रामभिन्नसमवेता ग्रामनिष्ठसंयोगजनिका या क्रिया तदाश्रयतावांश्चैत्र इत्यन्वयबोधः । स्वनिष्ठसंयोगजनकक्रियायां स्वभिन्नसमवेतत्वस्य बाधात्स्वं गच्छतीति न प्रयोगः । यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरसमवेतक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेतत्वेऽपि तादृशक्रियाश्रयतायाः स्वस्मिन् बाधाद् मल्लः स्वं गच्छतीति न प्रयोगः । नच स्वनिष्ठसंयोगजनकस्वसमवेतक्रियायां स्वभिन्नसमवेतत्वस्यायोग्यतया तदभानेप्यबाधितं स्वनिष्ठसंयोगजनकत्वं विषयीकृत्य शाब्दबोधसंभवात् तदर्थमात्रतात्पर्येण स्वं गच्छतीति प्रयोगो दुर्वार एवेति वाच्यम् । परसमवेतत्वाविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यनभ्युपगमेन तद्बोधे तद्भासकसामग्र्या अप्यपेक्षणीयत्वात् । अथ स्वस्यापि द्वित्वावच्छिन्नस्वभेदवत्त्वात् स्वं गच्छतीति प्रयोगस्य दुर्वारतया द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव भेदेऽन्वयोवाच्यः तथा च चैत्रो द्रव्यं गच्छति, मल्लो मल्लं गच्छतीत्यादिवाक्यस्याप्रमाणतापत्तिः । चैत्रमल्लादिनिष्ठक्रियायां प्रकृत्यर्थतावच्छेदकीभूतद्रव्यत्वमल्लत्वाद्यवच्छिन्नभिन्नासमवेतत्वात् । तत्तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधोदयेन तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेनान्वयोपगमासंभवात् । उक्तयुक्त्या संबन्धघटकोपस्थितेरपि शाब्दबोधेऽपेक्षितत्वात् । एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्नसंसर्गत्वे मानाभावात् प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्याव-

---

मिकाक्रियेत्युक्तेः । **तद्बोधेतद्भासकसामग्र्याइति ।** द्वितीयया फलस्य तदन्विताधेयत्वस्य वा बोधे परसमवेतत्वभासकसामग्र्यास्तदुपस्थितिभ्रमप्रमासाधारणतद्विषयकयोग्यताज्ञानादेरित्यर्थः ॥ **अपेक्षणीयत्वादिति ।** तथाच तदयोग्यत्वग्रहे द्वितीयाधीनफलविषयकबोधोत्पादिकायाः परसमवेतत्वयोग्यताज्ञानादिघटितसामग्र्या अभावान्न तादृशबोधसंभव इति भावः ॥ ननु संबन्धस्याविशेषणत्वेन पूर्वकाले तस्य तद्घटकस्य चोपस्थितिर्नापेक्षणीयेति तद्व्यक्तित्वानुपस्थितिकालेपि तदवच्छिन्नप्रतियोगित्वस्य संसर्गत्वं संभवत्येवेत्यत आह । **उक्तयुक्त्येति ।** तात्पर्यज्ञानस्यापूर्ववाक्यार्थस्थले शाब्दबोधप्राक्काले विशिष्टवाक्यार्थज्ञानासंभवेन वाक्यार्थविषयकत्वविशिष्टबोधविषयकत्वेन हेतुत्वासंभवात्तत्तद्धर्मावच्छिन्नतत्तत्संबन्धावच्छिन्नप्रकारतानिरूपिततत्तद्धर्मावच्छिन्नविशेष्यताकत्वविशिष्टबोधविषयकत्वेनैव हेतुत्वस्य वाच्यतया तात्पर्यज्ञाने संबन्धस्यापि विशेषणत्वेन तदर्थं संबन्धस्य तद्घटकस्य चोपस्थितेरपेक्षणीयत्वादित्यर्थः अथापूर्ववाक्यार्थस्थले यद्यपि शाब्दबोधात्प्राक्वाक्यार्थविषयकज्ञानस्य कदाचिदप्यजनने निरूप्यनिरूपकभावापन्नविषयत्वग्राहकानुव्यवसायस्याप्यसंभवाद्विषयत्वान्तरविशिष्टविषयत्वोपस्थितेरसंभवेन विशिष्टवैशिष्ट्यावगाहितात्पर्यज्ञानस्य न संभवस्तथापि तद्घटकप्रत्येकपदार्थज्ञानजन्यानुव्यवसायगृहीततत्तद्विषयत्वोपस्थितिमूलकस्य विशेष्ये विशेषणमिति रीत्या तात्पर्यज्ञानस्य संभवेपि यद्धर्मावच्छिन्ननिषेधबुद्धिः पुरुषस्य कदापि न जाता तत्र तद्धर्मावच्छिन्नप्रतियोगित्वस्याग्रहेणानुवृत्त्यवसायेन तत्संसर्गत्वस्याप्यग्रहणाद्विशेष्ये विशेषणमिति रीत्यापितद्घटिततात्पर्यज्ञानासंभवात् तादृशवाक्यस्थलानुरोधेन विलक्षणविषयतासंबन्धेन तत्तत्पदार्थविशिष्टबोधविषयकज्ञानत्वेन तात्पर्यज्ञानस्य हेतुताया आवश्यकत्वेन तद्रीत्या तात्पर्यज्ञानस्य तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वसंसर्गत्वानुपस्थितावपि संभवात्तात्पर्यज्ञानस्य सर्वत्र शाब्दबोधे चाहेतुत्वपक्षे तादृशसंसर्गज्ञानापेक्षाया अभावान्न तद्व्यक्तित्वानुपस्थितिकाले तादृशशाब्दासंभवइत्यतआह । **एकधर्मावच्छिन्नप्रतियोगितायाइति । मानाभावादिति ।** प्रतियोगिविशिष्टाभावबुद्धेरेव तत्र मानत्वेन तस्याघटवति घटोनास्तीत्यादिबुद्धेस्सर्वानुमताप्रामाण्यनिर्वाहाय विशेषणतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गावगाहिन्या एव स्वकारणेनोत्पत्तेरुपेयत्वात् विशेषणतावच्छेदकावच्छिन्नप्रतियोगित्वसंसर्गत्व एव मानत्वादन्यस्याप्रमाणत्वान्मानाभावादित्यर्थः । ननूपलक्षितवैशिष्ट्यावगाहिस्थले उपलक्षणीभूतधर्मावच्छिन्नप्रतियोगित्वस्य गुणो गुणकर्मान्यत्ववत्सत्तावानित्यत्र समवायेऽभानात् द्रव्यत्वाद्युपलक्षितस्यैवास्तु तत्र भेदे भानं तथाच तद्व्यक्तित्वावच्छिन्नप्रतियोगित्वस्यापि संसर्गतासंभव इत्यत आह । **प्रतियोगिविशेषिताभावबुद्धेरिति ।** अवश्यमेव द्वितीयान्तसमभिव्याहृतगच्छतीत्यादिवाक्यजन्यबुद्धेः प्रकृत्यर्थतावच्छेदकविशिष्टप्रतियोगिनो द्वितीयार्थघटकभेदे वैशिष्ट्यावगाहित्वमेवोपगन्तव्यमन्यथा स्वंगच्छतीत्यादेः प्रामाण्यस्य दुर्वारत्वाद्व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगित्वसम्बन्धेन स्वविशेषितभेदस्य

गाहित्वनियमात् अन्वयितानवच्छेदकावच्छिन्नप्रतियोगितायाः संवन्धत्वासंभवाच्चेति चेत्तर्हि, क्रियान्वयिभेदप्रतियोगितावच्छेदकत्वमेव द्वितीयार्थोऽस्तु । भेदे प्रकृत्यर्थस्याधेयतासंबन्धेनान्वय इति न काचिदनुपपत्तिः । न चैवमपि विहगो भूमिं प्रयातीतिवद्विहगो विहगं गच्छतीति प्रयोगो दुर्वारः विहगनिष्ठभूमिसंयोगजनकतत्क्रियाया विहगान्तरनिष्ठभेदप्रतियोगितावच्छेदकतया विहगनिष्ठभेदप्रतियोगितावच्छेदकविहगवृत्तिसंयोगजनकक्रियाश्रयत्वस्याबाधितत्वादितिवाच्यम् । विहगो विहगं गच्छतीत्यादौ विहगादिप्रकृत्यर्थवृत्तित्वविशिष्टसंयोगस्य क्रियायां जनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेनान्वयोपगमात्, विहगनिष्ठक्रियायास्तद्विहगनिष्ठसंयोगजनकत्वेन तज्जनकतासंबन्धेन तत्संयोगवत्त्वेऽपि विहगवृत्तित्वविशिष्टतत्संयोगाश्रयतद्विहगनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावान्नोक्तोभयसंबन्धेन विशिष्टसंयोगवत्त्वमित्यनतिप्रसङ्गात् । एवं सति परसमवेतत्वं संबन्धघटकमेव न तु द्वितीयार्थ इति चेत् का क्षतिः । विहगो विहगेन गम्यते इत्यादावपि जन्यत्वस्वावच्छिन्नभेदसामानाधिकरण्योभयसंबन्धेन क्रियायाः संयोगेऽन्वय इष्यते तत्तत्क्रियावच्छिन्नभेदवति भूम्यादावेव तादृशभेदसामानाधिकरण्यसंबन्धेन तत्तत्क्रियाविशिष्टसंयोगादिमत्त्वोपगमात्, तत्र तत्क्रियाश्रयविहगे तद्बाधेन नातिप्रसङ्ग इति ध्येयम् ।

ज्ञानादिरूपसविषयकस्त्वभिधायकधातुसमभिव्याहृतद्वितीयायाः प्राचीनमते निरूपकतासंबन्धेन धात्वर्थान्वयि विषयत्वमर्थः । तत्र प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकतया घटं जानाति, पटं नेत्यादावनुपपत्तेस्तत्र विषयित्वार्थकत्वमेव नवीना उपवर्णयन्ति । तत्र च प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन तस्य च धात्वर्थे आश्रयतासंबन्धेनान्वयः । घटादिनिष्ठं ज्ञानादिकर्मत्वं च ज्ञानादिविषयत्वमेव । विषयित्वादौ च द्वितीयाया लक्षणैव न तु शक्तिरिति सांप्रदायिकाः । वस्तुतस्तु विषयितात्वस्य संयोगत्वाद्यपेक्षया आधेयतात्वाद्यपेक्षया चागुरुतया किंधर्मावच्छिन्ने शक्तिः कल्प्यते इत्यत्र विनिगमकं दुर्लभम् । एकस्मिन् प्रयोगे भूयस्त्वमप्यशक्यनिर्णयमिति तत्रापि शक्तिः सिद्ध्यतीत्यवधेयम् । चैत्रेण ज्ञायते घट इत्यादौ कर्माख्यातस्थले आख्यातेन घटादौ धात्वर्थनिरूपितविषयत्वं बोध्यते । चाक्षुषत्वाद्यवच्छिन्नवाचकदृश्यादिसमभिव्याहृतद्वि-

---

स्वस्मिन्सत्त्वाद्विशिष्टवैशिष्ट्यावगाहिन्यां च विशेषणतानवच्छेदकावच्छिन्नप्रतियोगित्वस्य संसर्गत्वानुपगम एव घटवति घटो नास्तीत्यप्रतीतेरितिभावः । एतेन नञभिलप्यमानाभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमेप्यन्यत्र तथात्वं नोपगन्तव्यमिति निरस्तम् । **उभयसबंन्धेनेति** । अथ प्रकृत्यर्थस्य स्वप्रतियोगिकत्वसंबन्धेन संयोगेन्वयस्तस्य च जनकत्वसामानाधिकरण्याभ्यांव्यापारेऽन्वयः स्वीकरणीयो लाघवात्स्वप्रतियोगिकत्वेन विशिष्टस्य संयोगस्य स्वस्मिन्नसत्त्वात् स्वंगच्छतीत्यस्य वारणसंभवादिति चेन्न प्रतियोगित्वानुयोगित्वाभ्यां स्वरूपसंबन्धविशेषाभ्यामाधेयाधारनियताभ्यामन्यस्य संबन्धनिरूपकत्वस्य स्वरूपसम्बन्धात्मकस्यातिरिक्तस्य वाभावात् ग्रामपुरुषयोस्संयोगस्योभयत्र सत्त्वेपि संयोगेन ग्रामे पुरुषस्संयोगो ग्रामे पुरुषस्य संबन्ध इति वत् पुरुषे ग्रामस्संयोगो ग्रामस्य पुरुषे सम्बन्धइति प्रत्ययाभावात् ग्रामएवानुयोगित्वं पुरुषएव च प्रतियोगित्वं सम्बन्धत्वे मुख्यतस्तदुपरागेण संबन्धेनापि निरूपितमुपेयमिति ग्रामनिष्ठप्रतियोगिताकत्वेन संयोगे ग्रामस्यान्वयासंभवात् नच ग्रामस्य स्वनिष्ठानुयोगिताकत्वेनैवास्त्वन्वय इति वाच्यं तथासति सामानाधिकरण्योपादानस्य वैयर्थ्यात् स्वनिष्ठानुयोगितानिरूपकसंयोगजनकक्रियाया आश्रयत्वस्य स्वस्मिन्नसंभवात् नचेष्टापत्तिर्यत्रोभयोस्संयोगे तेन परस्परविशिष्टधियः प्रमात्वं तत्रैकस्यैव संयोगस्योभयानुयोगिकत्वोभयप्रतियोगिकत्वस्योपगमेन स्वनिष्ठानुयोगितानिरूपकसंयोगजनकक्रियाश्रयत्वस्य स्वस्मिन् सत्त्वेन संगच्छतीति प्रयोगस्य दुर्वारत्वात् यदि तयोरन्योन्यसंसृष्टत्वमात्रबुद्धिर्नाधाराधेयभावप्रत्यय इति नानुयोगित्वोपगमस्तदा संबन्धमात्रस्यैकानुयोगिकत्वापरप्रतियोगिकत्वनियमभङ्गप्रसङ्गस्तयोरेकमन्योगच्छतीत्यस्याप्यनुपपत्तिश्च । ननु वह्नौ पर्वतस्य पर्वते वा वह्नेरस्तिसंयोगो न पर्वते पर्वतस्य न वह्नौ वह्नेरिति प्रत्ययान्निरूपकापरपर्यायं प्रतियोगित्वं संबन्धत्वनिरूपित-विलक्षणप्रतियोगित्वानुयोगित्वाश्रयद्वयसाधारणंविलक्षणं विलक्षणं च स्वनिष्ठतन्निरूपितत्वविशिष्टसंयोगाधारत्वं स्वान्यवृत्तिस्वीकरणीयं तथासति न कोपि दोष इति चेन्न संबन्धत्वनिरूपितप्रतियोगित्वानुयोगित्वातिरिक्तस्य तस्य कल्पनापेक्षया तयोर्भिन्ननिष्ठयोरेव निरूप्यनिरूपकभावस्योपगन्तुमुचितत्वात् । वह्नौ पर्वतस्येत्यत्र संबन्धसामान्यबोधिकायाः षष्ठ्याः अनुयोगित्वपरत्वस्य सप्तम्याश्चानुयोगित्वनिरूपितत्वान्यतरपरत्वस्योपगमाद्व्युत्पत्तिवैचित्र्येण प्रत्ययार्थयोः प्रतियोगित्वानुयोगित्वयोर्निरूपितत्वेन साक्षाद्धर्मिभू-

तीयाया लौकिकविषयित्वं, तादृशकर्माख्यातस्य लौकिकविषयत्वमर्थः। उपनीतसौरभादिविषयकसुरभिचन्दनमित्याद्याकारकचाक्षुषादिदशायां सौरभं पश्यतीति, सौरभं दृश्यते इत्याद्यप्रयोगात्। अथैवं पुष्पं जिघ्रतीत्यादिप्रयोगानुपपत्तिः घ्राणजप्रत्यक्षस्य पुष्पाद्यंशे लौकिकत्वविरहात्। तादृशधातुयोगे विषयित्वादिसामान्यस्य कर्मप्रत्ययार्थत्वे गन्धसाक्षात्कारे उपनयमर्यादयाकाशादिभाने आकाशं जिघ्रतीतिप्रयोगप्रसंगेन तत्रापि लौकिकविषयिताया एव कर्मप्रत्ययार्थतयोपगन्तव्यत्वादिति चेन्न। घ्राधातोर्हि गन्धलौकिकप्रत्यक्षत्वं शक्यतावच्छेदकं, घ्रा गन्धोपादाने इत्यनुशासनात्। तत्समभिव्याहृतद्वितीयायाश्चाधेयत्वमेवार्थस्तस्य च व्युत्पत्तिवैचित्र्येण गन्धादिरूपधात्वर्थैकदेशेनान्वयः। एवं च पुष्पं जिघ्रतीत्यादितः पुष्पवृत्तिगन्धलौकिकप्रत्यक्षाश्रयतावानित्याकारक एव शाब्दबोधो न तु पुष्पनिरूपितलौकिकविषयिताशालिप्रत्यक्षाश्रय इत्याकारक इति नानुपपत्तिः। न चैवं सविषयार्थबोधकधातुसमभिव्याहृतकर्मप्रत्ययस्य विषयितार्थकत्वनियमभङ्गप्रसङ्ग इति वाच्यम्। विषयानवच्छिन्नतादृशवस्त्वभिधायकधातुसमभिव्याहृतकर्मप्रत्ययस्यैव तदर्थकत्वनियमात्। अस्य च गन्धात्मकविषयावच्छिन्नप्रत्यक्षवाचकतया तादृशनियमस्याबाधितत्वात्। न च घ्राधातुसमभिव्याहृतद्वितीयाया गन्धान्विताधेयत्वार्थकत्वे आमोदमुपजिघ्रतीत्यादेरनुपपत्तिः गन्धविशेषरूपामोदपदार्थाधेयत्वस्य गन्धे बाधादिति वाच्यम्। विषयावच्छिन्नप्रत्यक्षार्थकघ्राधातुसमभिव्याहृतद्वितीयाया एव आधेयतार्थकत्वनियमात्। तत्र विषयानवच्छिन्नस्यैव प्रत्यक्षविशेषस्य लक्षणया धात्वर्थतोपगमेन विषयिताया एव तदर्थत्वात्। वस्तुतस्तु पुष्पं जिघ्रतीत्यादौ समवायावच्छिन्नाधेयत्वसंसर्गावच्छिन्नप्रकारितैव द्वितीयार्थस्तस्याश्च गन्धनिरूपितलौकिकविषयताशालिप्रत्यक्षात्मकधात्वर्थैकदेशे विषयतायां निरूपितत्वसंबन्धेनान्वयः। तेन इदानीं पुष्पे गन्ध इत्यादिप्रत्ययस्याधेयतासंसर्गेण कालादिप्रकारकत्वेऽपि तादृशप्रत्यक्षदशायां न कालं जिघ्रतीत्यादिप्रयोगः। तादृशज्ञानीयगन्धादिविषयितायां तादृशकालादिप्रकारतानिरूपितत्वविरहात्। अत एव "तदाननं मृत्सुरभि क्षितीश्वरो रहः समाघ्राय न तृप्तिमाययौ"। "आघ्रातवान् गन्धवहं सुगन्धिम्" इत्यादौ च उपाधिनिष्ठगन्धग्रहतात्पर्येणैव जिघ्रतेः प्रयोगात्। तादृशगन्धे चे आननगन्धवहादिवृत्तित्वस्य बाधेऽपि न क्षतिः तादृशगन्धस्याननाद्यवृत्तित्वेऽपि आनने गन्ध इत्याकारकबाधीयगन्धविषयताया आननादिप्रकारतानिरूपितत्वेन वाक्यार्थाबाधात्। वाय्वानीतचम्पकगन्धस्य यत्र वाय्वादिवृत्तित्वेनैव ग्रहः, तत्र चम्पकं जिघ्रतीत्यादिप्रयोगो नेष्यतएव। यत्तु आधेयतामात्रं

---

तसंयोगपारतन्त्र्येण वाऽन्वयोपगमाच्चोक्तप्रतीतिनिर्वाहसंभवादुक्तनिरूपकत्वस्योक्ताधिकरणत्वस्य च मानाभावात् किञ्चोक्तप्रतीत्या प्रतियोगित्वविशिष्टे संयोगे वृत्तित्वमेव प्रतीयते नतु विशिष्टनिरूपिताधारत्वामधेयत्वं च विशिष्टे तादृशाधारत्वशून्यनिरूपितमप्युपेयतं एव गुणे गुणकर्मान्यत्वविशिष्टसत्त्वमितिप्रत्ययात् गुणो गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रत्ययस्यैवाभावादुक्तरीत्या वह्नौ न वह्नेस्संयोगइत्यस्योपपादनासंभवः संयोगे वह्निप्रतियोगिकत्ववैशिष्ट्यस्य वह्निवृत्तित्वस्य च सत्त्वात् वह्निप्रतियोगिकसंयोगवान् वह्निरिति प्रत्ययस्यैव प्रामाणिकत्वेन वह्नौ तादृशाधिकरणत्वस्यैवोपगमाच्च सम्बन्धस्य संबन्धिद्वयनिष्ठत्वनियमस्यान्यथा व्याघातात् विशिष्टवैशिष्ट्यावगाहिबुद्धिर्हि विशिष्टाधिकरणत्वमवगाहमाना तत्रैवाप्रमाविशेष्यवति भवति यत्र विशेष्ये भासमानविशेषसंबन्धस्य नियततया प्रतीयमानविशेषणसंबन्धस्याभावः यथा द्रव्यवृत्तित्वविशिष्टसत्त्वबुद्धिस्सत्त्ववति द्रव्ये प्रमागुणे चाप्रमाविशेष्ये भासमानद्रव्यवृत्तित्वसंबन्धनियतप्रतीयमानसत्त्वनिष्ठवृत्तिताया निरूपकत्वसंसर्गस्य द्रव्ये सत्त्वाद्गुणेचासत्त्वात्। एवं रक्तदण्डवान् पुरुषइति विशिष्टवैशिष्ट्यबुद्धिर्दण्डसंबन्धिनिपुरुषे तत्रैव तदैव प्रमा यत्र विशेषणस्य रक्तत्वस्य दण्डद्वारा संबन्धः सच दण्डे तदा रक्तत्वस्य विद्यमानतायामेव भवति नह्येवं प्रकृते वह्निनिष्ठप्रतियोगितानिरूपकत्वविशिष्टसंयोगबुद्धौ भासमानविशिष्टाधिकरणत्वस्य वह्नावभावसंभवः विशेष्यस्य संयोगस्य तद्विशेषणोक्तनिरूपकत्वस्य च स्वनिरूपितप्रतियोगित्वाश्रयत्वरूपनियतभासमानसंबन्धेन वह्नौ सत्त्वात् प्रत्युत पर्वत एव तद्बुद्धेरप्रमात्वं प्रमात्वञ्च तत्रोपलक्षितवैशिष्ट्यावगाहिन्या एव वाच्यम्। विशेष्ये भासमानसंबन्धेनाभावस्य येन केनचित्संबन्धेन भावस्य च विशेष्यवति सर्वत्रैव विशेषणस्य सर्वविशिष्टाधिकरणत्वस्थले समानत्वेन प्रमात्वाप्रमात्वनियामकत्वाभावात् तस्मात्पर्वते वह्नेस्संयोगो न वह्नावित्यस्य पर्वतनिष्ठानुयोगितानिरूपितवह्निनिष्ठ-

द्वितीयार्थः, न तु समवायावच्छिन्नत्वविशेषितमाधेयत्वम् । तथा च मुखादिसंसृष्टमृत्तिकादिगन्धे परंपरासंबन्धेन मुखादिवृत्तित्वस्य सत्त्वाद् न तादृशस्थलेऽनुपपत्तिरिति । तदसत् तथा सति कालं जिघ्रतीति प्रयोगस्य दुर्वारत्वात् । पुष्पमाघ्रायते इत्यादौ च निरुक्तप्रकारत्वमाख्यातार्थः । आश्रयतासंबन्धेन पुष्पाद्यन्विते तस्मिन् धात्वर्थप्रत्यक्षस्य निरूपितत्वसंबन्धेन तद्विशेषणतापन्नगन्धविषयतायाश्च तादृशसंबन्धेनान्वयः । एकधर्मिविशेषणतयोपस्थितस्य स्वातन्त्र्येणान्यविशेषणतयान्वयबुद्धेरेवाव्युत्पन्नत्वात् । अत्र च प्रत्यक्षपारतन्त्र्येणैव गन्धविषयताया आख्यातार्थेऽन्वयेन व्युत्पत्तिविरोधविरहात् । अस्तु वा गन्धः लौकिकविषयताप्रत्यक्षं च विशकलितमेव धातोरर्थः । कर्त्राख्यातादिसमभिव्याहारे गन्धविषयतायाः प्रत्यक्षविशेषणतया कर्माख्यातसमभिव्याहारस्थले च प्रत्यक्षविशेष्यतयान्वय इति न कश्चिद्दोषः । जिघ्रत्यर्थगन्धविषयतानिरूपितनिरुक्तप्रकारिताश्रयत्वमेव पुष्पादिनिष्ठं जिघ्रतिकर्मत्वमिति दिक् । अथ दृश्यादिसमभिव्याहृतद्वितीयाया लौकिकविषयितार्थकत्वे सौरभं न पश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयिताशालिचाक्षुषाद्यप्रसिद्ध्या आकाशं न पश्यतीत्यादौ चाकाशादिनिरूपितलौकिकवियिताया एवाप्रसिद्ध्या तादृशविषयिताशालिचाक्षुषाश्रयत्वाद्यभावरूपवाक्यार्थाप्रसिद्धिः । नच सौरभं न पश्यतीत्यादौ सौरभादिनिरूपितलौकिकविषयित्वाभावः चाक्षुषादौ प्रतीयतइति वाच्यमेवमप्याकाशं न पश्यतीत्यादावप्रतीकारात् । नच लौकिकविषयितायां निरूपितत्वसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभावः प्रतीयतइति वाच्यम् वृत्त्यनियामकसंबन्धस्य संसर्गाभावप्रतियोगितानवच्छेदकतया तादृशाभावस्याप्रसिद्धेः । एतेन निरूपकतासंबन्धेन चाक्षुषादिनिष्ठलौकिकविषयिताया अभावस्तत्राकाशादौ प्रतीयत इत्यपि निरस्तम् । अन्वयबोधस्य प्रथमान्तार्थमुख्यविशेष्यकतायाः सर्वानुभवसिद्धाया भङ्गप्रसङ्गाच्च चाक्षुषादिनिष्ठलौकिकविषयितात्वावच्छिन्नस्यपदाद्वाक्याच्चानुपस्थितत्वात्तदभावस्याकाशादौ भानासम्भवाच्च । भावान्वयबोधे च लौकिकविषयिताप्रकारेण चाक्षुषादेर्भानात् अभावान्वयबोधे चाक्षुषप्रकारेण तस्या भानमयुक्तम् । अस्तु वा वृत्त्यनियामकोपि संबन्धोऽभावप्रतियोगितावच्छेदकस्तथापि निरूपितत्वसंबन्धावच्छिन्न प्रतियोगिताकस्य विषयिताविशेषनिष्ठाकाशाद्यभावस्य भानोपगमो न संभवति तथा सति आकाशं पश्यति चैत्र इत्याकारकवाक्यजन्यायोग्यताभ्रमदशायां आकाशं न पश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधप्रसङ्गात् । आकाशं पश्यति मैत्र इत्यादिभ्रमदशायां आकाशं न पश्यति चैत्र इत्यादिवाक्याच्छाब्दबोधस्य दुरपह्नवतया लौकिकविषयतात्वसामानाधिकरण्येनैव हि तादृशाभावबोधकं तद्वाक्यमुपगन्तव्यम् । तादृशबोधश्च लौकिकविषयतात्वसामानाधिकरण्यमात्रेणाकाशादिनिरूपितत्वावगाही दर्शितायोग्यताज्ञानाप्रतिबध्य एव । न च चैत्रीयचाक्षुषादिनिरूपितलौकिकविषयतात्वावच्छेदेनैव तादृशाभावो दर्शितवाक्येन प्रत्याय्यते इति चैत्रीयचाक्षुषादिनिरूपितलौकिकविषयितायां आकाशीयत्वाद्यवगाहि चैत्र आकाशं पश्यतीति वाक्यजन्यबोधः प्रतिबध्नात्येव तादृशवाक्यजन्यधियमिति वाच्यम् तादृशविषयितात्वेन विषयि-

---

प्रतियोगितानिरूपकस्स्यागो न वह्निनिष्ठानुयोगितानिरूपितासंयोगीयवह्निनिष्ठप्रतियोगितेति विषयकत्वमेव वाच्यमिति स्वनिष्ठप्रतियोगिताकत्वविशिष्टसंयोगस्य सामानाधिकरण्यं स्वनिष्ठव्यापारेप्यक्षतमिति स्वंगच्छतीत्यस्यावारणात्तद्रीतेर्लघुभूताया अपि परित्यागस्यैवोचितत्वमिति मन्तव्यम् ।

यत्तु पञ्चमीग्रन्थे यथाहि स्वप्रतियोगिकत्वविशिष्टसंयोगः स्वस्मिन्न वर्तते तथेत्युक्तं तत्प्राचीनानुमतस्य दृष्टान्तत्वमात्राभिप्रायक न तत्र निर्भरोऽन्यथात्र लघुभूतपक्षोपेक्षाया निर्बीजत्वापत्तेरितिध्येयम् ग्रामं गच्छतीत्यत्रोक्तप्रकारेणैव ग्रामं त्यजतीत्यत्रापि शाब्दबोधउन्नेयः । स्वंत्यजतीत्यप्रतीतेरिति । **नपश्यतीत्यादावप्रतीकारादिति** । इदमुपलक्षणम् । यद्वा न कस्यापि वस्तुनो दर्शनं तदा सौरभं न पश्यतीत्यस्योक्तरीत्यापि न गतिसंभव इत्यपि बोध्यम् । **अयोग्यताभ्रमेति** न शब्घटितवाक्यार्थविपरीतत्वादयोग्यत्वं बोध्यम् । इदञ्चेष्टापत्तिवारणायोक्तं नहि कश्चिदिच्छत्ययोग्यताज्ञानकाले शाब्दबोधम्

ताया अनुपस्थितेस्तदवच्छेदेनाभावप्रत्यायनासंभवात् चैत्र आकाशं पश्यतीतिवाक्यजन्यबोधे चैत्रांशे दर्शनाश्रयत्वं विशेषणं दर्शनांशे लौकिकविषयिताविशेषणमिति रीत्यैव पदार्थानां ज्ञानात् चैत्रीयचाक्षुषादिनिरूपितविषयितात्वं नाकाशादिधर्मितावच्छेदकं, किन्तु शुद्धलौकिकविषयितात्वमेवेति तस्य शुद्धलौकिकविषयितात्वावच्छेदेनाकाशाद्यभावावगाहिज्ञानं प्रत्येव प्रतिबन्धकतया निरुक्तधर्मावच्छेदेनाकाशाद्यभावावगाहिज्ञानस्य तदप्रतिबध्यत्वाच्च । एतेन तत्राकाशादिपदस्याकाशादिनिरूपितत्वार्थकतां द्वितीयायाः खण्डशो निरूपितत्वलौकिकविषयितात्वोभयार्थकतां वा स्वीकृत्य लौकिकविषयिताया आश्रयतासंबन्धावच्छिन्नप्रतियोगिताकाकाशनिरूपितत्वाभावबोधोपगमेनापि न निस्तारः । घट आकाशं न पश्यतीत्यादौ नितरामेवागतिः । यत्तु नञर्थस्य द्विधा भानोपगमेन आकाशादिनिरूपितत्वाभाववल्लौकिकविषयताशालिचाक्षुषाश्रयत्वाभाववान् घट इत्याकारकस्तत्रान्वय इति । तदपि न । तथा सति चैत्रो घटं न पश्यति मैत्र आकाशं न पश्यतीत्यादिवाक्यजन्यशाब्दबोधादविलक्षणबोधस्य सर्वानुभवसिद्धस्य तादृशवाक्यादनुपपत्तेः । नहि तत्रापि तादृश एव शाब्दबोधः । तथा सति चैत्रो यदा घटादिकं न पश्यत्यपि तु पटादिकमेव तदा घटाद्यनिरूपितलौकिकविषयिताशालिचाक्षुषाश्रयत्वाभावस्य तत्र बाधात् चैत्रो घटं न पश्यतीति प्रयोगानुपपत्तेः । यदा च भावमात्रं पश्यति तदा भावनिरूपितलौकिकविषयताशालिचाक्षुषाश्रयत्वाभावसत्त्वात् भावं न पश्यति चैत्र इत्यादिप्रयोगापत्तेः । एवमाकाशं न पश्यति घट इत्यादौ आकाशाद्यनिरूपितलौकिकविषयताशालिचाक्षुषाश्रयत्वाभावस्य वाक्यार्थत्वे यदाकाशाद्यतिरिक्तपटादिविषयकचाक्षुषाश्रयत्वनिश्चयो घटादौ तदा तादृशनिश्चयरूपप्रतिबन्धकसत्त्वेन तादृशवाक्यजन्यशाब्दबोधानुपपत्तिः । यथा चैत्रो घटं पश्यतीत्यादिनिश्चयदशायां पटं न पश्यति चैत्र इत्यादिवाक्यजन्यशाब्दबोधोत्पादोऽनुभवसिद्धः, तथैवोक्तभ्रमदशायामाकाशं न पश्यति घट इत्यादिवाक्यजन्यबोधोत्पादोऽपीति न तत्रेष्टापत्तिः संभवति । यच्चालौकिकविषयताशून्यचाक्षुषत्वाद्यवच्छेदेनाकाशविषयकत्वघटादिवृत्तित्वोभयाभावो घट आकाशं न पश्यतीतिवाक्यात्प्रतीयते, उपनीताकाशादिविषयकचाक्षुषे आकाशादिविषयकत्वचैत्रादिवृत्तित्वोभयसत्त्वेन चैत्र आकाशं न पश्यतीत्यादिप्रयोगानुपपत्तिः ! घटादौ तादृशचाक्षुषाद्याश्रयत्वभ्रमदशायां घट आकाशं न पश्यतीतिवाक्याच्छाब्दबोधानुपपत्तिश्चेत्यलौकिककविषयताशून्यत्वेन चाक्षुषादिकं विशेषितम् । आकाशविषयकचाक्षुषाद्युपनीतभानस्यापीतरांशे लौकिकत्वात् तादृशानुपपत्तितादवस्थ्यम् । अतो लौकिकत्वविशेषणमुपेक्षितम् । अत्रालौकिकविषयताशून्यचाक्षुषत्वाद्यवच्छिन्नस्य घटं न पश्यतीत्यादौ शक्त्या धात्वर्थत्वासंभवेऽपि प्रकृते तस्यैव लक्षणया धात्वर्थत्वमुपेयते, विषयतासामान्यमेव तत्र द्वितीयार्थः निरूपकत्वमपि लक्षणयातदर्थः आश्रयत्वं द्वित्वं नि- कत्वं चाख्यातार्थः । आश्रयत्वे व्युत्पत्तिवैचित्र्यात्प्रथमान्तपदार्थघटादेस्तस्यनिरूपकत्वे विशेषण..यान्वयः । तादृशनिरूपकत्वद्वितीयान्तार्थाकाशादिविषयकत्वयोश्च प्रकारतया द्वित्वान्वयः द्वित्वाद्यवच्छिन्नप्रतियोगिताकत्वसंबन्धेन तादृशोभयस्य नञर्थाभावे तस्यान्वयितावच्छेदकनिरुक्तधर्मावच्छेदेन धात्वर्थेऽन्वयः । धात्वर्थस्य प्रकृते मुख्यविशेष्यतयैव भानम् । अथ वा स्वनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतासंबन्धेन धात्वर्थस्य तादृशोभयाभावेन्वयः । तस्य चाख्यतार्थनिरूपकत्वे, तस्य च प्रथमान्तपदार्थे घटादौ, घटादेः प्रतियोगितावच्छेदकघटकतया तादृशाभावनिरूपकत्वात् । एवं चान्वयबोधस्य प्रथमान्तपदार्थमुख्यविशेष्यकत्वनियमस्यापि न क्षतिरिति । तदपि न घटादिविषयकचाक्षुषादेः कालिकादिसंबन्धेन

---

**निरुक्तधर्मावच्छेदेनेति ।** विशिष्टधर्मस्यावच्छेदकावच्छेदेनापि बुद्धेः शुद्धधर्मसामानाधिकरण्यमात्रपर्यवसायित्वात् तादृशबुद्धौ शुद्धलौकिकविषयतात्वावच्छेदेनाकाशनिरूपितत्वावगाहिन्या एव बुद्धेर्विरोधित्वमुक्तवाक्यस्य च तादृशधर्मसामानाधिकरण्येन बोध एव साकाङ्क्षत्वमन्यथा घटं पश्यतीत्यादेरप्यप्रामाण्यापत्तेरिति तदप्रतिबध्यत्वमुक्तज्ञानस्य यक्तमिति भावः।

पटादिवृत्तितया पटो घटं न पश्यतीति प्रयोगानुपपत्तेः । आकाशादिविषयकत्वावच्छिन्ने चाक्षुषे कालिकादिसंबन्धेन घटादिवृत्तित्वनिश्चयदशायां घट आकाशं न पश्यतीतिवाक्याच्छाब्दबोधानुपपत्तेश्च । समवायेन घटादिवृत्तित्वाकाशादिविषयकत्वोभयाभावस्यैव स्वीकरणीयतया अभाव आकाशं न पश्यतीत्यादौ अभावसमवेतत्वाप्रसिद्ध्या वाक्यार्थाप्रसिद्धेर्दुर्वारत्वात् । चैत्रादेरतीतचाक्षुषस्य घटादिविषयकत्वेऽपि समयविशेषे चैत्रो घटं न पश्यतीतिप्रयोगाद्वर्तमानतादशाचाक्षुषत्वाद्यवच्छेदेन उभयाभावभानस्य प्रतियोगिकोटौ वर्तमानत्वमन्तर्भाव्य त्रित्वावच्छिन्नाभावभानस्य वा स्वीकरणीयतया यदा किंचिदंशेऽलौकिकमेव घटादिचाक्षुषं तस्य वर्त्तते तदा चैत्रो घटं न पश्यतीत्यादिप्रयोगापत्तेर्दुर्वारत्वात् । वर्तमानालौकिकविषयाशून्यचाक्षुषत्वाद्यवच्छेदेन चैत्रवृत्तित्वघटविषयकत्वोभयाभावसत्त्वात् । समानेन्द्रियजन्योपनीतभानादौ लौकिकप्रत्यक्षसामग्र्या विरोधित्वस्य निष्प्रामाणिकतया लौकिकविषयतानियामकोपनायकज्ञानादिसमवहिततल्लौकिकसन्निकर्षाद्, घटादिनिरूपितलौकिकालौकिकोभयविषयताशालिचाक्षुषादेरुत्पत्त्या तादृशचाक्षुषादिदशायामनुरूपप्रयोगापत्तेः । आकाशादिनिरूपितालौकिकविषयिताशालिवर्तमानचाक्षुषाद्यंशे घटादिवृत्तित्वस्य आकाशीयत्वादिना लौकिकविषयितायाश्च भ्रमदशायां घट आकाशं न पश्यतीत्यादिवाक्याच्छाब्दबोधापत्तेर्दुर्वारत्वाच्च । घटादिनिरूपितालौकिकविषयिताशून्यचाक्षुषत्वाद्यवच्छेदेन घटादिविषयित्वघटितोभयाभावभानोपगमेऽप्यनिस्तारात् एतेनाख्यातार्थवर्तमानत्वाद्यवच्छिन्नसमवायावच्छिन्नाश्रयत्वत्वाद्यवच्छिन्ने आकाशादिविषयकप्रतियोगिकत्वलौकिकान्यविषयताशून्यचाक्षुषप्रतियोगिकत्वाभावाद्यनुयोगिकत्वैतत्त्रितयत्वावच्छिन्नाभावो भासतेऽतोऽभाव आकाशं न पश्यतीत्यादौ नानुपपत्तिः तत्र विषयितावत्प्रतियोगिकत्वं द्वितीयार्थनिरुक्तचाक्षुषप्रतियोगिकत्वं त्रित्वं च धातोरर्थः । घटाद्यनुयोगित्वं च प्रथमान्तार्थ इत्यपि निरस्तमिति चेत् । अगत्या घट आकाशं न पश्यतीत्यादिवाक्यानामप्रामाण्यमुपगन्तव्यमिति ॥ इति प्रथमखण्डम् ॥

अनुमित्यर्थकधातुयोगे विधेयत्वं विधेयित्वं वा द्वितीयार्थः तेन वह्न्यादिपक्षकानुमितिपरस्य वह्निमनुमिनोमीत्यादिवाक्यस्य न प्रामाण्यम् । यदि च वह्निसाध्यकपर्वतपक्षकानुमितिपरस्य वह्निमत्त्वेन पर्वतमनुमिनोमीत्यादिवाक्यस्यापि प्रामाण्यं मन्यते तदा तादृशधातुयोगे उद्देश्यत्वमुद्देश्यित्वं वा द्वितीयार्थः तस्य च तृतीयान्तोपस्थाप्यसाध्यविधेयकत्वेन विशिष्टेऽन्वयः अतो वह्निमत्त्वेनेत्याद्यसमभिव्याहारेण तत्र पर्वतमनुमिनोमीत्यादयो न प्रयोगाः । विधेयत्वाद्यर्थे तृतीयानुशासनविरहात् तृतीयान्तेन वन्ह्यादिविधेयकत्वं कथमुपस्थापनीयमिति न शङ्क्यम् । वैशिष्ट्यरूपार्थे तृतीयानुशासनसत्त्वात् विधेयतादेरपि वैशिष्ट्यरूपत्वात् । अत एव रजतत्वेन शुक्तिं जानातीत्यादौ ज्ञाने रजतत्वादिप्रकारकत्वस्य घटत्वेन वह्निर्नास्तीत्यादौ सौंदडमते अभावे घटत्वावच्छिन्नप्रतियोगिताकत्वस्य तृतीयान्ततो बोधः । तृतीयान्तार्थरजतत्वादिप्रकारकत्वद्वितीयान्तार्थशुक्त्यादिविषयकत्वयोः विशिष्टवैशिष्ट्यबोधमर्यादयाऽवच्छेद्यावच्छेदकभावभानम् रजतत्वेन शुक्तिं जानातीत्यादौ नियतं केवलमेकत्र द्वयमितिरीत्या तदुभयबोधस्य तत्राव्युत्पन्नत्वात् । अत इमे शुक्तिरजते इत्यादिप्रमापरस्य तादृशवाक्यस्य न प्रामाण्यम् । घटत्वाद्यवच्छिन्नवह्न्यभावनिष्ठेन वह्न्यादिनिरूपितानुयोगिताविशेषरूपवह्न्याद्यभावत्वेन तदभावनिष्ठघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वस्यावच्छेद्यावच्छेदकभावः स्वीक्रियते । घटत्वेन वह्निर्नास्तीत्यादौ च तद्बोधस्योक्तरीत्यावश्यकत्वमिति घटत्वावच्छिन्नवह्न्याद्यभावस्य वह्नित्वावच्छिन्नघटाद्यभाव-

---

वृत्त्यनियामकस्य तादात्म्यस्यान्योन्याभावप्रतियोगितावच्छेदकत्वादाह । संसर्गाभावेति । अनिस्तारादिति । समानेन्द्रियेत्यादिग्रन्थेन प्रदर्शितापत्त्योरवारणादित्यर्थः । तादृशधातुयोगइति । विधेयत्वबोधकतृतीयान्तसमभिव्याहृतोक्तधातुयोग

समनियतत्वेन तदभिन्नतया तत्र घटत्वाद्यवच्छिन्नप्रतियोगिताकत्वघटाद्यभावत्वसत्त्वेऽपि तादृशाभावपरस्य घटत्वेन घटो नास्ति, वह्नित्वेन वह्निर्नास्तीत्यादिवाक्यस्य न प्रामाण्यम् । उक्तस्थले च तृतीयान्ताद्यर्थस्य द्वितीयान्ताद्यर्थेऽवच्छेद्यावच्छेदकभावसंबन्धेनान्वय इत्यपि केचित् । तन्न । विभक्त्यर्थे विभक्त्यर्थान्वयस्याव्युत्पन्नत्वात् । न च रजतत्वेनेदं ज्ञायते आख्यातार्थविषयतायां तृतीयार्थप्रकारताया निरूपितत्वसंबन्धेनान्वयान्नोक्तव्युत्पत्तिकल्पनमिति वाच्यम् । तत्रापि रजतत्वादिप्रकारकत्वविशिष्टधात्वर्थज्ञाननिरूपितत्वस्याख्यातार्थे भानस्वीकारेणैवातिप्रसङ्गभङ्गात् । न च तस्मात्पचति तस्माच्चैत्रस्येत्यादौ विभक्त्यर्थे कृतिसंबन्धादौ हेतुविभक्त्यर्थान्वयदर्शनान्नास्त्युक्तव्युत्पत्तिरिति वाच्यम् । हेतुविभक्त्यर्थातिरिक्तविभक्त्यर्थस्यानन्वयनियमात् न च रजतत्वेनेदं जानातीत्यादौ तृतीयायाः कारकविभक्तित्वाभावान्न तदर्थस्य क्रियायामन्वयसंभव इत्यगत्या द्वितीयार्थएव तदन्वय उपगन्तव्य इति वाच्यम् । मणिकारमते तस्माज्जानातीत्यादौ ज्ञानादिरूपधात्वर्थे हेतुविभक्त्यर्थस्य तस्मात् स्त्रीयते इत्यादौ च सर्वमतएव धात्वर्थस्थित्यादौ तस्यान्वयेन पष्ठ्यर्थसंबन्धस्यापि "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैरि" त्यादौ धात्वर्थेऽन्वयेन कर्मासमभिव्याहृते रजतत्वेन जानातीत्यादौ धात्वर्थे तृतीयार्थान्वयस्यावश्यकत्वेन कारकविभक्तिभिन्नविभक्त्यर्थस्य क्रियायामनन्वय इत्यनियमात् । एवं घटत्वेन वह्निर्नास्तीत्यादौ प्रथमार्थो नानुयोगित्वम् प्रथमायाः संख्यातिरिक्तार्थबोधकत्वनियमादतो नञर्थाभावे संबन्धएव तत् तत्रच न तृतीयार्थान्वयसंभवः । मम तु अनुयोगितासंबन्धेन वह्न्यादिविशिष्टाभावे तृतीयान्तार्थघटत्वावच्छिन्नप्रतियोगिताकत्ववैशिष्ट्यभानाद्विशिष्टवैशिष्ट्यबोधमर्यादया वह्न्याद्यनुयोगिकत्वस्थलीयस्यानुयोगितयासंबद्धवह्न्यादेस्तादृशप्रतियोगिताकत्वेनावच्छेद्यावच्छेदकभावभानोपगमेन सामञ्जस्यात् । अनुयोगिताया नञर्थतावच्छेदकत्वे तत्रैव वह्न्यादेः प्रतियोगिनोऽन्वयः । अतस्तत्र तृतीयान्तार्थघटत्वावच्छिन्नप्रतियोगिताया निरूपकत्वेनान्वयं स्वीकृत्यातिप्रसङ्गवारणं सम्यक् प्रतिभाति । रङ्गेऽभेदेन रजतारोपस्थले रङ्गं रजतेन जानातीत्यप्रयोगात् । तादात्म्यभिन्नसंबन्धावच्छिन्न प्रकारतैव तृतीयार्थः । तत्र च रङ्गं रजतं जानातीति प्रयोगात्तादात्म्यसंबन्धावच्छिन्नप्रकारता कर्मत्वानुशिष्टद्वितीयादेरेवार्थः । तस्याश्च तादृशप्रकारवाचिपदसमानविभक्तिकपदोपस्थाप्यविशेष्यताविशिष्टायामेव ज्ञानरूपक्रियायामन्वयः । तेन भेदारोपस्थले रङ्गे रजतत्वं जानातीतिवदभेदारोपस्थले रङ्गे रजतं जानातीति न प्रयोगः । उक्तस्थले च रङ्गरजताद्योः समानविभक्तिकपदोपस्थाप्ययोरभेदान्वयसाकाङ्क्षत्वेऽपि नायोग्यतया तादृशान्वयः । ननु एवंसति रङ्गरजतादिपदयोः सामानाधिकरण्यानुपपत्तिरिति चेत् का क्षतिः । न चैवं रजतगतैकत्वबहुत्वाविवक्षायां रङ्गानि रजतं जानातीति प्रयोगस्य स्त्रियं पांसुलां जानातीति प्रयोगस्य च प्रसङ्गः सामानाधिकरण्यस्यैव समानवचनलिङ्गकत्वनियतत्वादिति वाच्यम् । समानाधिकरणयोरिव यत्पदार्थविशेष्यकत्वविशिष्टेऽभेदसंबन्धावच्छिन्नयत्पदार्थप्रकारकत्वस्यान्वयस्तयोरपि समानलिङ्गवचनत्वनियमात् ।

यज्ञपतिमतानुयायिनस्तु रङ्गं रजतं जानातीत्यादौ सामानाधिकरण्यानुरोधाद् रजतादिपदस्य रजताभेदज्ञानविषये लक्षणा । अत एव भ्रान्तिविशेषदर्शिना प्रयुक्तस्य लोहितवह्निं जानातीत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः न ह्यसमासस्थलइव लोहितवह्न्याद्योरभेदाविवक्षा, ज्ञानांशे लोहितादेः स्वातन्त्र्येणान्वयो वा संभवति, कर्मधारयस्य साधुतानुपपत्तेः लोहितपदोत्तरं प्रकारताबोधकविभक्तेरभावात् । धात्वर्थे साक्षान्नामार्थस्य भेदान्वयेऽव्युत्पत्तेः । द्वन्द्वस्थलवत्कर्मधारयोत्तर-

---

इत्यर्थः । **नप्रामाण्यमिति** । एकत्र द्वयंरीत्या भानोपगमे रजतत्वप्रकारकत्वशुक्तिविशेष्यकत्वयोरेकत्र द्वयं रीत्या भासमानयोरवच्छेद्यावच्छेदकभावासंभवेनातादृशयोस्तत्र सत्त्वेन प्रामाण्यं स्यादेकविशिष्टे परस्य नियमेन भाने तु तयोरवच्छेद्यावच्छेदकभावस्यापि नियमेन भानात्तद्विशिष्टयोस्तयोरिमे शुक्तिरजते इति प्रमायामभावात्तत्परस्योक्तवाक्यस्य न प्रामाण्यमित्यर्थः । **उक्तव्युत्पत्तीति** । विभक्त्यर्थद्वयानन्वयव्युत्पत्तीत्यर्थः । उक्ताव्युत्पत्ती वा युक्तः पाठः । यदि लोहितादिपदार्थघटकज्ञानस्य

विभक्तेः पूर्वपदप्रकृतिकत्वाभावात् तस्याः पूर्वपदार्थान्वितप्रकारताबोधकत्वायोगात्। न च द्वन्द्वसमास एवासौ, अल्पाचो वह्निपदस्य पूर्वनिपातप्रसङ्गात्। समाहारपक्षे पुल्लिङ्गताया इतरेतरपक्षे च एकवचनस्यानुपपत्तेः। एतन्मते शुक्लो वह्निरित्यादिप्रमायां लोहिताभेदारोपविषयवह्निविषयकत्वेऽपि शुक्लो वह्निर्लोहिता जपेति समूहालम्बनप्रमाया लोहिताभेदावगाहिस्वविषयवह्निविषयकत्वेऽपि च तद्दशायां लोहितवह्निं लोहितं वह्निं वा जानातीति न प्रयोगः। तादृशपदोपस्थाप्यविषयताया धर्मिपारतन्त्र्येण द्वितीयार्थविषयतायामभेदसंबन्धेन विशेषणताया नियमोपगमात्, अथ ज्ञा लोहिताभेदविषयतानिरूपितविषयतापन्नस्य वह्न्यादेर्ज्ञानान्वयिविषयितानिरूपकत्वं भासते। समूहालम्बनादौ च तादृशविषयतानापन्नस्यैव विषयितानिरूपकत्वमिति नातिप्रसङ्गः। विषयितापन्नस्य निरूपकत्वमित्यस्य च विषयतावच्छिन्नं निरूपकत्वमित्यर्थः। एतच्च विलक्षणं विषयितानिरूपकतावच्छेदकत्वमविषयस्यापि विषयत्वस्योपेयते, रक्तदण्डवानित्यादौ दण्डादिरूपप्रकारांशेऽप्रकारेणापि रक्तत्वादिप्रकारतानिरूपितविशेष्यत्वेन दण्डादिप्रकारताया अवच्छेद्यावच्छेदकभाववदित्याहुः। तन्न शोभनम्। उक्तरीत्या लक्षणां विनैवोपपत्तौ तस्या अन्याय्यत्वात्। अथोक्तस्थले आरोप्यारोपविषयबोधकपदयोर्ज्ञानान्वितार्थकत्वे कर्मप्रत्ययस्थले लोहितो वह्निर्ज्ञायते इत्यादौ विशेष्यभेदाद्वाक्यभेदापत्तिः। न च लोहिताभेदज्ञानविषयोवह्निरित्येव शाब्दधीरुपगम्यते न तु ज्ञाने प्रकारो लोहितो विशेष्यश्च वह्निरिति समूहालम्बनं, तथा सति शुक्लो वह्निर्लोहिता जपेत्यादावपि तथा प्रयोगप्रसङ्गात्। दर्शितविशिष्टवैशिष्ट्यबोधस्वीकारे लोहितादिप्रकारकत्वविशिष्टनिरूपितविशेष्यतायाः शुक्लवह्न्यादौ बाधितत्वेन तादृशप्रयोगापत्तिविरहादिति वाच्यम्। तत्र लोहितादिपदोत्तरप्रकारतार्थकद्वितीयादिविरहेण लोहितादिप्रकारकत्वेन ज्ञानभानासंभवात्। नामार्थधात्वर्थयोः साक्षादन्वयस्याव्युत्पन्नतया प्रकारितायाः संसर्गताया भानासंभवादिति चेन्न। यथाहि। घटो नीलो भवति, वृक्षो नौका भवति, काष्ठं भस्म भवतीत्यादौ धात्वर्थेऽसाधारणधर्मरूपे भावे व्युत्पत्तिवैचित्र्येण नीलनौकाभस्मादेः साक्षादेवान्वयः। प्रथमाया अन्तराभासमानार्थकत्वाभावात्। नौकादिपदस्य स्वारम्भकावयवारूयाद्यर्थलाक्षणिकतया प्रकृतिविकृत्योर्भेदमतेऽपि वृक्षो नौका भवतीत्यादौ योग्यताया उपपत्तिः। तथा धात्वर्थे प्रकृतेऽपि प्रकारितासंबन्धेन लोहितादेः साक्षादन्वयस्यागत्योपगमात्। यथा प्रकृतिविकृतिभावस्थले वृक्षः पञ्चनौका भवतीत्यादौ प्रकृतिभूतवृक्षादेर्विशेष्यतया भावनान्वयित्वात्, तद्गतसंख्याबोधकतया प्रकृतिवाचकपदसमानवच-

---

व्युत्पत्तिवैचित्र्येण धर्मिपारतन्त्र्येण धात्वर्थज्ञाने ऽन्वयोभ्युपेयते तदा शुक्लो वह्निरिति ज्ञानपरस्योक्तवाक्यस्य न संभव इत्यत आह। **शुक्लोवह्निर्लोहिताजपेति**। तन्न शोभनमित्यनन्तरं लोहितवह्निं जानातीत्यादिसमासघटितवाक्यस्य प्रमागताया अनभ्युपगमादिति क्वचित्पाठः। तत्रोक्तसमासस्थलोद्भावितदोषस्याप्रमाणत्वेनैव समाधानं विहितमस्ति यदि प्रामाण्यमेव तस्य स्यात् तदा लोहितपदस्य लोहितविषयके वह्निपदस्य वह्निविषयके लक्षणया कर्मधारयो निर्वाह्यः द्वितीया च क्रियाविशेषणएव। नचोभयपदलक्षणापेक्षयैकपदलक्षणोपाध्यायमतानुसारिण्युचितेतिवाच्यं समूहालम्बनविषयताव्यावृत्तविषयतालाभप्रकारस्यानुभवपथातीतस्योपाध्यायपक्षे स्वीकरणीयतयोक्तरीतेरेवोचितत्वात्। यद्वा लोहितपदं तात्पर्यग्राहकं द्वितीयैव तादात्म्यसंबन्धावच्छिन्नलौहित्यप्रकारतानिरूपितविषयत्वे . लाक्षणिकी समासघटकपदार्थयोः परस्परमनन्वयेपि पूर्वपदतात्पर्यग्राहकत्वपक्षे चित्रगुरर्धपिप्पलीत्यादिसमासवदेवात्रापि समासः। न च तत्र विग्रहवाक्यार्थस्य प्रसिद्धिरिह तु नेति वाच्यं तस्याकिंचित्करत्वात् शशशृङ्गादिपदानामपि साधुत्वात् समासप्रयोजकव्यपेक्षादेर्निरूप्यनिरूपकभावापन्नबोधतात्पर्यविषयत्वेनाप्युपपत्तेः बोधप्रमात्वादेस्तत्रानपेक्षणात्। वस्तुत उक्तवाक्यस्य प्रामाणिकत्वे भवत्युपाध्यायमतमेव ज्यायः। **लक्षणांविनेति**। लोहितं वह्निं जानातीत्यादाविति शेषः। **भानासंभवादिति**। अथ लोहितपदार्थस्य धात्वर्थज्ञानेन्वयो न स्वीकरणीयोऽपितु लोहितपदलक्ष्यार्थस्य लोहिततादात्म्यविषयतानिरूपितविषयताश्रयस्याभेदेन वह्निपदार्थेन्वयः तत्राख्यातान्तार्थज्ञानविषयत्वान्वये व्युत्पत्तिवैचित्र्याल्लोहितपदार्थतावच्छेदकविषयत्वेप्यभेदस्य भानात्सर्वसामञ्जस्यमित्युपाध्यायमतमेव ज्याय इति चेन्न वक्ष्यमाणरीत्यात्रापि निर्वाहसंभवाल्लक्षणानौचित्यदोषस्य तन्मते जागरूकत्वात् एवमेको द्वौ ज्ञायत इत्यादावुपाध्यायमतेचागतेरभेदान्वयस्यासंभवादिति। **प्रकृतिविकृत्योर्भेदमत इति**। तयोरभेदपक्षे नौकात्वत्यसाधारणधर्माश्रयत्वस्य वृक्षे संभवादुक्तम्।

नत्वमाख्यातस्य। तथा एको द्वौ ज्ञायते इत्याद्युभयार्थाभेदारोपस्थलीयवाक्ये एकादिपदार्थस्यारोपविशेषस्याख्यातार्थविशेष्यतयान्वयविशेष्यतया तत्पदसमानवचनत्वमाख्यातस्य। नचैवममानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितमित्यत्र कथमारोप्यविशेष्यवाचकपदविरुद्धवचनत्वममानीतिक्रियापदस्येति वाच्यम्। तत्रायशोद्वयस्य वास्तवत्वं न चिकुरभागद्वयस्य राज्ञा आरोप्यत्वेन कवेरुत्प्रेक्षितत्वात्। आख्यातार्थविशेष्यतान्वयविशेष्यत्वेनायशोयुगस्यैव विवक्षितत्वात्। इच्छार्थकधातुस्थले मुख्यविशेष्यत्वरूपं कर्मत्वं द्वितीयाद्यर्थः अतो वृष्टिसाध्यं सुखं भवत्वित्यादि इच्छास्थले सुखमिच्छतीत्यादिवद्वृष्टिमिच्छतीत्यादयो न प्रयोगाः। अथ अहं सुखी स्यामित्यादीच्छायाः सुखादिविशेषणकतया तत्र सुखमिच्छतीत्यादिप्रयोगानुपपत्तिरिति चेन्न। मम सुखं भवत्वित्यादिसुखविशेष्यकेच्छाया एव कदाचित्सुखादिविशिष्टात्मबोधकशब्देन विषयाभिलापात्। स्वकृत्यधीनसिद्धिकत्वरूपस्वकृतिसाध्यत्वप्रकारकपाकविशेष्यकेच्छाया एव पाकं कृत्या साधयामीतिपाकसिद्ध्यनुकूलकृत्यभिन्नव्यापारविशिष्टबोधकशब्देन विषयाभिलापवत्। यदि चोद्देश्यसुखादेर्विशेषणतयापि क्वचिद्भानमानुभविकं तदोद्देश्यादिव्यवहारनियामकः क्वचित्किंचिद्विशेषणसाधारणो विषयताविशेषोऽभ्युपेयः। अनुमितौ विशेष्यतया क्वाचित्कभानविषयसाध्यनिष्ठविधेयताख्यविषयतावत्। स एवच सुखमिच्छतीत्यादौ द्वितीयाद्यर्थः। ग्राममिच्छतीत्यादौ ग्रामादिपदं ग्रामस्वत्वादिपरम्। अत एवच सिद्धस्य ग्रामादेर्मुख्यविशेष्यताया उपदर्शितविलक्षणविषयताया विरहेपि न क्षतिः। ग्रामादेः सिद्धत्वेऽपि स्वस्वत्वाद्यसिद्धोपरक्तस्येच्छायां प्राधान्येन क्वचिद्भानं, विशिष्टस्यासिद्धत्वात्। तत्रैव च ग्राममिच्छतीत्यादिप्रयोग इत्यपि वदन्ति।

पाकं चिकीर्षतीत्यादौ द्वितीयाया विशेष्यतारूपकर्मत्वार्थकतया कृतिप्रकारकपाकविशेष्यकेच्छा प्रतीयते। सा च पाकं कृत्या साधयामीतीच्छा। अथवा सनो धात्वर्थविशेष्यकेच्छावाचित्वात्कृतिविशेष्यकेच्छा चिकीर्षापदार्थः। सा च पाककृतिर्भवत्वितीच्छैव। प्रवर्त्तिका च सा भवतु मा वेत्यन्यदेतत्। पाकादेश्च कृतिकर्मत्वमेव द्वितीयया प्रत्याय्यते, न त्विच्छाया विषयत्वरूपं कर्मत्वम्। गृहस्थितीच्छामादाय गृहं तिष्ठासतीत्यादिप्रयोगापत्तेः। युक्तं चैतत् सनो धात्वर्थप्रकारकेच्छावाचित्वे ओदनभोजनेच्छादशायामोदनं बुभुक्षतइति प्रयोगो न स्यात्। तत्र भोजनस्याप्रकारत्वात्। न च कर्मता संबन्धेन भोजनप्रकारिका यदा ओदनविशेष्यिकेच्छा तदैवैतादृशप्रयोगः। सा चेच्छा भोजनधर्मिकेष्टसाधनताज्ञानाद्भोजनविशिष्टौदनधर्मिकेष्टसाधनताज्ञानाद्वा। ओदनस्य सिद्धतादशायामपि विशिष्टधर्मिकेष्टसाधनताज्ञानाद्विशिष्टधर्मिकासिद्धत्वज्ञानसहिताद्विशिष्टेच्छासंभवात्। यत्र भोजनसिद्धतादशायां भोजनोत्तरकालीनगमनत्वादिप्रकारिका भुक्तौदनजन्यपुष्टित्वादिप्रकारिका वेच्छा तत्र बुभुक्षतइति प्रयोगस्य न प्रसङ्गः। मुख्य विशेष्यविशेषणतापन्नकर्मत्वांशे इच्छाप्रकारताया एव सन्प्रकृत्यर्थभानोपगमादिति वाच्यम्, भोजनं भवत्वित्यादिभोजनविशेष्यकेच्छादशायामपि बुभुक्षतइतिप्रयोगस्य सर्वसिद्धत्वात्। धात्वर्थविशेष्यकेच्छाबोधकतायाः सन्प्रत्ययस्यावश्यमुपेयत्वात्। न च द्वयी व्युत्पत्तिरेवोपेयते एकव्युत्पत्त्यैव निर्वाहे व्युत्पत्तिद्वयकल्पने गौरवात्, अतएवचं स्थित्यादिगोचरेच्छाया गृहादिविशेष्यकत्वस्योक्तरीत्या संभवेऽपि गृहं तिष्ठासतीत्यादयो न प्रयोगाः। भोजनप्रकारकौदनविशेष्यकेच्छाविशेषदशायां बुभुक्षतइति प्रयोगसत्त्वे तु उद्देश्यताख्यविषयताया एव धात्वर्थे भानोपगमेन तस्य निर्वाहात्। नच धात्वर्थविशेष्यकेच्छायाः सन्प्रत्ययार्थत्वे पाकं चिकीर्षति ओदनं बुभुक्षतइत्यादौ पाकौदनादेर्द्वितीयया कृतिभोजनादिकर्मत्वप्रत्याय-

---

विशेषणतापन्नकर्मत्वांश इति। ओदनं भोजनकर्मभवत्वितीच्छाभिप्रायेणेदम्, कर्मांशइति युक्तः पाठः कर्मपदं धात्वर्थपरमिच्छाविषयपरं वा तेन कर्मतासंबन्धेनभोजनप्रकारिकेति पूर्वग्रन्थस्य नासंगतिः नचाधिकरणत्वसंबन्धेन गृहविशेष्यकस्थितिप्रकारकेच्छादशायां तिष्ठासतीतिप्रयोगानुपपत्तिः। अतएवेति। धात्वर्थप्रकारकेच्छायाः सन्नर्थत्वस्य तदन्वयिविशेष्यत्वस्य

नसंभवेऽपि पाकश्चिकीर्ष्यतओदनोबुभुक्ष्यत इत्यादौ कर्माख्यातेन तत्प्रत्यायनासंभवः तत्प्रकृतिभूत-सन्नन्तधात्वर्थकृतिभोजनेच्छाकर्मत्वस्यैव तत्प्रत्ययेन बोध्यत्वात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् इच्छाविषयत्वविशेषितविशिष्टकृतिभोजनादेश्च प्रकृत्याप्रतिपादनादिति वाच्यम् । कर्तृप्रत्ययस्थले सन्प्रत्ययार्थेच्छाया धात्वर्थविशेष्यतया भानेऽपि कर्मप्रत्ययस्थले तस्या धात्वर्थविशेषणतया भानोपगमात् । चिकीर्ष्यतेपाकइत्यादौ इच्छाविशेषितकृत्यादेरेव सन्नन्तेन प्रतिपादनात्, तादृशकृत्यादिकर्मताया आत्मनेपदादिना प्रत्यायनसंभवात् । आख्यातााद्युपस्थितवर्त्तमानत्वादेश्च कृत्यादिविषयकेच्छा यत्र प्रकृत्यर्थः यत्रवेच्छाविषयकृतिस्तत्रोभयत्रैवेच्छायामन्वयः, प्रकृत्यर्थैकदेशेऽपि नीलतरो घटइत्यादिस्थले नीलरूपादौ तरबाद्यर्थातिशयान्वयानुरोधात् । न चैवं कर्मप्रत्ययस्थलेऽपि कृतिविशेषितैवेच्छा सना प्रत्याय्यतां, विशेषणीभवन्ती कृतिरेव कर्मत्वेनान्वीयताम् भवन्मते विशेषणीभूतेच्छायां वर्त्तमानत्वाद्यपराख्यातार्थान्वयवदिति वाच्यम् । एकत्र विशेषणतयोपस्थितस्यान्यत्र विशेषणतयान्वयोव्युत्पन्न इति प्रथमान्तार्थविशेषणकर्मत्वे इच्छायां विशेषणतयोपस्थितस्य धात्वर्थस्य विशेषणतयान्वयायोगात् विशेष्यतया चान्वयस्याप्रसक्तत्वात् । धात्वर्थविशेषणतया इच्छाभानेपि तस्या वर्त्तमानत्वादिविशेष्यतयैव भानेनोक्तव्युत्पत्तिविरोधविरहात् । एवं धात्वर्थस्येतरविशेषणतयोपस्थितस्य स्वातन्त्र्येण कर्मताविशेषणत्वमयुक्ततममेव । प्रकृत्यर्थस्यैकदेशेऽपि-प्रकृत्यर्थान्तर्गततया भासमानएव प्रत्ययार्थान्वयदर्शनात्, ननु स्वातन्त्र्येण भासमानइच्छारूपविशेष्यपारतन्त्र्येण कर्मत्वान्वयोपि, इच्छया कर्मत्वानन्वयेन दुर्घटः । विशेष्यान्वयिन्येव विशेषणस्य पारतन्त्र्येणान्वयस्य विशिष्टान्वयस्थले व्युत्पत्तिसिद्धत्वात्, अथास्तु विषयतारूपकर्मत्वे चिकीर्ष्यते पाकइत्यादाविच्छायास्तत्परतन्त्रकृतेश्चान्वयः । उभयत्रैव पाकादेर्विषयत्वात् । स्थित्यादिकर्मत्वाप्रसिद्ध्याच गृहं तिष्ठास्यते इत्यादेरप्रसङ्गादिति चेत्, ओदनो बुभुक्ष्यते इत्यादौ का गतिः तत्रेच्छाकर्मताया विषयतारूपत्वात्, भोजनादिकर्मतायाश्च तदन्यत्वात्, विशेष्यीभवदिच्छान्वयिनि कर्मत्वे भोजनाद्यन्वयायोग्यत्वेन विशिष्टान्वयासंभवात् । वस्तुतः पाकश्चिकीर्ष्यतइत्यत्राप्यगतिरेव । कृतिविशेषणतया पाकनिष्ठेच्छाविषयतायाः कृत्यविशेषणतया तन्निष्ठकृतिविषयताभिन्नत्वयेच्छान्वयिनो विषयत्वरूपकर्मत्वस्य कृत्यन्वयायोग्यत्वात् । यदिच विशेष्यान्वयिव्यक्तावेव तत्पारतन्त्र्येण विशेषणान्वयइति न नियमः अपितु तदन्वयितावच्छेदकावच्छिन्नएवेति । तथा च विषयतात्वावच्छिन्नस्योभयान्वययोग्यतया न प्रकृतेऽप्यन्वयानुपपत्तिः । अतएवारुणयेत्यादावारुण्यनिरूपितसाध्यताया गोनिरूपितसाध्यताभिन्नत्वेऽपि न तृतीयार्थे विशिष्टान्वयानुपपत्तिः । तत्र परम्परया विशेष्यान्वयिसोमक्रयव्यक्तेः परम्परया विशेषणान्वयिव्यक्त्यभेदवत् प्रकृतेऽपि परस्परयोभयान्वयिकर्मव्यक्त्यभेदोऽक्षत एवेत्युच्यते तदा भोजनकृतिर्भवतु पाकश्च भवत्वितिसमूहालम्बनेच्छामादाय पाकश्चिकीर्ष्यतइति प्रयोगस्य कालान्तरीयकृतिविषयतामादाय दुर्वारतैव । विषयितासंबन्धेनेच्छाविशेषणीभूतकृतिव्यक्तिकर्मत्वान्वयस्यैव तदिच्छान्वयिनि कर्मण्यन्वयान्नायमतिप्रसङ्ग इतिचेत्तथापि तदिच्छाकाले पाक इदानीं न चिकीर्ष्यतइति प्रयोगानुपपत्तिः । अन्वयितावच्छेदककृतिविषयतात्वकृतिगोचरवर्त्तमानेच्छाविषयतात्वावच्छिन्नाभावयोस्तदा पाकेऽसत्त्वात् । नच वर्त्तमानकालावच्छिन्नकृतिविषयत्वत्वावच्छिन्नाभाव एव तत्र प्रतीयते स पाके बाधित इति वाच्यम् । यद्यतीतेच्छाधीनपाककृतिरपि तत्र वर्त्तते तदा तादृशाभावस्यापि तत्र बाधात् पाककृतीच्छायामसत्यामुक्तेच्छासत्त्वेऽपि च तथा प्रयोगात् । कृत्यसत्त्वेऽपि पाककृतीच्छासत्त्वे तथा प्रयोगविरहात् । कृतिविषयत्वा-

---

च द्वितीयार्थत्वानभ्युपगमादेवेत्यर्थः । स्वातन्त्र्येणेति । सविशेष्यस्य तत्रान्वयमनपेक्ष्यान्वयित्वम् अतएव कृतिरेव कर्मत्वेनेतीच्छान्वयव्यावृत्त्यर्थमेवकारउपात्तः तन्निष्ठविशेष्यताविशिष्टप्रकारताश्रयत्वं तत्र स्वातन्त्र्येणान्वयित्वं पर्यवसितम् वैशिष्ट्यं च स्वनिरूपितत्वस्वावच्छेद्यविशेष्यतानिरूपितप्रकारत्वावच्छेद्यविशेष्यतानिरूपितप्रकारत्वावच्छेद्यत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वोभयसंबन्धेन । पारतन्त्र्यमपि स्वनिरूपितत्वस्वातन्त्र्यघटकाभावप्रतियोगितावच्छेदकीभूतनिरुक्तप्रकारत्वावच्छेद्यत्वो-

भावमात्रबोधस्य तत्राभ्युपगमासंभवाच्चेतिकर्मप्रत्ययस्थले इच्छाधात्वर्थविशेषणमेव । इदन्तु तत्त्वम । कर्मप्रत्ययस्थलेऽपि धात्वर्थविशेषितैवेच्छा सन्प्रत्ययेन प्रत्याय्यते तत्कर्मत्वमेव कर्माख्यातार्थः तच्च धात्वर्थकर्मतया तद्विषयत्वम् । ओदनकर्मकभोजनं भवतु, पाकविषयककृतिर्भवत्वित्यादीच्छायां च पाकभोजनादीनां तथेच्छाविषयतया तत्कर्मत्वमक्षतम् । गृहस्थित्यादीच्छायां गृहादेः स्थित्याधारत्वादिनैव विषयत्वमिति न गृहादेस्तिष्ठासादिकर्मत्वम् । अतएव यदोदनव्यक्तिकर्मकभोजनमप्रसिद्धमथच भोजनकर्मतया तदिष्टं तत्रायमोदनो बुभुक्ष्यतइत्यादेर्दर्शनादिविषयत्वेन गगनादिगोचरेच्छास्थले च गगनं दिदृक्षतइत्यादेश्च प्रयोगस्य नानुपपत्तिः । नवा ओदनादिरूपकर्ममात्रोपरागेण यत्र भोजनादीच्छा दैववशेन च तद्भोजनादिकं विषादिकर्मकमपि तत्र विषं बुभुक्ष्यतइत्यादयः प्रयोगाः । कर्तृप्रत्ययस्थलेऽपि च तादृशविषयतारूपं कर्मत्वमेवेच्छाविशेषणतया भासते न तु धात्वर्थकर्मत्वम् । धात्वर्थविशेषणतया तत्पदार्थकर्मत्वविशिष्टभोजनादिनिरूपितविषयिताया नियमतइच्छायां भानोपगमेनोक्तस्थले विषं बुभुक्षते चैत्रइत्यादिप्रयोगवारणेऽपि गगनंदिदृक्षतेचैत्रइत्यादिप्रयोगस्य दुरुपपादत्वात् । इदन्तु बोध्यम् । सन्प्रतिपाद्येच्छायां धात्वर्थकृतिभोजनादेः केवलविशेष्यतासंबन्धेन न विशेषणत्वम् तथासति परकर्तृककृतिभोजनादिगोचरेच्छावति अयं चिकीर्षति बुभुक्षतइति प्रयोगप्रसङ्गात्, किन्तु विशेष्यितासमानकर्तृत्वोभयसंबन्धेनैव, उक्तातिप्रसङ्गवारणायेच्छासमानकर्तृकत्वेऽपि सन्प्रत्ययवाच्यतां स्वीकृत्य क्रियायां तदन्वयोपगमो न साधीयान् इच्छान्तरसमानकर्तृकत्वमादाय दर्शितस्थलेऽतिप्रसङ्गतादवस्थ्यात् । स्वसमानकर्तृकत्वस्य वाच्यत्वे तत्तदिच्छारूपपदार्थानामननुगमेन व्युत्पत्त्यनुपपत्तिः नच समानकर्तृकत्वस्य संबन्धत्वोपगमे तत्र शक्तिग्राहकानुशासनविरोधः यतो धातोः कर्मणः समानकर्तृकादिच्छायां वेति सन्प्रत्ययविधायकसूत्रं सनः समानकर्तृकत्वार्थकतां न प्रतिपादयति तस्य हीच्छाकर्मत्वेन तत्समानकर्तृत्वेन च स्वार्थपराद्धातोरिच्छारूपार्थे सन् भवतीत्येवार्थः इच्छाधात्वर्थयोः संसर्गतया समानकर्तृकत्वविवक्षायामपि समानकर्तृकत्वोपरक्तार्थपरत्वं धातोर्निर्वहतीतीच्छामात्रे शक्तिग्राहकं तत्सूत्रमिति सुबन्तोत्तरेच्छार्थविहितक्यच्काम्यजन्तस्य धातोरिच्छार्थकतया सन्प्रत्ययान्ताविशेषेऽपि सन्नन्तधातुवन्नसकर्मकता । तदन्तर्गतप्रातिपदिकस्यैव कर्मबोधकतयेच्छायाः कर्माकाङ्क्षाविरहात् नच पुत्रीयति पुत्रकाम्यतीत्यादौ क्यजादिप्रकृत्यर्थपुत्रादेः क्रियात्वाभावेनाकर्मकत्वेऽपि आत्मनः पाकमिच्छति पाकीयतीत्यादौ प्रकृत्यर्थपाकादेः सकर्मकतया सन्नन्तसमुदायवत् क्यजन्तपाकादिसमुदायस्य सकर्मकताया दुर्वारतया तण्डुलंपाकीयतीत्यादिप्रयोगापत्तिरिति वाच्यम् । कृधातुसमानार्थकयतेरिव सन्नन्तसमानार्थकस्य क्यजन्तादेरपि कर्मताबोधकसुप्साकाङ्क्षत्वानुपगमेन तथा प्रयोगाप्रसङ्गात्, कृदन्तकर्मत्वविवक्षायां तु षष्ठ्या बाधाद् द्वितीयाया अप्रसक्तेश्च । नच धात्ववयवकृद्योगे कर्तृकर्मणोः कृतीत्यस्य द्वितीयाबाधकत्वे कंसकर्मकवधमाचष्टे कंसं घातयतीत्यत्र द्वितीया न स्यात् कंसस्याख्यानकर्मत्वायोगेन वधकर्मतयैव तदुत्तरं द्वितीयासमर्थनादिति वाच्यम् कृदन्तोत्तरं यत्राख्यानार्थे णिच् तत्र प्रकृतिवच्च कारकमित्यनेन कृदन्तकारकस्य ण्यन्ततत्प्रकृतिप्रतिपाद्यक्रियाकारकतुल्यत्वातिदेशात् राजानं गमयति सूर्यमुद्गमयतीत्यादौ ण्यन्तधातुयोगे यथा प्रकृत्यर्थक्रियाकर्त्तुः कर्मत्वं तथा कृदन्तोत्तरणिच्प्रयोगेऽपीत्याख्येयगत्युद्गत्यादिकर्त्तुः कर्मतया तदुत्तरं द्वितीयेतिण्यन्तधातुयोगे यथा प्रकृतेः कर्मणो द्वितीयान्तता तथा णिच्प्रत्ययान्तकृदन्तकर्मणोऽपीति लाभात् कृदन्तकर्मणः कंसादेर्द्वितीयो-

---

भयसंबन्धेन तन्निष्ठविशेष्यताविशिष्टप्रकारताश्रयत्वं बोध्यम् । कृदन्तोत्तरं यत्राख्यानार्थेणिच् तत्रेति । आख्यानात्कृतस्तदाचष्टेकृल्लुक्प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकमित्यनुशासनैराख्येयार्थात्कृदन्तादाख्यानार्थे णिच् णिचि कृतोलोपः लुकि तस्य तन्निमित्तकादेशादेरपगमे कृत्प्रकृतिभूतस्य धातोः प्रत्ययस्य ज्ञानस्यापत्तिरर्थाद्धातुस्वरूपस्य पूर्ववदवस्थानम् धातोरेव णिचि कृते यथाकार्यं तथैव सर्वकार्यं भवति कृदन्तस्य यत्कारकं तत्केवलधातोः कारकवत् भवत्यर्थात्केवलधातोर्यत्कारके या या विभक्तिः कृदन्तकारकेपि तत्र सैव विभक्तिरित्यर्थकैः कंसस्य वधमाचष्टे कंसं घातयतीति निष्पद्यते

पपत्तिः । तथा विवक्षायां तण्डुलस्य पाकीयतीति प्रयोग इष्यतएव कारकविभक्त्यर्थस्य वृत्त्येकदेशे नाप्यन्वयस्य व्युत्पन्नत्वात् । सम्बन्धविवक्षायां च न तथा प्रयोगः । वस्तुतः संबन्धविवक्षयापि तथा प्रयोग इष्यतएव । नच तत्र वृत्त्येकदेशेन षष्ठ्यर्थान्वये प्रतियोगिपदादन्यद्यदन्यत्कारकादपीति-व्युत्पत्तिविरोधइति वाच्यम्, तादृशव्युत्पत्तेरभेदान्वयस्थलएव स्वीकारात् । वृत्त्येकदेशेन भेदान्वये बाधकाभावात् अतएव ऋद्धस्य राजमातङ्गा इत्यादिप्रयोगो नेष्यते इष्यते च पितुः स्वर्गकाम इत्या-दिप्रयोगः । नच कारकपदप्रतियोगिपदयोर्भेदनिवेशनमफलमिति वाच्यम् तन्निवेशस्य दृष्टान्तविध-योक्तत्वात् यथा प्रतियोगिपदाद्यर्थस्य कुत्रापि अभेदान्वयो न भवति तथा वृत्त्येकदेशेनान्यपदार्थ-स्येत्यर्थे तात्पर्यादिति ध्येयम् । अभेदविवक्षायां पण्डितं पुत्रीयति प्रवीरं पुत्रकाम्यतीत्यादिप्रयो-गाभाववत् परपुत्रादिगोचरेच्छावति पुंसि पुत्रीयतीत्यादयो न प्रयोगाः । सुप आत्मनः क्यजि-त्यादिना इच्छाकर्तृसम्बन्धि यदिच्छाकर्म तद्बोधकसुबन्तात् क्यच्काम्यचोर्विधानात् । संबन्धित्वं च सम्बन्धित्वेन भातत्वमन्यथा यस्येच्छाकर्त्तुः पुत्रोऽसिद्धस्तस्यापि स्वीयत्वेन पुत्रेच्छादशायां पुत्रीयतीत्यादिप्रयोगस्य सर्वसिद्धस्यानुपपत्तेः । उक्तस्थलेपुत्रीयतीत्यादिवाक्यस्य प्रामाण्य-वारणाय च क्यजाद्यर्थेच्छायां पुत्रादेर्विषयित्वमात्रं न सम्बन्धः किन्तु स्वांशे भासमानसंब-न्धस्य प्रतियोगितया यो विषयस्तादृशपुरुषवृत्तित्वसहितमित्युपेयम् । स्वसंबन्धस्य क्यजा-द्यवाच्यत्वेऽप्युक्तसंबन्धेनैवेच्छायां सुबन्तार्थस्यान्वयइति व्युत्पत्तिप्रदर्शनायैव सूत्रआत्मनइत्युपा-त्तम् । आत्मनइति षष्ठ्यर्थसंबन्धश्च न धातोः कर्मण इत्यादिसूत्रानुवृत्तायामिच्छायामन्वेति, अव्यावर्त्तकत्वादुक्तार्थलाभाप्रयोजनकत्वात्, अपितु सुप इत्यर्थे सुबन्तादित्यत्र, सचेच्छाकर्तुः संब-न्धितयेच्छाविषयार्थकत्वमेवंचेच्छाकर्मणः सुबन्तादिच्छाकर्तुरिच्छायामिति वृत्तावपीच्छाकर्तुः सुबन्तादित्येव योजना कार्या यथाश्रुते दर्शितानुपपत्तेरिति ध्येयम् । भृत्यं पुत्रीयतीत्यादावाचारा-र्थविहितक्यजन्तस्य सकर्मकत्वं युज्यतएव तथाहि तमिवाचरतीत्यर्थे उपमानवाचिनः क्यच् विहितः तमिवाचरतीत्यस्य तत्तुल्यं जानातीत्यर्थः आचारपदस्य व्यवहारमूलज्ञानपरत्वात् । तुल्य-तया ज्ञानं च क्यजर्थः तच्च सकर्मकमेव तत्र तुल्यत्वे प्रतियोगितया पुत्रादेरन्वयः पुत्रादिपदमेव वा गौण्या पुत्रादितुल्यपरम् ज्ञानमात्रं क्यजर्थस्तत्र च स्वाभेदावगाहित्वसंबन्धेन पुत्रादितुल्य-स्यान्वयः । नचैवं पुत्रादिपदमुपमेयार्थकमेव न तूपमानार्थकमिति कथमुपमानादाचारइत्यनेन तदु-त्तरं क्यचो विधानं सङ्गच्छत इति वाच्यम् । पुत्रादिपदस्य तुल्यार्थकत्वेऽपि तुल्यत्वप्रतियो-गितयोपमानपुत्राद्यर्थकत्वात् । अतएव तस्य कर्मवाचकत्वं पुत्रादितुल्यस्याचारकर्मत्वात् सम्यगु-पपद्यते । पूर्वमते उपमानपदस्य कर्मवाचकत्वमाचारकर्मविशेषणतुल्यताप्रतियोगिबोधकत्वरूपं बोध्यम् । वस्तुतः पुत्रमिवाचरतीत्यस्य पुत्रं यथा व्यवहरति तथा व्यवहरतीत्येवार्थः, व्यवहारश्च प्रतिपाल्यत्वादिना ज्ञानं प्रतिपालनादिरूपोव्यापारो वा एवंच पुत्रीयतीत्यस्य पुत्रकर्मकव्यवहार-तुल्यव्यवहारकर्तेत्यर्थः । मुखचन्द्रादेर्यथा स्वजन्याह्लादस्य तुल्यतयोपमानोपमेयभावस्तथा पुत्रभृ-त्ययोरपि स्वकर्मकव्यवहारतुल्यतया स इति पुत्रपदस्योपमानवाचिता । आचारनिष्ठसादृश्यप्र-तियोग्याचारकर्मवाचिता च आचारसदृशाचार एव क्यचोऽर्थः । प्रथमाचारे कर्मतासंबन्धेन पुत्रादेरन्वयः । अमाद्यन्तात् क्यच्प्रत्ययविधानेऽपि धात्ववयवतया लुप्तस्यामादेर्नियमेनानुप-

---

तथाहि हन्धातोरपि हनश्च वध इति सूत्रेण वधादेशे कृदन्ताद्वधशब्दादाख्यानार्थे णिचि कृल्लोपे वधादेशेऽपगते धातोर्हन्स्वरूपे-णावस्थितौ णिचिपरे हनस्तोऽचिण्णलोरित्यनेन नकारस्य तकारे होहन्तेर्ञ्णिन्नेष्विस्यनेन हकारस्य कवर्गे घकारेऽतउपधाया इत्यनेनाकारस्य दीर्घे घातीतिण्यन्तधातोर्घातयतीतिनिष्पन्ने कृदन्तधातुकर्मणि कृद्योगलक्षणा षष्ठी यद्यपि प्राप्ता तथापि प्रकृति-वत्कारकत्वे द्वितीयैव भवतीत्यर्थः । ननु धात्वेकदेशकृदन्तार्थे कर्मत्वाद्यन्वये सति तण्डुलपाकीयतीतिवत्तण्डुलस्य पाकीयतीत्यपि स्यादित्याशङ्कामिष्टापत्त्या परिहरन् विशेष्यविध्यभावे कृद्योगलक्षणाषष्ठ्येव भवतीति प्रदर्शयति । **तथाविवक्षायामिति** । धात्वेकदेशकृदन्तार्थेन समं कर्मत्वान्वयविवक्षायामित्यर्थः । **अन्यपदार्थस्येति** । प्रतियोगिताद्यन्यपदार्थस्येत्यर्थः । **सचेति** ।

स्थितेः कर्मत्वस्य सम्बन्धतया भानमुपेयते । यथा राजपुरुष इत्यादिसमासरूपप्रातिपदिकावयवतया लुप्तषष्ठ्यादिप्रतिसंधानानियमाद्विभक्त्यन्तार्थविशिष्टे पूर्वपदलक्षणोपेयते । द्वितीये आचारे भृत्यस्य कर्मतया क्यजन्तस्य सकर्मकत्वमिति कुड्यां प्रासादीयतीत्यादावाधाररूपोपमानवाचि सप्तम्यन्तोत्तरविहितक्यजन्तस्य न सकर्मकता तत्र च प्रासादाधिकरणकाचारतुल्याचारः क्यजन्तार्थः स चावस्थानरूप एवेत्यकर्मक इति कुड्यास्तत्राधिकरणतया ततः सप्तम्येव । अवस्थानयोः साम्यं चैकजातीयसुखजनकत्वादिना अविशेषज्ञानविषयत्वेन वा । हंस इवाचरति हंसायते हंसतीत्यादावुपमानवाचिकर्तृवाचकपदोत्तरविहितक्यङन्तक्विबन्तधातुरप्यकर्मकस्तत्र हंसादिकर्तृकाचारतुल्याचारस्य गमनादिरूपस्य क्यङन्ताद्यर्थत्वेऽपि गम्यादिप्रतिपाद्यतावच्छेदकसंयोगादिरूपफलानवच्छिन्नस्यैव तदर्थत्वोपगमात् । शब्दज्ञानादिरूपसविषयकव्यापारात्मकस्याचारस्य क्वचित्तदर्थत्वेऽपि विषयरूपकर्मावरुद्धस्यैव तस्य तदर्थत्वोपगमात् । कर्मावरुद्धस्य च कर्मान्वयनिराकाङ्क्षत्वादित्यादिकं स्वयमूह्यम् । कृत्यर्थकधातुयोगइष्टसाधनत्वादिज्ञानविशेष्यताप्रयोज्यसाध्यताख्यविषयताविशेष एव कर्मत्वं द्वितीयादेरर्थः, नतु विषयतामात्रम् यत्र घटं करोतीति प्रयुज्यते तत्र कपालं करोति, जलाहरणं करोतीत्याद्यप्रयोगात् । अथ काशान् कटं करोति, काष्ठं भस्म करोतीत्यत्र काशकाष्ठादिपदोत्तरद्वितीयानुपपत्तिः तत्र कृतिनिरूपितोक्तविषयताविरहादिति चेदुपादानीयविलक्षणविषयतापि द्वितीयार्थः । सा च द्वितीयान्तरोपस्थाप्यसाध्यीयविषयताविशिष्टायामेव कृतावन्वेति अतः कटादिरूपकर्मान्तरासमभिव्याहारेण काशान् करोतीत्यादयो न प्रयोगाः । अथैवमपि काष्ठं भस्म करोति, दुग्धं दधि करोतीत्यादौ काष्ठदुग्धादेः कर्मत्वानुपपत्तिः । तस्य भस्मदध्याद्युपादानताविरहात् । काष्ठदुग्धादिनाशानन्तरमेव तदारम्भकपरमाणुभिर्भस्मदध्याद्यारम्भादुत्पत्त्याश्रयस्यैवोपादानत्वात् विभिन्नकालीनयोश्चाधाराधेयभावविरहात्, कारणस्यैवोपादानत्वमिति नियमाच्च । नच परिणामवादविद्वेषिणां नैयायिकानां काष्ठादेर्भस्मादिरूपद्रव्यान्तरकारणत्वमपितु प्रतिबन्धकत्वमेव द्रव्यवति द्रव्यान्तरानुत्पत्तेरिति चेन्न, कर्म हि त्रिविधं भवति । प्राप्यं प्रकृतिविकृती च । तत्र प्राप्यं कर्म क्रियाजन्यफलशालि गम्यादेर्ग्रामादि, ज्ञानादेर्विषयश्च क्रियानिष्पाद्यं यत्तद्विकृतिरूपम् । यथा पाकादेरोदनादि यथा वा कृतेर्माल्यादि, कटादि च । प्रथमे तण्डुलादिरूपपूर्वद्रव्यं विनाश्यौदनादेर्निर्वर्तनम् । द्वितीये पुष्पादिरूपपूर्वद्रव्यमविनाश्यैव संदर्भादिरूपविशेषणनिष्पादनेन विशिष्टस्य माल्यादेर्निर्वर्तनम् । तृतीये च काशादिरूपपूर्वधर्मिणमविनाश्य तत्रैव कटादिरूपधर्मिनिष्पादनं क्रियागा ईदृशं च कर्म प्रकृतेरसमभिव्याहारस्थले निर्वर्त्यमुच्यते । तण्डुलानोदनं पचति, कुसुमानि स्रजं करोति, काशान् कटं करोतीत्यादौ प्रकृतिसमभिव्याहारस्थले निर्वर्त्यते निष्पाद्यते यदिति व्युत्पत्त्या, यद्यप्योदनादेरपि निर्वर्त्यतास्ति तथापि तद्व्यावृत्तमेव पारिभाषिकं निर्वर्त्यत्वम् । तदुक्तमभियुक्तैः "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षत इति" । यस्य विकृतिकर्मणो नाश्रीयते न प्रयुज्यतइत्यर्थः । एवंच तत्रतत्रौदनादेर्विकार्यकर्मण्येवान्तर्भावः । तदुक्तम् "क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ यदसज्जायते पूर्वं जन्मना

---

सुबन्तनिष्ठः षष्ठ्यर्थः संबन्धश्चेत्यर्थः । **क्रियाकृतविशेषाणामिति** । ननु प्राप्य कर्मणो ग्रामादेरपि गमनादिक्रियाकृतस्य संयोगादिरूपविशेषस्य निष्पत्तिः प्रत्यक्षादितोगम्यत एवेति तत्राव्याप्तिरिति चेन्न क्रियाकृतो हि विशेषः प्रकृतेः विकृत्यनुकूलप्रागवस्थाविशिष्टासत्त्वलक्षणो विकृतेश्चोत्पत्तिर्नच तौ ग्रामादेः प्रत्यक्षादितो ज्ञायेते निष्पन्नाविति नाव्याप्तिः। **यदसज्जायतइति।** यत्पूर्वंकर्तृव्यापारात्प्रकृतक्रियालक्षणात् प्राक्स्वरूपेणासदोदनकटादिकं प्रकृतक्रियातो जायते तदेकं निर्वर्त्यम् यच्च स्वरूपेण विद्यमानमेवप्रकृतक्रियया कस्यचिज्जन्मना तद्विशिष्टतया प्रकाशते यथामालादिकन्तदपरं निर्वर्त्यमित्यर्थः। अत्र प्रकृतिसंबन्धाप्रतिपादनात्प्रकृतिगताकिंचित्प्रयुक्तोत्पत्त्यादिमत्त्वेनाविवक्षितत्वलाभात् प्रकृतिबोधकपदाप्रयोगस्य लाभाच्च विकार्यव्यावृत्तिः

यत्प्रकाशते । तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् । प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादि भस्मवत् । किं चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवदिति" ॥ अत्र प्रकृतिरपि ग्राह्या । अन्यथा काष्ठसुवर्णादेस्तुरीयतापत्तेः । विकार्यपदेनैकव्युत्पत्त्या प्रकृतिविकृत्युभयाबोधनेऽपि उभयसाधारणरूपावच्छिन्ने पारिभाषिकमेव विकार्यपदम् । प्रकृतिरूपं कर्म च क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्यासत्त्वरूपो विकारो निर्वाह्यते तद्यथा पाकादेः तण्डुलादि, कृतेश्च पुष्पकाशादि तत्र प्रथमस्थले तण्डुलादिरूपधर्मिनाशादेव पूर्वभावविशिष्टं तदसत्त्वमोदनादिरूपकर्मान्तरनिष्पादकमितरत्र धर्मिणः काशकुसुमादेः सत्त्वेऽपि कटसंदर्भाग्रविरहरूपपूर्वभावासत्त्वेन तद्विशिष्टस्यासत्त्वं कटसंदर्भादिनिष्पादकक्रियातो निर्वहति, एवंच तण्डुलानोदनं पचतीत्यादौ प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थस्तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति विकृतिकर्मोत्तरद्वितीयायाश्च उत्पादकत्वमर्थः ओदनाद्यन्वितस्य तस्य नाशकत्वविशिष्टे पाकेऽन्वयः नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यतावच्छेदकविधेयभावमहिम्ना नियमतो भासते । अतः पाकस्य तण्डुलाद्यारम्भकसंयोगनाशजनकत्वेऽपि तन्नाशस्य द्रव्यान्तरोत्पत्तौ द्रव्यनाशेनान्यथासिद्धतया प्रयोजकत्वबाधेन संयोगमोदनं पचतीति न प्रयोगः । वस्तुवस्तु निर्वर्त्यकर्मासमभिव्याहारस्थले संयोगं पचतीति प्रयोगवारणाय संयोगनाशद्वारा नाशत्वमेव द्वितीयार्थो वक्तव्य इति कृतं प्रयोज्यप्रयोजकभावबोधेन । तण्डुलमोदनं करोति, काष्ठं भस्म करोति, दुग्धं दधि करोतीत्यादावपि प्रकृतिकर्मोत्तरद्वितीयया तन्नाशकत्वं कृतौ प्रत्याय्यते विकृतिकर्मोत्तरद्वितीयया च विषयताविशेष उत्पादकत्वं वा मिलितं वा कृतौ बोध्यते । काशान् कटं करोति कुसुमानि मौक्तिकानि वा स्रजं करोतीत्यादौ काशादिपदोत्तरद्वितीया कृतौ विषयताविशेषमेव बोधयति । काशाद्युच्छेदकतायास्तत्र बाधात् । कटमित्यादौ द्वितीयार्थः पूर्ववत् । स्रगादिपदार्थविन्यासविशेषविशिष्टकुसुमादेर्न कुसुमाद्युपादानककृतिविषयता, अपि तु विन्यासादिरूपविशेषणस्यैव तस्यैव कृत्यधीनोत्पत्तिरिति स्रजमित्यादिद्वितीयान्तस्य विशिष्टसत्त्वनिर्वाहकत्वमर्थः । विशेषणोत्पादकस्यापि स्वरूपसंबन्धविशेषरूपं विशिष्टसत्त्वनिर्वाहकत्वमक्षतमेव । अग्निः श्यामं रक्तं करोतीत्यादावचेतनकर्तृव्यापारबोधकतया तत्समभिव्याहृतश्यामादिपदोत्तरद्वितीयाया अपि नोपादानताख्य-

---

पूर्वोक्तनिर्वर्त्याद्वैलक्षण्यं चेति भावः । **विकार्यंचकर्मेत्यादि** । अत्रच प्रकृतिसहितस्य विकार्यस्योदाहरणात् यत्प्रकृतिबोधकपदसमभिव्याहृतपदबोध्यं सत्प्रकृतिविनाशप्रयुक्तोत्पादवत् प्रकृतिनाशकत्वेन बोधितप्रकृतक्रियाप्रयुक्तोत्पत्तिमत्त्वेन बोधितं वा तदेकं विकार्यम् काष्ठादीनां भस्मादिवदित्यवगम्यते आदिपदात्तण्डुलादीनामोदनादिर्ग्राह्यः । यच्चोक्तपदबोध्यं सत् प्रकृतिगतविशेषप्रयुक्तनिष्पत्तिमत्तदपरम् यथा सुवर्णादेरलङ्कारादिकमिति च आदिपदात्कुशादेः कटादिकम् कुसुमादेः स्रजादिकम् बोध्यमेवंच सदित्यन्तोपादानान्न निर्वर्त्येऽतिव्याप्तिः । **प्रकृतिरपिग्राह्येति** । अन्यतरत्वादिधर्मावच्छिन्नपारिभाषिकेन विकार्यपदेनेत्यर्थः । एवंच द्वेधाव्यवस्थितमित्यस्य द्विप्रकारकम् प्रकृतिरूपं विकृतिरूपं च तयोर्मध्ये किंचिद्विकृतिरूपं प्रकृत्युच्छेदसंभूतं काष्ठादीनां भस्म यथाकिंचिदपरं विकृतिरूपं कर्मप्रकृतिगतपूर्वगुणविलक्षणगुणोत्पत्त्या निष्पन्नं सुवर्णादीनामलङ्कारादिकं यथेति व्याख्येयम् तेन विकार्यशब्देन प्रकृतिं विकृतिं चोक्त्वा द्वेधाव्यवस्थितमित्यादिग्रन्थः सन्दर्भविरुद्धइति निरस्तम् । **निर्वर्त्यकर्मासमभिव्याहारेति** । तथाच नाशकत्वविशिष्टे निर्वर्त्योत्पादकत्वस्याभानेन नाशउत्पत्तिप्रयोजकत्वाभानासंभवादुक्तप्रयोजकाभावभानस्वीकारेपि संयोगं पचतीत्यस्य न वारणमिति भावः । **संयोगनाशद्वारानाशकत्वमेवेति** । नाशप्रयोजकसंयोगनाशोद्वितीयार्थः प्रकृतिकर्मणः प्रतियोगितया नाशेन्वयः द्वितीयनाशस्य जनकत्वेन पाकादावन्वयस्तथाच संयोगनाशप्रयोजकसंयोगनाशजनकत्वस्य पाके विरहान्नोक्तापत्तिरिति भावः । तदुद्देश्यककृतेस्तदुत्पादकत्वनियमादुद्देश्यत्वाख्यविषयत्वोत्पादकत्वयोर्विकल्पेन द्वितीयार्थतामाह । **विषयताविशेषउत्पादकत्वंवेति** । अथ यत्रेषदुष्णदुग्धेप्रचुरोष्णत्वभ्रमादामिच्छोद्देश्यकप्रवृत्त्यादधिप्रक्षेपाद्दधिनिष्पत्तिस्तत्रामिछोद्देश्यकप्रवृत्तेर्दध्युत्पादकत्वेपि दुग्धं दधि करोतीति प्रतीतिर्यदि नानुभविकी यदिवोपायेभ्राम्यतोदध्यनुपायगोचरदध्युद्देश्यकप्रवृत्त्यादध्यनुत्पत्तिस्थले दुग्धं दधि करोतीति प्रतीतिर्नानुभविकी तदोक्तस्थलयोरुक्तवाक्यस्य प्रामाण्यवारणाय विषयताविशेषोत्पादकत्वयोर्मिलितयोरेव द्वितीयार्थत्वं वक्तुमुचितमित्यभिप्रेत्याह । **मिलितंवेति** । **विषयताविशेषमेवेति** । उपादानत्वाख्यविषयत्वमित्यर्थः । **पूर्ववदिति** । साध्यत्वाख्यविषयत्वादिक-

विलक्षणविषयतार्थकत्वसंभवः; अपि तु तादृशद्वितीयान्तेन श्यामरूपादिविशिष्टासत्त्वनिर्वाहक-तारूपं विशिष्टोच्छेदकत्वं तादृशव्यापारे प्रत्याय्यते। घटं रक्तं करोतीत्यादावपि घटादिपदस्या-रक्तत्वविशिष्टघटादिलाक्षणिकतया विशिष्टघटाद्यसत्त्वनिर्वाहकत्वं प्रतीयते । प्रकृतिविकृतिभाव-स्थले कर्माख्यातेन प्रकृतेः कर्मत्वमेव प्रत्याय्यते अतः काष्ठानि भस्मराशिः क्रियन्त इत्यादावा-ख्यातार्थविशेष्यकाष्ठादिवाचकपदसमानवचनत्वमाख्यातस्य नतु निर्वर्त्यभस्मादिरूपविकारवाचक-पदसमानवचनता । अथैवं निर्वर्त्यकर्मवाचकपदात्प्रथमा न स्यादपितु द्वितीयैव । तत्कर्मताया लकारेणानभिधानात् । यत्तूभयकर्मत्वमेव लकारेणाभिधीयते । प्रधानाप्रधानकर्मसमभिव्याहृ-तनीवह्यादिदुह्यादिरूपद्विकर्मकोत्तरकर्मप्रत्ययस्यैव कर्मद्वयानभिधायकत्वनियमात् । प्रकृते च कर्म-द्वयस्यैव तुल्यत्वात् । विकृतेराख्यातार्थविशेष्यत्वेऽपि आख्यातस्य तत्समानवचनत्वानियमः । "गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्नही"त्यनुशासनसिद्धप्रकृतिविकृतिसमभिव्याहृतलकारीय-विकारसंख्याबोधकत्वाभावव्युत्पत्तिनिर्वाह्य इत्युक्तस्थले न क्रियापदस्यैकवचनान्तता। तदर्थान्वि-तसङ्ख्याबोधकस्यैवाख्यातस्य तत्पदसमानवचनत्वनियमाद्, न तु तद्विशेषणकस्वार्थकर्मत्वादि-बोधजनकाख्यातमात्रस्येति। तदसत्। विकारविकारिणोर्द्वयोराख्यातार्थविशेष्यत्वे वाक्यभेदापत्तेः। घटपटौ स्तः, घटपटौ दृश्येते इत्यादौ विशेष्यभेदेऽपि विशेष्यतावच्छेदकद्वित्वादेरेकधाभानान्न वाक्यभेदः, अत्र च न तादृशं विशेष्यतावच्छेदकभानमस्ति, येन तत्रेवात्राप्येकवाक्यतानिर्वाहः। न चागत्येष्यतएवात्र वाक्यभेद इति वाच्यं तथासत्येकवाक्यार्थपरस्य काष्ठं क्रियते, भस्म क्रियतइत्येतादृशप्रयोगस्यापत्तेः । काष्ठं भस्म क्रियतइतिवाक्यजबोधस्य काष्ठविकृतिर्भस्मान्यविकृ-तिर्वेति संशयनिवर्तकत्वानुपपत्तेः । काष्ठभस्मनोः प्रकृतिविकारभावाभानादस्मन्मते च काष्ठो-च्छेदकत्वरूपकाष्ठकर्मकत्वभस्मनिर्वर्तकत्वरूपतत्कर्मकत्वयोरेकविशिष्टेऽपरान्वय एव पूर्वोपदर्शि-तरीत्या काष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठप्रकृतिकत्वस्य भस्मनि लाभसम्भवादिति चेत् सत्यम् । काष्ठं भस्म क्रियतइत्यादौ भस्मादिनिर्वर्त्यकर्मताया लकारेणानभिधानेऽपि तत्कर्मताया धात्वर्थे संसर्गतया भानोपगमेन तादृशकर्मोत्तरं प्रथमायाः साधुता। प्रातिपदिकार्थविशेष्यतया कर्मत्वादि-विवक्षायामेव द्वितीयादिविभक्तिसाधुत्वात्। यथार्घोनम इत्यादौ नमःपदार्थत्यागेऽर्घादिकर्मत्वबो-धेऽपि अर्घादिपदात्प्रथमैव। निपातार्थे त्यागे कर्मतासंबन्धेनैव नामार्थस्यान्वयात्। एवं भूतले न घट इत्यादावपि घटादिसम्बन्धस्याभावे संसर्गतया भानात् षष्ठीविषयेऽपि प्रथमा। नच धात्वर्थे नामार्थस्य साक्षादन्वयोऽव्युत्पन्न इति प्रकृतेः कर्मतायाः संसर्गतया भानं न सम्भवतीति वाच्यम्, घटो नीलो भवति, काष्ठं भस्म भवतीत्यादौ भवनादिक्रियायां नीलादेः कर्तृतासम्बन्धेन साक्षादन्वयवदत्रापि व्युत्पत्तिवैचित्र्येण कर्मान्तरविशेषणतापन्नक्रियायामपरकर्मणः कर्मतासंबन्धेन साक्षादन्वयोपगमात् नचैवमपि कर्मत्वस्य प्रकृत्यर्थविशेष्यत्वेन विवक्षया काष्ठंभस्मराशीं क्रियतइत्यादिप्रयोगापत्तिः क-र्मत्वान्तरविशेषणतानापन्नक्रियायामेव द्वितीयया कर्मत्वं बोध्यतइति व्युत्पत्तिकल्पने गौर्दुह्यतेक्षीरम-जानीयतेग्राममित्यादौ दोहननयनादिक्रियायां क्षीरग्रामादिकर्मकत्वानन्वयप्रसङ्गइति वाच्यम् प्रकृ-तिविकृत्युभयकर्मकस्थले तथा व्युत्पत्तेः। यथोक्तातिप्रसङ्गवारणाय दर्शिता व्युत्पत्तिः कल्प्यते, तथा कर्तृत्वविशेषणतयाऽऽभासमानायां क्रियायां तृतीयार्थकर्तृत्वान्वय इत्यपि व्युत्पत्तिः कल्प्या, अन्यथा प्रकृत्यर्थविशेष्यतया कर्तृत्वविवक्षया काष्ठं भस्मना भवतीति प्रयोगस्य दुर्वारत्वात् । उत्पत्तिप्रयो-जकनाशप्रतियोगित्वरूपविकार एव काष्ठं भस्म भवतीत्यादौ धात्वर्थः । आधेयत्वरूपं तत्कर्तृक-त्वमेव सम्बन्धमर्यादया भासते। काष्ठेन भस्मना भूयतइत्यादौ भस्माद्याधेयत्वमुत्पत्तौ काष्ठाधेयत्वं च नाशप्रतियोगित्वे तृतीयोपस्थाप्यं प्रकारतया भासते । कर्तृत्वविशेषणतया भासमानस्य नि-रुक्तभवनस्यान्तर्गतायामेवोत्पत्तौ भस्मादेराधेयत्वं संबन्धतया भासतइति व्युत्पत्तेः, काष्ठेन भस्म

भूयते इत्यादयो न प्रयोगाः भावाख्यातस्य कर्तृत्वावोधकत्वात् । कर्मत्वान्तरविशेषणतानापन्नकृ-त्यादौ कर्मत्वस्य संसर्गतया भानमव्युत्पन्नमिति काष्ठं भस्मराशिः करोतीत्यादयो न प्रयोगाः ॥

अधिशीङ्स्थासां कर्मेत्यादिना यत्राधारस्य कर्मसंज्ञा तत्राधारत्वमाधेयत्वं वा द्वितीयार्थः, स्थलीमधिशेतइत्यादौ तादृशार्थे द्वितीयायाः स्थल्याअधिशयितेत्यादौ कृद्योगे षष्ठ्याश्च साधुत्वार्थमेवाधारस्य कर्मसंज्ञाविधानात् । अथ कृञर्थव्यापाररूपक्रियान्तरं धात्वर्थेऽन्तर्भाव्य शयनादिरूपफलावच्छिन्नव्यापारार्थकसोपसर्गशीङ्प्रभृतिधात्वर्थतावच्छेदकशयनादिरूपफलाश्रयतयाधारस्य कर्मत्वोपपादनसम्भवात् तादृशसूत्राणां वैयर्थ्यमेव । अध्याद्युपसृष्टशीङ्प्रभृतीनामेव च तादृशार्थे निरूढलक्षणा, न त्वनुपसृष्टानामतो न स्थलीं शेतइत्यादयः स्वारसिकप्रयोगा इति चेन्न । धातोर्मुख्यार्थपरत्वेऽपि दर्शितप्रयोगनिर्वाहाय भगवता पाणिनिमुनिना तादृशसूत्रप्रणयनात् । तदप्रणीतवतां सर्ववर्मप्रभृतीनां मुख्यार्थपराणांस्थल्यामधिशेतइत्यादिप्रयोगाणां साधुताया दुर्वारत्वाच्च ।

कालाध्वभावदेशानामकर्मकक्रियायोगे कैश्चित्कर्मप्रत्ययार्थं विभाषया कर्मत्वमनुशिष्यते । अन्येतु क्रियान्तरान्तर्भावेणोक्तरीत्या तत्र पाक्षिकं कर्मप्रत्ययमुपपादयन्तस्तन्नानुशासति । उक्तंचैतत् "कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायतइति" तन्मतेच मासमधीते मासमास्ते योजनं धावतीत्यादावभिव्याप्त्यर्थे कालाध्वनोरत्यन्तसंयोगइत्यनेन द्वितीयाविधानं यद्यप्यनर्थकं, धात्वर्थेऽध्ययनस्थित्यादिविशेषणतयाभिव्यापनक्रियाया अन्तर्भावेण तत्कर्मतया तत्र तत्र द्वितीयोपपत्तेः । तादृशधात्वर्थे व्याप्त्यनन्तर्भावे मासमास्तइत्यादौ द्वितीयया तद्बोधनेऽपि आस्यते मास इत्यादौ मासादौ स्थित्यादिव्याप्यत्वलाभानिर्वाहात्, तथापि मासं रमणीया-क्रोशं कुटिला नदीत्यादौ भवतीत्यस्यानध्याहारेऽपि द्वितीयायाः साधुतानिर्वाहकत्वेन भाष्यकृतस्तत्सूत्रं सार्थकयन्ति । तत्रहि रमणीयत्वाभिव्याप्यत्वं मासादौ प्रतीयते । नच तत्र क्रियासमभिव्याहारोऽस्ति यत्राभिव्याप्तिरन्तर्भविष्यति तत्कर्मतया द्वितीयाच स्यात् । एवं मासमासितेत्यादावभिव्याप्त्यन्तर्भावेण मासस्य कर्मत्वोपपादनेऽपि कृद्योगात् षष्ठ्येव स्यात् न द्वितीयेत्यतोऽपि तत्सूत्रं सार्थकम् ।

---

मित्यर्थः । **कर्मसंज्ञाविधानादिति** । अन्यथा स्थल्यामधिशेते स्थल्यामधिशयितेत्येव स्यादिति शेषः । **कालाध्वभावदेशानामिति** । कालशब्देनोपाधिविशेषावच्छिन्नानां क्षणमुहूर्तयामदिवसमासर्त्तुसम्वत्सरादीनामन्यतमत्वेन अध्वशब्देन गन्तव्यदेशपरिमाणानां क्रोशगव्यूतिप्रभृतीनां भावशब्देन भावप्रत्ययान्तधातूपस्थाप्यक्रियाया देशशब्देन कुरुपाञ्चालादिजनपदानां ग्रहणम् । एषु च कालभावयोरनुभवसिद्धाकालिकविशेषणतया देशाध्वनोः दैशिकविशेषणतयाऽधिकरणता सप्तमीद्वितीयाभ्यामभिधीयत आधेयतावेति । **विभाषयेति** । यद्यपि अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यमिति पाणिनिसूत्रवार्तिके विभाषा न प्रतीयते तथापि "कालानामध्वमानानां क्रियाणां नीवृतामपि । आधारता ध्राव्यधातोः कर्मतास्याद्विभाषयेति" स्मृत्यन्तरेस्तीति विकल्पेन कर्मतोक्तेति बोध्यम् । ध्रौव्यधातुरकर्मकधातुः नीवृज्जनपदम् । **कालभावाध्वदेशानामित्यादि** । अकर्मकैरकर्मकक्रियायाः शक्त्याभिधायकधातुप्रतिपाद्यैः अन्तर्भूतक्रियान्तरैः धारणादिरूपाधारत्वपर्यवसन्नधात्वन्तरार्थघटितैः प्रकृतधातुतोनिरूढलक्षणयावोध्यैः धारणावच्छिन्नशयनस्थितिक्रीडादिरूपैरित्यर्थः । तथाच मासमास्त इत्यादौ यदाधातोर्धारणावच्छिन्नस्थित्यादौ तात्पर्यंतदा धात्वर्थतावच्छेदकधारणाश्रयत्वेनैव कालादीनां कर्मताप्राप्तैवेति नसाविधेयाशक्यार्थएव तात्पर्येतु धारणस्य धात्वर्थतानवच्छेदकत्वेन कर्मत्वाप्राप्तेः क्रियाधारत्वेन कालादेः कालादिपदात्सप्तम्येवेति भावः । ननु धारणावच्छिन्नशयनादेर्धात्वर्थत्वे कुरून् स्वपितीतिवत् गेहं स्वपितीति कुतो न प्रयोगःकुरुवद्गेहस्यापि धात्वर्थतावच्छेदकफलाश्रयत्वेन कर्मत्वादिति चेन्न कालादिबोधकपदसमभिव्याहृतानामेवाकर्मकधातूनामुक्तार्थे निरूढलक्षणा नान्यथेति स्वारसिकोक्तप्रयोगासंभवात् कालादिष्वेवोक्तकर्मत्वनियमस्याभ्युपगमाद्वा कालाद्यनुयोगिकस्वरूपेणैव धात्वर्थतावच्छेदकधारणादिबोधे द्वितीयान्तसमभिव्याहारस्याकाङ्क्षात्वप्राप्तेरुक्तप्रयोगासंभवादिति । **द्वितीयाविधानं यद्यप्यनर्थकमिति** । नचाभिव्याप्तेर्धात्वर्थकोटौ प्रवेशे धात्वर्थतावच्छेदकाभिव्याप्त्याश्रयत्वेन कालाध्वनोरिव गेहादीनामपि कर्मतया गेहमास्त आलोक इति प्रयोगः स्वारसिकः स्यादिति वाच्यम् विधानमनर्थकमित्यस्यैवोक्तेः कालाध्वगतसंबन्धविशेषेणाभिव्याप्तिघटितार्थे धातोर्निरूढलक्षणाग्राहकत्वेन सार्थकत्वेपि क्षत्यभावादिति भावः । **सूत्रंसार्थकमिति** । नचैवं मासआस्यत इत्यस्य का

अथ केयमभिव्याप्तिर्यात्यन्तसंयोग उच्यते । न तावद्व्याप्यवृत्तिः कालिकः संबन्धः कालिकसम्बन्धस्य व्याप्यवृत्तित्वं व्याप्यकालानवच्छिन्नत्वं दिवसादिमात्रवृत्तमासादिनिष्ठसम्बन्धो दिवसाद्यवच्छिन्नइति तत्र मासमास्तइति न प्रयोगः । मासपदार्थश्चात्र त्रिंशद्दिनमात्रस्थायी कश्चिदखण्डः पदार्थः, ननु क्रियाप्रचयस्तथासति दिनैकादिमात्रस्थायिनोऽपि संबन्धस्य कासुचित् क्रियासु व्याप्यवृत्तितया तत्र तथा व्यवहारापत्तेरिति युक्तम् । चैत्रो मासं काश्यां तिष्ठतीत्यादौ काशीसंयोगस्य मासव्यापकस्यैकस्याभावेऽप्रामाण्यप्रसङ्गात् । संयोगव्यक्तीनां मासनिष्ठकालिकसंबन्धस्यावान्तरदिनाद्यात्मककालावच्छिन्नत्वात् । नच संयोगानां भेदेऽपि चैत्रीयसंयोगत्वाद्यवच्छिन्ननिरूपितकालिकसंबन्धावच्छिन्नाधारता मासव्यापिकैकैव साच नावान्तरकालावच्छिन्नेति तत्र तदनवच्छिन्नत्वबोधकमुक्तवाक्यं भवेदेव प्रमाणमिति वाच्यम् । सामान्यघटितविशेषधर्मावच्छिन्नाधिकरणताकूटादेव सामान्यधर्मावच्छिन्नवत्ताप्रत्ययोपपत्तेः शुद्धसामान्यधर्मावच्छिन्ननिरूपिताधिकरणतायामतिरिक्तायां मानाभावात् । यत्र त्रिंशद्दिनेषुकमपिकालमधीते तत्र मासेऽध्ययनसंबन्धस्याव्याप्यवृत्तितया मासमधीतइति प्रयोगानुपपत्तिरपि न शक्यते वारयितुम्–उच्यते अभिव्याप्तिर्यावदवयवसम्बन्धः । यत्समुदायो मासादिपदार्थस्तएव तदवयवाः । एवंच त्रिंशद्दिनानां मासपदार्थतया त्रिंशद्दिनेषु किञ्चित् किञ्चित् कालावच्छेदेनाध्ययनसंबन्धेऽपि मासमधीतइतिप्रयोगोपपत्तिः । त्रिंशद्दिनसम्बन्धश्च दिनपर्याप्तत्रिंशत्त्वव्यापकत्वम् । तादृशत्रिंशत्त्वादेश्च मासादिपदप्रवृत्तिनिमित्तस्य मासादिपदादेव लाभाद्व्यापकत्वमात्रं द्वितीयार्थः । व्यापकत्वं च व्याप्यविशेषाघटितमखण्डं दुर्वचमिति खण्डशोऽभावप्रतियोगितावच्छेदकत्वमभावश्च द्वितीयार्थः । प्रथमाभावे प्रकृत्यर्थो मासादिराधेयतासंबन्धेनान्वेति, मासादिनिष्ठाभावप्रतियोगितावच्छेदकत्ववत्त्वावच्छिन्नस्य च प्रतियोगितयाऽभावान्तरेऽन्वयः तस्य चान्वयितावच्छेदकचैत्रकर्तृकाध्ययनत्वादिरूपस्वाश्रयघटितपरम्परासम्बन्धेनाध्ययनादावन्वयः । प्रथमाभावे च प्रतियोगिव्यधिकरणत्वं विशेषणमुपादेयम् । तेन त्रिंशद्दिनेष्वेव च यत्राधीतं तत्र दिनावान्तरदण्डादावध्ययनाभावेऽप्युक्तप्रयोगोपपत्तिः । मासपदं च त्रिंशद्दिनपरमेव ननु तावत्कालस्थाय्यखण्डवस्त्वन्तरपरम् । एकदिनाध्ययनस्थलेऽपि तादृशाखण्डकाले प्रतियोगिव्यधिकरणाध्ययनाभावासत्त्वेन मासमधीतइति प्रयोगापत्तेः । मासघटकं च दिनं सूर्योदयावधि सूर्योदयान्तरपर्यन्तावस्थाय्यखण्डवस्तुरूपं, न तु

---

गतिरिति वाच्यम् धातोरभिव्याप्तिघटितार्थलक्षणायां कर्तुरीप्सिततमं कर्मेत्यनेन मासस्य कर्मत्वे तत्र लकारसंभवात् । नचैवं तत्र मासस्यासितेति प्रयोगापत्तिरिति वाच्यं धातोरुक्तार्थलाक्षणिकत्व उक्तप्रयोगस्य च शक्यार्थपरत्वे च मासमासितेत्यस्यच संभवादभिव्याप्त्यर्थे कालादेः कर्मत्वमपुरस्कृत्यैव कालाध्वनोरित्यादिसूत्रेण द्वितीयाविधानादिति भावः । **व्याप्यकालेति** । तद्व्याप्यत्वं च स्वस्य स्वासंबन्धोपाधिसंबद्धतत्कत्वम् संबन्धश्च कालिकः अस्मिन् मासेत्र दिवस इदं वर्तते नात्रदिवसइति प्रतीतेर्मासनिष्ठस्य वस्तुनः कालिकसंबन्धस्य दिवसावच्छिन्नत्वमुपेयतेऽन्यथा तत्तदभावयोस्तत्र समावेशासंभवात् यस्य संबन्धो मासमभिव्याप्य वर्तते तस्मिन् न तस्य दिवसादिरवच्छेदकस्तदभावस्य तत्रासमावेशेन विरोधपरिहाररूपावच्छेदकत्वकल्पकयुक्तेरभावादिति स एव संबन्धो व्याप्यकालानवच्छिन्नतया व्याप्यवृत्तिर्मासादिनिष्ठोद्वितीयार्थस्तस्य प्रतियोगितयारमणीयत्वस्थित्यादावन्वयइति । **तथाव्यवहारेति** । मासमास्त इति व्यवहारेत्यर्थः । **काशीसंयोगस्येति** । काश्यामिति सप्तम्यन्तार्थकाशीवृत्तित्वविशिष्टस्याधात्वर्थस्येत्यर्थः प्रकृत्यर्थव्याप्यकालानवच्छिन्नकालिकसंबन्धावच्छिन्नाधारतात्वेनैव यद्यप्यस्ति द्वितीयार्थता तथापि समभिव्याहारबलाच्चैत्रीयकाशीवृत्तिसंयोगत्वावच्छिन्नकालिकसंबन्धावच्छिन्नोक्तानवच्छिन्नाधारताप्रतीतिस्तस्या निरूपकत्वसंबन्धेन धात्वर्थादावन्वय इत्यभिप्रायेण शङ्कते–**नचेति** । यदि निरूपकांशेभासमानधर्मावच्छिन्नत्वमात्रस्याधिकरणत्वे भानं ननु तादृशधर्मपर्याप्तावच्छेदकताकत्वस्येत्यभ्युपगमस्तदा पर्वतसंयोगवानिति ज्ञानं प्रकारितया संयोगवदिति प्रत्ययस्यापि प्रामाण्यापत्तिरतोनिरूपकांशे भासमानधर्मपर्याप्तावच्छेदकताकत्वभानमुपेयम् । नच प्रकारित्वादिसंबन्धस्थले तथात्वेप्यन्यत्र नेति वाच्यम् समानाकारप्रतीत्योर्विलक्षणविषयत्वेऽनुभवविरोधादनेकेषु ज्ञानविषयत्वसंबन्धकल्पनापेक्षयाधिकरणत्वस्य तादृशस्यैकस्यकल्पनाया एव लघुत्वादन्यथा सामान्याभावोपि न सिद्ध्येदित्यतो दोषान्तरमाह । **त्रिंशद्दिनेष्विति** । **मासघटकं च दिनमित्यादि** । ननु सूर्योदयक्षणमारभ्यसूर्योदयान्तरपूर्वक्षणस्थायित्वं दिनद्वयादिस्थायिवस्तुन्यप्यस्ति तृतीयसूर्योदयस्यापि सूर्योदयान्तरत्वात्

क्रियादिप्रचयः। तथासत्येकैकक्रियादिव्यक्तेरपि मासत्वाधिकरणतया तत्र प्रतियोगिव्यधिकरणाध्ययनाभावसत्त्वेन व्यापकत्वरूपद्वितीयार्थस्य बाधापत्तेः । दिवसं स्वपितीत्यादौ च दिवसादिपदं सूर्योदयावधिसूर्योदयान्तरपर्यन्तक्षणकूटपरमेवातो नैकदण्डादिमात्रस्वप्ने तथा प्रयोगः। अथ व्यापकत्वस्य द्वितीयार्थत्वएकमासादिव्यापकाध्ययनस्थलेऽपि मासान्तरेऽध्ययनाभावसत्त्वेन मासत्वादिव्यापकताया अध्ययने बाधेन मासमधीतइत्यादिप्रयोगानुपपत्तिः । नच मासपदेन यत्किंचिद्भिन्नदिनमात्रवृत्तिविशेषधर्मप्रकारेणानुपस्थापनेऽपि तद्धर्मवत्स्वनिरूपिताधेयत्वसंबन्धेन मासपदार्थस्याभावेऽन्वयोपगमात् यत्किञ्चिन्मासनिष्ठाभावप्रतियोगितानवच्छेदकत्वमन्वयितावच्छेदके लभ्यतइति न काप्यनुपपत्तिरितिवाच्यम्, तत्तन्मासमात्रवृत्तिधर्मविशेषाणां संबन्धघटकत्वेऽपि शाब्दबोधे संसर्गतात्पर्यज्ञानस्य हेतुतया संसर्गविशेषोपस्थितेरपेक्षितत्वात् । संबन्धघटकताद्दशधर्मान् विशिष्याविदुषः शाब्दबोधानुदयप्रसङ्गात् । नचेष्टापत्तिरनुभवविरोधात्। अनागतादिमासवृत्तिताद्दशधर्माणां विशिष्यज्ञानसामग्र्या असर्वज्ञस्य दुर्लभतयास्मदादीनां सर्वेषामेव ताद्दशमासत्वव्यापकताबोधोच्छेदप्रसङ्गात्। नच ताद्दशवाक्यार्थतात्पर्यमेव संसर्गतात्पर्यमुक्तज्ञाने च वाक्यार्थघटकः संबन्धः संसर्गमर्यादयैव भासतइति विशेषरूपेणानुपस्थितस्यैवोक्तधर्मघटितसंबन्धस्य तात्पर्यज्ञाने बाधाभावबलाच्छाब्दबोधे च तात्पर्यज्ञानबलाद्भानमनपवादमेवेति वाच्यम् । एकपदार्थविशिष्टापरपदार्थरूपवाक्यार्थविशेषिततत्प्रतीतीच्छारूपतात्पर्यविषयकनिश्चयस्य प्राग्वाक्यार्थानिश्चये दुर्घटतया तस्य शाब्दधीहेतुत्वे च योग्यतासंशयाच्छाब्दबोधानुपपत्तेर्विशकलिततत्पदार्थतत्तत्संसर्गविषयकत्वविशेषितप्रतीतीच्छाज्ञानस्यैव शाब्दधीहेतुताया उपेयत्वात् तत्रच ताद्दशसंसर्गोपस्थितेरवश्यापेक्षणीयत्वादितिचेत् । सत्यम् मासादिघटकतावद्दिनादिनिष्ठत्रिंशत्त्वादिरूपमासत्वादिर्मासादिभेदेन नानैव । मासादिपदप्रवृत्तिनिमित्तपरमनुगतरूपेण । अन्यथा शक्त्यानन्त्यप्रसङ्गात्। सर्वोपसंहारेण व्युत्पत्तिं विना प्रागप्रतीतमासादेः शाब्दानुभवानिर्वाहाच्च । नच त्रिंशत्त्वादिकं बुद्धिविशेषविषयत्वरूपं वाच्यम् दिनादेर्द्रव्यानात्मकत्वेन तत्र गुणरूपसङ्ख्याया असम्भवात् द्रव्यात्मकत्वेऽपि क्रमिकेषु तेषु सङ्ख्योत्पत्तेरसम्भवात् तत्र बुद्धेरनतिप्रसक्तं वैलक्षण्यमनुगतं दुर्वचम् । जातिरूपस्य तस्य सङ्करप्रसङ्गनिरस्तत्वात् तत्तद्दिनविषयकत्वरूपस्य

---

ताद्दशवस्तुगतत्रिंशत्त्वविशिष्टस्य परिग्रहे वस्तुतः कतिपयदिनान्तरितदिवसाधिकरणकत्रिंशद्वाराध्ययनकर्तर्यपि मासमधीत इति प्रयोगापत्तिः स्यादिति चेन्न सूर्योदयक्षणविशिष्टं हि वस्तु दिनमत्रोच्यते वैशिष्ट्यं च स्ववृत्तिलस्वपूर्वक्षणावृत्तिलस्वोत्तरसूर्योदयक्षणाव्यवहितपूर्वक्षणवृत्तिलस्वोत्तरसूर्योदयक्षणावृत्तित्वैतच्चतुष्टयसंबन्धेन । तथाच नोक्तदोष इति भावः । **दिवसादिपदंसूर्योदयावधीत्यादि** । सूर्योदयक्षणविशिष्टक्षणत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नपरमित्यर्थः। वैशिष्ट्यंच स्वपूर्वत्वशून्यत्वस्वोत्तरसूर्योदयानुत्तरसूर्योदयक्षणपूर्वत्वोभयसंबन्धेनेति तथादिनद्वयघटकक्षणसमुदायस्य न दिनत्वापत्तिरिति भावः। **कूटपरमेवेति** । एवकारेण पूर्वोक्ताखण्डवस्तुनो दिनत्वव्यवच्छेदः । अस्यफलमाह। **अतोनैकेति** । एवं संवत्सरादिपदमपि प्रतिमासमेकैकदिनाध्ययनस्थले सम्वत्सरमधीत इत्यप्रयोगान्नाखण्डमासद्वादशकसमुदायपरमपितु निरुक्ताखण्डदिनसमुदायात्मकमासद्वादशकपरमेवेति बोध्यम्। **तद्धर्मवत्स्वनिरूपिताधेयत्वेति** । यत्र प्रकृताध्ययनादौ दिनवृत्तित्रिंशत्त्वेन येन विशिष्टमासवृत्तित्वं योग्यं तत्र तद्विशिष्टस्वनिरूपिताधेयत्वसंसर्गेणेत्यर्थः। **परमनुगतरूपेणेत्यर्थः**। तथाच मासपदादनुगतरूपोपग्रहेणाननुगततत्तत्त्रिंशत्त्वविशिष्टसर्वस्योपस्थितत्वेन तत्तद्धर्मविशिष्टाधेयत्वसंसर्गेण योग्येन मासादेरभावेन्वयेन भवति व्यापकत्वहानिः । तात्पर्यज्ञानमपि शाब्दबोधविषयत्वविशेषे विशेषणं तत्तद्धर्ममनुगतेन रूपेणावगाहमानं संभवत्येवव्यापकत्वावगाहनं विनापि निर्वाहप्रकारोऽनुपदं वक्ष्यति । अथ तत्तत्त्रिंशत्त्वादीनामनुगतं धर्मं वक्तुमाशङ्कते। **नचत्रिंशत्त्वादिकमिति** । सूर्योदयमारभ्यसूर्योदयान्तपर्यन्तस्थायिपदार्थस्यैव पूर्वं दिनत्वोक्त्या तेषां द्रव्यात्मकानामप्येकदा सत्त्वासंभवेनाविद्यमानसमवायिकारणकगुणोत्पत्तेरसंभवात् न तेषु त्रिंशत्त्वं संख्यात्मकं भवितुमर्हतीत्याह । **द्रव्यात्मकत्वेपीति** । **सङ्करेति** । ताद्दशस्य बुद्धिविशेषस्य कदाचित्प्रत्यक्षस्य कदाचिदनुमितिशाब्दादिरूपस्य संभवात् प्रत्यक्षत्वादिभिः संकरेत्यर्थः । प्रत्यक्षत्वादिव्याप्यानामनेकेषां समभ्युपगमे साङ्कर्यविरहेऽप्यननुगमस्यदुरुद्धरत्वान्न

**तत्तद्दिनाद्यननुगमेनाननुगतत्वादिति वाच्यम् तावत्कालस्थायिनो द्रव्यस्यापि दिनादिरूपत्वसम्भवात्। मीमांसकानुयायिभिरगत्या सङ्ख्यायाः पदार्थान्तरत्वोपगमाच्च । सङ्ख्यादिरूपनानादिनादिनिष्ठानुगत-त्रिंशत्त्वादेः सुवचत्वात् एवं मासमधीते चैत्र इत्यादावधिकरणतैव द्वितीयार्थः।मासादिपदार्थतावच्छे-**

---

तदुक्तमिति भावः । **तत्तद्दिनाद्यननुगमेनेति** । प्रागुक्तसूर्योदयक्षणविशिष्टत्वेनानुगतरूपेण दिनविषयकत्वस्य प्रवेशे न्यूनाधिकदिनविषयकज्ञानस्यापि तथात्वेन तद्विषयकत्वस्य त्रिंशत्त्वरूपत्वासम्भवादिति भावः । **तावत्कालस्थायिनो द्रव्यस्यापीति** । ननु तावत्कालपदेन यदि मासरूपकालो विवक्षितस्तदा तावत्कालस्थायिनो द्रव्यस्यतस्यैकत्वेन तद्गतत्रिंशत्त्वासम्भवः । तादृशत्रिंशद्गतत्रिंशत्त्वसंभवेऽपि तद्विशिष्टस्यानेकस्यैकस्मादविलक्षणकार्यकारित्वेनानेकस्यैकस्य वा तस्य मासपदार्थत्वे एकदिनाध्ययनस्थलेमासमधीतइति प्रयोगापत्तिः दिनादिरूपत्वोक्त्यनुपपत्तिश्च । यदि दिनमात्रकालस्य विवक्षा तदा तन्मात्रस्थायिनां तेषामेकदा सत्त्वासम्भवेन पूर्वोक्तदोषानिवृत्तिः । नचैकैकदिनन्यूनकालवृत्त्युत्तरोत्तरोत्पन्न-त्रिंशत्समुदायस्य चरमकालवृत्तितया तेषु द्रव्येषु त्रिंशत्त्वरूपसंख्यासंभवस्तदधिकरणे कास्मिंश्चिदपिद्रव्येऽध्ययनाभावे मासम-धीत इतिप्रयोगासंभव इति वाच्यम् । चरमद्रव्यमात्रेऽध्ययनस्थलेऽपि मासमधीत इतिप्रयोगापत्तेः । तत्काले सर्वस्य विद्यमा-नत्वेनाध्ययनाधिकरणतयाप्रतियोगिव्यधिकरणतदभावस्य तत्रासत्त्वादिति नेन्न प्रागुक्तं यत्सूर्योदयक्षणविशिष्टवस्तुरूपं दिनं तदवच्छेद्यस्य स्वसमानाधिकरणाधिकरणत्वनिरूपकाभावस्यैव विवक्षितत्वात्प्रतियोगिवैयधिकरण्यस्यानुपादेयत्वात् यस्मिन् दिने कस्मिंश्चिदपि क्षणे नाध्ययनं तदेवदिनं तादृशत्रिंशत्त्वाधिकरणसम्बद्धं तन्निष्ठाध्ययनाद्यभावाधिकरणतावच्छेदकमेवञ्चोक्तस्थले त्रिंशत्त्वाधिकरणे चरमपदार्थातिरिक्ते सर्वत्रैवाध्ययनाभावाधिकरणत्वस्य दिनावच्छेद्यस्य संभवेन न व्यापकत्वसंभवः एवं त्रिं-शद्दिनमध्ये कस्मिंश्चिदपि दिनेऽध्ययनाभावे तद्दिनावच्छिन्नाधिकरणत्वस्य तादृशत्रिंशत्त्वसमानाधिकरणस्य संभवात् सुतरां न व्यापकत्वसंभवः निरुक्तेषु त्रिंशत्स्वेव दिनेष्वध्ययनस्थल एव दिनावच्छिन्नाधिकरणस्याध्ययनाभावनिरूपितत्वसंभवेना-ध्ययनस्य व्यापकत्वसंभवः । अथ वा तावत्कालेत्यादिग्रन्थस्य त्रिंशत्त्वोपपादन उपपादितत्रिंशत्त्वस्य मासपदार्थप्रवृत्तिनिमि-त्तत्वे च न तात्पर्यं किन्तु यथासूर्योदयक्षणविशिष्टस्यैकस्य द्रव्यस्य दिनत्वं तथा त्रिंशद्दिनस्थायिनो द्रव्यस्य मासत्वं तद्गतैकत्वस्य च मासपदार्थतावच्छेदकत्वं तत्समानाधिकरणनिरुक्तदिनावच्छेद्याधिकरणत्वनिरूपकाभावप्रवेशे प्रतियोगिवैयधिकरण्यस्यानुपादा-नेनाखण्डपदार्थस्य मासात्मकत्वेपि पूर्वोपदर्शितग्रन्थस्थदोषस्यासंभवात्तत्रैव ग्रन्थे प्राक् तथाभिधानन्तु निरुक्तदिनगतानुगत-त्रिंशत्त्वसंभावनया तत्संभवेच निरुक्तदिनावच्छेद्यत्वविशेषिताधिकरणताघटितव्यापकत्वापेक्षया प्रतियोगिवैयधिकरण्यघटित-त्रिंशत्त्वव्यापकत्वे लाघवात् एवञ्च द्रव्यस्येत्येकवचनं दिनादीत्यादिपदं च नानर्थकम् । अथैवमपि तादृशत्रिंशत्त्वानामुक्ताखण्ड-मासगतैकत्वानांवा कथमनुगमसंभवः तावतां द्रव्याणामनुगमकाभावात् एकस्य च तस्य त्रिंशद्दिनस्थायित्वेनानुगमने त्रिंशत्त्वस्य पुनर्निर्वचनापत्तेरितिचेत् तदादीनामिव मासादिपदानामपि स्वप्रयोजकबुद्धिविषयतावच्छेदकधर्मावच्छिन्ने एव हि शक्तिः कस्मिंश्चिन्मांसनिष्ठे त्रिंशत्त्व एकत्वे वा गृहीते मासपदप्रयोजकबुद्धिविषयतावच्छेदकत्वग्रहे तेनैव प्रत्यासत्त्या मानसाखिल-तादृशधर्मग्रहे तदुपलक्षितधर्मावच्छिन्ने मासादिपदशक्तिग्रहे तदुपलक्षिततद्विशिष्टोपस्थितौ रामादिपदाज्जातित्वेन तच्छरीरगत-जातेरुपस्थितावपि जातित्वानवगाहिजातिविशेषावगाहिशाब्दबोधवत्तात्पर्ययोग्यताज्ञानादिसहकारिवशात् तादृशविषयताव-च्छेदकत्वानवगाही त्रिंशत्त्वादिविशेषावगाही शाब्दबोधोजायत इति गृहाण । नचैवमपेक्षाबुद्धिविषयत्वपक्षपरित्यागो व्यर्थमिति वाच्यं तादृशविषयत्वव्यक्तेरनेकतयोक्तेनानुगतरूपेणोपस्थितयत्किञ्चिद्विषयत्वमादायैकदिनाध्ययनस्थलेऽपि मासमधीत इति प्रयोगापत्तेः । विषयतासंवन्धेन बुद्धिव्यक्तेस्तथात्वे च तावत्कालेत्यादिग्रन्थस्य सङ्ख्याया अपि तथात्वप्रतिपादनपरत्वेनासंगति-विरहोऽवसेयः उक्तरीत्यानुगमासामञ्जस्यमनुचिन्त्य वा मीमांसकानुयायिभिरगत्येत्याद्युक्तमिति तत्रच सूर्योदयक्षणविशिष्टवस्तुत्व-व्याप्यत्रिंशत्त्वत्वेनानुगमसंभवः । नचैकसूर्योदयक्षणविशिष्टत्रिंशद्वस्तुगतत्रिंशत्त्वमादायैकदिनाध्ययनस्थलेऽपि मासमधीतइतिप्र-योगापत्तिरितिवक्तव्यम् । एकसूर्योदयक्षणविशिष्टवस्तुद्वयावृत्तित्वस्य विशेषणात् । नचैवमप्यतिव्यवहिततादृशवस्तुगतत्रिंशत्त्वमादाय मासमधीत इति प्रयोगापत्तिरिति वाच्यं स्वाश्रयाव्यवहितोत्तरत्वशून्यावृत्तित्वस्य विवक्षितत्वात् । नच व्याप्यत्वविशेषणं व्यर्थ-मिति वाच्यं सूर्योदयक्षणविशिष्टैकवस्तुमासस्थायिपरस्पराव्यवहितोनत्रिंशद्वस्तुगतत्रिंशत्त्वमादायैकैकमासगतैकाध्ययनस्थलेऽपि मासमधीतइति प्रयोगापत्तेरिति । व्यापकत्वे शक्त्यपेक्षया लाघवादाह । **अधिकरणतैवद्वितीयार्थ इति** । अधिकरणतायां प्रकृत्यर्थस्याधेयतामात्रभाने मासमध्य एकदिनाध्ययनंस्थले मासमधीत इति प्रयोगापत्तिः स्यादतआह । **मासादिपदार्थता-वच्छेदकेत्यादि** । यद्यप्यवच्छेद्यत्वं त्रिंशत्त्वादिनिरूपितमात्रमेकदिनमात्राध्ययनस्थले तादृशाधिकरणत्वतद्दिनोत्तरसकलदि-ननिष्ठतत्तद्वस्तुगतान्यतमत्वावच्छिन्नं तादृशावच्छिन्नत्वमादाय मासमधीत इतिप्रयोगप्रसञ्जकं सामान्यतोऽधिकरणतात्वावच्छिन्नं तु न संभवत्यधिकरणतात्वस्य तदतिरिक्तवृत्तित्वादधिकरणतात्वव्याप्यधर्मावच्छिन्नञ्च तदेकमासघटकप्रतिदिवसमध्ययनाद्यनेक-क्रियानिरूपिताधिकरणत्वसत्त्वस्थले तावदधिकरणनिष्ठान्यतमत्वावच्छिन्नमुक्तावच्छेद्यत्वमादाय मासमधीत इति प्रयोगस्यापादकं चैत्रीयाध्ययनाधिकरणतात्वमपि मासान्तरनिष्ठाधिकरणतासाधारणमतिप्रसञ्जनोक्तावच्छेद्यतावच्छेदकं तथापि चैत्रीयाध्ययनाधि-

दकदिनपर्याप्तत्रिंशत्त्वादेर्धर्मिविशेषणतापन्नस्य द्वितीयार्थाधिकरणतायां चैत्रकर्तृकाध्ययनाधारतात्वादिव्याप्यधर्मावच्छिन्नं स्वरूपसंबन्धरूपमवच्छेद्यत्वं संसर्गतया भासतइत्युपगमेन सामञ्जस्यात् । यत्किञ्चिदेकमासं व्याप्य यत्राधीतं तत्राध्ययनाधारतानामवच्छेद्यतावच्छेदकाधारतावृत्त्यन्यतमत्वविशेषादिरूपोक्तधर्मावच्छिन्नानतिप्रसक्तत्वेन तद्वृत्तित्रिंशत्त्वेनावच्छेदात् न्यूनकालाध्ययनस्थले च अतिप्रसक्ततया तादृशस्य मासत्वस्योक्तरूपावच्छिन्नाधारतानवच्छेदकत्वाच्चाप्रसङ्गातिप्रसङ्गयोरनवकाशात् । मासादिपदप्रवृत्तिनिमित्तधर्मे चैत्राध्ययनाधारताया व्याप्यत्वस्य शब्दादलाभेऽप्यर्थतस्तल्लाभादितिद्वितीयाया अत्यन्तसंयोगार्थपरत्वमिति नानुशासनविरोधः । नच भूतलेघटः भूतलं घटवदितिप्रत्ययबलादतिप्रसक्तोऽपि धर्म आधेयत्वाधारत्वयोरवच्छेदकइति वाच्यम् । तादृशप्रत्ययेऽवच्छेदकत्वभानानुपगमात् । आधेयताया अतिप्रसक्तधर्मावच्छेद्यत्वे साध्यसामानाधिकरण्यावच्छेदकधर्मात्मकव्याप्तिशरीरेमिश्रादीनां स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशस्य व्यभिचारिण्यतिव्याप्त्या न ह्यतिप्रसक्तमवच्छेदकमिति तत्स्थलीयचिन्तामणिफक्किकाविरोधेनचासंभवदुक्तिकतापत्तेः । आधारताया अतिप्रसक्तधर्मावच्छेद्यत्वे यद्धेत्वधिकरणत्वं साध्याधिकरणतावच्छेदकमिति तल्लक्षणव्याख्यापक्षे स्वरूपसंबन्धरूपावच्छेदकत्वप्रवेशं व्यभिचारिण्यतिव्याप्त्याऽदूषयित्वा विरुद्धदिक्कालावच्छिन्नवृत्तिकस्येत्यादिदूषणान्तरेण तत्परित्यज्य दीधितिकृतामनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षाया असङ्गत्यापत्तेः । अस्तुवाऽव्यासज्यवृत्तिधर्मस्यातिप्रसक्तस्यापि दर्शितप्रतीतिबलादाधाराधेयभावावच्छेदकत्वम् । व्यासज्यवृत्तेस्त्वतिप्रसक्तस्य तदवच्छेदकत्वमप्रसक्तम्, क्षितिजलोभयं गन्धवत् स्नेहगन्धोभयं क्षितावित्याद्यप्रतीतेः । अथवा द्वितीयाद्यर्थेऽध्ययनाधारत्वे तत्तन्मासादिरूपप्रकृत्यर्थविशेषणतावन्न तत्तन्मासत्वादिव्यक्तीनां व्यापकतासंबन्धेन पारतन्त्र्येण विशेषणत्वमुपेयते । तादृशंच व्यापकत्वं स्वसमानाधिकरणव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकत्वसंबन्धेन स्वावच्छिन्नस्य यो भेदस्तदाश्रयधर्मवत्त्वं, तादृशधर्मश्च चैत्रोऽधीतइत्यादौ चैत्रीयाध्ययनाद्याधारतात्वं विशेष्यैव संबन्धेऽन्तर्भावनीयम् । मासान्तरनिष्ठतादृशाभावप्रतियोगितावच्छेदकत्वस्य तादृशधर्मे सत्त्वेऽपि तत्तन्मासत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतादृशधर्मे उक्तसंबन्धेन तत्तन्मासत्वाद्यवच्छिन्नस्य यो भेदस्तदाश्रयत्वमक्षतमेवेति यत्किञ्चिदेकमासादिमात्रव्यापकाध्ययनादिस्थलेऽपि तादृशप्रयोगनिर्वाहः । प्रतिमासमधीतइत्यादौ प्रत्यादिशब्दानां मासादिपदोपस्थाप्यानुगतरूपावच्छिन्नमासत्वादिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभावघटितव्यापकताबोधकतया यत्किञ्चिदेकमासव्यापकाध्ययनादिस्थले न तादृशः प्रयोगः । अथात्यन्तसंयोगार्थकद्वितीयाया एकादिपदं विनापि यत्किञ्चिदेकमासादिव्यापकताबोधकत्वउपसङ्क्रिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीत्यत्र एकपदवैयर्थ्यमिति चेन्न । तत्र मासाधिककालव्यापकत्वेऽपि मास-

---

करणतात्वव्याप्यधर्मावच्छिन्नमवच्छेद्यत्वं संसर्गोऽप्रसङ्गातिप्रसङ्गानापादकं संभवत्येवेत्याह । चैत्रकर्तृकाध्ययनाधारतात्वादिव्याप्यधर्मावच्छिन्नमिति । यद्यपि चैत्रीयाध्ययनाधिकरणत्वं नैकं तत्तद्दिननिष्ठतत्तदधिकरणत्वञ्च नञ्स्यातिप्रसक्तोक्तत्रिंशत्त्वावच्छेद्यं संभवति तथापि तत्तदधिकरणतागतान्यतमत्वेन तदनतिरिक्तवृत्तित्वं त्रिंशत्त्वस्य संभवतीति तादृशान्यतमत्वेन तासु तदवच्छेद्यत्वसंभव इत्याह । अन्यतमत्वविशेषादीति । अर्थतइति । यस्य यन्निष्ठावच्छेद्यत्वनिरूपकत्वं तस्य तद्व्याप्यत्वमिति सामान्यतोव्याप्त्यनुगृहीताद्गृहीतोक्तावच्छेद्यत्वनिरूपकत्वत इत्यर्थः । अत्यन्तसंयोगार्थपरत्वमिति । उक्तरीत्या यथाकथञ्चिदुक्तसंयोगबोधतात्पर्यकत्वमित्यर्थः । अदूषयित्वेति । अतिप्रसक्तस्याप्यवच्छेदकत्वे समानाधिकरणव्यभिचारिमात्रातिव्याप्त्यैव दूषणेन स्वरूपसंबन्धरूपावच्छेदकत्वपरित्यागस्यौचित्यापत्तिरिति भावः । विरुद्धदिक्कालेति । दिगिति देशस्याप्युपलक्षणम् । तथाच वृक्षः तत्प्राच्यवच्छिन्नसंयोगवान् तत्प्रतीच्यवच्छिन्नविभागात् । वृक्षोमूलावच्छिन्नसंयोगवान् शाखावच्छिन्नविभागात् । तत्कालावच्छिन्नसंयोगवान् । एतत्कालावच्छिन्नविभागादिति स्थलत्रयलाभः । तेषुच साध्याधिकरणतायाः स्वरूपसंबन्धरूपावच्छेदकत्वस्य हेत्वधिकरणत्वे ह्यसंभवादव्याप्तिर्दोषो यद्यप्यतिव्याप्त्यपेक्षया बलवानिति संभवतोप्यतिव्याप्तिदोषस्योपेक्षैवोचिता तथाप्यतिव्याप्तेः प्रसिद्धस्थलीयत्वेनाप्रसिद्धस्थलीयाव्याप्त्यपेक्षया प्रथमोपस्थितत्वेन निर्बीजतत्परित्यागस्यानुचि-

व्यापकतयाधिककालव्यापकस्य होमस्य शास्त्रार्थतावारणायैकपदोपादानात् । तथा सति तस्य केवलार्थतया मासमात्रव्यापकतालाभात्तादृशप्रयोजनोपपत्तेः । अतएवच यावज्जीवमग्निहोत्रं जुहोतीतिश्रुतिबोधिताग्निहोत्रानुवादेन सतिलव्रीहिचरुरूपद्रव्यस्य मासैकरूपकालस्यच विधाने वाक्यभेदः स्यादिति तादृशद्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रपदप्रतिपाद्यस्य कर्मान्तरस्यैव विधायिका तादृशी श्रुतिरिति सिद्धान्ते यावज्जीवकालान्तर्गतमासरूपकालांशेऽप्यनुवादकतासम्भवात्प्राप्ताग्निहोत्रानुवादेन द्रव्यस्यैव विधानमुचितमिति पूर्वपक्षो निरस्तः । यावज्जीवमित्यादिश्रुत्या यावज्जीवव्यापकत्वे बोधितेऽर्थतो मासैकव्यापकतालाभेऽपि उपसच्चरुकरणकत्वविशिष्टहोमे तन्मात्रव्यापकताया अलाभेन तस्यापि विधेयतया वाक्यभेदस्य प्राप्ताग्निहोत्रानुवादेन द्रव्यविधिपक्षे दुर्वारत्वात् । अथ तादृशश्रुतेर्द्रव्यकालोभयविशिष्टस्य गौणाग्निहोत्रप्रतिपाद्यस्य कर्मान्तरस्य विधायकत्वेऽपि न कथं वाक्यभेदः । विधेयभेदस्यैतावताप्यपरिहारात् । प्रत्युत धर्मिणोऽप्यधिकस्य विधानात् । एवंच 'प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नत' इत्यपि निर्युक्तिकमिति चेन्न । यत्र विधेयांशे युगपदनेकधर्माणां विशेषणतया भानं तत्र विधेयविशेषणभेदेऽपि विशिष्टनिष्ठविधेयत्वाभेदेन वाक्यभेदविरहात् । अन्यथा भूतलं नीलघटवदित्यादावपि ,नीलवद्घटवदित्यादाविव वाक्यभेदप्रसङ्गात् । अनुवाद्यांशे विशेषणतया यत्रानेकेषां विधानं तत्र तेषां विधेयता भिन्नैवेति वाक्यभेदः । यद्यपि तत्रोपसच्चरुकरणक होमाधिकरणतात्वेन वाधिकारिविशेषकृततादृशहोमाधिकरणतात्वेन वा मासैकव्यापकता मासन्यूनकालहोतृकृतहोमाधिकरणतायामप्यन्यान्यदिने पुरुषान्तरकर्तृकहोमाधिकरणतासत्त्वेनाक्षतैव, तत्तत्पुरुषकर्तृकतादृशहोमाधिकरणतात्वेन व्यापकतायाः श्रुतितात्पर्यविषयत्वे च विधेयानन्त्यम्, तथापि विभिन्नपुरुषकर्तृकहोमाधिकरणताद्वयावृत्तितादृशचरुहोमाधिकरणतामात्रवृत्तिधर्मत्वेनानुगतीकृत्य तत्तत्पुरुषकर्तृकतादृशचरुहोमाधिकरणतात्वावच्छिन्नव्यापकतानां संसर्गविधया विवक्षितत्वान्न दोषः । तादृशाधिकरणताद्वयावृत्तित्वं च, स्ववृत्तित्वस्वनिरूपकहोमकर्तृनिष्ठभेदप्रतियोगिकर्तृकहोमाधिकरणतावृत्तित्वोभयसंबन्धेनाधिकरणताविशिष्टान्यत्वरूपमनुगतं बोध्यम् । मासमधीतइत्यादावपि चैत्रादिकर्तृकाध्ययनाधिकरणतात्वरूपव्यापकतावच्छेदकधर्मस्योक्तानुगतरूपेणैवानुगमः कार्यः अतो मासमधीयानो दृष्ट इत्यादौ विशिष्य चैत्रत्वाद्यनुपस्थितावपि नान्वयबोधानुपपत्तिः । अन्यत्स्वयमूहनीयम् ।

दण्डं विना न घट उत्पद्यते, रासभं विनापि घट उत्पद्यत, इत्यादौ विनापदार्थोऽभाववान् । तत्पदसमभिव्याहृतद्वितीयाया अभावान्वयिप्रतियोगित्वमनुयोगित्वं वार्थः । अभाववतश्चोत्पत्तावाधारत्वेनान्वयः, तथाच दण्डाभाववद्वृत्त्युत्पत्तिकत्वाभाववान् घटो, रासभाभाववद्वृत्त्युत्पत्तिको घट इत्याकारको बोधः । यद्यपि निपातार्थे नामार्थस्य साक्षादपि भेदेनान्वयः तथापि संभवति सार्थकत्वे विभक्तेर्निरर्थकत्वमनुचितमिति द्वितीयायाः सार्थकत्वमुपेयते । भूतले न घटश्चन्द्र इव मुखमित्यादौ प्रथमायाः प्रतियोगिताद्यर्थकत्वे प्रथमैव न साधुः स्यात् । प्रातिपदिकार्थान्वयिनोन्यपदेनाभिधानस्थलएव प्रातिपदिकार्थेत्यादिसूत्रेण प्रथमाविधानादिति तत्र प्रतियोगित्वादिः संबन्धविधयैव भासतइत्युपेयते । दण्डं विना न घटोत्पत्तिरित्यादौ च विनान्तार्थे घटोत्पत्याद्यभावान्वयेऽनुयोगिविशेषणदण्डाद्यभावस्य च तदनुयोगितावच्छेदकत्वं भासते । द्रव्ये न गन्ध इत्यप्रयोगात् उपलक्षणीभूतधर्मावच्छिन्ने न नञर्थाभावान्वय इतिव्युत्पत्तेरिति रासभंविना न घटोत्पत्तिरिति

---

तत्वं भवत्येवेति । **सतिलव्रीहिचरुरूपद्रव्यस्येति** । उपसच्चरुकरणकत्वविशिष्टेति च कथमुक्तमिति न प्रतीयते मीमांसाद्वितीयाध्यायतृतीयपादचतुर्विंशतिसूत्रभाष्यवार्त्तिकन्यायसुधादिपर्यालोचनयोपसत्संज्ञककर्मोत्तरकालत्वरूपगुणवैशिष्ट्यस्यैव प्रतीतेः अग्निहोत्रसंज्ञोत्थापितातिदेशादेवाग्निहोत्राङ्गद्रव्यस्यैव प्राप्तेश्चेति । **अन्यपदेनाभिधानेति** । नेहार्थवत्त्वं पदत्वं तथासति तादृश्या

न प्रयोगः। अतिप्रसक्ततया रासभाभावस्य घटोत्पत्त्याद्यभावानुयोगितावच्छेदकताविरहात्। अथवा अभाव एव विनार्थः दण्डं विना न घट इत्यादौ च विनान्तार्थस्याभावस्य नञर्थे घटाद्यभावे प्रयोज्यतासंबन्धेनैवान्वयः। अतएव रासभं विना न घट इत्यादयो न प्रयोगाः। अतएव दण्डाद्यभाववति घटादेर्वृत्तावपि जायते इत्यस्याध्याहारं विनैव दण्डं विना न घट इति प्रयोगोपपत्तिः रासभं विना घट इत्यादौ च विनार्थस्याभावस्य सामानाधिकरण्यसंबन्धेन घटादावन्वयः। दीधितिकृताप्यविनाभावो व्याप्तिरित्यत्र साध्यं विना साध्याभाववति योभाव इति यद्व्याख्यातं तत्र सप्तम्यन्तेन संसर्गविधया भासमानं तदधिकरणनिष्ठत्वमेवोपात्तं नतु विनार्थत्वेनाधिकरणम्। अभावाधिकरणपर्यन्तस्यविनापदार्थत्वेऽपि सप्तम्याधेयत्वरूपापदार्थविवरणरूपताया आवश्यकत्वात्। नच विनापदोत्तरलुप्तसप्तम्यर्थ एवाभाववतीति सप्तम्या विवृत इति वाच्यम् निपातोत्तरविभक्तेर्निरर्थकत्वात्। अतएव सर्वत्र निपातोत्तरं साधुत्वार्थं प्रथमैवेति शाब्दिकाः। पृथिव्यामेव गन्ध इत्यादावेवकारप्रकृतिकसप्तम्या यदाधेयत्वबोधकत्वमङ्गीकृतं दीधितिकृद्भिस्तत्रापि तेषां न निर्भरः। अस्तु वा तत्र प्रतियोगितया पृथिव्यन्यवृत्तित्वभानानुरोधेनैवकारस्यान्यवृत्तित्वार्थकत्वं गौरवादुपेक्ष्य तत्राधेयत्ववाचकत्वेन क्लृप्तायाः सप्तम्याः कल्पनम्। प्रकृते चाधेयत्वस्य संसर्गतयैवोपपत्तौ विनापदसाकाङ्क्षाधेयत्वार्थकसप्तमीकल्पनं दुष्कल्पनमेव। एवकारस्थलेचाभावरूपएवार्थेन्यरूपतदर्थान्तरस्याधेयतासम्बन्ध इति न सम्भवति आधेयतादेस्तद्वत्येव संबन्धत्वात् नतु तदभावे। नच तत्राधेयत्वाभावो न प्रतीयत अपितु तत्सम्बन्धावच्छिन्नप्रतियोगिताकपृथिव्याद्यन्याभाव इत्युपेयम्। तादृशप्रतियोगिताकत्वमेवाभावेऽन्यस्य सम्बन्धोस्त्विति वाच्यम्। आधेयतासंबन्धस्य प्रतियोगिनि आधारस्यानुयोगिन्याधेये वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वात्। चैत्रः पचतीत्यादौ कृत्यादिसंबन्धस्यापदार्थत्वेऽपि पाककृतिमानित्यादौ मतुबादिपदेन विवरणवत् उक्तस्थले सामानाधिकरण्यस्य पदेन विवरणमपि न विरोधमासादयति। विवरणीयार्थस्याप्यन्यलभ्यत्वेऽपदार्थतोपपत्तेरित्यलमसदावेशेन। विना वातं वृक्षः पतित इत्यादौ विनापदार्थस्याभावस्याश्रयतासंबन्धेन वृक्षेऽन्वयाद्वाताभावविशिष्टो वृक्षः पतित इति शब्दतो लभ्यते। पतनेऽनुभवसिद्धौ वातजन्यत्वाभावलाभश्चार्थः, जन्यतायाः पदानुपस्थाप्यत्वात्। तदभावस्य तस्यवृत्त्यनियामकसंबन्धत्वात्तदवच्छिन्नवाताभावस्य च शब्देन बोधयितुमशक्यत्वात्। पुत्रं विना गत इत्यादौ पुत्रादिपदं लक्षणया पुत्रगमनादिपरम् विनापदबोध्यतदभावश्च समानकालीनत्वादिसंबन्धेन गमनेऽन्वेति। समानकालीनत्वघटकं कालनिष्ठं स्वाधिकरणत्वमनवच्छिन्नं बोध्यमतो गमनादिकाले तदनधिकरणदेशावच्छेदेन गमनाद्यभावसत्त्वेऽपि नातिप्रसङ्गः। केचित्तु उक्तस्थलेऽसाहित्यमेव विनापदार्थः तस्य च गमनादिकर्तर्य्यन्वयः असाहित्यं च स्वकर्तृकसमभिव्याहृत-

---

प्रथमयैव प्रातिपदिकार्थान्वितप्रतियोगित्वस्याभिधानापत्तेरपि तु सुप्तिङन्तत्वं पदत्वं बोध्यम्। **नप्रयोग इति**। धर्मिविशेषणेविधेयसामानाधिकरण्यमात्रभाने दण्डं विना न घटोत्पत्तिरितिवत् रासभंविना नघटोत्पत्तिरित्यपि स्यादनुयोगितावच्छेदकत्वभाने च घटोत्पत्तिमत्त्यपि रासभाभावस्य सत्त्वेनानुयोगिताविशेषणेऽतिप्रसक्ततया तदवच्छेदकत्वासंभवान्न तादृशप्रयोग इतिभावः। **प्रयोगोपपत्तिरिति**। उत्पत्त्यनन्तरं घटस्य दण्डाभाववत्यपि सत्त्वेन घटाभावानुयोगिताव्यभिचारित्वेन तदवच्छेदकत्वासंभवात् तदनुपपत्तिः स्याज्जायत इत्यस्याध्याहारेच दण्डाभाववद्वृत्तिजन्माभावस्य घटे प्रतीत्या तदुपपत्तावप्यध्याहारदोष एव स्यात् विनार्थाभावस्य प्रयोज्यत्वेनाभाव एवान्वये च विनैवाध्याहारमुक्तप्रयोगोपपत्तिरित्यर्थः। **तद्वत्येवेति**। आधेयत्ववत्येव आधारस्याधेयत्वं संबन्धो नत्वाधेयत्वाभावे तथाच तदन्यवृत्तित्वस्यैवकारार्थत्वंविना न तदन्यनिरूपितवृत्तित्वाभावबोध इति भावः। **स्वकर्तृकसमभिव्याहृतेति**। नन्वत्र स्वपदं यदि प्रकृतक्रियाकर्तृपरं तदा द्वितीयाप्रकृत्यर्थस्य चरमकर्तृत्व एवान्वयस्य वाच्यतया तद्रूपसाहित्यस्य पुत्रनिष्ठस्याभावो गमनकर्तरि सहगमनस्थलेपि सत्त्वेन तत्रापि पुत्रंविनागत इति प्रयोगापत्तिः समानकालिकत्वादेर्वृत्त्यनियामकत्वेन तेन तदभावो बोधयितुमशक्यः यदि पुत्रपरं तत्तदा तेनान्विते प्रथमकर्तृत्वे पुत्रपदार्थस्यान्वयायोगश्चरमकर्तृत्वं च पितृनिष्ठमिति तत्रापि तदन्वयासंभव इति चेन्न स्वपदार्थस्य समभिव्याहृतपुत्रादिपदादेव लाभ-

गमनादिक्रियासमानकालीनतादृशक्रियाकर्तृत्वरूपसाहित्याभावः, क्रियान्वयिस्वकर्तृकतादृशक्रियाकालीनत्वाभाव एव वा विनार्थः । कर्तृत्वे पुत्रादेराधेयत्वेनान्वयः । विभक्तिः साधुत्वार्थैव अस्तुवाधेयत्वं द्वितीयार्थः । सप्तम्या आधेयत्वार्थकत्वेऽपि नात्र सप्तमीप्रसक्तिस्तस्याः कारकविभक्तित्वेन क्रियान्वयिस्वार्थबोधकत्वात् । अतःशेषषष्ठीप्रसक्त्या तामेवोपपदविभक्तिर्द्वितीया बाधत इतिसर्वा उपपदविभक्तयः षष्ठ्यपवादिकाइत्यस्याविरोध इति । विनासमानार्थकयोर्ऋतेऽन्तरेणेति निपातयोरपि दर्शितैव रीतिः । एवं विनायुक्ततृतीयापञ्चमीस्थलेऽपि मर्यादाभिविध्यर्थकयावच्छब्दयोगेपि द्वितीया दृश्यते, तत्र मर्यादार्थको यावच्छब्दः । आरभ्य तस्यां दशमीं तु यावत्प्रपूजयेत्पर्वतराजपुत्रीमित्यादौ मर्यादा सीमा कालरूपा देशरूपा च कालनिष्ठं तत्त्वंच, तत्कालसमभिव्याहृतकालप्रागभावानधिकरणस्वप्रागभावाधिकरणस्वसजातीययावत्कालवृत्तिसमभिव्याहृतक्रियानधिकरणत्वम् । एवंचोक्तस्थले यावच्छब्देन पूजारूपक्रियायां शुक्लदशमीनिष्ठतादृशसीमात्वनिरूपकत्वं प्रत्याय्यते । तावतैवार्थतः शुक्लदशम्यां मर्यादात्वं लभ्यते । तन्निष्ठसीमात्वनिरूपकत्वंच तदवृत्तित्वे सति कृष्णनवमीप्रागभावानधिकरणशुक्लदशमीप्रागभावाधिकरणतिथिकूटव्यापकत्वम् । तावता षोडशतिथ्यधिकरणकषोडशपूजारूपस्यैककर्मणो विधेयतया लाभः व्याप्यकालसमुदाये स्वजातीयत्वविशेषणात्पूजायामुक्तविशेषणद्वयाक्रान्तदण्डादिसमुदायाव्यापकत्वेपि न बाधः । अन्वयितावच्छेदकरूपेण साजात्यस्य विवक्षणादुक्तस्थले च तिथिमित्यस्याध्याहारेण दशमीपदार्थतावच्छेदकस्य तिथित्वघटितत्वेन वा यावत्पदार्थान्वयितावच्छेदकतया तिथित्वभानात्तेन रूपेण दण्डादेर्दशमीसजातीयत्वाभावात् । तिथिश्चाखण्डकालविशेषरूपा, नतु चन्द्रमण्डलकलारम्भाद्यनुगुणक्रियाप्रचयरूपा पूजायास्तावत्क्रियावृत्तित्वासम्भवात् । अत्रच प्रागभाव एव यावत्पदार्थः द्वितीयार्थः प्रतियोगित्वमनुयोगित्वं वा, तत्र तत्प्रकृत्यर्थदशम्या अन्वयः तावता दशमीप्रतियोगिकप्रागभावलाभः । तस्य स्वप्रतियोग्यवृत्तित्वविशिष्टव्यापकतासंबन्धेन पूजारूपसमभिव्याहृतक्रियायामन्वयः व्यापकत्वंच स्वाधिकरणतिथिनिष्ठाभावप्रतियोगितानवच्छेदकपूजाविशेषत्ववत्त्वम् । स्वाधिकरणत्वंच स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदविशिष्टकालिकविशेषणतासंबन्धेन । एतेन कृष्णनवमीप्रागभावाधिकरणप्रतियोगिकभेदस्याव्यावर्त्तकतया तत्सामान्यभेदनिवेशे भाविकृष्णनवमीप्रागभावाधिकरणत्वमादाय नाप्रसिद्धिः । तथासत्यपि तत्तद्दशमीप्रागभावाधिकरणकालस्य स्वाधिकरणकृष्णनवमीप्रागभावावच्छिन्नभेदवत्त्वसंबन्धेन तत्तत्प्रागभावाधिकरणत्वाक्षतेः । नचैवमपि व्यवहितपूर्वकृष्णनवमीप्रागभावावच्छिन्नभेदघटितसंबन्धेनाव्यवहितपूर्वकृष्णनवमीपूर्वतिथीनामपि तत्तद्दशमीप्रागभाववत्त्वात्तदधिकरणतिथिव्यापकत्वं पूजायां न संभवतीति वाच्यम् स्वावच्छिन्नकृष्णनवमीप्रागभावाधिकरणत्वसंबन्धे स्वावच्छिन्नभेदस्यैव प्रागभावसंबन्धे निवेशनी-

---

संभवेन कर्तृत्वनिरूपकसमभिव्याहृतक्रियासमानदेशकालिकक्रियाकर्तृत्वरूपसाहित्यस्याभाव एव विनापदार्थस्तत्र प्रथमकर्तृत्वे च पुत्रादिपदार्थस्यान्वये दोषाभावात् पङ्क्तिविनागत इत्यस्याप्रामाण्यमेवेष्यते प्रामाण्येच प्रकृतक्रियाकर्तृलाभाव एवच विनापदार्थस्तत्रैवाधेयतासंबन्धेन पंग्वादेरन्वयस्तस्य समानकालीनत्वेन प्रकृतक्रियादावन्वय इति बोध्यम् । लाघवादाह । **क्रियान्वयीति** । **अवृत्तित्वविशिष्टव्यापकत्वसंबन्धेनेति** । निरुक्तावृत्तित्वे सति स्वव्यापकत्वसंबन्धेनेत्यर्थः । स्वपदार्थो दशमीप्रागभावः । **अव्यावर्त्तकतयेति** । विशेषभेदोभयभेदादिकमादाय कृष्णनवमीप्रागभावाधिकरणकालेपि सत्त्वादित्यर्थः । **सामान्यभेदेति** । कृष्णनवमीप्रागभावत्वातिरिक्तधर्मानवच्छिन्नप्रागभावनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदेत्यर्थः । **अप्रसिद्धिरिति** । दशमीप्रागभावाधिकरणत्वेनाभिमतकाले न प्रसिद्धिरित्यर्थः । **तथासत्यपीति** । उक्तसामान्यभेदस्याप्रसिद्धत्वे सत्यपि स्वाधिकरणं यत्कृष्णनवमीप्रागभावाधिकरणं तत्सामान्यभेदस्य विवक्षितस्याभिमतकाले सत्त्वेन क्षत्यभावादित्यर्थः । **एवमपीति** । कृष्णनवमीप्रागभावे दशमीप्रागभावावच्छिन्नत्वनिवेशेपीत्यर्थः । **स्वावच्छिन्नकृष्णनवमीत्यादि** । यद्यपि सर्वांशे न्यूनवारकेतरवारकपर्याप्तिनिवेशं विधाय स्वावच्छिन्नकृष्णनवमीप्रागभावावच्छिन्नभेदनिवेशेपि नोक्तदोषस्तथापि लाघवादुक्तप्रकारानुसरणं कृतमिति बोध्यम् । स्वपदार्थस्योपस्थितशुक्लदशमीत्वेन व्यापकताशरीरे प्रवेशे शुक्लदशम्याः प्रागुक्तसंबन्धेनाधिकरणत्वस्य पूजानधिकरणेषु यत्किञ्चिच्छुक्लदशमीप्रागभावावच्छिन्नकृष्णनवमीप्रागभावान-

यत्वात् । स्वाधिकरणनिष्ठाभावप्रतियोगितानवच्छेदकत्वमपि तादृशावच्छेदकत्वसंबन्धेन स्वावच्छिन्नस्य भेदः । अतस्तादृशावच्छेदकत्वत्वावच्छिन्नाभावनिवेशे यत्किञ्चिद्दशमीप्रागभावाधिकरणनिष्ठाभावप्रतियोगितावच्छेदकत्वमादायासिद्धिवारणाय विशिष्य तत्तत्प्रागभावरूपस्वपदार्थस्य संबन्धमध्ये प्रवेश्यतयाननुगमइति निरस्तम् । देशरूपा सीमाच काशीतः कौशिकीं यावद् यातीत्यादौ । तत्र कौशिक्याः गमनसीमात्वं प्रतीयते । तच्च काशीपूर्वकौशिकीपश्चिमदेशव्यापकगमनानधिकरणत्वम् यावत्पदेन च कौशिक्यनधिकरणकत्वे सति काशीपूर्वकौशिकीपश्चिमदेशव्यापकत्वं गमने प्रत्याय्यते । तत्र द्वितीयार्थोऽवधित्वमवधिमत्वं वा प्रतीचीत्वाद्यन्वयि । निष्कर्षः पूर्ववत्स्वयमूहनीयः ।

---

धिकरणतिथिष्वपि सत्त्वेन तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव पूजायां सत्त्वेन तत्र तदनवच्छेदकत्वस्य न प्रसिद्धिसंभवः तत्तच्छुक्लदशमीप्रागभावत्वेन प्रवेशेच यच्छुक्लदशमीपूर्वषोडशतिथिषु पूजाप्रसिद्धिस्तत्प्रागभावस्य निरुक्तसंवन्धेनाधिकरणेषु वर्त्तमानाभावप्रतियोगितानवच्छेदकत्वस्य पूजायां प्रसिद्धिसंभवेऽप्युक्तशब्दादनुगतबोधानुपपत्तिरतो दशमीप्रागभावत्वेनापस्थितानां स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य संसर्गत्वाभ्युपगमः तत्र स्वपदार्थस्य नान्तर्भावोन्यनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्यान्यसंसर्गत्वासंभवात् यद्दशमीप्रागभावव्यक्तेः पूर्वं कृष्णनवमीमारभ्य सर्वतिथिषु पूजाधिकरणत्वं तस्यैवोक्तसंवन्धेन पूजायां सत्त्वसंभवः स्वनिरूपिताधिकरणतावद्वृत्तिभेदप्रतियोगितावच्छेदकत्वसंवन्धे भेदप्रतियोगितावच्छेदकीभूतेपि न स्वपदार्थप्रवेशः अन्यनिरूपिताधिकरणत्वघटितस्यान्यसंवन्धत्वासंभवात् नच स्वनिरूपिताधिकरणतावद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वसंसर्गेपि स्वपदार्थस्य मास्तु प्रवेशोन्यनिरूपिताधिकरणत्वस्यान्यसंसर्गत्वाभावाद्दोषासंभवादिति वाच्यं कतिपयतिथिष्वेव पूजास्थलेऽपि तत्तिथिव्यक्तिवृत्यधिकरणतावद्वृत्तिभेदप्रतियोगितानवच्छेदकत्वस्याधिकरणतावत्तत्तिथिवृत्त्यभावाधिकरणतावद्वृत्तितद्भावतादृशाभावनिरूपिततत्प्रतियोगित्वतदवच्छेदकत्वाभावानांच पूजायां सत्त्वेन तादृशप्रयोगापत्तिवारणायाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितेत्यादिक्रमेण प्रतियोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावस्यैव निवेश्यतया सर्वथैव पूजायामसतस्तस्य तत्र संबन्धत्वासंभवात् । नच निरूपितत्वसंबन्धावच्छिन्नकिञ्चिन्निष्ठावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वेनाधिकरणनिष्ठावच्छेदकत्वप्रवेशे तत्प्रागभावनिरूपिताधिकरणत्वघटिताभावस्य पूजायां संभवइति वाच्यं तत्तिथिवृत्तित्वविशिष्टतादृशप्रागभावाधिकरणत्वमादाय प्रागुक्तप्रयोगापत्तितादवस्थ्यात् । तद्व्यक्तित्वनिष्ठावच्छेदकत्वभिन्नावच्छेदकत्वानिरूपितत्वेन निरूपितत्वसंबन्धावच्छिन्नावच्छेदकत्वोपादानेहि सएवाननुगमइत्यभिप्रेत्याह । **अतइत्यादि** । यदिच शुक्लदशमीप्रागभावत्वसमानाधिकरणोभयावृत्तिधर्मत्वसमानाधिकरणावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपितत्वसंबन्धावच्छिन्नस्ववृत्यवच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितस्ववृत्त्यवच्छेदकतानिरूपितेत्यादिक्रमेणावच्छेदकत्वाभावं निवेश्य तेन रूपेण तस्य संसर्गत्वोक्तौ न कोऽपि दोषः । स्वपदार्थस्य संसर्गमध्येप्रवेशाभावेऽपि क्षत्यभावादन्यनिष्ठावच्छेदकत्वघटिताभावस्य तत्संसर्गत्वासंभवात्तद्व्यक्तित्वनिष्ठावच्छेदकतायाअप्युक्तसामानाधिकरण्येनानुगतरूपेणैव प्रवेशादिति विभाव्यते तदा लाघवादेव स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य संसर्गत्वेनोपादानमिति विभावनीयम् ॥

**देशव्यापकगमनेति** । अत्रव्यापकत्वनिवेशः कौशिकींयावद्गत्वा मध्यप्रदेशादेव कुतश्चित्परावृत्तिस्थलेऽपि काशीतः कौशिकीं यावद्गच्छतीतिप्रयोगवारणाय विहितः । अथ यः कश्चित् यावत् कौशिकीं प्रयाति सोपि येनकेनचिदेकेन मार्गेणेति तस्यापि गमनं न काशीपूर्वकौशिकीपश्चिमसर्वप्रदेशइति कुत्रापि न व्यापकत्वसंभव इति चेन्न काशीपूर्वत्वपश्चिमत्वयोरधिकरणं काश्यादिसदृशमेव ग्राह्यम् सादृश्यञ्चाखण्डत्वेन तथाच काशीनिरूपितपूर्वत्वकौशिकीनिरूपितपश्चिमत्ववदखण्डभूभागवृत्तिप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वमेव व्यापकत्वं पर्यवसितम् एवञ्च काशीपूर्वत्वाधिकरणे यतःपरावृत्तिस्तत्पूर्वदेशेऽखण्डे प्रतियोगिव्यधिकरणगमनाभावसत्त्वान्नापत्तिः यत्र कौशिकीपर्यन्तं गमनं तत्र काशीपूर्वत्वकौशिकीपश्चिमत्वाधिकरणे यत्रप्रतियोगिव्यधिकरणोऽभावोगमनस्य न तस्याखण्डत्वं काशीपूर्वत्वाश्रयनिरूपितदक्षिणोत्तरत्वान्यतरत्वावच्छिन्नाभावाश्रयत्वस्यैवाखण्डत्वरूपतया तस्याभावात्तत्तद्भागेऽन्यतरस्यैव सत्त्वात् तादृशाधिकरणेचाखण्डे गमनाभावो न प्रतियोगिव्यधिकरणइत्यनुपपत्तिरपि नेति । यद्वा दैशिकविशेषणत्वस्वाश्रयनिरूपितदक्षिणोत्तरत्वान्यतमसंबन्धेन व्यापकत्वं बोध्यमाश्रयेचाखण्डत्वं नवाच्यमिति भावः । **निष्कर्ष इति** । पश्चिमत्वं यावच्छब्दार्थः द्वितीयान्तार्थस्य कौशिकीनिरूपितावधिमत्त्वस्य तत्रान्वयः तस्यच स्वावध्यवृत्तित्वविशेषितव्यापकत्वसंबन्धेन गमनादिक्रियायामन्वयः व्यापकत्वं च काशीनिरूपितपूर्वत्वविशेषितस्वरूपसंबन्धेन स्वाधिकरणनिष्ठभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपम् स्वावध्यवृत्तित्वविशेषणादभिविधिस्थलव्यावृत्तिः काशीनिरूपितपूर्वत्वाधिकरणत्वप्रवेशात् कौशिकीपश्चिमत्वाश्रयकाशीपश्चिमदेशस्य गम-

अभिविध्यर्थो यावच्छब्दः कार्तिकमारभ्य चैत्रं यावच्छीतं भवतीत्यादौ काशीतः पाटलिपुत्रं यावद्वृष्टो देव इत्यादावभिविधिस्तत्पर्यन्ताभिव्याप्तिः । एवंच प्रथमे कार्तिकपूर्वकालोत्तरचैत्रोत्तरकालपूर्वकालव्यापकत्वं चैत्रोत्तरकालाऽवृत्तित्वसहितं शीतभवने द्वितीये च काशीपश्चिमदेशपूर्वपाटलिपुत्रपूर्वदेशपश्चिमदेशव्यापकत्वं पाटलिपुत्रपूर्वदेशावृत्तित्वसहितं वृष्टौ यावच्छब्देन प्रत्याय्यते । विशेषः पूर्ववत् । यावच्छब्दसमानार्थाकाङ्क्षशब्दस्थलेऽपि दर्शितैव रीतिरवसेया । तद्योगे च पञ्चमी साधुः । यज्ञमनु प्रावर्षदित्यादावनुशब्दार्थः कारकत्वरूपं हेतुत्वम् । अनुर्लक्षणइत्यत्र कर्मप्रवचनीयसञ्ज्ञाविधायकसूत्रे लक्षणपदस्य कारकहेतुपरत्वात् । तत्रच यज्ञान्वितस्याधेयत्वरूपद्वितीयार्थस्यान्वयः, हेतुतायाश्च निरूपकत्वसम्बन्धेन वृष्टावन्वयः, जन्यत्वं वाऽनुशब्दार्थः तत्र निरूपितत्वरूपद्वितीयार्थस्य यज्ञान्वितस्यान्वयः, जन्यतायाश्चाश्रयत्वसम्बन्धेन वृष्टावन्वयः । अन्वर्जुनं योद्धार इत्यत्राप्रकर्षरूपं हीनत्वमनुशब्दार्थः अर्जुनावधिकत्वं द्वितीयान्तार्थस्तस्य चापकर्षेऽन्वयः । अवधित्वस्यापादानतारूपत्वेऽपि क्रियान्वयाभावान्न पञ्चमीप्रसक्तिः अस्मादयं दीर्घ इत्यादौ भवतीत्यस्याध्याहारेणैव पञ्चम्युपपादनात् । अतः षष्ठ्यपवादतानिर्वाहः । वृक्षं प्रति विद्योतते विद्युत्, मातरं प्रति साधुः, यो मां प्रति स्यात्, वृक्षं प्रतिसिञ्चतीत्यादौ लक्षणेत्थंभूतेत्यादिसूत्रानुशिष्टकर्मप्रवचनीयसञ्ज्ञकप्रत्यादिशब्देषु प्रथमे परिचायकत्वरूपं लक्षणत्वं परिचेयत्वरूपं वा लक्ष्यत्वं कर्मप्रवचनीयार्थः । वृक्षप्रकारेण विद्युद्विद्योतनज्ञानाद्वृक्षस्य परिचायकता । द्वितीयार्थश्चाधेयत्वं निरूपितत्वं वा । द्वितीये साधुत्वं प्रियकारित्वं साधुत्वघटप्रियान्वयी संबन्धः कर्मप्रवचनीयार्थः । संबन्धान्वयिप्रतियोगित्वं तन्निरूपकत्वं वा द्वितीयार्थः मातृसम्बन्धिप्रियकारीत्याकारको बोधः । तृतीये भागः स्वत्वाश्रयः प्रत्याद्यर्थः । तदन्वयी सम्बन्धो द्वितीयार्थः । इत्थंचास्मत्संबन्धी यो भागः स्यादिति बोधः । चतुर्थे कर्मण्येव द्वितीया, षत्वबाध एव संज्ञाफलम् । प्रतिश्च निरर्थकः गृहे

---

नानधिकरणत्वेऽपि न व्यापकत्वहानिरिति निष्कर्ष इत्यर्थः । **कार्तिकपूर्वकालोत्तरेति** । कार्तिकपूर्वत्ववत्क्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वेसति तादृशपूर्वत्ववत्क्षणध्वंसाधिकरणत्वम् सत्यन्तमात्रं च कार्तिकाद्यक्षणेऽपि नास्ति कार्तिकपूर्वत्ववत्स्वपूर्वतृतीयक्षणध्वंसाधिकरणद्वितीयक्षणध्वंसाधिकरणत्वात्, । [illegible]मात्रं तु कार्तिकपूर्वसकलकालसाधारणं तादृशपूर्वत्वाश्रयस्वपूर्वक्षणध्वंसाधिकरणत्वादिति कार्तिकाद्यक्षणोत्पन्नध्वंसप्रतियोगिक्षणध्वंसाधिकरणत्वं विवक्षितम् तच्च न कार्तिकाव्यवहितपूर्वक्षणेऽप्यस्ति कार्तिकाद्यक्षणमारभ्योत्तरकालेषु सर्वत्रैवास्ति, कार्तिकाद्यदिनस्यापि संग्रहाय कार्तिकपूर्वकालोत्तरत्वप्रवेशः कार्तिकत्वाश्रयोत्तरत्वप्रवेशे तन्न स्यात् चैत्रोत्तरपूर्वत्वमात्रस्य चैत्रान्त्यक्षणाव्यवहितोत्तरक्षणप्रागभावाश्रयत्वरूपस्य प्रवेशे कार्तिकपूर्वदिवसेषु शीतानधिकरणेष्वपि सत्त्वेन व्यापकता न स्यात् कार्तिकपूर्वकालोत्तरत्वमात्रप्रवेशे चैत्रोत्तरग्रीष्मकाले शीतानधिकरणेऽपि तदाश्रयत्वसत्त्वेन व्यापकता न स्यादित्युभयोपादानम् । वायुवहनस्य सर्वमाससाधारण्यात् कार्तिकमारभ्य चैत्रं यावद्वायुर्वातीति प्रयोगोनेष्ट इति तद्वारणाय चैत्रोत्तरकालावृत्तित्वमुपात्तम् । कार्तिकमारभ्यचैत्रपर्यन्तं शीतभवनस्थले यथा कार्तिकमारभ्य चैत्रं यावत् शीतंभवतीति प्रयोगस्तथा पौषमारभ्य चैत्रंयावत् शीतं भवतिति प्रयोगोपीष्यत एवेति यत्पूर्वकालोत्तरत्वं प्रविष्टं न तत्पूर्वकालावृत्तित्वं निवेशितुम् । **विशेषः पूर्ववदिति** । यावच्छब्दस्याव्यवहितोत्तरत्ववत्क्षणपूर्वत्वमर्थः द्वितीयार्थश्च निरूपितत्वमव्यवहितोत्तरत्वान्वयियावच्छब्दार्थस्य कार्तिकाव्यवहितपूर्वक्षणप्रतियोगिकध्वंसाश्रयत्वावच्छिन्नस्वाश्रयवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वरूपव्यापकत्वस्वानधिकरणकालावृत्तित्वोभयसंबन्धेन समभिव्याहृतशीतादिपदार्थेऽन्वयइत्यादिर्विशेष इत्यर्थः । नच कार्तिकपूर्वमासादेरपि चैत्रपूर्वत्वात्तत्कार्तिकपूर्वकार्तिकोत्तरत्वाच्च न शीते व्यापकत्वसंभव इति वाच्यं स्वाश्रयकार्तिकपूर्वत्वानाश्रयकार्तिकस्यैव प्रवेशेनोक्तदोषासंभवात् । **भवतीत्यस्याध्याहारेणैवेति** । नचावधित्वनिरूपकत्वस्य दीर्घत्वएवान्वयेन भवतीत्यध्याहारेपि न क्रियान्वय इति वाच्यं क्रियानन्वयेऽपादानसंज्ञाभावेन तस्मात्संबन्धसामान्ये षष्ठ्येव हि स्यादिति दीर्घभवनएव तस्यान्वयस्य वाच्यत्वात् ।

**चतुर्थे कर्मण्येवेति** । वृक्षं वृक्षं प्रतिसिञ्चतीति चतुर्थोदाहरणस्थलइत्यर्थो नतु वीप्सास्थल इति वृक्षंवृक्षं प्रति वायसा इत्यत्र सकर्मकक्रियाया अध्याहारयोग्याया अप्यभावेन वर्तन्तइत्यादिस्थले निराकाङ्क्षत्वेन च कर्मणिद्वितीयाया असंभवेनासङ्गतेः उक्तोदाहरणस्थलेच सेकक्रियाकर्मत्वस्य वृक्षे सत्त्वेन कर्मणिद्वितीयैवस्यान्नतुकर्मप्रवचनीयरूपोपपदनिमित्तिका कारकविभक्तेरुपपदविभक्त्यपेक्षया प्रबलत्वादिति भावः । **षत्वबाधइति** । वृक्षंवृक्षं प्रतिसिञ्चतीत्यादौ कर्मप्रवचनीयसंज्ञाया अभावे

गृहेऽश्वइत्यादाविव व्यापकतायां द्विरुक्तिबललभ्यत्वात्प्रतिशब्दस्य व्यापकतार्थकत्वउक्तार्थकत्वेन गृहं व्याप्नुवतेऽश्वा इत्यादाविव द्विरुक्तिरेव न स्यात्। नच प्रतिशब्दस्यापि व्यापकतार्थकत्वं प्रतिदिनमधीतइत्यादौ क्लृप्तम् द्विरुक्तेरपि वृक्षं वृक्षं सिञ्चतीत्यादौ क्लृप्तमिति प्रकृते संभेदेनान्यतरवैयर्थ्यमितिन्यायाद्द्वयोरेव व्यापकताबोधकत्वमवर्जनीयमिति वाच्यम्। प्रतिमासमधीतइत्यादावव्ययीभावे हि प्रथमातिरिक्तविभक्तेरसाधुत्वेन प्रतिशब्देन मासान्वितव्यापकत्वं क्रियायां बोध्यते विभक्तिः साधुत्वार्था। वृक्षं वृक्षं प्रति सिञ्चतीत्यत्रतु सेके द्वितीयार्थकर्मत्वान्वरुद्धप्रकृत्यर्थवृक्षविशेषितव्यापकता बोधयितुं न शक्यते। एकविशेषणत्वेनोपस्थितस्यान्यत्र विशेषणत्वे व्युत्पत्तिविरोधात्। कर्मत्वसंबन्धस्यैव च व्यापकताघटकत्वेन स्वीकरणीयतया वृत्त्यनियामकस्य तस्य तथात्वासंभवाच्च। तस्य सेककर्मत्वआश्रयतासंबन्धघटितव्यापकताप्रत्यायनमपि न युज्यते। प्रकृत्यर्थसुबर्थयोरन्तरा नञर्थातिरिक्तभानस्य व्युत्पत्तिविरुद्धत्वात्। नामूढस्येतरोत्पत्तेः नानुपमृद्य प्रादुर्भावादित्यादौ नञर्थमात्रस्य पञ्चम्यर्थहेतुताया विशेषणत्वेन प्रकृत्यर्थस्य च विशेष्यत्वेनान्वयात्। तस्मात्प्रतिरनर्थक एव। द्विरुक्तान्वये तात्पर्यबलाच्च सेचनकर्मत्वे वृक्षादेर्व्यापकत्वं संसर्गतयैव भासते। यदिच वृक्षं प्रति सिञ्चतीत्यादावुपसर्गस्य प्रतेर्वाच्यो द्योत्यो वा कश्चिद-

---

प्रतेरुपसर्गसंज्ञाया दुर्वारतयोपसर्गस्थनिमित्तपरस्य धात्वादेः सस्य षत्वं स्यादिति तद्वाधनायोपसर्गसंज्ञाबाधकैतत्संज्ञाकरणं तथासति प्रतेरुपसर्गत्वाभावान्न सस्य षत्वमिति भावः। **उक्तार्थकत्वेनेति।** प्रतिशब्देनोक्तोव्यापकत्वरूपोर्थो यस्यास्तत्त्वेन द्विरुक्तेस्तदर्थं सा नादरणीयेत्यर्थः। यद्यपि द्विरुक्तिर्न शब्दरूपाऽपितु समानानुपूर्वीकशब्दस्यावृत्तिरिति न तस्यार्थसंभवस्तथाप्यावृत्तशब्दस्य व्यापकत्वघटितार्थे लाक्षणिकतया तात्पर्यग्राहकत्वेन द्विरुक्तेर्लक्ष्यार्थबोधप्रयोजकत्वेन स्वप्रयोज्यत्ववद्बोधविषयरूपोर्थः कथञ्चित्संभवतीति बोध्यम्। **नशक्यत इति।** अनुषक्तेन प्रतिशब्देनेत्यनेन संबध्यते प्रतिशब्दस्य विशिष्य वृक्षादिव्यापकत्वे शक्त्यावानन्त्यं स्यादतः सामान्यतएव व्यापकत्वे शक्तिर्वाच्या तथाच विशेषव्यापकतालाभाय द्वितीयाप्रकृत्यर्थस्यैव तत्र निरूपितत्वसंबन्धेनान्वयो वाच्यः सच न संभवति धर्मिपारतन्त्र्यं विनैकपदार्थनिष्ठविशेष्यतानिरूपितविशेषणताप्रयोजकोपस्थितीयविषयत्वस्य तदन्यपदार्थनिष्ठविशेष्यतानिरूपितविशेषणताप्रयोजकत्वाभावनियमात् प्रकृतिद्वितीययोः परस्परार्थान्वये प्रकृतिप्रत्ययौसहार्थंमित्यादिन्यायेन गृहीताकाङ्क्षत्वेन द्वितीयार्थेन कर्मत्वेन प्रकृत्यर्थान्वयस्यावश्यकत्वाद्वृक्षपदजन्योपस्थितीयविषयतायाः कर्मत्वनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकत्वावश्यम्भावे व्यापकत्वनिष्ठविशेष्यतानिरूपितविशेषणत्वप्रयोजकत्वासंभवात्, प्रत्ययार्थविशेष्यतानिरूपितस्वार्थनिष्ठविशेषणताकबोधसामग्र्यास्तदितरार्थविशेष्यकस्वार्थबोधे प्रतिबन्धकत्वे पर्यवसानादिति भावः। एतेन युगपदुपस्थितानां पदार्थानां विशेष्ये विशेषणमितिन्यायेन शाब्दबुद्धिपक्षस्यैवाभ्यर्हितत्वेनोपस्थितस्य वृक्षस्य विनिगमकाभावेन कर्मत्वव्यापकत्वयोरुभयोर्युगपदन्वयः स्यादेवेति निरस्तम्। प्रतिशब्दस्य कर्मत्वसंबन्धेन व्यापकत्वमर्थस्तादृशेच व्यापकत्वे तात्पर्यग्राहिका द्वितीयेति द्वितीयार्थाविशेषणस्य प्रत्यर्थस्य व्यापकत्वेऽन्वयसंभव इत्यत आह। **कर्मत्वसंबन्धस्यैवेति। तथात्वेति।** व्यापकताघटकत्वेत्यर्थः। **तस्येति।** प्रतिशब्दस्येत्यर्थः। **सेककर्मत्वइति।** यद्यपि द्वितीयया नसेककर्मतात्वेनोपस्थितिस्तथापि समभिव्याहारबलाद्वृक्षनिष्ठाभावप्रतियोगितानवच्छेदकसेककर्मतात्ववत्त्वरूपव्यापकत्वस्य प्रतिशब्दतोद्वितीयार्थकर्मत्वे भानाभ्युपगमे तथा लाभसंभवोऽत्रपक्षे कर्मत्वे वृक्षपदार्थस्यानन्वयेनैकत्रविशेषणत्वेनेत्यादिनियमविरोधस्यापि नावकाशः प्रतिशब्दार्थव्यापकत्वएव तस्य भानोपगमादितिभावः। **व्युत्पत्तिविरुद्धत्वादिति।** प्रत्ययस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरुद्धत्वादित्यर्थः। नञर्थातिरिक्तेत्यस्य फलमाह— **नामूढेत्यादि।** तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेरिति न्यायसूत्रम् अभावाद्भावोत्पत्तिर्नानुपमृद्यप्रादुर्भावादिति च तेषां दोषाणां मध्ये मोहो मिथ्याज्ञानं पापीयान् अमूढस्य मोहरहितस्य इतरयो रागद्वेषयोरुत्पत्तिर्न यत इत्यर्थः। अभावादेव भावोत्पत्तिः बीजमनुपमृद्य बीजनाशमविधायाङ्कुरस्य प्रादुर्भावो न यत इतिच अत्रमोहाभावप्रयुक्तरागद्वेषोत्पत्त्यभावस्य बीजविनाशाभावप्रयुक्ताङ्कुरप्रादुर्भावाभावस्य च हेतुत्वं विवक्षितं न यतः पञ्चमी तदर्थयोरुत्पत्तिप्रादुर्भावयोरिति प्रकृत्यर्थस्य नञर्थाभावे प्रतियोगितासंबन्धेनान्वयस्तस्य पञ्चम्यर्थहेतुत्वे इति प्रकृतिप्रत्ययार्थयोरन्तरा नञर्थस्य भानात्तदतिरिक्तोपादानमावश्यकमिति भावः॥ **संसर्गतयैवेति।** एवकारेण प्रकारतया भानव्यवच्छेदस्तेनकर्मत्वएव वृक्षपदार्थस्यान्वयः ननु प्रतिशब्दार्थव्यापकत्वे वृक्षादिघटितार्थे तस्य लक्षणातएव ततोविशेषव्यापकतालाभादिति शङ्का निरस्ता, वृक्षंवृक्षंसिञ्चतीत्यत्र व्यापकत्वबोधस्य प्रकृत्यर्थसंसर्गतयैव निर्वाहतया प्रतिशब्दसमभिव्याहारस्थलेऽपि तादृशसामग्र्या अक्षतत्वेन ततएव तथैव व्याप-

न्योऽर्थस्तदास्तु स एवात्रापि तदर्थः । अतएव तस्यैवास्यापि प्रतिशब्दस्य प्रयोगो नानर्थकः । वस्तुतोऽनर्थकयोः कर्मप्रवचनीयाधिपरिशब्दयोः प्रयोगवत्ताहशप्रतेरपि प्रयोगस्य प्रयोजनान्तरानुपपत्तिश्छिन्न्या । प्रतेर्यत्र व्यापकतार्थकत्वं, तत्र प्रतिवृक्षं सिञ्चतीत्यव्ययीभावसमास एव नियतः । तदर्थकाव्ययस्याव्ययीभावसमासविधेर्विभाषाधिकारीयताविरहेण नित्यत्वादतोऽवीप्सया प्रतिवृक्षं सिञ्चतीतिवद्वृक्षं प्रतिसिञ्चतीति न प्रयोगः । यत्र व्यापकत्वार्थकेनाव्ययेनाव्ययीभावसमासस्तदुत्तरं सर्वत्र प्रथमाविभक्तिरेव नतूपकुम्भे गच्छतीतिवत् प्रतिगृहेऽश्वा इत्यादिरपि प्रयोगः उक्तयुक्त्या तत्र प्रतिनाऽश्वादौ गृहादिव्यापकताया बोधयितुमशक्यत्वात् । तदाधारत्वादिरूपसप्तम्याद्यर्थे च समासार्थस्य गृहादिव्यापकत्वस्याश्रयतासम्बन्धेन तदर्थस्य व्यापकरूपधर्मिणो वाऽभेदसंबन्धेनान्वये मेयत्वे घटः घटवृत्तौ घट इत्यादिप्रयोगवारणाय कल्प्यायाः सप्तम्यर्थाधारताया आश्रयत्वसंबन्धेनाभेदसंबन्धेन वा प्रकृत्यर्थानन्वयव्युत्पत्तेर्विरोधात् । उपकुम्भे निधेहि, उपकुम्भादागतः, उपकुम्भेन कृत, इत्यादौ च विवक्षितस्याधारत्वापादानत्वकर्तृत्वादौ कुम्भसमीपादेराधेयतासंबन्धेनान्वयस्याधेयत्वाद्यौ निरूपितत्वसंबन्धेन तदन्वयस्य वा बोधे न कश्चिद्व्युत्पत्तिविरोध इत्युपपद्यन्ते तथा प्रयोगा इति ध्येयम् । त्वां च मां चान्तरेत्यादावन्तरान्तरेणयुक्तइति द्वितीयाया निरूपितत्वमर्थः । तस्यान्तरापदार्थतावच्छेदकमध्यत्वेऽन्वयः एवमन्यत्रापि तदर्थस्तूक्तदिशा स्वयं परिच्छेद्यः ॥ इति द्वितीयाविभक्त्यः ॥

कारकविभक्तितृतीयायाः क्रियान्वयि कर्तृत्वं करणत्वं चार्थः कर्तृकरणयोस्तृतीयेत्यनुशासनात् । कर्तृत्वंच मुख्यं क्रियानुकूलकृतिरेव । साच कर्त्राख्यातसमभिव्याहृते चैत्रः पचतीत्यादौ क्रियाविशेष्यतयाख्यातेन प्रतिपाद्यते चैत्रेण पच्यते, शय्यते, इत्यादिकर्मभावाख्यातस्थले च क्रियायां विशेषणतया तृतीयया सा प्रत्याय्यते । यत्तु तत्राख्यातार्थ एव कृतिः, तृतीयार्थश्चाधेयत्वम् । तस्य

---

कत्वबोधस्याभ्युपगन्तुमुचितत्वाल्लक्षणाग्रहव्यापकत्वोपस्थित्योः सर्वत्र कल्पनस्य गौरवेण हेयत्वादिति ॥ अन्योर्थ इति । प्रतिगच्छति प्रतिसिञ्चतीत्यादौ स्वकर्मकसजातीयक्रियोत्तरत्वादिरूपोर्थ इत्यर्थः वृक्षंप्रतिसिञ्चतीत्यत्र चैत्रंप्रतिसिञ्चतीति वक्तुमुचितम् । सएवेति । स्वकर्मकत्वपरित्यागेन सजातीयक्रियोत्तरत्वादिरूपः क्रियान्वय्यर्थ एवेत्यर्थः । घटवृत्तौ घटइतीति । इदञ्च सप्तम्याधेयत्वे प्रकृत्यर्थस्याभेदान्वयोपगमे दोषः सप्तम्यर्थाधेयत्वे घटवृत्तेर्घटनिष्ठाधेयत्वस्य तादात्म्यात् तत्स्वरूपेण घटे सत्त्वात् आधारत्वरूपसप्तम्यर्थेऽभेदेनान्वयेतु भूतलवृत्तौ घट इत्यापत्तिर्बोध्या भूतलवृत्तेर्भूतलनिष्ठाधारत्वतादात्म्यस्याधारत्वे तस्य च निरूपकत्वेन घटे सत्त्वादिति ॥

इति द्वितीयाव्युत्पत्तिवादगूढार्थतत्वालोकः ।

लः कर्मणीत्यादिसूत्रस्य लाघवसहकृतस्य कर्तृत्वकर्मत्वयोरेवाख्यातशक्तिग्राहकत्वेनाख्यातत्वेनैव तयोराख्यातस्य शक्ततया कर्माख्यातात्कर्मत्ववत्कर्तृत्वस्याप्युपस्थितिसंभवात्तयोर्यस्य धात्वर्थविशेष्यतया भानं तस्य प्रधानत्वेन तत्प्रतिपादकतया कर्माख्यातकर्त्राख्यातत्वादिना व्यपदेशस्यापि गतिसंभवात् यगादिसमभिव्याहृतात्मनेपदज्ञानस्य कर्तृत्वविशेषितधात्वर्थविशिष्टकर्मत्वबोधे कारणत्वात्कर्तृत्वस्य कर्माख्यातस्थले धात्वर्थविशेष्यत्वासंभवात् तृतीयारहितकर्त्राख्यातस्थलानुरोधेनाख्यातस्य कर्तृत्वार्थकत्वस्यावश्यकत्वात् चैत्रेणपच्यत इत्यत्राप्याख्यातादेव कर्तृत्वबोधो न तृतीयया स्वीकार्यः कर्तृकरणयोस्तृतीयेतिसूत्रस्य तु धात्वर्थविशेषणतया कर्तृत्वकरणत्वयोस्तात्पर्यविषययोस्सतोस्तदाश्रयबोधकात् प्रातिपदिकात् तृतीयेत्यर्थः तत्र कर्तृत्वस्यान्यलभ्यत्वान्न तत्र हि शक्तिः करणत्वस्य चातथात्वात्तत्र शक्तिराख्यातार्थविशेषणतया च साक्षात्प्रातिपदिकार्थान्वयस्य चैत्रस्तण्डुलः पच्यत इत्यत्र कर्तृत्वे प्रथमान्तार्थान्वयप्रसङ्गभयेनास्वीकरणीयत्वात् तृतीयासमभिव्याहारस्यैव तत्प्रयोजकत्वकल्पनेनोक्तप्रसङ्गवारणेऽपि भिन्नविषयकप्रत्यक्षादिकं प्रति शाब्दसामग्र्याः प्रतिबन्धकत्वस्याधेयत्वस्य तृतीयान्तार्थसंसर्गतापक्षेऽधिकस्यापत्त्या लाघवानुरोधाच्चाधेयत्वं तृतीयार्थः स्वीक्रियतेऽनन्यलभ्यत्वात्तत्रशक्तिः संख्याशक्तायास्तृतीयाया लक्षणैव वेत्यन्यदेतदिति कस्यचिन्मतमुपन्यस्यति । यत्त्विति । चैत्रेणपक्वः पाच्यइत्यादौ कर्तृत्वबोधस्यानुभविकत्वेन तृतीयातएव सस्वीकरणीयः कृत्प्रत्ययस्योक्तस्य कर्तृत्वेशक्तिग्राहकाभावेन तस्मात् कर्तृत्वबोधाभावात् । गतिसत्त्वेऽपि सकृदुच्चरितइतिन्यायस्य सत्यपितात्पर्ये स्वेष्टबोधस्यैकस्मात्पदाददर्शनेन अनेकपदरचनायासदर्शनेन च सार्वजनीनेन क्लृप्तस्यातिक्रमस्यान्याय्यत्वादनुशासनाभावेऽपि कृतकर्मानुशिष्टस्य कर्मणो बोधयतः कर्तृत्वशक्ततायास्तद्बोधकतायाश्च कल्पनस्यानौचित्यात् । कर्तृकरणयोस्तृतीयेत्यनुशासनस्य

चाख्यातार्थकृतिविशेषणतयान्वयः, कृतेश्च क्रियाविशेषणतया तथा कृतिबोधने चात्मनेपदरूपस्याख्यातस्य यगादिसमभिव्याहारज्ञानमपेक्षितम् पचति पचतइत्यादौ तथा कृत्यन्वयाबोधात् । चैत्रेण ज्ञायते गम्यतइत्यादौ तृतीयाया आधेयतार्थत्वं क्लृप्तमेवेति न तत्कल्पनमधिकमिति तन्न । चैत्रेण पक्वमित्यादौ तृतीयायाः कृत्यर्थकताया आवश्यकत्वात् । तत्र कृत्यर्थकाख्यातविरहेण कृतः कर्तृकर्मवाचकत्वेन कृत्यर्थताविरहात् । यदिच कर्तृकृतः कृतावेव शक्तिर्नतु विशिष्टे ज्ञातेत्यादौ त्वाश्रयार्थकतायाः क्लृप्तत्वेन तत्र कृत्यन्वयादेव कर्तृलाभसंभवादित्युच्यते । तथापि कर्मकृतः कृत्यर्थत्वमप्रसक्तमेव । उक्तप्रत्ययस्य क्वचित्कर्तृवाचकत्वेऽपि चैत्रेण पाच्यः दुष्पचश्चैत्रेणौदनः चैत्रेणौदनस्य पाक इत्यादौ कृतां न कृतिबोधकत्वमिति तत्र कृतिबोधानुरोधेन तृतीयायाः कृतिवाचकत्वमावश्यकमेव । एवंच चैत्रेण पच्यत इत्यादावपि तृतीययैव कृतिर्बोध्यते । तत्र चैत्रादेः संबन्ध एवाधेयत्वमित्यतएव निर्वाहे कृतावाधेत्वस्य विशेषणतया भानोपगमस्यानुचितत्वात्, तथासति तत्संसर्गस्यापि विषयताकल्पनाधिक्यात् तादृशवाक्यज्ञानघटितशाब्दसामग्र्यामधिकौपस्थितिनिवेशने च गौरवात् । अथ तत्र कृतेस्तृतीयार्थतोपगमे चैत्रेण पच्यते न मैत्रेणेत्यादौ तृतीयान्तार्थमैत्रीयकृतेरभावः पाकेऽन्वेतीत्युपेयम् । तस्याश्च समवायसंबन्धावच्छिन्नाभावो मैत्रकर्तृकपाकेऽपीत्यतिप्रसङ्गः । जन्यतायाश्च वृत्त्यनियामकतया तत्संबन्धावच्छिन्नाभावःप्रसिद्ध्यत्येव न,मैत्रकर्तृकपाककर्मत्वाभावस्य कर्मणि तण्डुलादौ प्रतीतिश्च कर्मवाचकपदासमभिव्याहारस्थले दुर्घटा । आधेयत्वस्य तृतीयार्थत्वे चाधेयत्वाभावबोध एव कृतावङ्गीक्रियते । नच तथासति मैत्रचैत्रोभयकर्तृकपाकसत्त्वे चैत्रीयपाककृतौ मैत्रवृत्तित्वाभावसत्त्वात् मैत्रेण न पच्यतइति प्रयोगापत्तिरिति वाच्यम् । मैत्रेण न पच्यतइत्यतो वर्त्तमानपाकानुकूलकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावबोधनादुक्तस्थले च तादृशकृतित्वसामानाधिकरण्येन मैत्रवृत्तित्वसत्त्वात्तादृशवाक्याप्रामाण्यात् । वर्तमानत्वस्य कृतिविशेषणतया च चैत्रेण पक्ष्यतेऽपच्यत नतु पच्यतइत्युपपद्यते क्रियाविशेषस्य तथात्वात् । यदा मैत्रेणान्यत्क्रियते नतु पच्यते तदा मैत्रेण न पच्यतइति प्रयोगश्च । नचाख्यातेन कालस्य कृतिविशेषणतया बोधनात्कालविशेषविशेषितकृतित्वस्यान्वयितावच्छेदकतया तदवच्छेदेन नञाभावः शक्यो बोधयितुम् नतु कालक्रियोभयविशेषितकृतित्वावच्छेदेन कर्मप्रत्ययस्थले क्रियायाः कृतिविशेषणत्वाभावेनतद्घटितधर्मस्यान्वयितावच्छेदकत्वाभावादिति वाच्यम् । क्रियाविशेषघटितधर्मस्यान्वयितानवच्छेदकत्वेऽपि तदवच्छिन्नत्वविशिष्टविशेषणताया अभावसंसर्गतया भानसंभवेन सामञ्जस्यात् । नचान्वयितावच्छेदकावच्छिन्न-

---

करणत्वांश इव समानपदश्रुतेः कर्तृत्वांशेऽपि शक्तिग्राहकत्वस्यैवोचितत्वात् एवंच पाच्यइत्यादिस्थलानुरोधेन सिद्धस्य कार्यकारणभावस्य सामान्यतो धात्वर्थनिष्ठविशेष्यतानिरूपितकर्तृत्वप्रकारताकबोधतृतीयासमभिव्याहारतज्जन्योपस्थित्यादिकार्यकारणभावरूपताया एवोचितत्वेन चैत्रेण पच्यत इत्यत्रापि तृतीययैव बोधस्य कर्तृतायाः कर्माख्यातादुपस्थितिसंभवेऽपि स्वीकारः । नह्येवमनिमित्तं सकृदुच्चरितइत्यस्य बाधः कालादेरन्यतः प्रतीत्यसंभवात्पदान्तरस्यापि तदतिरिक्तैकार्थबोधनव्यापृतत्वेन ततस्तद्बोधाभ्युपगमेप्युक्तबाधस्य समानत्वादनुशासनग्राहितकालशक्तिकादाख्यातादेव बोधाभ्युपगमोहि गत्यभावनिबन्धनः । तृतीयायाः कर्तृत्वबोधकत्वे व्यवस्थितेचाधेयत्वस्य प्रकारत्वसंसर्गत्वयोर्विकल्पे सति भिन्नविषयकप्रत्यक्षप्रतिबध्यप्रतिबन्धकभावलाघवापेक्षयाऽकारणोक्तनियमभङ्गापत्त्यभावसहकृतस्याधेयत्वशक्तिग्रहतज्जन्यतदुपस्थितिनियमतत्संसर्गशाब्दबोधविषयत्वाकल्पनलाघवस्य प्रबलत्वेन संसर्गतैव व्यवस्थापनीयाऽन्यथा स्वनिष्ठाधारतानिरूपिताधेयत्वादीनामधिकाधिकपदार्थघटितानां प्रकारत्वापत्तेराधेयत्वानुभवस्य संसर्गतयाप्युपपत्तेरेतत्तत्त्वस्य प्रथमायां विस्तरेणोक्तेरित्यभिप्रायेण निराकरोति । **तन्नेति । दुर्घटेति** । इदमुपलक्षणम् यत्कर्तृकपाकक्रियाया अप्रसिद्धिस्तृतीयान्ततद्बोधकपदसमभिव्याहारस्थले निरुक्तविशिष्टाभावस्याप्रसिद्ध्या तद्बोधोविशेषदर्शिनां कर्मवाचकपदसमभिव्याहारस्थलेऽपि दुर्घट इत्यपि बोध्यम् । **इत्युपपद्यतइति** । अन्यथा पाककृतित्वावच्छेदेन तत्र चैत्रवृत्तित्वाभावासंभवादतीतभूतभविष्यत्पाककृतौ चैत्रवृत्तित्वस्यैव सत्त्वादनुपपत्तिः स्यात् । **तथात्वादिति** । प्रकृतक्रियाविशेषितकृतित्वस्यावच्छेदकत्वोपगमादित्यर्थः । **प्रयोगश्चेति** । उपपद्यत इति शेषः । अन्यथा वर्तमानकृतित्वावच्छेदेन मैत्रवृत्तित्वाभावासंभवात् क्रियान्तरकृतेर्मैत्रवृत्तित्वात्तदनुपपत्तिः स्यादिति भावः । **नचेति** । नियमइत्यनेनान्वयः ।

त्वमेव विशेषणसम्बन्धे भासतइति नियमः, । तथासति शरदि पुष्पन्ति सप्तच्छदा इत्यादौ सप्तच्छदपुष्पोत्पत्तित्वादेः शरद्वृत्तित्वान्वयितानवच्छेदकतया आख्यातान्तप्रतिपाद्यतावच्छेदकपुष्पोत्पत्तित्वावच्छेदेन च शरद्वृत्तित्वान्वये बाधादवच्छेदकावच्छेदेनान्वयानुपपत्तेरन्वयितावच्छेदकसामानाधिकरण्यमात्रेण च तदन्वयोपगमे शरदि पुष्पन्ति सप्तच्छदाः शरदि पुष्पन्ति चम्पका इत्यविशेषेण प्रयोगापत्तेः। यदिच तत्र शरत्संबन्धः सप्तच्छदविशेषणतया भासते न पुनराख्यातार्थे धातुमात्रार्थे वा पुष्पोत्पत्तौ, अतएव कारकविभक्तिरूपसप्तम्यनुपपत्त्या कालरूपविशेषणपदोत्तरं स्वातन्त्र्येण सप्तमी सर्ववर्मणा सूत्रिता । एवंच क्रियानिमित्तत्वरूपकारकत्वगर्भकर्तृत्वस्याख्यातार्थत्वेन पुष्पोत्पत्तिनिमित्तत्वरूपाख्यातार्थस्य विशिष्टान्वयानुरोधेन शरत्संबन्धेप्यन्वय उपगन्तव्य इति कारकत्वस्याख्यातर्थत्वानुपगमेऽपि शीतलं सरोऽवगाढवतो निदाघदुःखं व्यपैतीत्यादाविवोद्देश्यविधेयभावमहिम्नोद्देश्यविशेषणशरत्संबन्धेन विधेयभूतपुष्पोत्पत्तेः प्रयोज्यप्रयोजकभावस्य संसर्गमर्यादया भानमिति चम्पकादिपुष्पोत्पत्तौ शरत्संबन्धनिमित्तकत्वाभावान्नोक्तातिप्रसङ्ग इत्युक्तस्थलेऽवच्छेदकावच्छेदेनान्वय एव नोपेयत इत्युच्यते, तथापि तादृशनियमो निष्प्रामाणिक एव । नच तादृशनियमानुपगमइह भवने मैत्रेणैव पक्ष्यते तेमनमित्यत्रैतद्भवनाधिकरणकतेमनपाकत्वेन रूपेण शब्दात्पाकानुपस्थित्या तदवच्छिन्ने मैत्रान्यसमवेतभविष्यत्कृतिविषयत्वव्यवच्छेदबोधासंभवकथनं दीधितिकृतां विरुध्येत इति वाच्यम्, अवच्छेदकावच्छेदेन विशिष्टबुद्धौ धर्मिणि विशेषणतया भासमानमेव रूपं विशेषणे अवच्छिन्नत्वसंबन्धेन विशेषणमित्याशयेन तेषां तदभिधानात्। विशेषणसंबन्धे तदवच्छिन्नत्वमेव तदवच्छेदेन विशिष्टबुद्धौ भासतइत्युपगमे शब्दानुपस्थितरूपावच्छेदेन विशेषणान्वये बाधकाभावात्। नचावच्छेदकावच्छिन्नत्वस्यावच्छेदकावच्छेदेन विशिष्टबुद्धौ विशेषणांशे भानमसंभवदुक्तिकम् घटो द्रव्यमित्यादौ घटत्वावच्छेदेन द्रव्यत्वादिमत्त्वबुद्धौ द्रव्यत्वादिविशेषणस्य स्वरूपतएव भानादिति वाच्यम् । तादृशशाब्दबोधे द्रव्यत्वाद्यवच्छिन्नस्यैवाभेदसंबन्धेन विशेषणत्वात् घटत्वादिविशिष्टे द्रव्यत्वादिविशेषणकतादृशप्रत्यक्षेऽवच्छेदकावच्छेदेन भानानुपगमे क्षतिविरहात्, तथाच मैत्रेण न पच्यतइत्यादौ पाककृतित्वस्यान्वयितानवच्छेदकत्वेऽपि अर्थलभ्यतादृशधर्म्मावच्छिन्नत्वस्य संसर्गांशे भानं निराबाधमेवेति चेन्न। मैत्रेण न पक्व इत्यादौ कृतौ मैत्रादिवृत्तित्वाभावबोधासंभवेन कृतिजन्यत्वस्य तृतीयार्थतां स्वीकृत्य क्रियायां मैत्रादिकृतिजन्यत्वाभावबोधस्योपगन्तव्यतया मैत्रेण न पच्यतइत्यादावपि तद्बोधोपगमेन सामञ्जस्यात्। नच यदा मैत्रः सुप्तस्तदा मैत्रेण पक्ष्यते नतु पच्यतइति प्रयोगानुपपत्तिः मैत्रवृत्तिवर्त्तमानकृतेरप्रसिद्ध्या तादृशकृतिजन्यत्वाभावप्रत्यायनासम्भवात् वर्त्तमानत्वाविशेषिततदीयकृतिजन्यत्वाभावस्य बाधितत्वादितिवाच्यम् । आख्यातार्थवर्त्तमानत्वादेर्नञ्समभिव्याहारस्थलेऽभावांशएवान्वयस्य व्युत्पन्नत्वात् अन्यथा विनष्टघटं न पश्यतीत्यादौ तादृशघटकर्मकवर्त्तमानदर्शनाद्यप्रसिद्ध्याऽन्वयबोधानुपपत्तेः।प्रकृते च मैत्रीयवर्तमानकृत्यप्रसिद्धावपि वर्तमानकालावच्छिन्नतज्जन्यत्वाभावस्यैवंपाके प्रतीत्या सामञ्जस्यात् । पाकत्वाद्यवच्छेदेनैव मैत्रादिकर्तृकत्वाभावबोधोपगमान्मैत्रादिकर्तृकपाकदशायामन्यकर्तृकपाके मैत्रादिकर्तृकत्वाभावसत्त्वेऽपि न पच्यते मैत्रेणेत्यादयो

---

तथासतीति। नियमे सतीत्यर्थः। अनवच्छेदकतयेति। तदवच्छेदेनान्वयासंभवादितिशेषः। क्रियानिमित्तत्वरूपकारकत्वगर्भेति। क्रियायाधातुलभ्यत्वान्निमित्तत्वेसति कर्तृत्वादिकमाख्यातार्थः धात्वर्थस्य च निरूपितत्वेन निमित्तत्वे कर्तृत्वेचान्वयः। बाधकाभावादिति। विशेषणसंसर्गे यद्रूपावच्छिन्नत्वस्य भानं तद्रूपस्यापि संसर्गघटकतया तस्यपदादुपस्थित्यनपेक्षणात् विशेष्यतावच्छेदकत्वस्याप्यनभ्युपगमेन शाब्दबुद्धौ विशेष्यविशेषणतयापि भानस्यानावश्यकत्वात् समभिव्याहारतात्पर्यविशेषादिज्ञानघटितसामग्र्या विशेषणसंसर्गघटकतया यादृशरूपावच्छिन्नत्वस्य भानं तस्य तत्संबन्धानुयोगित्वे स्वरूपतोऽवच्छेदकत्वमर्थतोलभ्यत्वञ्चापेक्षितम्। भवति हि वर्तमानकृतौ विषयतया पाकविशेषणत्वेन ज्ञातायां स्वनिष्ठविषयताकत्वेन पाकविशिष्टकृतित्वेनापि कृतिरर्थाज्ज्ञातेति न कापि क्षतिरिति भावः। भानादिति। अपेक्षिताया अन्वयितावच्छेदक-

न प्रयोगाः । यत्र मैत्रेणोदनं पच्यते नतु तेमनं तत्र मैत्रेण न पच्यते तेमनमित्यादिप्रयोगनिर्वाहाय तेमनपाकत्वाद्यवच्छेदेनैवाभावान्वयबोध उपगम्यते, न तु शुद्धपाकत्वाद्यवच्छेदेन, बाधितत्वात् यथा च तेन रूपेण शब्दादनुपस्थितावपि तदवच्छेदेनान्वयबोधनिर्वाहस्तथोपपादितमाधेयत्वस्य तृतीयार्थत्ववादिनैव । घटेन न पच्यतइत्यादयः प्रयोगाः आकाशं न पश्यतीत्यादिप्रयोगसमानयोगक्षेमाः । अचेतनकाष्ठस्थाल्यादेरपि कर्तृत्वविवक्षया काष्ठं पचतीत्यादिवत्काष्ठेन पच्यत इति प्रयोगात् । तत्र व्यापाररूपे कर्तृत्वे तज्जन्यत्वरूपे तत्कर्तृकत्वे वा तृतीयाया लक्षणा । एवं चैत्रेण ज्ञायते, इष्यते, गम्यतइत्यादावाश्रयत्वरूपे कर्तृत्वआधेयत्वरूपे कर्तृमत्त्वे वा । नश्यते घटेनेत्यादौ प्रतियोगित्वरूपे कर्तृत्वेऽनुयोगित्वरूपे कर्तृमत्त्वे वा लक्षणा । कर्तृपदमपि व्यापारादिमस्य-चेतनादौ भाक्तमेव । अचेतनादौ स्वरसतः कर्तृपदाप्रयोगात् । अतएवच कृञो यत्नवाचकत्वम् । नच यत्नवत एव कर्तृपदार्थत्वे कर्तृकरणयोस्तृतीयेत्यादौ कर्तृपदस्य मुख्यार्थत्यागे युक्तिविरहादचेतनकाष्ठादिवाचकपदयोगे कर्तृप्रत्ययानुपपत्तिरिति वाच्यम् सूत्रस्थकर्तृपदानां स्वतन्त्रः कर्तेतिसूत्रकृत्परिभाषितकर्तृपरत्वात् । अन्यथा तत्प्रणयनवैयर्थ्यप्रसङ्गात् । स्वतन्त्रत्वं च कारकान्तरानधीनत्वे सति कारकत्वम् । पुरुषव्यापाराधीनक्रियानुकूलव्यारवतामेव काष्ठादीनामन्यव्यापारानधीनक्रियानुकूलव्यापारवत्त्वरूपस्वातन्त्र्यस्य काष्ठं पचतीत्यादौ विवक्षया काष्ठादेः कर्तृत्वम् । नच स्वातन्त्र्यविवक्षणेऽपि स्वातन्त्र्यस्य वास्तविकस्याभावात् तद्बोधकविभक्तीनामप्रामाण्यं दुर्वारमेवेति वाच्यम् । समभिव्याहृतक्रियाकारकान्तरव्यापारानधीनतत्क्रियानुकूलव्यापारस्यैव तत् । क्रियावाचकपदसमभिव्याहृतविभक्त्यर्थत्वात् । अनधीनान्तविशेषणप्रयोजनं च-चैत्रः काष्ठैःस्थाल्यां पचतीत्यादिस्थले चैत्रःस्थालीकाष्ठानिपचतीति प्रयोगापत्तिवारणम् । यत्रच चैत्रः पचति काष्ठं पचतीत्यादौ समभिव्याहृतकारकांतराप्रसिद्धिस्तत्रानधीनान्तविशेषणं न प्रतीयतएव । तन्निर्वाहश्च तत्र लकारादेः स्वतन्त्रशक्त्यन्तरकल्पनात् । विशिष्टविषयकशक्त्या विशेषणाविषयकबोधाजननात् । नच मैत्रः चैत्रेण पाचयतीत्यादौ हेतुकर्तृसमभिव्याहारस्थले कर्तरि तृतीयानुपपत्तिः कर्तृव्यापारस्य समभिव्याहृतहेतुकर्तृव्यापाराधीनत्वादिति वाच्यम् । तत्र ण्यन्तप्रतिपाद्यपाचनादिक्रियायामेव हेतोः कारकतया स्वतन्त्रकर्तृव्यापारस्य पचादि क्रियाकारकव्यापारानधीनत्वात् । स्वतन्त्रं प्रयुञ्जानस्य पुंसो व्यापारस्तण्डुलक्रयणादिवत्पाकादावन्यथासिद्धतया न कारणमिति पाकादिप्रयोजकव्यापारवत्त्वेऽपि तस्य तत्क्रियाकारकत्वाभावात् अतएव चैत्रो मैत्रेण पाचयतीत्यादौ चैत्रः पचतीति न प्रयोगः । नच पञ्चभिर्हलैः कर्षति गृहीत्यादौ भूमिलेखनरूपकृष्यादिक्रियायां स्वतन्त्रकर्तॄन् प्रयुञ्जानस्य गृहिणो व्यापारस्य दर्शितयुक्त्या लकारादिनाऽभिधानासंभव इति कर्षतीति न स्यात्कर्षयतीति च स्यादिति वाच्यं । तत्र कृषेः प्रतिविधानार्थत्वात् । उक्तंच । "याजका यजन्तीति यजिर्हविःप्रक्षेपार्थः । हलैः कृषतीति कृषिः प्रतिविधानार्थ" इति याजेर्देवतोद्देश्यकद्रव्यत्यागेच्छाविशेषरूपार्थे मुख्यतया तत्रच यजमानस्यैव कर्तृतया हविःप्रक्षेपरूपलक्ष्यार्थपरत्वं दर्शितं । तत्र च ऋत्विजामेव स्वातन्त्र्यम् । होतेत्यत्रापि हविःप्रक्षेप एव हुधातोरर्थो नतु तादृशफलावच्छिन्नस्त्यागः । तथासति ऋत्विजस्तत्र स्वतन्त्रकर्तृताविरहेण होतृपदेन प्रतिपादनासंभवात् । धात्वर्थतावच्छेदकफलकर्तृत्वमेव कर्तृप्रत्ययेन प्रतिपाद्यतइति ऋत्विजि होतृव्यवहारो न यष्टरि । अतः प्रतिग्रहीतृव्यापारो न स्वत्वजनकस्तथासति तत्र दातृव्यवहारापत्तेरिति तु जीमूतवाहनः । अथास्तु चैत्रेण मैत्रेण पाच्यतइत्यादौ स्वतन्त्रव्यापारस्यहेतुकर्तृव्यापारा-

---

द्रव्यत्वत्वेन तदुपस्थितेरभावात्तत्रान्वयासंभवादिति शेषः। समानयोगक्षेमा इति । तस्याप्रामाण्योपगमेऽस्याप्यप्रामाण्योपगमो श्रुत्यनियामकसंबन्धस्याभावप्रतियोगितावच्छेदकत्वमुपगम्य प्रत्ययार्थे कृत्यर्थाभावविषयकत्वे प्रामाण्योपगमेतस्यास्यापि प्रामाण्योपगम इत्यर्थः । प्रतिविधानेति । भूमिविलेखननिर्वाहकचेतनप्रदानादिरूपव्यापारेत्यर्थः ।

धीनत्वेऽपि दर्शितरीत्या तस्य स्वतन्त्रकर्तृत्वनिर्वाहस्तथापि तद्वाचकपदोत्तरं तृतीयानुपपत्तिः कर्तृत्वस्य णिच्प्रत्ययेनाभिधानादिति चेन्न । कर्तृत्वनिर्वाहकत्वसंबन्धेन पाकाद्यन्वयिनो हेतुकर्तृव्यापारस्य णिजर्थत्वेन स्वतन्त्रकर्तृत्वस्य णिचानभिधानात् । कर्तृत्वरूपफलावच्छिन्नस्य तादृशव्यापारस्य णिजर्थतामतेऽपि आश्रयोपरक्तस्यान्यतो भानानिर्वाहेण कर्तुरनभिधानात्तृतीयोपपत्तेः । आख्यातस्य धर्म्यवाचकत्वेऽपि कृतिविशिष्टबोधकत्वरूपस्य कर्त्रभिधानस्याक्षतत्वाच्चैत्रः पचतीत्यादौ न तृतीया । नचैवं मुख्यविशेष्यतया कृतिविवक्षया चैत्रेण पचतीति स्यादिति वाच्यम् । आश्रयातिरिक्तांशे विशेषणतया कृतिबोधनस्यैव कर्त्रभिधानरूपत्वात् तथा तदभिधानं च लकृत्तद्धितसमासानामेव । अतएव तैरेवाभिधानं वृत्तिकृता विवृतम् । इदं त्ववधेयम् । यद्यपि स्वतन्त्रव्यापारमात्र एव तृतीयादेरनुशासनं, तथापि लाघवात्कृतिरूप एव कर्तृत्वे तृतीयादेः शक्तिः । अचेतनव्यापारे निरूढलक्षणैव । अनुशासनस्यानादितात्पर्यमात्रग्राहकत्वात् । लाघवसहकृतस्यैव तादृशतात्पर्यस्य शक्तिकल्पकत्वात् । व्यापारे तत्सत्त्वेऽपि गौरवेण शक्त्यसिद्धेः । एवंच कर्तृत्वरूपकृतिबोधस्थले कारकान्तरव्यापारानधीनत्वं न प्रतीयतइतितदन्तर्भावेण शक्तिकल्पने मानाभावः । व्यापारलाक्षणिकेन कर्तृप्रत्ययेन लक्षणया तदन्तर्भावेण व्यापारबोधनादेव पूर्वोक्तातिप्रसङ्गवारणात् अन्यथा तदन्तर्भावेणकृतिशक्तावपि तादृशातिप्रसङ्गस्य दुर्वारत्वादिति घटो जायते, ओदनः सिद्ध्यतीत्यादौ सत्कार्यविद्वेषिणां नैयायिकानां कारकत्वं कर्तृत्वं च घटादेर्यथाश्रुतसूत्रानुसारेण दुरुपपादमेव । मुख्यंच क्रियाकर्तृत्वंक्रियानुकूलकृतिमात्रम् । एकक्रियाविषयककृतितो यत्र नान्तरीयकक्रियान्तरनिर्वाहस्तत्कृतिमतस्तत्क्रियाकर्तृत्वाभावात् । अतएव मत्तो भूतं, ननु मया कृतमिति व्यपदेश इति । तत्क्रियानुकूलत्वे सति तद्विषयककृतिस्तत्कर्तृत्वम् । अन्योद्देशेन नाराचक्षेपाद्यत्र ब्राह्मणवधस्तत्र मरणानुकूलस्य नाराचक्षेपरूपव्यापारस्य कृतिविषयत्वेऽपि ब्राह्मणमरणानुकूलव्यापारत्वेन तस्यानभिसंहितत्वात्तेन रूपेण कृतिविषयत्वं न तादृशव्यापारस्येति ब्राह्मणवधत्वविशिष्टकर्तृत्वं न तादृशव्यापारकर्तुरिति न तस्य संपूर्णप्रायश्चित्तम् । अतएव संपूर्णप्रायश्चित्तप्रयोजकस्य कर्तृव्यापारस्य लक्ष्यताभिप्रायेण हिंसालक्षणे मणिकृतां मरणोद्देशेनानुष्ठीयमानत्वादृष्टाद्वारकत्वविशेषणयोरुपादानमिति मिश्राभिधानसङ्गतिः । मरणोद्देशेनानुष्ठीयमानस्य व्यापारस्यावश्यं मरणानुकूलव्यापारत्वेन प्रतिसंहितत्वात्तादृशरूपेण कृतिविषयत्वमिति तादृशविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वात्तद्विशेषणवतो व्यापारस्य नियमेन लक्ष्यत्वात् । तच्छून्यस्य चालक्ष्यत्व-

---

**आश्रयातिरिक्तांशेविशेषणतयेति ।** ण्यर्थकर्तृत्वस्याश्रयातिरिक्तांश आख्यातार्थे विशेषणत्वेन णिचा तदभिधानासंभवः आख्यातार्थकृतेर्मुख्यविशेष्यत्वे तस्या आश्रयातिरिक्ताविशेषणत्वेनाख्यातेन कर्त्रभिधानसंभवः तद्धितेन तु व्याकरणमधीत इति वैयाकरण इत्यादौ समासेन तु कृतपाक इत्यादौ कर्त्रभिधानं बोध्यम् । **अन्यथेति ।** लक्षणाया अनादितात्पर्यमूलायास्समभिव्याहृतकारकान्तरव्यापाराधीनव्यापारबोधकत्वनियमानभ्युपगम इत्यर्थः । **अतिप्रसङ्गेति ।** केवलव्यापारबोधतात्पर्येण लक्षणया काष्ठानि स्थाली चैत्रः पचतीति स्वारसिकप्रयोगापत्तिरित्यर्थः । **सत्कार्यविद्वेषिणामिति ।** सत्कार्यवादिनामभिव्यक्तिरूपधात्वर्थानुकूलावस्थितिविशेषादिरूपव्यापारस्याभिव्यक्तिपूर्वं विद्यमाने घटादौ संभवेन तस्य कारकत्वकर्तृत्वयोस्संभवेऽपि न्यायनये जन्मनः प्रागघटादेरसतः कारकत्वकर्तृत्वयोर्न संभव इति भावः । **यथाश्रुतसूत्रेति ।** स्वतन्त्रःकर्तेत्यस्य समभिव्याहृतकारकान्तरव्यापारानधीनव्यापाराश्रयः कर्तेति यथाश्रुतोर्थस्तदवलम्बनेनेत्यर्थः । पाकादेः कृतिर्गमनज्ञानजन्मादेराश्रयत्वं नाशादेः प्रतियोगित्वादिकं यद्यत्कर्तृत्वत्वेन प्रामाणिकव्यवहारगोचरस्तावदन्यतमाश्रयः कर्तेत्यथयाश्रुतार्थावलम्बनेन घटादीनां जन्मादिक्रियाकर्तृत्वं भवति सूपपादमिति भावः । **तत्क्रियेति ।** नान्तरीयकक्रियेत्यर्थः । **हिंसालक्षण इति ।** मरणोद्देशेनानुष्ठीयमानत्वे सत्यदृष्टाद्वारकमरणानुकूलत्ववत्त्वमिति लक्षण इत्यर्थः । संपूर्णेत्यादीत्यन्तं मिश्रग्रन्थः । हिंसामात्रस्य लक्ष्यत्वे मरणानुकूलकृतिविषयत्वमात्रं लक्षणमुच्येतात्रनान्तरीयकव्यापारे मरणानुकूलेऽपि कृत्यविषयतया हिंसात्वाभावात्कृतिविषयत्वपर्यन्तानुधावनम् । अन्योद्देशेनानुष्ठितनाराचादिप्रक्षेपे त्व वारणाय सत्यन्तम्, श्येनयागस्य शत्रुमरणो-

नियमात् । अथ मरणोद्देशेनानुष्ठितस्यापि यत्र खड्गाभिघातत्वादिनैवेष्टसाधनत्वकृतिसाध्यत्वधीविषयता नतु मरणानुकूलत्वविशेषिततद्रूपेण, तत्र न मरणानुकूलत्वविशिष्टविषयिणी कृतिरिति तादृशव्यापारकर्त्तुर्न वधत्वविशिष्टकर्तृत्वमिति कथमुक्तविशेषणस्य विशिष्टकर्तृतानिर्वाहकत्वम् । यदि च मरणोद्देशेनानुष्ठीयमानत्वस्य मरणानुकूलत्वेन कृतिविषयत्वमेवार्थ इत्युपेयते, तदा व्यापारे तादृशविशेषणस्य तत्कर्तरि विशिष्टकर्तृतानिर्वाहकत्वेऽप्युक्तस्थले खड्गाभिघातादौ तादृशलक्षणाव्याप्तिर्दुर्वारैव तत्र संपूर्णप्रायश्चित्तस्य निर्विवादतया लक्ष्यताया आवश्यकत्वात् । नच विशेषणीभूतफलनिष्ठोद्देश्यताख्यविषयतानिरूपकत्वे सति व्यापारनिष्ठसाध्यताख्यविषयतानिरूपकत्वमेव विशिष्टविषयकत्वं कृतेरित्युपदर्शितस्थलेऽनुकूलतासंबन्धेन मरणवैशिष्ट्यस्य साध्यतारूपविषयतावच्छेदकताविरहेऽपि न विशिष्टकर्तृत्वानिर्वाह इति मरणोद्देशेनानुष्ठीयमानत्वस्य मरणकामनाधीनकृतिविषयत्वरूपतैवेति वाच्यम् । ब्राह्मणं न हन्यादित्यादौ धात्वर्थतावच्छेदकस्य मरणस्य स्वोद्देश्यकत्वसंबन्धेन कृतावन्वयसंभव एव निरुक्तविशिष्टकर्तृत्वस्य निषेधविधिविषयत्वसंभवात्, व्यापारविशेषणतयोपस्थितस्य कृत्यंशे विशेषणत्वस्य व्युत्पत्तिविरुद्धत्वात् । अथ मरणोपलक्षितव्यापारकर्तृत्वस्य तादृशनिषेधविषयत्वेऽपि न क्षतिः । अन्योद्देशेन नाराचक्षेपस्यापि ब्राह्मणमरणोपधायकस्य नरकसाधनत्वात् । परंतु मरणरूपप्रायश्चित्तविधेरेव तद्विषयकत्वमुपपादनीयम् तच्च मरणोद्देशेन तदनुकूलव्यापारे कर्तृत्वबोधकस्य शब्दस्य तद्विधावन्तर्भावएवोपपद्यतइति चेत् । एवमपि ब्राह्मणमरणकामनया यत्र न तन्मरणानुकूलव्यापारानुष्ठानमपितु फलान्तरकामनाधीनतन्मरणानुकूलव्यापारत्वप्रकारकचिकीर्षया तदनुष्ठितं तत्राव्याप्तिरेतन्मते दुर्वारैव, तत्रापि संपूर्णस्यैव प्रायश्चित्तस्याचरणादलक्ष्यतोपगमासम्भवादिति मैवम् । यत्र हि मरणानुकूलव्यापारत्वेन कृतिसाध्यतादिधीस्तत्रैव यत्र व्यापारविशेषत्वेनैव तद्धीस्तत्रापि मरणरूपफलकामनाधीनव्यापारविषयिणी कृतिर्मरणानुकूलत्वेन व्यापारमवगाहते । कृतेः कामनाविषयफलोपरागेणोपार्यविषयतोपगमात् । विश्रृङ्खलफलभानोपगमे यत्र तृप्तिकामनया भोजनं फलान्तरकामनया च गमनमवगाहमाना समूहालम्बनकृतिस्तत्रतृप्तये गमनं करोतीति व्यवहारापत्तेः । उपायांशे मरणस्यानुकूलत्वं संबन्धः प्रकारो वेत्यन्यदेतत् । एवंच मरणावच्छिन्नव्यापारविषयकत्वमुभयत्रैव कृतेरिति विशेषणावच्छिन्नविषयककृतिमत्त्वं विशिष्टकर्तृत्वमुभयस्थले निष्प्रत्यूहम् । मरणोद्देशेनानुष्ठीयमानत्वमपि मरणानुकूलत्वोपरागेण कृतिविषयत्वरूपं लक्षणघटकमिति न काचिदनुपपत्तिः । यद्यप्यदृष्टद्वारा पाकानुकूलकृतिमतोपि न पाकादिकर्तृत्वमिति तत्तत्क्रियाक-

---

द्देशेनानुष्ठीयमानस्य वारणायादृष्टाद्वारकेति । **मरणोद्देशेनानुष्ठितस्यापीति ।** तत्वञ्च मरणरूपफलेच्छाजन्यकृतिविषयत्वं मरणनिष्ठोद्देश्यत्वाख्यविलक्षणविषयतानिरूपितसाध्यत्वाख्यकृतिविषयत्वं वा । **इष्टसाधनत्वेति ।** इष्टसाधनत्वकृतिसाध्यत्वप्रकारतानिरूपितविशेष्यता यद्धर्मावच्छिन्ना भवति कृतेः साध्यताख्यविषयतापि तद्धर्मावच्छिन्नैव भवतीति नियमः तथाचोक्तस्थले मरणोद्देशेनानुष्ठीयमानत्वेऽपि व्यापारस्य कृतेर्मरणानुकूलव्यापारत्वावच्छिन्नसाध्यताख्यविषयताकत्वाभावात्तादृशव्यापारकर्तुर्मरणानुकूलव्यापारत्वविशिष्टकर्तृत्वस्य न संभव इत्युक्तविशेषणस्य कथं तन्निर्वाहकत्वमितिभावः । नन्वनुष्ठीयमानत्वघटकसाध्यत्वाख्यविषयता मरणानुकूलव्यापारत्वावच्छिन्नैव विवक्षिता तादृशी च सा यत्र व्यापारस्य तत्रावश्यं तत्कर्तुस्तादृशधर्मावच्छिन्नविलक्षणविषयताककृतिमत्त्वेन विशिष्टव्यापारकर्तृत्वं प्रकृते चोक्तरूपानुष्ठीयमानत्वस्यैव खड्गाद्यभिघातरूपव्यापारे विरहेण तत्कर्तुर्विशिष्टव्यापारकर्तृत्वाभावेऽपि न तद्विशेषणविशिष्टव्यापारकर्तृत्वनिर्वाहक्षतिरित्यभिप्रेत्याह । यदिचेति । **तादृशलक्षणाव्याप्तिरिति ।** संपूर्णप्रायश्चित्तप्रयोजकहिंसालक्षणस्याव्याप्तिस्तद्घटकस्योक्तरूपानुष्ठीयमानत्वस्याभावादित्यर्थः । **मरणोपलक्षितव्यापारेति ।** मरणोपधायकव्यापारनिष्ठविषयकतादृशव्यापारानुकूलकृतिमात्रं तत्त्वं नतु कृतौ मरणनिष्ठोद्देश्यताकत्वस्यापि प्रवेशः तस्य न ब्राह्मणं हन्यादित्यादावाख्यातार्थकृतौ मरणोपधायकव्यापाररूपधात्वर्थान्वयादेव लाभसंभवो धात्वर्थविशेषणमरणस्यान्वयासंभवेऽपि क्षत्यभाव इत्यर्थः । **दुर्वारैवेति ।** मरणकामनाजन्यकृतिविषयत्वरूपलक्षणघटकविशेषणस्यासत्त्वादिति शेषः । **नकाचिदनुपपत्तिरिति ।** मरणकामनायां सत्यां खड्गाद्यभिघातत्वादिनैव

र्तृत्वघटककृतिनिष्ठतदनुकूलत्वपवादृष्टाद्वारकत्वमपेक्षितं, नतु क्रियानिष्ठफलानुकूलत्वे तत्तत्रापेक्षितमिति व्यापारनिष्ठमरणानुकूलत्वेऽदृष्टाद्वारकत्वरूपमणिकारोक्तविशेषणस्य न कर्तृताघटकत्वं तथाप्यनुष्ठीयमानत्वप्रविष्टकृतेरेवादृष्टाद्वारकमरणानुकूलत्वं विवक्षितम्। विशिष्टकर्तृत्वंचादृष्टाद्वारकत्वविशेषितमरणानुकूलत्वेन कृतिविशेषणेन घटितमिति मिश्राशयः। तथा चैवं पर्यवसितम् हिनस्तेः प्रवृत्तिनिमित्तं मरणरूपफलावच्छिन्नव्यापारत्वमेव, न हिंस्यादित्यादौ फलविशिष्टस्वनिरूपितकर्तृत्वसंबन्धेन हिनस्त्याद्यर्थस्यानिष्टविशेषसाधनत्वं प्रतीयते। श्येनस्य हिनस्त्याद्यर्थत्वेऽपि न तस्य तादृशकारणतावच्छेदकसंबन्धेन क्वचिदपि सत्त्वम्। तत्कर्तुरदृष्टाद्वारकानुकूलताघटितफलकर्तृत्वविरहेण विशिष्टाकर्तृत्वादिति नानिष्टविशेषं प्रति हिंसात्वेन साधनत्वमिति न क्रियायां विध्यर्थान्वयमतेऽपि श्येनविध्यर्थबाधः। वस्तुतः श्येनानुकूलकृतेर्मरणप्रयोजकत्वमेव नतु मरणकारणत्वमन्यथासिद्धत्वात्। मरणोपलक्षितान्यकर्तृकखड्गाभिघातादिरूपवैरिवधं प्रत्येव हेतुताया वेदेन बोधितत्वात्। क्रियाजन्यकार्ये तत्क्रियानुकूलकृतिहेतुतानियमेऽपि खड्गाभिघातादावेव श्येनकृतेर्हेतुत्वात् तथा चानिष्टविशेषजनकतावच्छेदकप्रत्यासत्तिप्रविष्टमरणानुकूलत्वं मरणजनकत्वमेव, नतु प्रयोजकत्वमतो दृष्टाद्वारकत्वं न तत्र निवेशनीयम्। कारणत्वपर्यन्तनिवेशलाभायैव तदुपादानम्। यदि च विशिष्टान्वयपरताया वेदे औत्सर्गिकपरत्वेन वधसाधनताबोधकश्रुत्या विशेषणीभूतमरणसाधनतापि श्येनस्य प्रत्याय्यते, तदापि श्येनानुकूलकृतेर्मरणसाधनत्वमप्रामाणिकमेव। क्रियाजनककृतेस्तज्जन्यजनकतानियमस्याप्रामाणिकत्वात्। अथान्योद्देशेन नाराचक्षेपकर्तुर्विशिष्टविषयककृतिमत्त्वघटितविशिष्टकर्तृताविरहेऽपि यथार्धवधजन्यपापप्रायश्चित्तं तथा श्येनकर्तुर्विशिष्टाकर्तृत्वात्पापार्द्धस्यावश्यकत्वाद्बलवदनिष्टाननुबन्धित्वबाधो दुर्वार एवेति चेन्न। अकामकृतेऽप्यर्द्धप्रायश्चित्तश्रवणेन मरणावच्छिन्नव्यापारस्य विषयतामनन्तर्भाव्य विशिष्टजनककृतिमत्त्वसंबन्धेन न्यूनपापे स्वतन्त्रहेतुत्वकल्पनात्। तद्बलेन विशिष्टकर्तुः श्येनकर्तुर्हिंसाजन्यपापानुत्पत्तेः। नच लाघवेन मरणोपलक्षितव्यापारजनकत्वमेव प्रत्यासत्तिमध्ये निवेश्यतामिति वाच्यम्। श्रुत्यर्थबाधापादकलाघवस्याप्रयोजकत्वात्। वेदस्थले विशिष्टान्वयस्यौत्सर्गिकत्वेऽपि श्येनस्य मरणजनकत्वे विध्यर्थबाधप्रसङ्गेन मरणं प्रति श्येनस्यान्यथासिद्धताया एवोपगन्तव्यतया तस्य (स्व) जनकतागर्भहिनस्त्यर्थतावच्छेदकरूपशून्यताया अपि सूपपादत्वात्। न च यदि खड्गाभिघातजनकादृष्टव्यवहितस्य श्येनस्य मरणेऽन्यथासिद्धत्वं तदा हन्तृकृतिजन्य-

---

व्यापारविशेष्यकेष्टसाधनत्वज्ञानाधीनकृतावपि मरणानुकूलव्यारत्वावच्छिन्नसाध्यताख्यविषयतोपगमान्न तत्राव्याप्तिः। नच मरणावच्छिन्नव्यापारत्वस्य कृतिसाध्यत्वादिधर्मितावच्छेदकत्वाभावात्कथं कृतौ साध्यत्वाख्यविषयत्वस्य तदवच्छिन्नत्वसंभव इति वाच्यमुक्तनियमे मानाभावात् यस्य फलस्येच्छाविषयत्वं तस्य कृतावुद्देश्यत्वाख्यविषयत्वं तस्यैव फलस्येष्टत्वेनेष्टसाधनताज्ञानस्य कृतिनिरूपितसाध्यताख्यविषयतावच्छेदकतत्फलानुकूलत्वव्यापारत्वोभयविषयकत्वसंभवे तदुभयधर्मावच्छिन्नं भवति कृतेः साध्यत्वाख्यविषयत्वमेतावदेवंहि नियमः यत्रतु मरणानुकूलव्यापारत्वावच्छिन्नविशेष्यकं मरणान्यफलेष्टसाध्यत्वज्ञानं तत्र साध्यत्वाख्यविषयतायाः फलान्तरानुकूलमरणावच्छिन्नव्यापारत्वावच्छिन्नतयाधिकस्यावच्छेदकत्वेऽपि मरणावच्छिन्नव्यापारत्वावच्छिन्नत्वस्याक्षतत्वेन तत्रापि नाव्याप्तिरिति भावः। **कर्तृत्वसंबन्धेनेति**। इदञ्च नञ् समभिव्याहृतलिङ्बोधितस्यानिष्टसाधनत्वस्य धात्वर्थनिष्ठस्यावच्छेदकीभूतसंबन्धस्य प्रतिपादकम्। **बोधितत्वादिति**। श्येनेनाभिचरन्यजेतेतिविधिना श्येनसंज्ञकयागद्वारा तत्कृतेर्वैरिमरणानुकूलव्यापाररूपाभिचारं प्रत्येव हेतुत्वस्य बोधनन्नतु मरणं प्रतीत्यर्थः। **खड्गाभिघातादावेव श्येनकृतेर्हेतुत्वादिति**। अभिचाररूपेष्टसाधनत्वस्य लिङा धात्वर्थ एव बोधनम्। उक्तनियमादेव च कृतेस्तत्साधनत्वलाभस्तत्राभिचारपदार्थे व्यापारे मरणस्य विशेषणत्वे सति विशिष्टान्वयबलाद्यागे मरणसाधनत्वस्याप्यवगमः स्यात्तथासत्युक्तनियमात्कृतेरपि मरणसाधनता स्यात्तन्नास्तीत्येवकारेण सूचितम्। **स्वजनकेति**। मरणविशिष्टव्यापारः स्वपदार्थोऽदृष्टद्वारकतज्जनकत्वं हि विशेषणीभूतमरणनिरूपिततादृशजनकत्वसहितमेव तादृशञ्च तन्नादृष्टद्वारामरणजनकश्येनद्वारा मरणानुकूलायां कृताविति श्येनस्य कारणतावच्छेदकसंबन्धविरहेण पापाजनकत्वान्न बलवदनिष्टाजनकत्वस्य बाधः अन्योद्देशेन नाराचप्रक्षेपस्थले तादृशव्यापारस्यादृष्टाद्वारकमरणजनकत्वेन तत्कृतेस्तादृशजनकत्वेन मरणं प्रत्यपि तादृशजनकत्वान्मरणविशि-

व्यापारोऽपि तत्रान्यथासिद्धः स्यात् यत्र व्यापारो मरणेऽव्यवहितसाधनं, तत्र तद्धेतुः कृतिरे-वान्यथासिद्धेतिमरणकारणव्यापारकारणकृतिमत्त्वं न कस्यापि हेतुः स्यादिति वाच्यम् । तण्डुलवि-क्लित्त्यादिरूपफलव्यवहितस्यापि तुषादिप्रक्षेपस्य तत्करणदशायां पचतीत्यादिव्यवहारानुरोधेन यथा-नन्यथासिद्धत्वं तथा खड्गप्रक्षेपादिकरणदशायां हन्तीति व्यपदेशानुरोधेन तत्र व्यवहितस्यापि मरणेऽनन्यथासिद्धत्वमवश्यमभ्युपेयमिति सामञ्जस्यात् । तण्डुलक्रयणदशायां पचतीत्याद्यभाववत् खड्गादिनिर्माणदशायां हन्तीत्यव्यवहारात्तद्व्यापारो मरणेऽन्यथासिद्धतया न हिंसा । व्याघ्रमरणो-द्देशेन कृतो यत्नार्पणादिर्यत्र तत्र दैवाद्गवादिमरणेऽपि न हिंसारूपस्तथा न व्याघ्रादिहिंसारूपोऽपि तत्करणदशायां हन्तीत्यप्रयोगात् । अतथात्वेऽपि तन्मरणोद्देश्यकादृष्टाद्वारकतन्मरणप्रयोजककृ-तिजन्यव्यापारस्यापि हिंसावत् पापजनकत्वाद्गुरुस्थले गोवधाभिसंधाने गोवधप्रायश्चित्ताचरणमि-त्यवधेयम् । एवं च चैत्रः पचतीत्यादौ विषयताघटितकर्तृत्वबोधनिर्वाहाय यथा कृतौ पाकादेरुप-धायकत्वविषयित्वोभयसंबन्धेनान्वयः, विषयितायाः संबन्धत्वेऽपि उपधायकत्वनिवेश आवश्यकः पाकाद्यनिष्पत्तिस्थले पचति पक्ष्यतीत्यादिप्रयोगस्य प्रामाण्यवारकत्वात्, तथा चैत्रेण पच्यतइत्या-दावपि तृतीयार्थकृतेर्जन्यत्वविषयित्वोभयसंबन्धेनान्वयो बोध्यः । कृतिजन्यत्वस्य तृतीयार्थत्वे जन्यत्वसंबन्धमध्यएव स्वनिरूपकविषयत्वं प्रवेशनीयम् । कृतिविषयत्वमेव वा तृतीयार्थः । स्वनि-रूपकजन्यत्वं विषयतायाः संबन्धमध्येऽन्तर्भावनीयम् काष्ठेन पचतीत्यादौ करणत्वं तृतीयार्थः । तच्च व्यापारवत्कारणत्वम् । व्यापारे कर्तृव्यापाराधीनत्वं निवेशनीयम् । अन्यथा कर्तुरपि कर-णतापत्त्या चैत्रश्चैत्रेण पचति, काष्ठं चैत्रेण पचतीत्यादिप्रयोगापत्तेः । नच कर्तुश्चेष्टादिरूपव्यापा-रस्य तदीयकृत्यादिरूपव्यापाराधीनतया तद्विशेषणदानेऽपि कर्तुः करणत्वं दुर्वारमेवेति वाच्यम् । स्वभिन्नत्वेन कर्तुर्विशेषणीयत्वात् । यत्रैकैव पाकादिक्रिया चैत्रेण काष्ठादिना मैत्रेण तुषादिप्रक्षे-पेण निष्पाद्यते, तत्र चैत्रस्तुषैर्मैत्रः काष्ठैः पचतीति प्रसङ्गः समभिव्याहृतकर्तृव्यापाराधीनत्वस्य त-त्तत्करणव्यापारे भानमुपगम्य वारणीयः । नच समभिव्याहृतकर्त्रन्तर्भावेण तृतीयार्थत्वे कर्त्रसम-भिव्याहारस्थले करणे तृतीयाया अप्रयोगापत्तिरिति वाच्यम् । तत्रापि हेताविति सूत्रेण हेतुतामा-त्रार्थकतृतीयासंभवाद् धनेन कुलं विद्यया यश इत्यादिवत् नहि तत्र करणे तृतीया क्रियायोगा-भावात् । नचैवमुक्तस्थले चैत्रस्तुषेण पचतीति प्रयोगस्य हेताविति सूत्रबलादापत्त्याविष्टापत्तिं वि-नोत्तराभावात्समभिव्याहृतकर्त्रन्तर्भावस्य करणे स्वतन्त्रतृतीयानुशासनस्यैव वा वैयर्थ्यमिति वाच्यम् । उक्तस्थले पाके तुषहेतुकत्वाभावबाधेऽपि चैत्रस्तुषेण न पचति किन्तु दारुणैवेति प्रयोगोपपत्तये समभिव्याहृतकर्त्रन्तर्भावेण तृतीयायाः शक्तिकल्पनाया आवश्यकत्वात् । तद्ग्राहकतयैव करणे तृ-तीयानुशासनस्यावश्यकत्वात् । शरैः शातितपत्रोयमित्यादौ तृतीयायाः कारकविभक्तित्वएव तद-र्थान्वितार्थकशातितादिपदेन समासस्य साधुतानिर्वाहाच्च । नच तृतीयायाः समभिव्याहृतकर्त्रन्त-र्भावेण करणत्वार्थत्वे तत्र समभिव्याहृतकर्त्रभावादकारकविभक्तित्वं करणे तृतीयानुशासनेऽपि दुर्वारमेवेति वाच्यम् । एतदनुरोधेन तत्र कर्तुरध्याहरणीयत्वात् । वस्तुतः समभिव्याहृतक-र्तृव्यापाराधीनत्वे व्यापारवत्कारणत्वे च तृतीयायाः शक्तिद्वयम् । कर्त्रसमभिव्याहारस्थले व्यापारवत्कारणत्वमात्रं प्रतीयते । कर्तृसमभिव्याहारस्थले च व्यापारे तद्व्यापाराधीनत्वम-पीति सामञ्जस्यम् । एवं हेत्वनुशिष्टतृतीयाया अकर्तर्यृणेपञ्चमीत्यनेन बाधनात्करणत्ववि-वक्षायां धनवता ऋणेन बद्धोयमित्यत्र तृतीयाया उपपत्तये करणे तृतीयानुशासनस्याव-श्यकता । करणत्वं च फलोपधानरूपमेव करणताघटकम् अन्यथा कुठारादिकरणकच्छिदादौ

---

ष्टसजनककृतिमत्त्वसंबन्धसत्त्वेन पापजनकतयाऽधंप्रायश्चित्तप्रयोजकत्वसंभव इतिभावः । व्यापारोपीति । वध्यशरीरखड्गादि-संयोगजनकखड्गप्रक्षेपादिरूपव्यापारोपीत्यर्थः । निर्वाहाच्चेति । करणत्वस्य तृतीयार्थत्वाभावे हेतुपदस्य कारकपदभिन्नत्वेना-

दात्रादेरपि स्वरूपयोग्यतया करणत्वापत्तेः । लिङ्गज्ञानस्यानुमितिकरणतामते धूमेन वह्निमनु-
मिनोतीत्यादौ धूमादिपदं तज्ज्ञानपरम् । व्याप्तिविशिष्टहेतुज्ञानस्य व्यापारस्तद्विशिष्टवैशिष्ट्यावगा-
हीपरामर्शः । स चात्ममनोयोगादिरूपानुमातृपुरुषव्यापाराधीन इति तस्य निरुक्तकरणत्वमबा-
धितमेव । धूमादिलिङ्गकवन्ह्यनुमितौ यत्र लिङ्गान्तराद्धटादिभानं तत्र तेन घटमनुमिनोमीति न प्र-
योगः । अन्वयितावच्छेदकतद्विधेयकानुमितित्वावच्छेदेनैवान्वयितावच्छेदकधूमादिविषयकज्ञान-
त्वावच्छिन्नत्वेन भासमानस्य करणत्वस्य निरूपकत्वभानोपगमात् निरूपकत्वं तु करणतामात्रस्य
तृतीयार्थतावादिनां प्राचां मते संसर्गः । नव्यमते तु करणतानिरूपकत्वस्यैव नञर्थाभावे प्रतियो-
गित्वेनान्वयात्तावत्पर्यन्तस्य तृतीयार्थतया प्रकारतेत्यन्यदेतत् ।

परेतु लिङ्गज्ञानस्य करणत्वेऽपि धूमेनानुमिनोतीत्यादौ धूमादिपदं मुख्यार्थमेव हेताविति सूत्रेण
तत्र तृतीया । हेतुत्वस्य कारणतावच्छेदकसाधारणप्रयोजकत्वरूपस्य तत्र विवक्षितत्वात् । अन-
कज्ञानविषयधूमादेश्चानुमितिकारणतावच्छेदकतया प्रयोजकत्वमक्षतमेव । उक्तसमूहालम्बनस्थले-
ऽतिप्रसङ्गश्च वह्निविधेयकानुमितित्वावच्छेदेन प्रयोजकतानिरूपकत्वभानाभ्युपगमेन वारणीयः
वस्तुतो जनकतावच्छेदकादिनिष्ठप्रयोजकतानिरूपकत्वं कार्यस्येव कार्यतावच्छेदकस्याप्यक्षतं प्रती-
तिसाक्षिकं च । तथाचानुमितिविशेषणतत्तद्विधेयकत्वरूपसुबन्तार्थएव तृतीयार्थान्वय उपग-
म्यते । समूहालम्बनानुमितिनिष्ठघटादिविधेयकत्वस्य धूमाद्यप्रयोज्यतया नोक्तार्थोतिप्रसङ्गः । धूमेन
वह्निमनुमिनोति न घटेनेत्यादावनुमितौ घटादिप्रयोज्यत्वाभावो नान्वेति अपितु नञर्थाभावप्रति-
योग्यन्वयिनि वन्ह्यादिविधेयकत्वएवातो यत्र धूमादिलिङ्गवन्ह्यनुमितौ घटादिरूपलिङ्गाधीनं द्रव्य-
त्वादिभानं तत्र धूमेन वह्निमनुमिनोति न घटेनेति प्रयोगोपपत्तिः । समूहालम्बनरूपतादृशानुमितौ
घटादिरूपलिङ्गप्रयोज्यत्वाभावस्यासत्त्वेऽपि वन्ह्यादिविधेयकत्वे तदबाधात् । नह्यनुमितावपि
द्रव्यत्वादिविधेयकत्वावच्छिन्नघटादिलिङ्गप्रयोज्यत्वस्य वन्ह्यादिविधेयकत्वावच्छेदेनाभावो बाधित
इति संभवति । प्रयोज्यताया व्याप्यवृत्तित्वात् । एतेनानुमितौ धूमादिलिङ्गज्ञानकरणकत्वं तृ-
तीयया प्रत्याय्यते । करणएव तृतीया तत्रेति मतं प्रत्युक्तम् । उक्तस्थलेऽनुमितौ नञर्थान्वययोग्यताया
अनुपपत्तेः । वह्न्यादिविधेयकत्वे धूमादिज्ञानरूपकरणजन्यतावच्छेदकत्वतदभावौ तृतीयान्ततत्स-
मभिव्याहृतनञ्भ्यां प्रत्याय्येत इत्यपि न सत् । कारकविभक्त्यर्थस्य क्रियातिरिक्तेऽनन्वयात् । न
चोक्तस्थले वह्न्यादिविधेयकत्वावच्छेदेन घटादिरूपलिङ्गज्ञानजन्यतावदनुमितिमत्त्वाभावः पुरुष-
निष्ठो नञा प्रत्याय्यते तादृशानुमितिर्घटादौ वह्न्यादिलिङ्गत्वभ्रमदशायां प्रसिद्धेति वाच्यम् ।
धूमेन वह्नेरनुमानमिदं न घटेनेत्यादावनुमितिमत्त्वाद्यभावबोधानुपपत्तेरिति प्राहुः । पर्वतो धूमेन वह्नि-
मानित्यादौ क्रियायोगाभावाद्धेतुतृतीयैव तत्र ज्ञापकज्ञानविषयत्वं हेतुत्वं ज्ञानज्ञाप्यत्वरूपं वा हेतुमत्त्वं
तृतीयार्थः । हेतुशब्दो यद्यपि कारणपर्यायो न तु ज्ञापकपर्यायस्तथापि हेताविति सूत्रस्थहेतुपदं न
समभिव्याहृतनिरूपितहेतुतामात्रपरमपितु समभिव्याहृततज्ज्ञानान्यतरनिरूपितहेतुतापरमेवेति स-
मभिव्याहृतवह्न्यादिज्ञानहेतुज्ञानविषयधूमादिपदादपि तृतीया तत्सूत्रेणानुशिष्यते । गुणहेतौ प-
ञ्चम्या विकल्पेन विधायकसूत्रान्तरमप्यन्यतरनिरूपितहेतुताविषयकमेवातो जाड्याद्बद्धो जाड्येन
वेत्यत्र जाड्यहेतुतावद्धूमाद्वह्निमान् धूमेन वेत्यादौ धूमादेर्वह्न्यादिज्ञानहेतुता प्रतीयते । हेतुत्वं च

---

समासाघटकेन तेन साकाङ्क्षत्वे सापेक्षत्वापत्त्या समाससाधुता न स्यादिति भावः । अनुमितित्वावच्छेदेनैवेति । इदञ्चाव-
च्छेदकत्वं स्वरूपसंबन्धरूपमेव नत्वनतिरिक्तवृत्तित्वम् आलोकादिलिङ्गकवह्निविधेयकानुमितावपि तादृशकरणत्वनिरूपकत्वशून्ये
वह्निविधेयकानुमितित्वस्य सत्त्वात् । नचैवं वह्निविधेयकानुमितित्वस्य धूमज्ञानत्वावच्छिन्नकरणतानिरूपकतायां न स्वरूपसंब-
न्धरूपावच्छेदकत्वस्यापि संभव इतिवाच्यम् । अवच्छेदकत्वपर्याप्तिभानानभ्युपगमेन धूमलिङ्गकवह्न्यनुमितित्वावच्छिन्ननिरूप-
कत्व एव तत्संभवात् । अनुमानमिदमिति । अनुमितिरियमित्यर्थः ।

पूर्वोक्तं प्रयोजकत्वमेव। गुणपदं च न रूपादि चतुर्विंशतिपरम्, धूमादिहेतौ तत्त्वासम्भवात्। नच तत्र धूमादिपदं तज्ज्ञानपरमेवेति तादृशगुणत्वमेव वह्न्यादिहेतोरिति वाच्यम्। तत्र धूमादिज्ञानलाक्षणिकत्वेऽप्यज्ञानाद्बद्ध इत्यादावभावरूपबन्धादिहेतोस्तथात्वासंभवात्। नापि धर्ममात्रपरम्। गगनादेरपि कालिकसंबन्धेन धर्मतयाऽव्यावर्तकत्वात्। समवायादिना धर्मत्वं चाभावाद्यसंग्राहकम्। नापिद्रव्याश्रितत्वम्। सत्तावान् गुणत्वादित्यादौ पञ्चम्यन्तस्यालाक्षणिकत्वपक्षे पञ्चम्यनुपपत्तेः। किन्तु कार्यस्य ज्ञाप्यस्य वाश्रये आश्रितत्वम्। जाड्यादेः स्वप्रयोज्यबन्धाश्रये धूमादेश्च स्वज्ञाप्यवह्न्याद्याश्रयआश्रितत्वाद्गुणत्वम्। हेतौ तद्विशेषणप्रयोजनंच पितुः पाण्डित्येन पुत्र आहूतो धूमस्य स्वस्मिन्सत्त्वेन पर्वतो वह्निमानित्यादौ पञ्चमीवारणम्। ज्ञापकत्वं च तज्ज्ञानजनकप्रमाविषयत्वं ज्ञाप्यत्वमपि प्रमाजन्यज्ञानविषयत्वम्। अतो वह्न्यादेर्व्याप्यताभ्रमेण धूमादिज्ञापकत्वसत्त्वेऽपि वह्निना वह्नेर्वा धूमवानयमित्यादयो न प्रयोगाः। प्रमात्वंच, यावद्भ्रमभिन्नत्वरूपं विवक्षणीयम्। तेन धूमव्याप्यो वह्निरित्यादिज्ञानस्य वह्नित्वाद्यंशे प्रमात्वमादाय नोक्तातिप्रसङ्गः। द्रव्यत्वादेः प्रमेयत्वावच्छिन्नवह्न्यादिज्ञापकत्वेऽपि विशि द्रव्यत्वादिनावह्नित्वाद्यवच्छिन्नज्ञापकत्वेऽपि च पर्वतो वह्निमान् द्रव्यत्वाद् द्रव्यत्वेन वेत्यादिर्न योगः। अन्वयितावच्छेदकवह्नित्वद्रव्यत्वत्वादिना ज्ञाप्यज्ञापकभावस्य तृतीयादिना बोधनात् तत्र तेन रूपेण ज्ञाप्यज्ञापकभावविरहात्। एवं ज्ञाप्यवह्न्यादिमत्त्वान्वयितावच्छेदकपर्वतत्वावच्छिन्नांशे ज्ञापकत्वं ज्ञाप्यत्वं वा प्रतीयतइत्यपि नियमः। तेन पर्वतो वह्निमान् महानसत्वान्महानसेन वेत्यादयो न प्रयोगाः। अत्रेदमवधेयम्। पर्वतो वह्निमान् धूमान्न द्रव्यत्वान्नापि महानसत्वादित्यादौ नञा वह्न्यादौ द्रव्यत्वमहानसत्वादिज्ञाप्यत्वाभावबोधने बाधः तत्र प्रमेयत्वादिना द्रव्यत्वादिज्ञाप्यत्वस्य महानसादौ महानसत्वादिज्ञानज्ञाप्यत्वस्य चसत्त्वात् वह्नित्वादिना द्रव्यत्वादिज्ञाप्यत्वस्य पर्वतादौ महानसत्वज्ञाप्यत्वस्य चाप्रसिद्ध्या नाभावप्रत्यायनसंभव इति ज्ञानप्रयोज्यत्वं ज्ञानजन्यतावच्छेदकत्वरूपं समभिव्याहृतपर्वतादिविशेष्यतानिरूपितं विधेयत्वञ्च विशकलितं पञ्चम्यर्थः विशिष्टलाभोऽन्वयबलात्। एवंचोक्तस्थले नञा विधेयतायां द्रव्यत्वमहानसत्वादिज्ञानप्रयोज्यत्वाभावः प्रत्याय्यते। तत्प्रयोज्यत्वं च प्रमेयत्वाद्यवच्छिन्नविधेयतायां प्रसिद्धम्। नचैवं पर्वतो वह्निमान् न धूमादित्यादेरपि प्रसङ्गः धूमत्वाद्यवच्छिन्नविषयकज्ञानाप्रयोज्यतत्तद्वह्नित्वाद्यवच्छिन्नविधेयताया वह्न्यादावबाधितत्वादिति वाच्यम्। पर्वतादिविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयतात्वावच्छेदेन विधेयतायां नञाऽभावान्वयबोधोपगमात्। यत्र वह्नित्वावच्छिन्नविधेयतात्वमन्वयितावच्छेदकं तत्रैव तदवच्छेदेनेतरान्वयः संभवति। अत्रच वह्नित्वावच्छिन्नत्वाविशेषितं विधेयतात्वमेव तथेति कथं तदवच्छेदेनाभावान्वय इतितु न शङ्क्यम् पञ्चम्याद्यर्थविधेयताया वह्न्यादौ वह्नित्वाद्यवच्छेदेनान्वयोपगमात्तदवच्छेदेन तदन्वये चावच्छेदकतद्रूपस्य तद्विशेषणांशे धर्मिपारतन्त्र्येण प्रकारत्वात्। प्रकृते स्वरूपसंबन्धरूपवह्नित्वाद्यवच्छिन्नत्वेन सहितस्य विधेयतात्वस्यैवान्वयितावच्छेदकत्वात्। वह्न्यादिपदमेव तदवच्छिन्नविधेयताशालिज्ञानपरम्, तदुत्तरमतुबादिप्रत्ययो विशेष्यतारूपसंबन्धपर इति प्राचीनमतेतु वह्नित्वाद्यवच्छिन्नविधेयतात्वस्यान्वयितावच्छेदकत्वमविवादमेव। विधेयतायास्तत्तत्संबन्धावच्छिन्नविधेयतात्वेन पञ्चम्याद्यर्थत्वं स्वीकरणीयम्। तेनायं जानाति, आत्मत्वान्न द्रव्यत्वादित्यादौ विषयतासंबन्धावच्छिन्नायां प्रकृतविशेष्यतानिरूपितज्ञानविधेयतायां द्रव्यत्वादिरूपलिङ्गज्ञानप्रयोज्यत्वसत्त्वेऽपि नावच्छेदकावच्छेदेनाभावान्वयायोग्यत्वम् संबन्धविशेषावच्छिन्नविधेयतात्वरूपान्वयितावच्छेदकावच्छेदेनाभाववत्त्वबोधात्।

---

आश्रितत्वमिति। हेतुतानिर्वाहकसंबन्धेन कालिकाद्यन्यसंबन्धेन वा बोध्यम्। स्वस्मिन्निति। पर्वतइत्यर्थः। ज्ञापकत्वं ज्ञाप्यत्वंवेति। पञ्चम्यास्तृतीयाया वा ज्ञानजन्यज्ञानविषयत्वरूपो योर्थस्तद्घटकस्य प्रथमस्य ज्ञानस्य विषयत्वं ज्ञापकत्वं द्वितीयस्य ज्ञाप्यत्वं तत्र प्रथमज्ञाने प्रकृत्यर्थस्य विषयतानिरूपकत्वमात्रं न संसर्गोऽपि तु समभिव्यहारविशेषतात्पर्यज्ञानादिरूपपर्वतत्वावच्छिन्नविषयतानिरूपितस्वनिष्ठविषयताकत्वं द्वितीयज्ञानस्य वा वह्न्यादौ विषयत्वस्य

एवं ज्ञानप्रयोज्यत्वप्रविष्टं ज्ञानमपि तत्तत्संबन्धावच्छिन्नप्रकारकत्वविशेषितमर्थः । तेन समवायेन हेतुत्वपरस्यायं वह्निमान् तद्रूपान्न तु धूमादिति प्रयोगस्य नायोग्यता । वह्निविधेयतायां संयोगेन धूमप्रकारकज्ञानप्रयोज्यत्वसत्त्वेपि समवायसंबन्धावच्छिन्नतत्प्रकारताशालिज्ञानप्रयोज्यतात्वरूपान्वयितावच्छेदकावच्छिन्नाभावस्याबाधात्संबन्धविशेषघटितधर्मस्यान्वयितावच्छेदकतया भाननियामकं तु तात्पर्यमेव वह्न्यादिविधेयताया व्याप्त्यादिघटकाभावादिज्ञानप्रयोज्यत्वसत्त्वेऽपि पर्वतो वह्निमानभावादित्यादिर्न प्रयोगः मुख्यविशेष्यतानिरूपितप्रकारताया एव निवेशनीयत्वादिति दिक् । केन हेतुना कस्मै हेतवइत्यादौ विभक्तिभिर्हेतुताविशिष्टे हेतुताबोधयितुमशक्या पौनरुक्त्यादिति न शङ्क्यम् । हेतुशब्दस्य स्वरूपयोग्यपरत्वात्, विभक्तेः फलोपधानपरत्वात् । दण्डवान् रक्तदण्डवानितिवत् कार्यविशेषानुपरक्तहेतुताविशिष्टे कार्यविशेषोपरक्तहेतुताबोधेऽनाकाङ्क्षताविरहाच्च । नचान्वयबोधसंभवेऽपि हेतुशब्दप्रयोगवैयर्थ्यम् । फलोपधायकतालाभे स्वरूपयोग्यताया अर्थाल्लाभसंभवादिति वाच्यम् । विभक्तेरन्यार्थताया अप्यन्यत्र दृष्टत्वाद्धेतुतापरत्वनिश्चयार्थं तत्प्रयोगात् ।

सहार्थयोगेऽपि साहित्यप्रतियोगिवाचकपदात्तृतीया, पुत्रेण सहागत इत्यादौ । अथ यदि सहशब्दार्थः समभिव्याहृतपदोपस्थाप्यक्रियासमानकालीनक्रियान्वयित्वम् । तदन्वयित्वं च समभिव्याहृतक्रियाबोधकपदेन क्रियाया यादृशः संबन्धः साहित्यान्वयिनि प्रत्याय्यते, तादृशतत्संबन्ध एव सच पुत्रेणेत्यादौ कर्तृत्वम् । दध्ना सहौदनो भुज्यतइत्यादौ कर्मत्वादिस्तृतीयार्थोऽपि स एव संबन्धः । तथाच पुत्रकर्तृकागमनसमानकालीनागमनकर्तृत्ववद्दधिकर्मकभोजनसमानकालीनभोजनकर्मत्वादिकं पुरुषौदनादौ तत्र तत्र प्रतीयत इत्युच्यते । तदा सह शब्देनैव तत्तत्क्रियाकर्तृत्वबोधने क्रियापदवैयर्थ्यम् । क्रियान्वयिनि क्रियान्वयबोधस्योद्देश्यतावच्छेदकविधेययोरभेदेननिराकाङ्क्षतयाऽसंभवाच्च । नच तत्तत्क्रियासमानकालीनत्वमात्रं सहशब्दार्थः तस्य च क्रियापदोपस्थापितक्रियायामेवान्वय इति क्रियापदसहितसहशब्दादेवोक्तविशिष्टार्थलाभ इति वाच्यम् । एवं सति पुत्रेण सहागत इत्यादौ सहशब्दार्थस्य क्रियापदार्थान्वयित्वेनान्यसापेक्षतया तेन सह पुत्रशब्दस्य समासासंभवेन सपुत्र इत्यादिप्रयोगानुपपत्तेः । नह्यत्र समासे सहार्थस्य प्राधान्यम् । येनान्यसापेक्षत्वेऽपि समासो भवेत् किंतु बहुव्रीहित्वादन्यपदार्थप्राधान्यमेवेति चेन्न । समभिव्याहृतपदोपस्थाप्यक्रियाकाल एव सहशब्दार्थः तस्य क्रियान्वयिनि नामार्थएवान्वयः । तादृशकालविशिष्टे नामार्थे क्रियान्वये च क्रियायामपि तादृशकालावच्छिन्नत्वं भासते । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य व्युत्पत्तिसिद्धत्वात् । अतः क्रियाद्वयसमानकालीनत्वलाभ इति साम‌ञ्जस्यात् । अथवा आगमनसमानकालीनागमनादिकमेव सहशब्दार्थः । तस्य कर्तृत्वादिसंबन्धेन पुरुषादावन्वयः । तादृशसंबन्धेन तद्विशिष्टे चागत आगच्छतीत्यादिपदोपस्थाप्यागमनकर्तृत्वादीनामन्वये न व्युत्पत्तिविरोधः । विधेयस्योद्देश्यतावच्छेदकप्रकाराभेदविरहात् । नच सहशब्दार्थान्वयबलादेव तत्क्रियाकर्तृत्वस्य पुरुषादौ लाभे प्रकारतयापि क्रियापदेन तत्प्रतिपादनमफलमिति तत्प्रयोगो व्यर्थ इति वाच्यम् । समभिव्याहृतपदेन तत्तत्क्रियाया अनुपस्थापने सहशब्देनापि तत्तत्क्रियाघटितसाहित्यस्याशक्यस्य बोधनं न संभवतीति क्रियापदप्रयोगस्यावश्यकत्वात् । सहशब्दार्थक्रियायाः कर्तृत्वादिसंबन्धेन नामार्थेऽन्वयश्च न व्युत्पत्तिविरुद्धः । सहश-

भासमानस्य स्वरूपमात्रं न संसर्गोऽपितु पर्वतविशेष्यतानिरूपितस्वप्रतियोगिकत्वस्वरूपं तथाच प्रथमज्ञानस्य द्वितीयज्ञानस्य वा पर्वते विषयत्वस्य प्रत्ययः । यद्वा पर्वतत्वावच्छिन्नविशेष्यताकज्ञानघटिते लक्षणोपगमाद्विशिष्टान्वयमाहात्म्याच्च लिङ्गविषयकत्वेन लिङ्गिविषयकत्वेन वा पर्वतविशेष्यकत्वस्यावच्छेद्यावच्छेदकभावलाभात् समूहालम्बनव्यावृत्तेः पर्वत उक्तविषयत्वप्रतीतिः एवंच ज्ञाने प्रमात्वविशेषणस्योक्तत्वात् पर्वतविशेष्यकमहानसत्वप्रकारकज्ञानस्यैव पर्वतविशेष्यकवह्न्यनुमितिजनकत्वेन तस्य भ्रमतया महानसत्वेन पर्वतोवह्निमानित्यस्य नापत्तिः एतेन प्रथमान्तपर्वतपदार्थस्य प्रथमज्ञानेन द्वितीयज्ञानेन च समन्वये व्युत्पत्त्यभावात् पर्वते ज्ञापकत्वस्य सर्वथैव ज्ञाप्यत्वस्यापि च न

ब्दस्याधातुत्वाद्, निपातत्वाच्च । नच प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेनेत्यादौ शत्रुघ्नप्रसवलक्ष्मणप्रसवयोः समानकालीनत्वाभावात्, क्रियाद्वयसमानकालीनतायाः सहशब्दार्थत्वासंभव इति वाच्यम् तत्रापि स्थूलकालघटितसमानकालीनत्वसत्त्वात् । नच कालत्वेनैव कालस्य तदर्थान्तर्भावे पुत्रागमनपूर्वमागन्तरि आगतोऽयं न पुत्रेण सहेति प्रयोगानुपपत्तिः । पुत्रागमनाधिकरणस्थूलकालवृत्त्यागमनकर्तृत्वसत्त्वेनान्वयितावच्छेदकरूपावच्छिन्नप्रतियोगिताकसाहित्याभावबाधादिति वाच्यम् । तत्र क्षणत्वेनैव कालस्य सहशब्दार्थेऽन्तर्भावनीयत्वात् । एवं यत्र एककालेऽपि विभिन्नस्थले भुञ्जानमधिकृत्य न सह भुङ्क्त इति प्रयुज्यते तत्रैकशालारूपभोजनाधारोऽपि सहशब्दार्थेऽन्तर्भावनीयः । अतएवालापाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनादित्यादिना पतितभोजनसमानकालीनभोजनमात्रस्य पापजनकत्त्वं न बोध्यते एकपङ्क्तेरपि विवक्षणात । एवं "याजनं योनिसंबन्धं स्वाध्यायं सह भोजनम् । सद्यः पतति कुर्वाणः पतितेन न संशय" इत्यादावेकदैकपात्रभोजनस्यैव सद्यःपातहेतुत्वं प्रत्याय्यते, तत्र तादृशार्थस्यैव सहशब्देन विवक्षणात् । अथ नामार्थस्यैव सहार्थविशेष्यतयान्वयोपगमे पुत्रेण सह नागच्छत्ययमित्यादौ सहशब्दार्थपुत्रसाहित्याभाव एव पुरुषांशे नञा बोध्यत इत्युपगन्तव्यम् तच्च नोपपद्यते तथासत्याख्यातार्थोद्देश्यतावच्छेदकतयैव नञर्थभानस्योपगन्तव्यतया प्रसज्यप्रतिषेधस्थले निषेधस्य तं प्रति प्राधान्येन भाननियमव्याघातात् । एवमनागच्छन्तमपि पुरुषमधिकृत्य तथा प्रयोगात्तत्रायोग्यताप्रसङ्गाच्च । एतेन तत्र पर्युदासनञ्वत्क्रियायोगपरित्याग इत्युक्तावपि न प्रतीकारः । नच तत्रागमनाभावकाल एव पुरुषान्वयी सहशब्दार्थः तथाच पुत्रागमनाभावकालावच्छिन्नपुरुषे वर्त्तमानकालावच्छिन्न आगमनाभावः प्रतीयत इति न काचिदनुपपत्तिरिति वाच्यम् । यत्रास्य पुत्र आयाति न त्वयं तत्रापि तादृशप्रयोगात् । तत्रच पुत्रागमनकालावच्छिन्नस्यागमनकर्तृत्वस्याभावसत्त्वेऽपि पुत्रागमनकालावच्छिन्नएवपुरुषे वर्त्तमानकालावच्छिन्नागमनाभावस्य सत्त्वेनायोग्यतापातात् । मैवम् । सहशब्दार्थस्तत्तत्क्रियाकालः क्वचित्तत्तत्क्रियान्वयिप्रथमान्तपदार्थेऽन्वेति । क्वचिच्च समभिव्याहृतक्रियायाम् । सपुत्र आगच्छतीत्यस्य पुत्रेण सहागच्छति य इति विग्रहात् प्रथमान्तान्यपदार्थ एव पुत्रागमनकालान्वयो नतु क्रियायामिति न समासानुपपत्तिः । नवान्यपदार्थपुरुषालाभः । नचैवं समासलभ्यस्य पुत्रागमनकालावच्छिन्नस्य पुंसो विग्रहवाक्येनापि प्रतिपादनाद्बहुव्रीहिमात्रस्यैव नित्यसमासत्वमिति भज्येतेति वाच्यम् बहुव्रीहिमात्रस्य तथात्वानियमात् प्रथमान्तानुपस्थाप्यान्यपदार्थबोधकबहुव्रीहेरेव तत्त्वाभ्युपगमात् । अत्रचान्यपदार्थस्य प्रथमान्तोपस्थाप्यत्वात् । नच वृष्टे देवे गत इतिवत् प्रथमार्थे बहुव्रीहेरसाधुत्वमिति वाच्यम् अनेकमित्याद्यनुशिष्टबहुव्रीहावेव तन्नियमात् । अत्रच सूत्रान्तरेण तद्विधानात् । अतएव तदारम्भोऽपि । पुत्रेण सह नागच्छतीत्यादौ च क्रियायामेव तादृशसहार्थान्वय इति पुत्रागमनकालीनागमनकर्तृत्वाद्यभावः प्रथमान्तार्थे प्रतीयत इति सर्वं सुस्थम् । भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामपि गर्दभ्यां, "सहैव दशभिः पुत्रै" रित्यादौ वर्त्तमानेत्यध्याहाराद्वर्त्तमानत्वक्रियामादायैव साहित्यबोध इति वदन्ति ।

---

लाभसंभव इत्यपास्तमुक्तरीत्या तत्संभवादिति । **तत्रायोग्यताप्रसङ्गाच्चेति** । नञर्थस्य सहपदार्थेनान्वये आगमनकर्तृत्वस्य पुरुष एवान्वयस्योपगन्तव्यतया तस्यानागच्छत्ययोग्यत्वादुक्तवाक्यार्थस्यायोग्यत्वप्रसङ्गादित्यर्थः । **नित्यसमासत्वमिति** । विग्रहवाक्याप्रतिपाद्यविशिष्टस्वार्थकत्वं नित्यसमासत्वं तत्पुरुषकर्मधारयादिषु केषांचिदेव गीष्पतिधनाधिपकृष्णसर्पादीनां समासार्थजातिविशेषावच्छिन्नानां विग्रहवाक्यतोबोधाभावेन नित्यसमासत्वं बहुव्रीहेस्तु सर्वस्यैव स्वार्थस्य चित्राभिन्नगोसंबन्धिरूपान्यपदार्थादेर्यत्सम्बन्धिचित्राभिन्नगवादिरूपार्थप्रतिपादकविग्रहवाक्याप्रतिपाद्यत्वेन नित्यसमासत्वमिति तन्नियमो भज्येतेत्यर्थः । **अनेकमित्याद्यनुशिष्टेति** । अनेकमन्यपदार्थइतिसूत्रानुशिष्टेत्यर्थः । **सूत्रान्तरेणैवेति** । तेनसहेतितुल्ययोगेतिसूत्रेणेत्यर्थः । तुल्ययोगेवर्तमानंसहेत्येतत्तृतीयान्तेन प्राग्वदिति तस्यवृत्तिः । **अतएवेति** । अनेकमित्यादिसूत्रस्य प्रथमान्तार्थान्यान्यपदार्थविषयत्वादेवेत्यर्थः । **तदारम्भोपीति** । सूत्रान्तरारम्भोपीत्यर्थः । **भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामिति** । यदा पुत्रा भारं वहन्ति गर्दभी च यदा गर्दभी भारं पुत्रश्च वहति तदा पुत्रेण सह भारं वहति गर्दभीत्यस्य सूपपाद-

इत्थंभूतलक्षणइत्यनेन लक्षणवाचिपदात्तृतीयाऽनुशिष्यते। लक्षणत्वं च व्यावर्तकत्वं तच्च विशेष्यतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वम्, तदाश्रयश्च धर्मो द्विविधो विशेषणमुपलक्षणं च। विद्यमानं सद्व्यावर्तकं विशेषणम्। पुरुषादौ वर्त्तमानकालावच्छेदेन विद्यमानो दण्डादिः। अविद्यमानं व्यावर्तकमुपलक्षणम्। तापसादेः कालान्तरीणजटादिकम्। विशेषणस्य संबन्धो मतुबादिभिः प्रत्याय्यते अस्तीत्यर्थे विहितानां वर्त्तमानसंबन्धार्थकत्वात्, अतो जटाभिस्तापस इत्यादावविद्यमानजटादेः संबन्धविवक्षया मतुबाद्यनवकाशात् तृतीया। तथाच विद्यमानत्वस्याविद्यमानत्वस्येवाप्यप्रत्यायनात् विशेषणवाचि पदादपि तृतीया। यथा ज्ञायमानत्वेन लिङ्गं करणमित्यादौ। अथ तत्र ज्ञायमानत्वादिवैशिष्ट्यं तृतीयया लिङ्गादौ न प्रत्याय्यते अपि तु पदार्थैकदेशे करणत्वादावेव तदवच्छिन्नत्वमिति चेत्तथापि सा विशेषणतृतीयैव अनुशासनान्तराभावात्। वस्तुतो लिङ्गादौ ज्ञायमानत्वादिवैशिष्ट्यबोधनेऽपि संबन्धविधया करणत्वज्ञायमानत्वयोरवच्छेद्यावच्छेदकभावभानसंभवादेकदेशान्वयस्वीकारोऽनुचितः। नच संबन्धविधया करणत्वपदैकदेशेऽवच्छिन्नत्वभानेऽप्येकदेशान्वयध्रौव्यमिति वाच्यम्। करणाभेदरूपे करणत्वे करणस्य संबन्धविधया भासमाने ज्ञायमानत्वावच्छिन्नत्वस्यावच्छेदकतया भानोपगमेनैकदेशान्वयं विनाप्यवच्छेद्यावच्छेदकभावभानात्। अथ दण्डवानयमासीद्दण्डीगतवानित्यादौ दण्डस्यातीततया विशेषणत्वासंभवान्मतुबाद्यनुपपत्तिरिति चेन्न। प्रकृतशब्दप्रयोगाधिकरणकालावच्छिन्नस्येव विधेयान्तरसमभिव्याहारस्थले तदधिकरणकालावच्छिन्नस्य संबन्धस्यापि मतुबादिना प्रत्यायनात्। तत्रातीतकालसत्त्वादिरूपविधेयाधिकरणातीतादिकालावच्छिन्नसंबन्धस्यैव मतुबाद्यर्थत्वात्। अविद्यमानोऽपि दण्डादिर्धर्मान्तरसंबन्धसमानकालीनतया धर्मान्तरान्वयिनि विशेषणम्। तत्प्रकारेण भासमाने धर्मान्तरान्वयबोधो विशिष्टवैशिष्ट्यबोधइत्युच्यते। नत्वसावन्वयिन्युपलक्षणम् नवा तादृशबोधस्तदुपलक्षितान्वयबोध इत्युच्यते। क्वचिद्विधेयान्तरसमानकालीनमपि विशेषणं तदनन्वयितया तदन्वयिन्युपलक्षणमुच्यते यथा रूपवान् रसवानित्यादौ रूपादिकं रसान्वयिनि, सास्नावान् गोपदवाच्य इत्यादौ सास्नादिकं गवादिपदवाच्ये। क्वचिद्धर्मिसंबद्धधर्मान्तरसंबन्धितानवच्छेदकतया धर्मान्तरसंबन्धिन्युपलक्षणमतो दण्डपुरुषावित्यादिसमूहालम्बनबोधो दण्डाद्युपलक्षितपुरुषादिविषयको नतु विशिष्टविषयक इत्युच्यते विशेष्यसंबन्धासंबन्ध्यपि तत्संबन्धितावच्छेदकतया तद्वृतिविशेषणम्। अतएव संज्ञाविशिष्टसंख्यादिज्ञाने संज्ञादेर्विषयत्वमनङ्गीकुर्वतां प्राभाकराणां प्राचीननैयायिकानां च मते तटस्थज्ञानविषयतयैवविषयतावच्छेदकत्वात्संज्ञादेः प्रकारस्य ज्ञानविषयविशेषण-

---

लात् भारमनुद्वहन्तं पुत्रमनुद्वहन्त्यामित्युपात्तं प्रथमे भारोद्वहनकर्तृत्वरहितपुत्रस्याप्रसिद्धिर्द्वितीये पुत्रवहनकर्तृत्वाभा-
वस्याप्रसिद्धिरिति स्थलद्वयाविषयत्वलाभे भारोद्वहनकर्तृगर्दभीसहभावमात्रविषयत्वमुक्तप्रयोगस्य लभ्यते तच्च तादृशक्रिया-
भावाद्रुरुपपादमिति भावः। **विशेष्यतावच्छेदकसमानाधिकरणेत्यादि**। तापसमात्रस्य जटाया अभावेन तत्सं-
बन्धस्य विशेष्यतावच्छेदकतापसत्वसमानाधिकरणाभावप्रतियोगित्वसंभवः गन्धेन पृथिवी जटाभिः स इत्यादावुद्देश्यताव-
च्छेदकपृथिवीत्वतद्व्यक्तित्वादिमति जटासंबन्धगन्धसम्बन्धाभावासत्त्वेन यद्यप्यनेन सूत्रेण न तृतीयासंभवस्तथापि ज्ञापकहेतौ
भवत्येव तृतीया। यत्तु हेतौतृतीया कारकहेतावेव ज्ञापकहेतौ चानेनैव लक्षणत्वमपि ज्ञानज्ञापकत्वमेव जटाभिस्तापस इत्यस्य
जटाज्ञानज्ञाप्यतापसत्वविशिष्ट इत्यर्थ इति कश्चित्तन्न ज्ञापकत्वं हि व्याप्यस्यैव भवति नहि जटातापसमात्रधर्मं, एकदेशान्व-
यप्रसङ्गोऽपि च दोषः स्वमतेऽभावप्रतियोगिसंबन्धस्तृतीयार्थः संबन्धेप्रकृत्यर्थस्य प्रतियोगिताकत्वेनान्वयः अभावेच प्रकृत्य-
र्थतावच्छेदकावच्छिन्नस्याधेयतयाऽन्वयस्तेन द्रव्यत्वेन घटइत्यादेर्नप्रामाण्यप्रसङ्ग इति। **नप्रत्याय्यतइति**। तथासति
विवक्षितस्य ज्ञायमानत्वेन करणत्वस्यालाभादितिशेषः। **करणाभेदरूपेकरणत्वइति**। तदभेदस्य तद्वृतासाधारणरूपता-
पक्षे यद्यपीदं न सम्भवति तथापि प्रकृत्यर्थतावच्छेदकधर्मस्यैव स्ववृत्तित्वविशिष्टत्वेनाभेदसंसर्गत्वपक्षेऽभेदसंसर्गस्य करणत्व-
रूपतासंभवत्येव। **अवच्छेदकतयेति**। संसर्गतावच्छेदकतयेत्यर्थः। **अविद्यमानोऽपीति**। प्रतियोगिकालइत्यादिः।
**तदनन्वयितयेति**। विधेयान्तरसमानवयितयेत्यर्थः। अन्वयश्च विधेयान्तरेण सह तस्य धर्म्यंशे भासमानो यः स एव प्रा-

त्वम् । अतएव द्वित्वनाशकालीनायां द्वे द्रव्यइति बुद्धौ न द्वित्वविषयकत्वमपितु द्वित्वविशिष्टविषयकत्वमेव, द्वित्वरूपविशेषणधीजन्यत्वादित्याचार्याः । एवमप्रतियोगित्वाविशेषेऽपि घटसामान्याभावादिप्रतियोगिनि घटत्वादिकं विशेषणं नीलादिकमुपलक्षणमित्युच्यते । क्वचिच्च विद्यमानमप्यतद्व्यावृत्तिन्यूनाधिकवृत्तितया तत्र न विशेषणमित्युच्यते किंतूपलक्षणम् यथा विद्यमानापि जटा तापसउपलक्षणं, नतूपलक्ष्यतावच्छेदकशमदमादिवद्विशेषणमित्यलम् । क्वचिदविशेषणस्यापि संबन्धो मत्वर्थीयेन बोध्यते घटोऽयं विनाशीत्यादिप्रयोगदर्शनादिति दीधितिकृतः । तदसत् । आवश्यकार्थधातूत्तरणिनिप्रत्ययेनापि तत्र विनाशिपदव्युत्पत्तेरिति ॥ इति तृतीया ॥

ब्राह्मणाय गां ददातीत्यादौ संप्रदानचतुर्थ्या ब्राह्मणादिसंप्रदानकत्वं दानादौ बोध्यते । संप्रदानत्वं च मुख्यभाक्तसाधारणक्रियाकर्मसंबन्धितया कर्त्रभिप्रेतत्वम् । क्रियाकर्मत्वं क्रियाजन्यफलशालित्वं तद्गतस्संबन्धस्तन्निष्ठफलभागित्वमेव । तथाच क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वं पर्यवसन्नम् । कर्मणा यमभिप्रैतीत्यस्य कर्मणा यमभिसंबद्धुमिच्छतीति शाब्दिकैर्विवरणादुक्तस्थले त्यागरूपक्रियाजन्यगोनिष्ठस्वत्वभागितया दातुरिच्छाविषयो ब्राह्मण इति तस्य संप्रदानत्वम् । अथ निरुक्तस्य संप्रदानत्वस्य कर्मत्वस्याविशेषः । कर्त्तुरीप्सिततेति सूत्रेण कर्त्तुः क्रियया व्याप्तुमिष्टस्य कर्मसंज्ञाविधानात् । क्रियाया व्याप्तुमिष्टत्वमपि हि क्रियाजन्यफलभागितयेच्छाविषयत्वमेव । नच तथायुक्तमित्यनेन तद्भागितयाऽनभिप्रेतस्यापि तदाश्रयस्य तत्संज्ञाविधानात् कर्मत्वं क्रियाजन्यफलशालित्वमेव नत्विच्छागर्भम् संप्रदानत्वं त्विच्छागर्भमतो भेदः । कर्मत्वस्येच्छाऽघटितत्वे सूत्रे तद्वैयर्थ्यापत्तेः । नच तदाश्रयत्वेनानभिप्रेतस्यापि कर्मत्वेन तत्साधारणक्रियाजन्यफलशालितयेष्टस्यापि ग्रामादेः कर्मतोपपत्ताविच्छाघटिततत्सूत्रवैयर्थ्यमेवेति वाच्यम् । इच्छाघटितस्य निरुक्तरूपस्य यत्राबाधस्तत्र तादृशरूपमपि कर्मप्रत्ययेन प्रतिपाद्यत इत्येतत्प्रतिपादनाय सूत्रद्वयप्रणयनात् । अतएव यत्रौदनस्य गलाधःसंयोगेच्छया यो व्यापारस्ततो विषादेरपि तत्संयोगस्तत्र विषादौ क्रियाजन्यफलशालित्वाभावबाधेऽपि तेन रूपेणेच्छाविषयत्वाभावोऽबाधितस्तत्र विषमनेन न भुज्यत इति प्रयोगोपपत्तिः, इच्छाघटितकर्मत्वतात्पर्येण च दैवाद्विषं भुज्यतइति प्रयोगस्य चोपपत्तिः । नच धात्वर्थतावच्छेदकफलशालित्वेनोद्देश्यत्वं कर्मत्वम् तदनवच्छेदकफलशालित्वेनोद्देश्यत्वं संप्रदानत्वमिति विशेषः । स्वस्वत्वध्वंसावच्छिन्नत्याग एव ददात्यर्थो नतु परस्वत्वफलावच्छिन्नोऽपीति वाच्यम् । उपेक्षायामपि ददातेर्मुख्यार्थतापत्तेः । मैवम् । फलाश्रयतयेष्टत्वमेव हि कर्मत्वम् । फलसंबन्धितयेष्टत्वं संप्रदानत्वम् । ब्राह्मणादिश्च न त्यागजन्यस्वत्वाश्रयतया दातुरिष्टोऽपि तु तन्निरूपकतयैवातो न तस्य कर्मता । नचाश्रयत्वमपि संबन्धविशेष इति गवादेरपि संप्रदानत्वं दुर्वारम् । आश्रयत्वेनाभिप्रायस्थले कर्मसंज्ञया बाधादन्य एवहि संबन्धः संप्रदानताघटक इति यद्युच्येत, तदा वृक्षायोदकमासिञ्चति, पत्ये शेत इत्यादौ सेकजन्यजलसंयोगशयनजन्यप्रीत्याद्याश्रयतयाभिप्रेतस्य वृक्षपत्यादेः

---

द्योऽस्तिच दण्डवानस्त्यासीदित्यादौ विद्यमानातीतकालसत्त्वादेर्विधेयस्य धर्मिणि पुरुषे य एव संबन्धः स एव विशेषणेन दण्डेनापीति स एवविशेषणं नतु रूपादिकं तेन सहरसादे रसवदादेर्वा विधेयस्य धर्मिणि द्रव्ये भासमानस्य समवायस्याभेदस्य वा संबन्धस्य विरहात् यस्य कस्यचित्संबन्धस्य ग्रहणे सामनाधिकरण्यादेस्तत्रापि संभवेन रूपस्यापि विशेषणत्वमेवस्यादितिभावः । अतद्व्यावृत्तिन्यूनाधिकेति । तदितिविशेष्यपरम् अतद्व्यावृत्तेर्न्यूनाधिकदेशवृत्तीत्यर्थः । आवश्यकेति । आवश्यकार्थेन धातूत्तर विहितेन णिनिप्रत्ययेन विनाशीतिपदनिष्पत्तिः नतु नाशप्रातिपदिकोत्तरमत्वर्थीयेन अवश्यभाविनाशसवन्धीति तदर्थ इति नाविद्यमानधर्मसंबन्धस्य मत्वर्थताङ्गीकार आवश्यकः विनाशवानयं घट इत्यादिस्तु प्रामाणिकप्रयोगो नास्त्येवेति भावः ।

इति तृतीयाऽलोकः ।

तत्साधारणेत्यादि । अनभिप्रेतसाधारणं यत्क्रियाजन्यफलशालित्वं तेनैव कर्मतोपपत्तौ ग्रामादेरिष्टस्येत्यन्वयः ।

संप्रदानत्वानुपपत्तिरिति वाच्यम्। धात्वर्थतावच्छेदकफलाश्रयत्वभिन्नफलसंबन्धस्य संप्रदानत्वशरीरे निवेशेन सामञ्जस्यात्। वृक्षायोदकमासिञ्चतीत्यादौ द्रवद्रव्यक्रियानुकूलव्यापारो धात्वर्थः सम्प्रदानतानिर्वाहकसंयोगश्च न तादृशधात्वर्थतावच्छेदक इति तदाश्रयत्वं निरुक्ताश्रयताभिन्नमेवेति तत्प्रकारकाभिप्रायविषयवृक्षादेः संप्रदानतानिर्वाहात्। नच पत्ये शेतइत्यादौ धात्वर्थतावच्छेदकफलाप्रसिद्ध्या तदनुपपत्तिः। भेदप्रतियोगिप्रविष्टधात्वर्थतावच्छेदके फलत्वानिवेशेन प्रसिद्धिसंभवात्। एवंच ब्राह्मणायेत्यादौ ब्राह्मणनिरूपितत्वेनेच्छाविषयगोनिष्ठस्वत्वजनकत्यागकर्तेति बोधः। निरूपितत्वेन कर्त्तुरिच्छाविषयत्वं द्वितीयान्तार्थगोवृत्तित्वान्वयिधात्वर्थतावच्छेदकस्वत्वान्वयिचतुर्थ्यर्थः। स्वत्वजनकत्यागश्च ददात्यर्थः। अत्र केचित्। ददातियोगे धात्वर्थतावच्छेदकस्वत्वनिरूपकत्वमेव संप्रदानत्वं तदेव च मुख्यम्। तथाच तत्र निरूपितत्वमात्रं चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वेऽन्वेति। अतएव श्राद्धस्य पित्रपेक्षया यागत्वमेव दानत्वं तु ब्राह्मणापेक्षयेति शूलपाणिः। तत्र त्यज्यमानेऽर्थे पितॄणां स्वत्वानुत्पत्त्या संप्रदानत्वासंभवात् स्वत्वभागित्वेनोद्देश्यत्वं यदि संप्रदानत्वं स्यात्तदा पितॄणामपि तथात्वाक्षतेः, पित्रपेक्षयापि दानत्वं स्यात्। नहि श्राद्धेपितॄणां स्वत्वभागित्वेन नोद्देश्यत्वम्। पितरेतत्तेऽन्नंस्वधेत्यादिश्राद्धरूपत्यागाभिलापस्य स्वधार्थेत्यगेचतुर्थ्याः स्वत्वभागित्वेन पित्रादेरुद्देश्यत्वबोधकत्वात्। स्वत्वभागित्वेनोद्देश्यस्यापि पित्रादेः स्वीकाराभावान्न स्वत्वं ब्राह्मणानां तत्रानुद्देश्यत्वेऽपि स्वत्वं प्रतिपत्तितो जायते। अनुद्देश्यत्वेऽपि च संप्रदानत्वमुपपादितमेव। पितॄणामिव ब्राह्मणानामपि च स्वत्वभागित्वेनोद्देश्यत्वमप्यविरुद्धम्। धात्वर्थतानवच्छेदकफलभागितया यत्र संप्रदानत्वं वृक्षायोदकं सिञ्चति, पत्ये शेत इत्यादौ तन्नोद्देश्यत्वांशनिवेश आवश्यकः यत्रान्योद्देशेन क्षिप्तजलस्य दैवाद्वृक्षसंयोगोऽन्योद्देशेन शयनादितश्च पत्यादेः फलसंबन्धस्तत्र तथा प्रयोगविरहात्। अतएव तत्र चतुर्थ्यर्थः वृक्षादिनिष्ठतया कर्त्रभिप्रेततत्तत्फलं प्रति जनकत्वम् तच्च सेकादिक्रियायामन्वेति भाक्तं च तत्र संप्रदानत्वम्। उद्देश्यत्वागर्भसंप्रदानत्वएव लाघवाच्छक्तेरितरत्र लक्षणाया अभ्युपगमात्। पितृभ्यो दद्यादित्यादावनिर्धारितकर्तृकसंप्रदाने चतुर्थी तत्त्वं च तत्र त्यागजन्यस्वत्वभागितयोद्देश्यत्वमेव। अथ जनान्तरस्य वृक्षादिनिष्ठजलसंयोगादिरिच्छाविषयोऽन्येन च जनेनान्योद्देशेन क्षिप्तजलादेर्वृक्षादिसंयोगस्तत्रापि वृक्षायोदकमासिञ्चति जन इत्यादिप्रयोगापत्तिः। तत्तद्व्यक्तित्वस्य पदेनानुपस्थापनात्। तेन रूपेण विशेष्यभूतकर्तृव्यक्तीनामिच्छांशे भानासंभवादुपस्थितजनत्वावच्छिन्नेच्छाविषयत्वस्य च वृक्षसंयोगादावबाधात्। एवं तदीयकालान्तरीणेच्छामादायाप्यतिप्रसङ्गतादवस्थ्यमिति चेन्न। वृक्षादिनिष्ठत्वेनेच्छैव हि चतुर्थ्यन्तार्थः। तस्याश्च स्वविषयसंयोगादिजनकत्वस्वजन्यत्वोभयसंबन्धेन सेकादिक्रियायामन्वयः।

---

**तदेव च मुख्यमिति**। लाघवात्संप्रदानपदशक्यतावच्छेदकमित्यर्थः। यस्यानुद्देश्यत्वं तस्य कर्त्रनुमतप्रतिपत्त्यापि न स्वत्वोत्पत्तिर्भवतीति चेत्कस्यचिन्मतिस्तदाप्याह। **पितॄणामिवेत्यादि**। तथाचोभयोरुद्देश्यत्वस्याविरुद्धत्वाद्ब्राह्मणउद्देश्यत्वस्य सत्वेन प्रतिपत्तितस्स्वत्वोत्पत्तिसंभवात्स्वारसिकप्रयोगहेतुमुख्यसम्प्रदानत्वं ब्राह्मणस्यैव तत्र न पित्रादेरितिभावः। एतेनानुद्देश्यत्वेपीति पूर्वग्रन्थेन विरोधो निरस्तः। **उद्देश्यत्वमप्यविरुद्धमिति**। एतेनोद्देश्यत्वघटितसंप्रदानत्वस्य ब्राह्मणे विरहेण श्राद्धस्य ब्राह्मणापेक्षया दानत्वं न स्यादित्यनुपपत्तिमनुद्भाव्य पित्रपेक्षया दानत्वं स्यादित्यापत्तिमात्रोद्भावनमसमञ्जसमित्याशङ्का निरस्ता। **अनिर्धारितकर्तृकसंप्रदानइति**। अत्रानिर्धारितकर्तृकदानसंप्रदानेति पाठेन भवितव्यम्। नहि संप्रदानं सकर्तृकं भवति अक्रियात्वात्। यद्वा सम्प्रदानपदार्थघटकक्रियायामन्वयाभिप्रायेण तथापाठः। अनिर्धारितत्वञ्च कर्तुश्चैत्रत्वादिशरीरगतजातिविशेषविशिष्टावच्छिन्नत्वेनानवधृतत्वम् तेन स्वपितृभ्यः पितादद्यादित्यत्राप्यनिर्धारितकर्तृत्वमक्षतम् एवञ्च पायसैः स्वपितॄन् यजते चैत्र इत्येव मुख्यप्रयोगः। कर्तुर्निर्धारितत्वेनोद्देश्यत्वगर्भसंप्रदानत्वस्य स्वरसतः प्रत्ययासंभवात् त्यागजन्यस्वत्वनिरूपकत्वरूपमुख्यसंप्रदानत्वस्यैव कर्तृनिर्धारणस्थले प्रत्येतव्यत्वात्तस्य बाधात्पितृभ्यो ददाति चैत्र इत्यस्यासंभवात् ब्राह्मणाय ददातीतितु स्यादेव। यत्तु प्रागुक्तं श्राद्धस्य पित्रपेक्षया न दानत्वं तस्य सम्प्रदानत्वाभावादिति तन्निर्धारितकर्तृकस्थले स्वरसतः प्रत्येतव्यमुख्यसंप्रदानत्वाभावपरमनिर्धारितकर्तृकस्थलीयामुख्योक्तसंप्रदानत्वन्त्विष्यत एवेति

 

उक्तस्थले च यत्क्रियाव्यक्त्या जलसंयोगादिर्वृक्षादौ जन्यते तत्र कालान्तरीणपुरुषान्तरीणेच्छायाः स्वविषयसंयोगादिजनकत्वसंबन्धसत्त्वेऽपि स्वजन्यत्वाभावान्नोभयसंबन्धेनेच्छावैशिष्ट्यमित्ययोग्यतैवेति वदन्ति । अत्रेदं बोध्यम् । उद्देश्यत्वागर्भत्यागजन्यस्वत्वभागित्वस्य ददातिसंप्रदानतारूपत्वे मैत्रोद्देशेन यद्दत्तं तत्र तादृशदानेन दम्पत्योर्मध्यगं धनमित्यतस्तत्पत्न्या अपि स्वत्वस्य प्रामाणिकतया संप्रदानत्वेन चैत्रपत्न्यै दत्तमिति व्यवहारापत्तेः । नच पत्युः स्वत्वमेव पत्नीस्वत्वं जनयति नतु तत्सामग्रीति वाच्यम् । स्वत्ववति स्वत्वान्तरानुत्पत्तेः । तथाच सर्वत्रैवोद्देश्यत्वान्तर्भावः । भवतु च पितृभ्यो दद्यादित्यत्रापि मुख्यमेव संप्रदानत्वं चतुर्थ्यर्थः । अस्तु वा स्वस्वत्वेच्छाधीनतत्कत्वमेव मुख्यदानरूपक्रियासंप्रदानत्वं पितृस्वत्वाप्रसिद्ध्या न तेषां संप्रदानत्वं चतुर्थ्यर्थो धात्वर्थतावच्छेदकस्वत्वान्वयि निरूपितत्वं स्वत्वस्य च स्वत्वध्वंसेच्छारूपे त्यागे जनकत्वस्वेच्छाधीनत्वोभयसंबन्धः । तल्लाभश्च विशिष्टस्य धातुशक्यतामते शक्तिलभ्य एव, तदन्तर्भावेणैव शक्त्यभ्युपगमात् । फलव्यापारयोः पृथक् धात्वर्थतामते आकाङ्क्षाबलादेव तादृशसंबन्धलाभः । पितृभ्यो दद्यादित्यत्र च धात्वर्थान्तर्गतस्वत्वे चतुर्थ्या पित्राद्यन्वयी निरूपितत्वरूपो मुख्योऽर्थो बाधितत्वान्न प्रत्याय्यते, अपितु निरूपितत्वेनेच्छाविषयत्वरूपो लक्ष्यार्थ एव । ददातिस्तु तत्र मुख्य एव श्राद्धस्यापि ब्राह्मणापेक्षयादानत्वात् । श्राद्धे ब्राह्मणस्य संप्रदानतानिर्वाहायास्ति चोद्देश्यताऽपि ब्राह्मणस्येत्यादिकमभिदधानस्य शूलपाणेरपि संप्रदानत्वशरीरउद्देश्यत्वांशपरित्यागे निर्भरोऽवगम्यते । कर्मणायमभिप्रैतीति प्रणयतो महर्षेः पाणिनेरपि संमतोऽयमर्थः । शत्रवे भयं ददातीत्यादौ जनयतीति भाक्तोऽर्थः । एवं चोत्पादकव्यापाररूपे धात्वर्थे भयरूपं कर्म तद्योगितयोद्देश्यत्वात् शत्र्वादेः संप्रदानत्वम् ।

युद्धाय संनह्यत इत्यादौ संनहनादिक्रियाजन्यफलासंबन्धाद्युद्धादेर्न संप्रदानतानिर्वाह इतिनेयं संप्रदानचतुर्थी अपित्वेधानाहर्तुं व्रजतीत्यर्थे एधेभ्यो व्रजतीत्यत्रेव युद्धं कर्तुं सोढुं वा संनह्यतइत्यर्थविवक्षया क्रियार्थोपपदेति सूत्रान्तरेण तस्य च स्थानिनोऽश्रूयमाणस्य क्रियार्थोपपदस्य तुमुन्नन्तधातोः कर्मणि स्वार्थनिष्ठकर्मत्वे विवक्षिते स्वोत्तरं चतुर्थीत्यर्थः । तथाचाहरणकरणसंनहनाद्युद्देश्यकत्वं तादृशचतुर्थ्यर्थ इत्यवधेयम् । अथ यदग्नये च प्रजापतये च सायं जुहोतीत्यादावग्न्यादेरिव सर्वभूतेभ्य उत्सृष्टं मयैतज्जलमूर्जितमित्यादौ, सर्वप्राणिनामिव पशुना रुद्रं यजत इत्यादावपि त्यागविशेषरूपक्रियायां रुद्रादेरनिराकर्तृसंप्रदानतया चतुर्थी स्यादिति चेन्न । गौरवितप्रीतिहेतुक्रिया यज्यर्थः, तदर्थतावच्छेदकफलं प्रीतिस्तदाश्रयतया रुद्रस्य विवक्षितत्वात्कर्मसंज्ञकत्वेन द्वितीयैव नतु च-

---

भावः । अतएवेत्यादिपूर्वोक्तदोषमनुस्मृत्याह–**अस्तुवेति** । स्वस्य सम्प्रदानत्वाभिमतस्य यत्स्वत्वं तदिच्छाधीनं तत्स्वत्वं यस्य तत्संप्रदानं तत्त्वमित्यर्थः । पत्न्याश्च स्वत्वं न पत्नीस्वत्वेच्छाधीनमिति न तस्याः संप्रदानत्वमिति बोध्यम् । **अनिराकर्तृसंप्रदानतयेति** । अनिर्धारितकर्तृसंप्रदानतयेति पाठेन भवितव्यं पूर्वन्तथैवोक्तत्वात् तत्वञ्च समभिव्याहृतक्रियाजन्यफलभागितयेच्छाविषयत्वम् । यद्वा अनिराकर्तृसंप्रदानत्वमुक्तार्थे पारिभाषिकम् । अथवा निराकर्तृव्यावर्तकं स्वत्वनिरूपकत्वरूपं मुख्यं संप्रदानत्वं तद्धि यस्य न प्रतिपत्तिर्नचोद्देशत्वं तस्य व्यावर्तकं न निराकर्त्रनिराकर्तृगौणं संप्रदानत्वं क्रियाजन्यफलभागितयोद्देश्यत्वरूपं प्रतिपत्तिरहितसाधारणत्वादव्यावर्तकमित्यर्थः । वस्तुतस्तु निराकर्तृतत्संप्रदानं यत्प्रदत्तं स्वीकृत्य ममेदं माल्यं गृहाणेत्यन्यं निराकरोति निवारयति तादृशस्य संप्रदानस्य क्रियाजन्यस्वत्वरूपफलभागित्वेन संप्रदानत्वेऽपि यत्संप्रदानमुदासीनं विरक्तं न कमपि निराकरोति तस्यानिराकर्तृसंप्रदानस्य स्वत्वाभावेनोक्तसंप्रदानत्वाभावात्क्रियाजन्यस्वत्वादिरूपफलभागितयेच्छाविषयत्वमेव सम्प्रदानत्वं वाच्यमिति रुद्रादीनामप्यनिराकर्तृतयाऽनिराकर्तृसंप्रदानतयोक्तरूपया ततश्चतुर्थीस्यादित्यर्थः । पूर्वग्रन्थेऽप्यनिर्धारितस्थानेऽनिराकर्त्रित्येवयुक्तः पाठः ।

**गौरवितप्रीतीति** । नच गौरवितस्य रुद्रादेः धात्वर्थेनोपसंग्रहात्कथं कर्मत्वमिति वाच्यम् । गुरुफलप्रदत्वेन रुद्रादिगतप्रीतेरपि गुरुत्वेन गौरवितत्वस्य प्रीतेरेव विशेषणत्वात् रतिभोजनादेरपि प्रीत्यनुकूलत्वादुक्तविशेषणम् । गौरवञ्च तत्र स्वर्गादिजनकतावच्छेदकजातिविशेषः । अन्यथा [illegible] गौरवितत्वेन रत्यादेरपि यागत्वापत्तेः । यद्वा गौरवितत्वस्य

तुर्थी । त्यागात्मकताद्दशक्रियायां निरुक्तानिराकर्तृसंप्रदानत्वे सत्यपि तदविवक्षणात् । प्रीतिभागितयोद्देश्यत्वरूपसंप्रदानत्वविवक्षायां च रुद्राय यजतइत्यपि प्रयोगः । उभयविवक्षायां परत्वेन कर्मसंज्ञया बाधाद्वितीयैव । जुहोत्युत्सृजतीत्यादेः प्रीतिरूपफलावच्छिन्नत्यागाबोधकतया त्यागरूपक्रियाजन्यप्रीतिभागिनो देवतादेस्तत्कर्मताविरहान्नैव प्रजापतिं जुहोति भूतान्युत्सृजतीत्यादयः प्रयोगाः ।

रजकस्य वस्त्रं ददातीत्यत्र ददातिर्न त्यागार्थकोऽपितु परायत्तीकरणार्थको गौणः । तदायत्तीकरणं च प्रकृते तत्कर्तृकनिर्णेजनेच्छाप्रकाशको व्यापारः । तदेकदेशे कर्तृत्वे रजकस्य संबन्धविवक्षायां शैषिकी षष्ठी । हन्तुः पृष्ठं ददातीत्यत्र तत्कर्तृकताडनानुमितिप्रकाशकव्यापार एव ददात्यर्थः । तदेकदेशे कर्तृत्वे हन्तुः संबन्धविवक्षायां षष्ठी । एवं संवाहकस्य चरणं ददातीत्यादावूहनीयम् । नारदाय रोचते कलह इत्यादौ रुच्यर्थानामित्यनुशासनेन प्रीतिजनकतारूपरुच्यर्थघटकप्रीतिभागिनः संप्रदानसंज्ञा विहिता, तत्र चतुर्थ्यर्थ आश्रितत्वं प्रीतावन्वेति । ताद्दशक्रियाश्रयतया कलहादेः कर्तृता । पुष्पेभ्यः स्पृहयतीत्यत्र स्पृहाविषयपुष्पस्य स्पृहेरीप्सित इत्यनेन संप्रदानत्वाच्चतुर्थी तदर्थो विषयित्वं तस्येच्छारूपक्रियायामन्वयः । पुत्राय क्रुध्यतीत्यत्र क्रुधद्रुहेत्यादिसूत्रेण कर्मणः संप्रदानसंज्ञा । तत्रापि चतुर्थ्यर्थो विषयित्वं कोपेऽन्वेति । क्रोधस्य द्वेषविशेषात्मकतया भक्तिश्रद्धादिवत् ज्ञानविशेषरूपत्वेन वा सविषयकत्वात् । एवं शत्रवे द्रुह्यतीत्यादावपि तेनैव संप्रदानत्वं द्रोहोऽपचिकीर्षा अहितेच्छेति यावत् । अहितभागितयेच्छाविषयता तन्निरूपकत्वं चतुर्थ्यर्थ इच्छान्वयी, अहितान्वय्याधेयत्वं वा, अतः कर्मणेत्यादिसूत्रस्याविषयः ईर्ष्या अक्षान्तिः परोत्कर्षासहिष्णुता परोत्कर्षगोचरो द्वेष इति तद्विषयस्य परस्य तेनैव संप्रदानता । असूया गुणिनिदोषाविष्करणम् तद्विषयस्याप्यनेन संप्रदानता विषयताविशेषस्तत्र चतुर्थ्यर्थः ।

विप्राय शतं धारयतीत्यादौ धारेरुत्तमर्ण इत्यनेन धनिकविप्रादेः संप्रदानता । अथ कोऽयं धार्यर्थः न तावद्द्रव्यान्तरदानमङ्गीकृत्य परदत्तद्रव्यादानम् । तथा सत्यादानात्परतो धारयतीति प्रयोगानुपपत्तेः आदानस्यावर्त्तमानत्वात् । नचेष्टापत्तिराविशोधनं तथा प्रयोगात् । नापि ताद्दशादानध्वंसः अधमर्णस्य तदकर्तृत्वात् । नचादानमिच्छाविशेषस्तद्वतः पुंसस्तदाश्रयतया तत्कर्तृत्ववत्तद्ध्वंसाश्रयतया तत्कर्तृत्वमप्यक्षतमिति वाच्यम् । एवमप्यादानध्वंसस्य परिशोधनोत्तरमपि सत्त्वेन तदानीमपि धारयतीति प्रयोगापत्तेः । नच परिशोधनप्रागभावविशिष्टो निरुक्तादानध्वंसस्तथा । ऋणीकृतद्रव्यान्तरपरिशोधनप्रागभावदशायां परिशुद्धमृणमादाय धारयतीत्यापत्तेः । नच स्वप्रतियोगिनिर्वाहकाङ्गीकारविषयद्रव्यदानप्रागभावविशिष्टादानध्वंसस्तथा यदृणं परिशोधितं तावद्द्रव्यं च पुनर्गृहीत्वा पुनः परिशोधनीयं तदादाय धारयतीत्यापत्तेः । तदीयपरिशोधनस्यापि स्वकर्त्तव्यतयापूर्वाभ्युपगमविषयत्वात् तत्प्रागभावस्य पूर्वपरिगृहीतशोधनोत्तरमपि सत्त्वात् । नच स्वप्रतियोग्यादाननिर्वाहकाभ्युपगमविषयीभूतं यद् द्रव्यदानं एकक्षणावच्छिन्नैकाधिकरणवृत्तित्वसंबन्धेन तद्विशिष्टान्यप्रागभावविशिष्टादानध्वंसस्तथा । उक्तस्थले चोदीच्यपरिशोधनप्रागभावः प्रथमादानप्रयोजकाभ्युपगमविषयपरिशोधनविशिष्टः प्रथमपरिशोधनप्रागभावश्च प्रथमपरिशोधनोत्तरं नास्त्येवेति नोक्तातिप्रसङ्ग इति वाच्यम् । एवमपि यस्य ऋणस्य परिशोधनमप्रसिद्धं तदादानपूर्वकालीनस्य तावद् द्रव्यं मया तुभ्यं देयमित्यभ्युपगमस्य तदुत्तमर्णोद्देश्यक-

---

शक्यतावच्छेदक उपलक्षणत्वमेव तथाच शक्यतावच्छेदककोटावप्रवेशेन धात्वर्थेनोपसंग्रहाभावाददोषादिति । प्रीतिभागितयोद्देश्यत्वेति । नच प्रीतेर्धात्वर्थतावच्छेदकफलत्वेन तदाश्रयत्वरूपसंबन्धभिन्नस्यैव क्रियाजन्यफलभागित्वस्य गौणसंप्रदानत्वशरीरे प्रवेशस्य प्रागुक्तत्वेनैतदसङ्गतमिति वाच्यं स्वस्वत्वध्वंसानुकूलव्यापाररूपत्यागत्वेन यजितस्तत्प्रतिपत्तेस्तज्जन्यधात्वर्थतानवच्छेदकप्रीतिरूपफलभागितयोद्देश्यत्वस्य च विवक्षितत्वाभिप्रायेण तथोक्तेरतएवानुपदंत्यागात्मकताद्दशक्रियायामित्याद्युक्तम् विषयित्वमिति । मुख्य[illegible] पुष्पेभ्यो वने स्पृहयतीत्यत्र न वनस्य संप्रदानता वने

त्वेन स्वकर्तृकान्योद्देश्यकतावद्द्रव्यदानमेव विषय इत्युपेयम् । तदुत्तमर्णोद्देश्यकतत्कर्तृकतावद्द्रव्यदानस्याप्रसिद्धत्वात् । तथाचान्योद्देश्यकतावद्द्रव्यदानोत्तरं तदभ्युपगमविषयद्रव्यदानविशिष्टान्यप्रागभावासत्त्वाद्धारयतीति व्यवहाराद्युपपत्तिरिति चेत् । अत्राहुः ऋणग्रहणेनाधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो जन्यते । तेनैवादृष्टेन ऋणमपरिशोध्य मृतस्य नरकादिकम् । तथाच द्रव्यान्तरदानाभ्युपगमपूर्वकपरदत्तद्रव्यादानजन्यादृष्टविशेषवत्त्वमेव धारयतेरर्थः । तद्धटकदानान्वयि कर्तृत्वं तत्र चतुर्थ्यर्थः । नच ऋणाशोधनमेव दुरदृष्टजनकमुपपातकमध्ये तस्य परिगणनात्, नतु ऋणादानम् तस्य तथात्वे मानाभावादिति वाच्यम् ऋणादानस्य दुरदृष्टविशेषजनकत्वेऽपि परिशोधनेन तस्य नाश इति बोधनायापरिशोधनस्य नरकरूपफलोपधानप्रयोजकत्वाभिप्रायेण तस्योपपातकमध्ये परिगणनोपपत्तेः। ऋणमादायापरिशोधकस्य नरकभागितया ऋणादानस्यैव दुरदृष्टसाधनतायाः कल्पनीयत्वात्। गृहीतर्णपरिशोधनापेक्षया लघुत्वात् । अपरिशोधनस्य हेतुत्वे परिशोधनपूर्वकालेऽप्यपरिशोधनसत्त्वे दुरदृष्टोत्पत्तेरावश्यकतया परिशोधनस्य तन्नाशकतायां आवश्यकतयाऽस्माकं तत्कल्पनाधिक्यविरहात्। परिशोधनोत्तरकालं परिशोधनाभावसत्त्वेन तद्बलात्तदुत्तरमदृष्टवारणाय परिशोधनध्वंसस्य प्रतिबन्धकतायाः कल्पनीयतया भवन्मते गौरवाच्च। नच परिशोधनानुत्तरमरणमेव पापजनकं वाच्यं तथाच नोक्तातिप्रसङ्ग इति वाच्यम् । गृहीतद्रव्यमपरिशोध्यमरणस्थले तद्द्रव्यपरिशोधनाप्रसिध्या तदनुत्तरत्वादिघटितरूपेण हेतुतायाः कल्पयितुमशक्यत्वादित्यलम् । यूपाय दारु इत्यादौ न संप्रदानचतुर्थी, अपि तु तादर्थ्यर्थे सूत्रान्तरेण । तादर्थ्यं च स एवार्थः प्रयोजनमस्य तत्त्वम्। समभिव्याहृतपदार्थे तादर्थ्यविवक्षायां तद्वाचकाच्चतुर्थीति तदर्थः। प्रयोजनत्वं चात्र न जन्यत्वं दुःखादेः पापादिजन्यतया दुःखाय पापमित्याद्यापत्तेः, नापि जन्यतयेच्छाविषयत्वम् स्वर्गादेः पुण्यादिजन्यत्वेनेच्छाविषयत्वात् स्वर्गाय पुण्यमित्याद्यापत्तेः। तथासति पक्तुं व्रजतीत्यर्थे पाकाय व्रजतीति निर्वाहाय तुमर्थेतिसूत्रप्रणयनवैयर्थ्यात् पाकादेर्निरुक्तव्रजनाद्यर्थतयैव तद्वाचकपदाच्चतुर्थ्युपपत्तेः । अपितु समभिव्याहृतपदार्थनिष्ठव्यापारेच्छानुकूलेच्छाविषयत्वं तत्प्रयोजनत्वं तत्प्रयोजनकत्वरूपतादर्थ्यंच तदिच्छाधीनेच्छाविषयव्यापाराश्रयत्वं दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्तया यूपार्थत्वमिति तद्विवक्षया यूपपदाच्चतुर्थी । इच्छाधीनेच्छाविषयव्यापाराश्रयत्वं चतुर्थ्यर्थः। प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयतयाऽन्वयः । एवं रन्धनाय स्थालीत्यादावूह्यम् । तत्र तादृशव्यापारस्तण्डुलधारणादिः । पुण्यादेः स्वर्गेच्छाधीनेच्छाविषयव्यापारानाश्रयतया न स्वर्गाय पुण्यमित्यादिप्रयोगो, व्रजनादेः पाकानुकूलव्यापारानाश्रयतया न पाकाय व्रजतीत्यादावनेन चतुर्थीति तुमर्थाच्चेत्यादिसूत्रम् । तदर्थश्च तुमुन्नन्तयद्धातुना यादृशोऽर्थः प्रत्याय्यते समभिव्याहृतक्रियाऽन्वितदर्थपरात्तद्धातुघटितभावकृदन्ताच्चतुर्थीति पक्तुं व्रजतीत्यत्र तुमुन्नन्तेन व्रजने पाकविषयेच्छाधीनेच्छाविषयत्वं बोध्यते । तुमुन्ण्वुलाविति सूत्रेण समभिव्याहृतक्रियायां प्रकृतक्रियासमानकर्तृकत्वसहिततदिच्छाधीनेच्छाविषयत्वरूपतदर्थकत्वेन विव-

---

पुष्पं मेस्यादित्यत्र वनस्य विशेषणत्वात् पुष्पविशिष्टं वनंमेस्यादितीच्छायां वनाय स्पृहयतीति भवत्येव । ऋणादानस्येति । नच ऋणादानस्य दुरदृष्टजनकत्वे मानाभावस्योक्तत्वेन तत्र मानमनुक्त्वा जनकत्वेऽपीत्युक्तिरयुक्तेति वाच्यमनुपदवक्ष्यमाणं मानं वृत्तमिवाकलय्य तद्धेतुत्वपक्षे स्मृतिसमर्थनमेव कर्तव्यमाकलयता ग्रन्थकृता तस्यैवारब्धत्वात् । ऋणादानस्य दुरदृष्टजनकत्वे मानमाह । ऋणमादायेति । परिशोधनोत्तरकालमिति । अथ परिशोधनाभावमात्रस्य दुरदृष्टकारणत्वे ऋणादानोत्तरं परिशोधनात्प्रागनन्तदुरदृष्टोत्पादप्रसङ्गः । कारणस्य सर्वक्षणेषु सत्त्वादित्यनन्तादृष्टापत्तिरेवोद्भावयितुमुचितेति चेन्न प्रथमोत्पन्नादृष्टाभावस्यापि तत्सहकारित्वेऽदृष्टोत्पत्त्यनन्तरमदृष्टान्तरापादनासंभवादतः शोधनेन तन्नाशे शोधनस्यापि नाशे शोधनाभावादृष्टाभावोभयसत्त्वात्तदुत्तरमदृष्टापत्तेरेवोक्तत्वात् । नचादृष्टाभावकारणतागौरवंकुतोनोक्तमिति वाच्यमादानहेतुतापक्षेऽप्यादानस्य क्षणद्वयाद्यवस्थायित्वेनादृष्टद्वयादिवारणाय तद्धेतुताया आवश्यकत्वात् नच शोधनप्रागभावरूपाभावस्यैव हेतुत्वे शोधनोत्तरमदृष्टापत्तेरसंभवाद्ध्वंसस्य प्रतिबन्धकत्वकल्पनमयुक्तमिति वाच्यम् प्रागभावस्य

क्षितायां तुमुन्ण्वुलोर्विधानात्। एतत्सूत्रस्यापि स्वर्गाय पुण्यमित्यादिर्न विषय इति सोऽसाधुरेव ।
एधानाहर्तुं व्रजतीत्यर्थे एधेभ्यो व्रजतीत्यत्र एधस्य न व्रजनप्रयोजनत्वं सिद्धत्वात् व्रजनस्य
तदनुकूलव्यापारानाश्रयत्वाच्चेति न तादर्थ्यइति सूत्रस्य प्रवृत्तिर्नापि तुमर्थादित्यादेरेधपदस्य क्रि-
यारूपभाववचनत्वाभावादिति तत्र क्रियार्थोपपदस्येति चतुर्थी । तदर्थश्च क्रियार्थोपपदस्तुमुन्नन्तो
यो धातुरप्रयुक्तस्तस्य यत्कर्म तत्प्रयोगं विना तदर्थकर्मतया यद्विवक्षितं तद्वाचकाच्चतुर्थीति । तत्र
चाहर्तुमिति तुमुन्नन्तार्थः समभिव्याहृतक्रियान्वयिस्वार्थकत्वान्वय्याहरणं, तादृशार्थकर्मतया एधस्य
विवक्षितत्वात्तत्र चतुर्थी । चतुर्थ्या एवार्थस्तत्कर्मकाहरणप्रयोजनकत्वम् । पाकाय व्रजतीत्यादौ पाकं
कर्तुमित्यर्थविवक्षायामनेनैव सूत्रेण चतुर्थ्युपपत्तावपि यदा पाककृतीच्छाधीनेच्छाविषयत्वरूपं
पाककर्मककृतिप्रयोजनकत्वं न व्रजनस्य विवक्षितमपितु पाकेच्छाधीनेच्छाविषयत्वरूपं पाकार्थक-
त्वमेव तत्रापि चतुर्थ्युपपत्तये तुमर्थादिति सूत्रम् । अश्वाय घास इत्यादावश्वपदस्याश्वभोजनपर-
तया तादर्थ्यचतुर्थ्येव । आह्रियत इत्यस्याध्याहारेणाश्वं भोजयितुमाह्रियत इत्यर्थविवक्षया क्रियार्थो-
पपदेत्यादिसूत्रेण चतुर्थ्युपपत्त्या अश्वपदस्य मुख्यार्थपरत्वोपपादनेऽपि अश्वघास इत्यत्राश्वपदस्य
तद्भोजनपरतायास्तादर्थ्यचतुर्थ्याश्चावश्यकता । अन्यथाऽऽहृतपदसापेक्षतया चतुर्थीसमासानुप-
पत्तेः । नच तथापि समासानुपपत्तिः, रन्धनाय स्थालीत्यादौ तद्वारणाय चतुर्थी तदर्थेतिसूत्रेण
समासे प्रकृतिविकारभावस्य नियामकत्वानुसरणादिति वाच्यम् । आरामगृहाश्वघासादौ चतुर्थी-
तियोगविभागेन शाब्दिकैः समासोपपादनात् । नमःस्वस्त्यादिशब्दयोगेऽपि तदर्थविशेषणवाच-
कपदान्नमःस्वस्तीत्यनेन चतुर्थ्यनुशिष्यते । नमःशब्दार्थस्त्यागो नमस्कारश्च एषोऽर्थः शिवाय नम
इत्यादौ त्यागार्थकः । चतुर्थ्या च तत्र प्रकृत्यर्थस्य शिवादेरुद्देश्यत्वं प्रत्याय्यते । त्यागश्च यदि शि-
वस्यायं भवत्वित्यादिफलेच्छाधीनस्वस्वत्वाभावेच्छारूपस्तदा त्यागोद्देश्यत्वं त्यागजनकेच्छायाः स्व-
त्वभागितया विषयत्वम् । यदिच त्यागरूपेच्छैव स्वस्वत्वाभावमिवान्यदीयत्वेन त्यज्यमानगतं स्व-
त्वमपि तत्र विषयीकरोति, नतु तज्जनकेच्छा तदा स्वत्वभागितया त्यागविषयत्वमेव तदुद्देश्यत्वम् ।
शिवादेर्विग्रहवतोऽपि स्वीकाराभावात् तदाकारतया ध्यातमन्त्रस्य त्यागोद्देश्यतामते सुतरां तद-
भावाच्च । त्यज्यमानोपचारादौ स्वत्वाभावेऽपि तदीयत्वेन द्रव्ये स्वत्वावगाहिनीच्छा विसंवादरू-
पैव । द्रव्यनिष्ठेऽन्यदीयस्वत्वे बाधितं शिवादिनिरूपितत्वं शिवादिनिरूपितप्रसिद्धस्वत्वान्तरे वा
बाधितं तत्तद्द्रव्यसंबन्धमवगाहते । नच स्वत्वान्तररूपफलेच्छां विना स्वस्वत्वाभावगोचरेच्छैव न
संभवतीति शिवादिस्वत्वं त्यागस्यैव विषय इति पक्षोऽसंभवदुक्तिक इति वाच्यम् । स्वस्वत्वाभाव-
विषयकेच्छायाः पुण्यादिरूपफलजनकत्वात्तद्विषयस्य पुण्यादिजनकतावच्छेदकस्यापि पुण्यादिफ-
लकत्वात् । अन्यथा तत्स्वत्वस्यापीष्टाजनकतया स्वतोऽपुरुषार्थतया च प्रथममपि तदिच्छाया असंभवेन
प्रथमकल्पस्यापि हेयत्वापातात् । तत्रच प्रथमकल्पे स्वस्वत्वप्रकारकेच्छाजन्यत्वं, जन्यतासंबन्धेन तादृ-
शेच्छावत्त्वं वा चतुर्थ्यर्थः । तत्र प्रकृत्यर्थस्य शिवादेर्विषयताविशेषसंबन्धेनान्वयः । द्वितीयकल्पे च
विषयिताविशेष एव चतुर्थ्यर्थः । तत्र च निरूपितत्वसंबन्धेन शिवादेरन्वयः, नमःपदार्थत्यागस्य
च विषयताविशेषसंबन्धेन द्रव्येऽन्वयः । द्रव्यस्यैव वा विशेष्यतया भासमानत्यागे विषयिताविशेषस-
म्बन्धेनान्वयः । नच प्रथमान्तपदार्थस्य मुख्यविशेष्यतानियमः भूतले न घट इत्यादौ निपातार्थ-

---

हेतुत्वस्य वाच्यत्वात्तस्य
प्रतियोगिनाश्यतापक्षे शोधनोत्पत्त्यव्यवहितोत्तरक्षणे दुरदृष्टापत्तिवारणाय शोधनात्यन्ताभावत्वेनैव
शोधनप्रागभाववति सत्त्वे तद्ध्वंसवत्यपि सत्त्वे बाधकाभावादित्येतदभिप्रायकत्त्वेन यथाकथंचित्संगमनीयत्वात् ॥ स्वत्वभा-
गितया त्यागविषयत्वमेवेति । एवकारेण स्वत्वभागित्वव्यवच्छेदः । अत्रहेतुमाह । शिवादेर्विग्रहवतोपीति ।
स्वीकाराभावादिति । स्वत्वोत्पत्तिप्रयोजकस्य स्वीकारस्याभावादित्यर्थः । नित्यतृप्तस्य शिवादेरिदंमम भवत्विती-
च्छारूपस्य स्वीकारस्यासंभवात् नच शिवस्वमित्यादिव्यवहारानुपपत्तिरिति वाच्यं त्यागीयस्य शिवादिनिष्ठविषयतानिरूपित-
स्वत्वनिष्ठविषयतानिरूपितविषयताश्रयत्वस्यैव तत्प्रयोजकत्वादिति भावः ।

स्यापि मुख्यविशेष्यतया भानात् । शिवायोत्सृजतीत्यादाविव नात्रानिराकर्तृसंप्रदानतास्य नमःपदार्थक्रियात्वाभावात् । नमःपदेन च स्वप्रयोक्तृपुरुषकर्तृकत्वोपरागेणैव त्यागोऽभिधीयते । अन्योच्चरितनमःपदेनान्यदीयत्यागाबोधनात् । तत्पुरुषोच्चरितनमःपदात् त्यागबोधे सति त्यागे त्यज्यमाने द्रव्ये चान्यदीयत्वसंशयानुदयात् । अतएव त्यागे तदीयत्वबोधनायाहं ददहृत्यादिवदहन्नम इति न प्रयुज्यते । नवा परकीयत्वबोधनाय चैत्रो नम इत्यादि । ऋत्विजा च यजमानरूपपुरुषान्तरीयतत्तद्रव्यत्यागे स्वीयत्वमारोप्यैव पूजायां नमःपदं प्रयुज्यते । सचारोपस्तस्य विशेषदर्शनदशायामप्याहार्यतयोपपद्यत इति प्रतिनिधिप्रयुक्तस्य दानवाक्यस्यैव पूजायां तादृशनमःपदघटितवाक्यस्य बाधितार्थत्वेऽप्यदृष्टजनकत्वं न विरुद्धम् । अस्मच्छब्दादिवत्स्वोच्चारणकर्तृत्वोपलक्षितपुरुषविशेषवाचकान्नमःपदाद्विशेषरूपेण पुरुषभानम् । अशक्यस्य चैत्रत्वादेर्भानासंभवे तस्यापि वाच्येऽन्तर्भावः स्वीकरणीयः । तदनुगमकं चोपलक्षणीभूतमेककालीनोभयावृत्तिस्वोच्चारयितृशरीरवृत्तिजातित्वम् । स्वत्वाननुगमेऽपि शक्त्यैक्यं कथंचिदुपपादनीयं, सर्वनामशक्त्यैक्यवत् । उपलक्षणरूपप्रविष्टमुच्चारणं वेदीयत्वेन विशेषणमतः पूजाभिन्नयादृच्छिकान्नत्यागबोधनायान्नं दीयत इतिवदन्नं नम इति न प्रयोगः । योग्यतासत्त्वेऽपि तत्र नमःपदप्रयोगस्य वेदाबोधितत्वेन तद्घटिततत्पदशक्यपुरुषोपलक्षणरूपाप्रसिद्ध्याऽवाचकत्वात् । अतएव यथा नीचप्रीतिहेतुक्रियास्थले पूजयतीत्यादिवारणाय पूजयत्यादिवाच्यप्रीतौ गौरवितवृत्तित्वं, स्वसमभिव्याहृतपदार्थकर्तृपुरुषावधिकोत्कर्षवद्वृत्तित्वरूपमुपलक्षणमुपेयते । उक्तस्थले च योग्यतासत्त्वेऽपि नीचवृत्तिप्रीतेस्तत्त्वाभावेन तत्तात्पर्येण पूजयत्यादेर्न प्रयोगः । तथा नीचोद्देश्यकत्यागतात्पर्येण नमःपदाप्रयोगात्तदतिप्रसङ्गवारणाय गौरवितोद्देश्यकत्यागएव नमःपदशक्तिरित्यनादेयम् । गौरवितोद्देश्यकत्वस्य नमःपदार्थशरीरे निवेशेऽपि गौरवितोद्देश्यकपूजातिरिक्तद्रव्यत्यागबोधनाय नमःपदप्रयोगवारणायोक्तविशेषणस्योच्चारणेऽप्यवश्यं निवेशनीयतया तत एव तदतिप्रसङ्गवारणात् । इन्द्राय स्वाहा तुभ्यं स्वधेत्यादौ अग्निप्रक्षेपोपहितदेवोद्देश्यकत्यागबोधकस्वाहापदपित्रुद्देश्यकत्यागबोधकस्वधापदयोरपि नमःपदवद्देशनादेशितोच्चारणकर्तृत्वोपलक्षितपुरुषीयत्यागवाचकता । अन्यथा पूर्ववदेवातिप्रसङ्गः । एवं च देवोद्देश्यकत्वादेरपि न वाच्यान्तर्भावः । अतादृशत्यागतात्पर्येण स्वाहादिप्रयोगस्य देशनादेशितत्वविरहेणैवानतिप्रसङ्गात् । अतएव तान्त्रिकपूजायामर्घ्याचमनीयादिदानेऽग्निप्रक्षेपोपहितत्वपित्रुद्देश्यकत्वविरहेऽपि स्वाहास्वधाप्रयोगस्य नासमवेतार्थता । एवंच सति नमःस्वाहास्वधाशब्दानामेकस्थलेऽन्यप्रयोगस्य वेदबोधितत्वाभावेनैव नातिप्रसङ्गः नतिरूपो नमःपदार्थश्च स्वापकर्षबोधनानुकूलः स्वीयव्यापारः । चतुर्थ्या चापकर्षान्वय्यवधित्वमवधिमत्त्वं वा प्रत्याय्यते । स्वमुच्चारयिता, तथाच चैत्राद्युच्चारितान्नमो हरयइत्यादिशब्दाद्धर्यवधिकचैत्रापकर्षबोधानुकूलश्चैत्रीयव्यापार इत्याकारको बोधः । नारायणं नमस्कुर्त्येत्यादौ नमःशब्दयोगेऽपि न चतुर्थी । द्वितीयया कारकविभक्तित्वेन बलीयस्या बाधात् । अथात्र नारायणादेर्नमस्कारघटकापकर्षावधित्वमेव तच्च न कर्मत्वम् । कर्मत्वं च क्रियाजन्यफलशालित्वादिरूपमेव तच्च न तस्येति द्वितीयाया नायं विषयः । नचापक-

---

क्रियात्वाभावादिति । अनिराकर्तृसंप्रदानत्वस्य समभिव्याहृतक्रियाघटितस्य । प्रागुक्तत्वादितिभावः । कथंचिदुपपादनीयमिति । नमःपदं नमःपदविशिष्टं भवत्वितीच्छाया नमःपदशक्तिरूपत्वाभ्युपगमेनोपपादनीयमित्यर्थः । वैशिष्ट्यञ्च स्वतादात्म्यस्वोच्चारयितृवृत्त्येककालिकशरीरद्वयावृत्तिजातित्वसमानाधिकरणावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नशरीरनिष्ठावच्छेदकतानिरूपितात्मनिष्ठाधेयत्वसंबन्धावच्छिन्नप्रकारतानिरूपितत्यागनिष्ठविशेष्यताकबोधजनकत्वोभयसंबन्धेन एवञ्च स्वत्वस्य संबन्धघटकत्वान्नाननुगमः चैत्रादौ नमःपदस्योच्चारयितृत्वग्रहे नमःपदशक्यत्वस्य शरीरवृत्तिचैत्रत्वादिजातिविशेषविशिष्टावच्छिन्नात्मवृत्तित्यागादौ सुग्रहतया ततस्तन रूपेण बोधस्यापि संभव इति भावः । तद्घटितेत्यादि । तेन वेदबोधितोच्चारणेन घटितं यत् तत्पदशक्यस्वोच्चारयितृपुरुषकर्तृकत्यागघटकपुरुषस्योपलक्षणं वेदबोधितस्वोच्चारण-

र्षबोधरूपफलाश्रयत्वरूपकर्मत्वं तत्राबाधितमेवेति वाच्यम्। एवंसति नारायणावधिकापकर्षबोधकदण्डवत्प्रणिपातादिजन्यतादृशापकर्षबोधाश्रयतायाः पुरुषान्तरसाधारणतया नारायणप्रणामदशायां मनुष्यं नमस्करोतीत्यादिप्रयोगापत्तिः। यदिचापकर्षावधित्वप्रकारकबोधानुकूलव्यापारो नमस्कारस्तद्घटकबोधविशेष्यतया नारायणादेः कर्मत्वम्। क्रियाजन्यफलशालित्वरूपे कर्मत्वे च व्यापारांशेऽनुकूलतासंबन्धेन विशेषणीभूतं फलमेव विवक्षणीयं। अत्र चानुकूलत्वमेव व्यापारांशे विशेषणमित्यपकर्षावधित्वबोद्धुः पुरुषान्तरस्य न कर्मतेत्युच्यते तदापि नारायणं प्रणम्येत्यादावेव कर्मत्वमुपपद्यते नतु नारायणं नमस्कृत्येत्यादौ नमःपदार्थघटकज्ञानस्य धात्वर्थताविरहेण तद्विषयतायाः कर्मतानात्मकत्वात्। कृतिविषयतायाश्च नमःस्वापकर्षावपदार्थव्यापारएव सत्त्वात्। मैवम्। नमस्करोतीत्यादौ कृधातुनैव व्यापारबोधात्। अत्रच धित्वप्रकारकबोधविषयतामात्रं निपातार्थः। अत्र त्वं समभिव्याहृतः कर्ता, तथाच तादृशबोधविषयताप्रयोजकव्यापारानुकूलकृतिमानिति समुदायाधीनो बोधः तादृशविषयताश्रयतया नारायणादेः कर्मत्वम्। यतो धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्यत्र धात्वर्थताधच्छेदकत्वं न धातुशक्यतावच्छेदकत्वमपितु व्यापाररूपार्थेऽनुकूलतासंबन्धेन विशेषणतया धातुप्रतिपाद्यत्वम्। प्रकृते निपातार्थे धात्वर्थस्य साक्षादन्वये तादृशबोधविषयत्वरूपस्य तदवच्छेदकत्वमक्षतमेव। नचैवं पूर्वदेशादेर्गम्यादिकर्मत्वं दुर्वारं विभागादौ क्रियाजन्यत्वसत्त्वेऽपि निरुक्तधात्वर्थतावच्छेदकत्वाभावात्। नहि विभागादिर्गम्याद्यर्थे कथमपि विशेषणतया भासते। एवं च नारायणादेः करोतिकर्मत्वेऽपि नमःपदादिकं विना न तद्योगे नारायणादिपदोत्तरं द्वितीया तदर्थान्वयिफलोपस्थापकाभावेन तदर्थानन्वयात्। नापि नारायणं फलं करोतीति प्रयोगापत्तिः। फलस्यात्र धात्वर्थव्यापारे साक्षादविशेषणत्वात्। निपातातिरिक्तनामार्थस्य धात्वर्थे भेदेनान्वयस्याव्युत्पन्नत्वात्। धात्वर्थे साक्षाद्विशेषणीभवत्येव फले द्वितीयार्थाधेयत्वान्वयात्। अतएव पुरस्कृत्य शिखण्डिनमित्यादावपि शिखण्ड्यादेः कृतिकर्मता धात्वर्थव्यापारविशेषणपुरःपदरूपनिपातार्थाग्रदेशावस्थानरूपफलाश्रयत्वात्। नारायणो नमस्क्रियते, ज्यायान् पुरस्क्रियत इत्यादौ निपातार्थफलं धात्वर्थव्यापारविशेष्यत[illegible] भासते। तदन्वितमाश्रयत्वं कर्माख्यातादिना प्रत्याय्यते। अथैवमपि कारकविभक्तेः साक्षाद्धात्वर्थान्वयित्वनियमभङ्ग इति चेन्न। तादृशनियमे निपातातिरिक्तार्थमन्तराऽकृत्वेत्यस्यैव साक्षादर्थत्वात्। अन्यथा घटो दण्डाज्जायते न पारिमाण्डल्यादित्यादौ कारकपञ्चम्या जन्याद्यन्वयिनि नञर्थाभावे प्रतियोगितया स्वार्थप्रयोज्यत्वादिबोधनासंभवात्। पारिमाण्डल्यादिनिरूपितमपि प्रयोज्यत्वं विषयितया तदवच्छिन्नजनकताकज्ञानादौ प्रसिद्धम्, प्रयोज्यत्वविशिष्टोत्पत्तिरेव वा तत्र धात्वर्थः। तत्र पञ्चम्यन्तार्थपारिमाडल्यनिरूपितत्वस्याभावो नञा बोध्यते। उक्तरीत्या क्रियायोगे नमस्कार्यस्य कर्मत्वेऽपि स्वयंभुवे नमस्कृत्येत्यादौ चतुर्थी अपकर्षावधित्वमात्रविवक्षया। केचित्तु नारायणं नमस्कृत्येत्यादौ नमःपदं नतिकर्मपरम्। तथाच नारायणं नतिकर्मीकृत्येत्यर्थविवक्षया घटं शुक्लं करोति शुक्लीकरोतीत्यादौ घटादेरिव नारायणादेः कृतिकर्मता। शिखण्डिनं पुरस्कृत्येत्यादौ पुरःपदमग्रस्थितपरम्। एवं घटं साक्षात्करोतीत्यादौ साक्षात्पदं प्रत्यक्षविषयपरम्। एवं दुःखमाविष्करोतीत्यादावप्याविःपदं ज्ञानगोचरार्थकमिति सर्वत्र पूर्ववद्द्वितीया।

---

नित्यज्ञानोपगमाज्ज्ञापाकर्तृत्वं तस्याप्रसिद्ध्येत्यर्थः। **तत्राबाधितमेवेति**। यद्यपि नारायणादेरीश्वरत्वोपगमादीश्वरे च नित्यज्ञानोपगमाज्ज्ञापाकर्तृत्वं तस्याप्रसिद्ध्येत्यर्थः। यद्यपि नारायणादेरीश्वरत्वोपगमादीश्वरे च शरीरावच्छिन्नेरजन्योक्तबोधस्य तत्र बाधएव तथापि पुराणादिप्रसिद्धेस्तस्मिन्नशरीरोपाध्यवच्छिन्ने जन्यज्ञानाभावेऽपि शरीरावच्छिन्ने कोपप्रसादवज्जन्यज्ञानमप्यभ्युपेत्योक्तम् अथवा नित्य एव ज्ञानप्रयत्नादौ समयविशेषावच्छिन्नत्वेन कोपप्रसादादिजन्यतया प्रसिद्धकार्यजातीयोपधायकत्वेन कोपप्रसादत्ववत् व्यापारजन्योक्तबोधकार्योपधायकसमयविशेषावच्छिन्नत्वोपरागेण तादृशबोधत्वमपि नित्यसाधारणक्षैमिकप्रयोज्यत्वघटितमभ्युपगम्योक्तमित्यवधेयम्। **नारायणंफलमिति**। स्वापकर्षावधित्वप्रकारकबोधविषयत्वरूपस्य फलश[illegible] व्यापारेऽनुकूलत्वसंबन्धेन विशेषणत्वे प्रागुक्तधात्वर्थतावच्छेदकत्वसंभवात्तदाश्रय-

यानिर्वाह इत्याहुः । नमःपदस्य धर्मिबोधकत्वे हरिराविर्भवतीत्यादिवन्नमो भवतीति प्रयोगप्रसङ्गात् तस्मान्नमस्करोतीत्याविष्करोति पुरस्करोति अलंकरोतीत्यादौ नमःप्रभृतयो निपाता धर्मवाचका एव, लाघवात् । तत्तद्धर्माश्रयस्य दर्शितरीत्यैव कर्मतोपपत्तेः । आविर्भवतीत्यादिप्रयोगानुरोधेन चाविरादिशब्दानां प्रकटताश्रये धर्मिणि लक्षणोपेयते । शुक्लः पट इत्यादौ शुक्लादिशब्दानामिव । अस्तु वा तत्रापि प्रकटतादिरूपो धर्म एव तदर्थस्तस्यैव धात्वर्थभावे धर्मरूपेऽभेदान्वयः । क्रियायां स्वार्थाभेदान्वये आविरादेरेवाकाङ्क्षा स्वीक्रियते न तु नमःपदादेरिति न नारायणो नमो भवतीत्यादेः प्रसङ्गः । शुक्लीकरोतीत्यादौ च्विप्रत्ययान्तस्यापि शौक्ल्यादिधर्म एवार्थः । अभूततद्भावे तदनुशासनात् । अभूतस्य पूर्वकालावच्छेदेन शुक्लादिभावरहितस्य तद्भावः शौक्ल्यादिः । अथवा अभूतः पूर्वकालावच्छेदेन धर्मिण्यविद्यमानस्तद्भावः शौक्ल्यादिः, शुक्लीभवतीत्यादौ तु दर्शि... गतिः । न चाभूततद्भावपर्यन्तस्य च्विप्रत्ययवाच्यत्वे गौरवाच्छुक्लादिपदोपस्थाप्यपदार्थतावच्छेदकशौक्ल्याद्यन्वयि अभूतत्वं च्विप्रत्ययार्थोऽस्तु । शुक्लतर इत्यादौ तरबाद्यर्थोत्कर्षस्येव च्व्यर्थस्यापि व्युत्पत्तिवैचित्र्येण पदार्थतावच्छेदकेऽन्वयसंभवादिति वाच्यम् । मन्मतेऽपि शौक्ल्यादिभावस्यैव च्विप्रत्ययार्थतोपगमेन गौरवानवकाशात् । पूर्वकालावच्छिन्नस्वनिष्ठाभावप्रतियोगित्वसहितस्याधेयत्वस्य प्रत्ययार्थे प्रकृत्यर्थस्य संबन्धतया भानोपगमात् । शौक्ल्यादावभूतत्वलाभेनैव जलपरमाणुः शुक्लीभवतीति प्रयोगाप्रसङ्गात् । शौक्ल्यादेर्धर्मत्वेनैव वाच्यता ननु ताद्रूप्येणेति न शक्त्यानन्त्यम् । प्रकृत्यर्थतावच्छेदकतत्तद्धर्मनिष्ठाधेयताविशेषणामेव संबन्धतया भानोपगमाद्धर्मान्तरस्याभूतत्वमादाय न जलपरमाणुः शुक्लीभवतीत्यादिप्रसङ्गः । प्रकृत्यर्थतावच्छेदकगतप्रागविद्यमानत्वस्य च्विप्रत्ययार्थत्वमतेतु शुक्लीभवतीत्यादौ प्रकृत्यर्थतावच्छेदकशौक्ल्याद्यभावस्य प्रागपि क्वचिद्विद्यमानतया तदभावान्वये योग्यतानुपपत्तिः । तत्तद्धर्मिण्यविद्यमानत्वस्य च्व्यर्थत्वे शक्त्यानन्त्यमिति पूर्वकालावच्छिन्नोऽभाव एवाविद्यमानत्वम् । तस्य च प्रकृत्यर्थतावच्छेदके सामानाधिकरण्यसहितप्रतियोगित्वसंबन्धेनान्वयो वाच्यः । प्रकृत्यर्थे च तादृशसंबन्धेनाभावविशिष्टस्य वैशिष्ट्यभानमुपयेम् । अन्यथाऽन्यत्र स्वाभावसमानाधिकरणस्याशौक्ल्यादेः सर्वदाऽशुक्लकाकादावपि सत्त्वेन काकोऽशुक्लीभवतीति प्रयोगः स्यात् । अत्राभावरूपपदार्थान्तरविशिष्टप्रकृत्यर्थतावच्छेदकवैशिष्ट्यभानं च प्रकृत्यर्थे न संभवति । प्रकृत्या स्ववृत्तिसहकारेण स्वार्थे यादृशविशेषणावच्छिन्नप्रकृत्यर्थतावच्छेदकीयसंबन्धो न

---

तया नारायणस्य कर्मत्वसंभवादुक्तप्रयोगापत्तिरितिभावः । **अभेदान्वयइति** । तदन्वितातिङर्थाश्रयत्वस्य प्रथमान्तार्थेऽन्वयोबोध्यः घटमाविष्करोतीत्यादौ तु धात्वर्थकृतावनुकूलत्वसंबन्धेनान्वयः तदाश्रयत्वाद्घटादेः कर्मताधेयत्वं द्वितीयार्थ इति । **धर्मएवार्थइति** । तदाश्रयत्वाद्घटादेः कर्मताआधेयत्वं द्वितीयार्थः धर्मस्योक्तस्य कृतावनुकूलत्वघटनिष्ठोद्देश्यतानिरूपितस्वनिष्ठसाध्यत्वाख्यविषयताकत्वोभयसंबन्धेनान्वयः । अभूतत्वस्यापि शाब्दबोधे भानमावश्यकम् जलपरमाणुः शुक्लीभवति जलपरमाणुं शुक्लं करोतीत्यप्रयोगात्तद्भानंतु च्व्यर्थतया संसर्गतयावा, तत्राभूतत्वस्य तद्भावस्य शौक्ल्यादेरिव च्व्यर्थतापक्षे प्रयोगाधिकरणकालाद्वर्तमानलकारस्थलेऽतीतादिलकारस्थले समभिव्याहृतविधेयान्तरकालाच्च पूर्वो यः कालस्तदवच्छिन्नमभावस्याश्रयत्वप्रतियोगित्वं वा तादृशाभावस्याभूतत्वम् प्रथमस्य व्युत्पत्तिवैचित्र्यात् घटादेरशुक्लतया प्रत्ययानुभववैचित्र्याच्च द्वितीयाप्रकृत्यर्थे प्रथमाप्रकृत्यर्थे वा सर्वत्रैव स्वप्रकृत्यर्थे वा घटादावन्वयः तेन सह विभक्त्यर्थद्वारा स्वतोवाऽऽधेयत्वेन शुक्लत्वादिधर्मस्यान्वये तद्भाववत्त्वलाभः व्युत्पत्तिवैचित्र्यामनुभववैचित्र्यञ्चानभ्युपगम्य प्रकारान्तरस्य च प्रकृत्यर्थतावच्छेदकइत्यादिना वक्ष्यति .शक्यतातु तस्य धर्मत्वेन नतु तद्भावत्वेनेतिवक्ष्यति द्वितीयस्य शौक्ल्यादिधर्मेऽन्वयस्तद्घटकाभावे च व्युत्पत्तिवैचित्र्यात् द्वितीयादिप्रकृत्यर्थस्याधेयतयान्वयो बोध्य इति ॥ **शौक्ल्याद्यन्वयीति** । इदंचाथवेतिपक्षोक्ताभूतत्वाभिप्रायकमन्वयप्रकारः पूर्ववत् । **प्रकृत्यर्थस्य संबन्धतयेति** । इदंतु प्रकृत्यर्थतावच्छेदकस्योपलक्षणत्वमभिप्रेत्योक्तम् । अन्यथा शुक्लत्वविशिष्टनिष्ठाभावप्रतियोगित्वस्य शौक्ल्येऽसंभव एव स्यात् वस्तुतो घटं शुक्लीकरोत्यशुक्लं घटं शुक्लं करोतीति विवरणदर्शनाच्छुक्लाद्यवृत्तिधर्मरूपे च्व्यन्तार्थे द्वितीयार्थाधेयत्वस्य स्वरूपस्वनिरूपकघटादिवृत्तिपूर्वकालावच्छिन्नाभावप्रतियोगित्वोभयसंबन्धेनान्वयो बोध्यः । **तदभावान्वय इति** । जलपरमाणुर्न शुक्लीभवतीत्यादाविति शेषः ।

**इति व्युत्पत्तिवादगूढार्थतत्त्वालोके चतुर्थालोकः ।**

प्रत्याय्यते पदान्तरसमभिव्यहाररूपाकाङ्क्षयापि प्रकृत्यर्थतावच्छेदकीयतादृशविशेषणसंबन्धावच्छिन्नसंबन्धाप्रत्यायनेन प्रकृत्यर्थतावच्छेदकीयसंब धे च्विप्रत्ययार्थाभावविशिष्टप्रतियोगित्वरूपविशेषणस्य प्रकृतिवृत्त्याऽभासमानस्य भानासंभवादित्यनुपपत्तिः । अस्मन्मते तु भवत्यर्थे भावे च्विप्रत्ययान्तार्थस्याधेयतासंबन्धेन पूर्वकालावच्छिन्नस्वाभावाधिकरणविशिष्टस्य शौक्ल्यादेः सामानाधिकरण्यसंबन्धेनैवान्वयस्योपगन्तव्यतया तेन संबन्धेन चाधिकरणविशिष्टाशौक्ल्यादिना विशिष्टस्य भवत्यर्थस्यैवाख्यातार्थे आश्रयत्वे निरूपितत्वसंबन्धभानात् । तादृशविशिष्टनिरूपिताश्रयत्वस्य च पूर्वकालावच्छेदेनाशौक्ल्याद्यभावाधिकरणएव सत्त्वेन नोक्तातिप्रसङ्गः । अन्यत्स्वयमूह्यम् । स्वस्ति भवतइत्यादावाशीः स्वस्त्यर्थः । सा च परहितविषयकस्वेच्छा । स्वमुच्चारयिता, हितान्वयी संबन्धश्चतुर्थ्यर्थः । एवं च भवदीयहितविषयिणी मदीयेच्छेति बोधः । कल्याणाद्यर्थकोऽपि स्वस्तिशब्दः, "स्वस्त्यस्तुमह्य" मित्यादौ, तत्रापि चतुर्थ्यर्थः संबन्धः स्वस्त्यर्थान्वयीत्यलम् ॥ इति चतुर्थ्यर्थनिरूपणम् ॥

वृक्षात्पर्णं पततीत्यादौ पञ्चम्या प्रकृत्यर्थस्य वृक्षादेः पतनादिक्रियापादानत्वं प्रत्याय्यते । अपादानत्वं च स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभागाश्रयत्वम् । पर्णादेः स्वनिष्ठवृक्षादिविभागजनकस्वपतनाद्यपादानत्ववारणाय भूतान्तं क्रियाविशेषणम् । भेदप्रतियोगितावच्छेदकत्वे विभागे पञ्चम्याः शक्तिद्वयम् । भेदे विभागे च वृक्षादेः प्रकृत्यर्थस्याधेयतासंबन्धेनान्वयः । प्रतियोगितावच्छेदकत्वमाश्रयत्वसंबन्धेन । विभागश्च जनकतासंबन्धेन क्रियायामन्वेति । जनकतासंबन्धस्य प्रतियोगितानवच्छेदकतया नञा तत्संबन्धावच्छिन्नविभागाभावः क्रियायां बोधयितुं न शक्य इति चेत्तर्हि विभागजनकत्वमेव पञ्चम्यर्थोऽस्तु प्रतियोगितावच्छेदकत्वस्येव तस्याप्याश्रयतासंबन्धेन क्रियायामन्वयः । एवंच वृक्षनिष्ठभेदप्रतियोगितावच्छेदकतन्निष्ठविभागजनकपतनाश्रयः पर्णमित्याद्याकारक उक्तस्थले बोधः । अथ पञ्चमीसमभिव्याहृतनञोक्तयोः पञ्चम्यर्थयोर्द्वयोरेवाभावद्वयं बोध्यते, यथायोगमेकतरस्य वा । नाद्यः पक्षः पर्णं वृक्षात्पतति न स्वस्मादित्यत्र स्वनिष्ठपतने स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वाभावसत्त्वेऽपि स्वनिष्ठविभागजनकत्वाभावासत्त्वेन वृक्षात्पतति न भूतलादित्यत्र पतने भूतलादिनिष्ठविभागादिजनकत्वाभावसत्त्वेऽपि तन्निष्ठभेदप्रतियोगितावच्छेदकत्वाभावासत्त्वेनायोग्यतापत्तेः । नापि द्वितीयः । वृक्षात्पर्णं पतति न पर्णादित्यत्र पत्रनिष्ठपतने पत्रनिष्ठविभागाजनकत्वस्येव पत्रान्तरनिष्ठभेदप्रतियोगितावच्छेदकतया पत्रनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्यापि बाधाद्योग्यताया निर्वाहयितुमशक्यत्वादिति । अत्राहुः । विभागो जनकत्वं च पञ्चम्यर्थः । विभागे प्रकृत्यर्थस्यावधिकत्वं संबन्धस्तेन संबन्धेन प्रकृत्यर्थविशिष्टस्य विभागस्य निरूपितत्वविशेषसंबन्धेन जनकत्वेऽन्वयः । जनकत्वं च फलोपधानरूपं विशिष्टनिरूपिततादृशजनकत्वस्य क्रियायां नञ्समभिव्याहारस्थले च क्रियान्वयिन्यभावे प्रतियोगित्वेनान्वयः । वृक्षपत्रादिविभागजनकपत्रादिकर्मं च न पत्राद्यवधिकत्वविशिष्टविभागोपधायकम् । पत्रादेः स्वावधिकस्वविशिष्टविभागानधिकरणत्वेन तत्कर्मणि विशिष्टविभागसामानाधिकरण्याभावात् । फलोपधायकत्वस्य सामानाधिकरण्यगर्भत्वान्नोक्तानुपपत्तिः । वृक्षाद्विभजते इत्यादावपि वृक्षावधिकत्वं विभागे प्रतीयते । तत्रापादानतायाः अवधितारूपत्वाद् वृक्षाद्यवधिकत्वविशिष्टविभागनिरूपितमेवाश्रयत्वमाख्यातेन बोध्यतेऽतो वृक्षः स्वस्माद्विभजत इति न प्रयोगः, यथाहि स्वप्रतियोगिकत्वविशिष्टसंयोगः स्वस्मिन्न वर्तते तथा स्वावधिकविभागस्य स्ववृत्तित्वेऽपि स्वस्य न विशिष्टविभागाधिकरणत्वमित्यविवादमेव । अवधित्वादिकं च स्वरूपसंबन्धविशेषः । यद्वा, विभागोऽधिकरणता । प्रयोजकत्वं च वृक्षात्पततीत्यादौ पञ्चम्यर्थः । विभागेऽवधित्वसंबन्धेन प्रकृत्यर्थान्वयः । तद्विशिष्टविभागस्य निरूपितत्वविशेषसंबन्धेनाधिकरणतायामन्वयः । पत्रादिकर्मणि च न तदवधिकत्वविशिष्टवि-

भागनिरूपितान्यमात्रनिष्ठाधिकरणताप्रयोजकत्वम् । कारणस्यापि स्वाश्रयनिष्ठकार्याधिकरणतामात्रप्रयोजकत्वादिति सामञ्जस्यात् । अथ वृक्षात्पतति, वृक्षाद्विभजत इतिवत् वृक्षात्त्यजतीत्यादिर्न कथं प्रयोगः । पञ्चम्यर्थस्य विभागजनकत्वस्य विभागावच्छिन्नक्रियारूपत्यागेऽवधिमत्त्वरूपपञ्चम्यर्थस्य च विभागरूपधात्वर्थतावच्छेदकफलेऽन्वये बाधकाभावात् । नच विभागावच्छिन्नक्रियायां विभागान्वयोऽव्युत्पन्नः । उद्देश्यतावच्छेदकविधेययोरैक्यादिति वाच्यम् । जनकतासंबन्धेन विभागावच्छिन्ने प्रकृत्यर्थविशेषितविभागजनकत्वान्वये व्युत्पत्तिविरोधविरहात् । नच पञ्चम्यर्थविभागजनकत्वावधिमत्त्वयोरन्वयबोधे धातुविशेषाधीनव्यापारविभागोपस्थितेर्हेतुत्वोपगमात्तदभावेन त्यजधातूपस्थिततत्तदर्थे न पञ्चम्यर्थान्वय इति वाच्यम् । त्यजिपत्योस्त्यजिविभज्योश्च पर्यायताभ्रमदशायां त्यजत्यर्थव्यापारविभागयोः पञ्चम्यर्थान्वयात् त्यजधातुजन्यतत्तदर्थोपस्थितेरपि पञ्चम्यर्थान्वयहेतुताया अवश्यं वाच्यत्वात् । नच पञ्चम्यर्थविभागजनकत्वान्वयबोधे धातुजन्यविभागरूपफलानवच्छिन्नव्यापारोपस्थितिस्तादृशावधिमत्त्वान्वये च धातुजन्यविभागमुख्यविशेष्यकोपस्थितिर्हेतुरिति त्यजधातुजन्यविभागावच्छिन्नव्यापारोपस्थितिविषयव्यापारविभागयोः पञ्चम्यर्थविभागजनकत्वावधिमत्त्वान्वयासंभव इति वाच्यम् । फलव्यापारयोः पृथग्धात्वर्थतामते त्यजधातोरपि प्राधान्येन विभागस्य तदनवच्छिन्नस्पन्दस्य चोपस्थित्या तदुपस्थितिविषयतादृशार्थयोरपि तत्तत्पञ्चम्यर्थान्वयसंभवादिति चेन्न । फलावच्छिन्नव्यापारस्य धात्वर्थतामते उक्तरीत्यैव सामञ्जस्यात् । तयोः पृथग् धात्वर्थतामते च फलविषयकव्यापारविषयकबोधं जनयतु धातुपदमित्येतादृशेच्छारूपा फलव्यापारयोरेकैव शक्तिः, पुष्पवन्तादिपदवत् । नतु फलविषयकं व्यापारविषयकं बोधं जनयत्विति समूहालम्बनात्मकबोधनिष्ठतत्तद्विषयकत्वावच्छिन्नविभिन्नविषयताशालिसंकेतरूपा । तथासति नानार्थत्वाविशेषेण कदाचित्फलव्यापारयोरेकैकपरित्यागेनाप्येकैकस्य बोधप्रसङ्गात् । तथाच विभागे पञ्चम्यर्थावधिमत्त्वान्वयबोधे सङ्केतीयबोधनिष्ठविषयत्वांशे विभागेतरविषयकत्वानवच्छिन्नत्वावगाहिधातुशक्तिज्ञानं क्रियांशे विभागजनकत्वरूपपञ्चम्यर्थान्वयबोधे च तादृशबोधनिष्ठविषयतांशे विभागविषयकत्वानवच्छिन्नत्वावगाहिधातुशक्तिज्ञानं हेतुरुपेयत इतित्यजधातोस्तादृशज्ञानमभ्रान्तस्यासंभवीत्यतिप्रसङ्गानवकाशात् । शक्तिद्वयादिवद्दर्शितैकशक्तेरपि कर्मप्रत्ययस्थले फलव्यापारयोर्विशेषणविशेष्यभाववैपरीत्येन शाब्दबोधसंभवात् । विशिष्टशक्तावेव विशेषणविशेष्यभावविपर्यासानिर्वाहात् । यदिच फलव्यापारयोः शक्तिभेदे एकार्थपरित्यागेनापरार्थबोधप्रसङ्गवद्युक्तरूपसङ्केतोपगमेऽपि पुष्पवन्तपदशक्यविशेषेण तत इव सकर्मकधातुतोऽपि विशेषणविशेष्यभावानापन्नस्यैवान्वयबोधः स्यान्नतु तदापन्नार्थद्वयविषयक इत्युच्येत तदा संकेतस्य बोधांशे विशेषणतया भासमानयोः फलव्यापारविषयकत्वयोरवच्छेद्यावच्छेदकभावावगाहित्वमपि स्वीकरणीयम् । विशेषणविशेष्यभावेन भासमानयोरेव फलव्यापारयोर्विषयताद्वयमवच्छेद्यावच्छेदकभावापन्नमिति तथैव तयोर्भानम् । पुष्पवन्तपदसंकेतेच चन्द्रसूर्यविषयतयोरवच्छेद्यावच्छेदकभावो न भासते अतस्तयोर्विशृङ्खलमेव भानमिति न काप्यनुपपत्तिः । यदिच वृक्षात्स्यन्दत इत्यादिर्न प्रयोगस्तदा सकर्मकधातोः फलविशिष्टव्यापारवाचकतामते पञ्चम्यर्थविभागजनकत्वबोधे विभागानवच्छिन्नफलावच्छिन्नव्यापारविषयकधातुशक्तिज्ञानजन्योपस्थितिः फलव्यापारयोर्वैशिष्ट्यानुपरक्तयो-

---

विभागेतरविषयकत्वावच्छिन्नत्वानवगाहीति । नच विभागईश्वरेच्छीयविभज्धातुनिष्ठविषयतानिरूपितजनकत्वविषयतानिरूपितबोधनिष्ठविषयतानिरूपितविषयत्वनिष्ठविषयतानिरूपितविषयतावानिति शक्तिज्ञानस्य बोधनिष्ठविषयत्वांशे विभागेतरविषयकत्वानवच्छिन्नत्वानवगाहित्वेन तस्मादुपस्थिते विभागे पञ्चम्यर्थानन्वयप्रसङ्ग इतिवाच्यमिष्टापत्तेः । यत्तु विभागेतरविषयकत्वावच्छिन्नत्वानवगाहीत्यत्र तात्पर्यमिति तन्न त्यजधातुशक्तिज्ञानस्याप्युक्तरूपस्य तादृशानवगाहिनः प्रमात्मकस्य संभवेनाभ्रान्तस्य वृक्षात्त्यजतीति [illegible]त्वावगाहिज्ञानत्वेन कारणत्वस्यावश्य-

धात्वर्थतामते च संकेतीयबोधनिष्ठविषयतांशे विभागविषयकत्वानवच्छिन्नत्वफलान्तरविषयकत्वावच्छिन्नत्वोभयावगाहिज्ञानजन्योपस्थितिः कारणमभ्युपगन्तव्येत्यलमधिकेन । व्याघ्राद्बिभेति दस्युभ्यो रक्षतीत्यादौ भीत्रार्थानामित्यनेनापादानत्वम् । भयं च परतोऽनिष्टसंभावना । त्राणं चानिष्टनिवृत्त्यनुकूलो व्यापारः । तदर्थकधातुयोगे तादृशानिष्टजनकमपादानसंज्ञमिति सूत्रार्थः । एवं च पञ्चम्यर्थस्तत्र प्रयोज्यत्वम् । तच्च निरुक्तधात्वर्थघटकानिष्टेऽन्वेति । अथ यस्य व्याघ्राधीनमनिष्टमप्रसिद्धमथच व्याघ्रहेतुकत्वेन मरणादिकं संभावयति तत्पुरुषपरो व्याघ्रादयं बिभेतीति कथं प्रयोगः प्रमाणम् । अनिष्टे व्याघ्राधीनत्वस्य बाधादिति चेत् भयार्थकधातुयोगे प्रयोज्यताप्रकारकत्वं पञ्चम्यर्थः । तच्चानिष्टसंभावनायामन्वेति, प्रकृते च व्याघ्राधीनत्वस्य तत्पुरुषीयानिष्टे बाधेऽपि अनिष्टसम्भावनायां तत्प्रकारकत्वमबाधितमेवेति नानुपपत्तिः । एवं च शत्रुभ्रमेण मित्रादपि बिभेतीत्यादिवाक्यस्यापि प्रामाण्यनिर्वाहः । एवं च भयार्थकधातुयोगे भयहेतुत्वेन संभावितमपादानमित्येकः सूत्रार्थः । अनिष्टविरहानुकूलव्यापाररूपत्राणार्थकधातुयोगे तदनिष्टप्रयोजकं तदित्यपरः । अनिष्टं दुःखमेव सर्वत्रानुगतम् । यज्जन्यं दुःखं कस्यापि न प्रसिद्ध्यति तादृशस्याप्यहिकण्टकादेरपादानत्वं स्यादिति चेत्तर्हि तन्निष्ठदुःखोपधायकव्यापारविरहानुकूलव्यापारस्तदपादानकं स्वकर्मकं रक्षणमिति वक्त-

---

कर्तव्ये विभज्यादिस्थलेपि तादृशज्ञानस्यैव कल्पनीयत्वादिति । **तच्चानिष्टसंभावनायामन्वेतीति** । अनिष्टनिष्ठविशेष्यताकत्वविशिष्टसंभावनायामित्यर्थस्तेन तादृशविशेष्यताकत्वोक्तप्रकारताकत्वयोरवच्छेद्यावच्छेदकभावलाभेनान्यनिष्टे व्याघ्रप्रयोज्यत्वस्य स्वानिष्टेऽन्यप्रयोज्यत्वस्य चावगाहिनीं संभावनामादाय व्याघ्राद्बिभेत्ययमिति प्रयोगस्य नापत्तिः । **तन्निष्ठदुःखोपधायकेत्यादि** । यत्त्वत्र दुःखोपधायकव्यापाराभावानुकूलव्यापाररूपत्राणं धात्वर्थः द्वितीयान्तार्थचैत्रवृत्तित्वादेः दुःखे पञ्चम्यन्तार्थस्य दुःखोपधायकव्यापारेऽन्वयः नतु तदभावे । तथा सति धात्वर्थतावच्छेदकतादृशव्यापाराभावरूपफलाश्रयत्वेन तस्य कर्मत्वापत्त्या पञ्चम्यनुपपत्तेरिति व्याख्यानम् । तन्न तादृशव्यापारान्वयविवक्षाया पञ्चम्युपपत्तावपि तदभावान्वयविवक्षायां दस्युप्रभृतितो द्वितीयापत्तेर्दुर्वारत्वात् कर्तृव्यापारेण तादृशव्यापारनिवृत्तौ तदभावस्य तत्र सत्त्वावश्यकत्वात् निरवच्छिन्नत्वविशेषितसंबन्धेन फलाश्रयत्वस्य ग्रामादेर्गम्यादिकर्मत्वानुपपत्त्या वक्तुमशक्यत्वात् अपितु दुःखनिवृत्त्यनुकूलव्यापार एव धात्वर्थः दुःखएवच स्वनिष्ठव्यापारप्रयोज्यत्वरूपपञ्चम्यर्थान्वयः एतादृशपञ्चम्यर्थलाभायैव च तन्निष्ठदुःखोपधायकव्यापारेत्युक्तम् यन्निष्ठो व्यापारो ।९ दुःखोपधायकः कस्यापि भवति तन्निष्ठव्यापारप्रयोज्यत्वं स्वरूपयोग्यत्वरूपमपि दुःखस्य भवति एवञ्च यस्याहिप्रभृतेः कस्यचिदपि जनस्य दुःखोपधायकमुपसर्पणदंशनादिकमेव नास्ति भवदपि वा न दुःखोपधायकं तद्व्यापारत्वेन दुःखविशेषत्वेन कार्यकारणभावाभावात् तादृशाहिप्रभृतेर्दर्शनमात्रेण तदहित्वेन दुःखंप्रति स्वरूपयोग्यत्वेपि तद्व्यापारस्य दुःखस्वरूपयोग्यस्याप्यप्रसिद्धेर्न तस्यापादानत्वं. नवा तन्निष्ठव्यापारप्रयोज्यत्वमपि दुःखस्येति न तादृशाहिप्रभृतितात्पर्येणाहेश्चैत्रं रक्षतीत्यभ्रान्तानां प्रयोगः । यज्जन्यं दुःखमिति पूर्वग्रन्थस्य यद्व्यापारजन्यं दुःखमित्येवार्थोऽहिप्रभृतेर्दंशादिव्यापारेणैव दुःखोत्पादकत्वात् यत्राहिदंशनोत्पन्नदुःखनिवृत्त्यनुकूलो व्यापारश्चैत्रस्यौषधदानादिरूपो न सर्पापनयनादिरूपस्तत्र सर्पाद्रक्षति चैत्र इत्यस्य वारणाय दुःखनिवृत्तेरनुकूलत्वं दुःखप्रयोजकव्यापाराभावप्रयोजकत्वरूपमेव धात्वर्थघटकं वाच्यं तत्सूचनायैवोक्तं तन्निष्ठदुःखोपधायकव्यापारविरहानुकूलव्यापार इति । नच दुःखानुत्पत्तिरेवास्तु दुःखनिवृत्तिरुक्तस्थले चौषधादिनोत्पन्नस्य दुःखस्य नाशो नत्वनुत्पाद इति न दोष इति वाच्यम् । औषधादेरप्युत्पन्नसजातीयानुत्पादं प्रत्येवानुभवसिद्धं प्रयोजकत्वं नतु तन्नाशं प्रति तस्य स्वानन्तरोत्पन्नविशेषगुणेनैव संभवादौषधप्रलेपाद्दुःखं मे नष्टमित्यनुभवात्तस्यापि नाशहेतुत्वेपि दुःखं मे न जायतइत्यनुभवादनुत्पादं प्रत्यप्यस्त्येव प्रयोजकत्वमित्युक्तदोषतादवस्थ्यात् यत्र प्राग्लिप्तौषधस्य सर्पदंशान्न दुःखोत्पादस्तत्रौषधलेपकर्तृतात्पर्येणोक्तप्रयोगापत्तेश्च यादृशव्यापारं विना यत्रपुरुषे सर्पव्यापारतो दुःखोत्पत्तिसंभवस्तन्निष्ठतादृशदुःखानुत्पत्तेरेव प्रयोजकस्तादृशकर्तृव्यापार इति सर्पादिव्यापारप्रयुक्तदुःखानुत्पत्तेः निरापदस्थानावस्थितपुरुषे सत्त्वेपि कर्तृव्यापाराप्रयोज्यत्वेन तदाश्रयस्य न कर्मत्वम् । अस्मिन्नरण्ये मागच्छ व्याघ्रो वर्ततेऽत्रपदं मानिधेहि सर्पोस्तीत्यादिव्यापाररूपरक्षणस्थले यद्यपि तत्पुरुषीयदुःखानुकूलव्यापारो नास्ति व्याघ्रादेस्तथाप्युक्तरक्षकव्यापाराभावेऽरण्यगमनपदनिधानादिव्यापारे व्याघ्रादिव्यापारतस्तत्पुरुषदुःखस्यावश्यकत्वात् व्याघ्रादिव्यापारप्रयुक्तदुःखस्य प्रसिद्धत्वात् व्याघ्रादिव्यापारप्रयुक्तदुःखत्वावच्छिन्नानुत्पादं प्रत्युक्तव्यापारस्य प्रयोजकत्वमानुभविकमस्त्येव । यत्र सर्पं पश्यता देवदत्तेन सर्पाभिमुखं गच्छंश्चैत्रो हस्ते धृत्वा ससंभ्रममन्यत आकृष्टस्तद्दर्शनान्मैत्रोपि तदभिमुखप्रयाणान्निवृत्तस्तत्र चैत्रोऽनेन रक्षितो न मैत्र इत्येव प्रयोगो यदि प्रामाणिकस्तदा [illegible] दुःखनिवृत्तेर्मैत्रेऽपि तादृशव्यापारप्र-

ध्यम् घटाद्यचेतनकर्मकरक्षणं विनाशोपधायकव्यापारविरहगर्भं निर्वाच्यम् । यवेभ्यो गां वारयति कूपादन्धं वारयतीत्यादौ वारणार्थानामित्यनेनापादानत्वम् । वारणं क्रियाप्रतिषेधस्तदर्थकधातुयोगे ईप्सितस्तत्तत्क्रियाजन्यफलभागितया तत्तत्क्रियाकर्त्तुरभिप्रेतोऽपादानमिति सूत्रार्थः । क्रियाच भक्षणगमनादिरूपा । तात्पर्यवशात्क्वचित्कस्याश्चित्प्रतिषेधो वारयतीत्यादिना बोध्यते । प्रतिषेधः कर्तृत्वाभावानुकूलव्यापारः । कर्तृत्वाभावरूपधात्वर्थतावच्छेदकफलशालितया गवान्धादेः कर्मता । यवादिपदोत्तरपञ्चम्या यवादिगतत्वेनेच्छाविषयफलकत्वं भक्षणादौ प्रत्याय्यते । इच्छा च भक्षणादिक्रियाकर्तृनिष्ठा तदर्थेऽन्तर्भावनीया । एवंचोक्तस्थले यवकूपादिनिष्ठत्वेन गवान्धादीच्छाविषयो यो गलाधः संयोगोत्तरदेशसंयोगादिर्गवादिनिष्ठतत्तत्फलकव्यापारावशेषकर्तृत्वाभावानुकूलव्यापारानुकूलकृतिमानित्याकारको बोधः । अन्धादेर्यद्यपि कूपगमनत्वादिना नेच्छा तथाप्यभिमु[illegible]गमनत्वादिना कूपगमनादेरिच्छा वर्तत एवेति । वस्तुगत्या यः कूपादिदेशस्तद्गतत्वेन क्रियाजन्यसंयोगस्य तदिच्छाविषयत्वमक्षतमेव । नच प्रकृतयवकूपादिनिष्ठफलविशेषजनकत्वमेव पञ्चम्यर्थोऽस्तु, किमिच्छान्तर्भावेणेति वाच्यम् । यत्र चैत्रादेर्नान्तरीयकतया विषभोजनादिकं ननु स्वेच्छातस्तत्र तद्भोजनविरोधिव्यापारकर्त्तरि चैत्रं विषाद्वारयतीति न प्रयोगोऽपि तु सविषाद्वारयतीत्यादिरेव तत्र पूर्वप्रयोगवारणाय सूत्रकृता ईप्सित इत्यनेन सन्प्रत्ययेनेच्छोपादानात् । अतएव यद्यवादिकं केनापि न भुक्तं तत्कर्मकभोजनाप्रसिद्धावपि भोजनफले संयोगविशेषे तद्यवादिगतत्वेनेच्छाविषयत्वप्रसिद्ध्या तद्यवाद्गां वारयतीत्यादिप्रयोगोपपत्तिः । एवंच तत्र भक्षणादौ तद्यवादिकर्मकत्वगवादिकर्तृकत्वोभयाभावबोधाय केषांचित्प्रयासोऽनादेय एवेति । पण्डितात्पुराणं शृणोति,

---

युक्ततया देवदत्तेन मैत्रो रक्षित इति प्रयोगवारणाय दुःखानुत्पत्तिगोचरकृतिप्रयोज्यव्यापारो रक्षणं धात्वर्थो बोध्यस्तद्घटकानिष्टे पञ्चम्यन्तार्थस्योक्तस्य द्वितीयार्थस्य विषयित्वविशेषस्य च कृतावन्वय इत्युक्तकृतेर्मैत्रविषयकत्वान्नोक्तापत्तिः । यद्यहं त्वया रक्षित इत्यपि तदा पूर्वोक्तोपि धात्वर्थः यत्र लाघवं तत्र शक्तिरितरत्र लक्षणा बोध्या । अत्र यज्जन्यं दुःखं कस्यापि न प्रसिद्धं तादृशस्याप्यहिकण्टकादेरपादानत्वं कथमिति चेत्तर्हि यन्निष्ठदुःखोपधायकव्यापारविरहानुकूलव्यापारस्तदपादानकं रक्षणमिति क्वचिदस्ति पाठः स च नातिसमञ्जसः उक्तग्रन्थाद्धि तादृशाहिकण्टकादिप्रयोज्यदुःखाप्रसिद्ध्या तस्यापादानत्वानुपपत्तिशङ्का प्रतीयते तच्चानुपपन्नम् । यतो रक्ष्यरक्षकयोर्यत्र रज्जौ सर्पभ्रमस्सर्पव्यापारप्रयुक्तानिष्टनिवृत्तिगोचरकृत्या व्यापारस्तत्रायं मां रक्षतीति प्रयोगो न प्रामाणिकस्तद्व्यापारस्य वस्तुतो दुःखनिवृत्त्यप्रयोजकत्वात् तादृशव्यापारं विनापि तदुपरि पदारोपणादौ सत्यपि दंशादिजन्यदुःखानुत्पत्तेरतएव रज्जुत्वेऽवबुद्धे भवति प्रयोगो न त्वयाहं सर्पाद्रक्षित इति यस्मात्सर्पादेः कदाचिदपि न कस्यचिद्दुःखोत्पत्तिस्तस्यापि रज्ज्वादितुल्यतया तत्वेज्ञाते तत्राप्ययंतु स्वयमेव न कस्यचिद्दुःखं ददातीति नेतस्त्वयाहं रक्षित इति भवति प्रयोगइति तस्यापादानत्वाभावस्येष्टतयानुपपत्तेरसंभवादिष्टत्वे वा तस्यापादानत्वस्य दुःखनिवृत्त्यनुकूलव्यापारस्य धात्वर्थत्वपक्षे ह्युत्तरग्रन्थेन कथं तदुपपादनं स्यात् । नहि तत्र चैत्रादिदुःखस्य तादृशाहिप्रभृतिप्रयोज्यत्वस्य चैत्रनिष्ठाहिप्रयोज्यदुःखानुत्पत्तेर्वा कर्तृव्यापारप्रयोज्यत्वस्योपपादकं किमप्युपलभामहे । नच तत्संभवत्यपि चैत्रादौ कर्तृव्यापारं विनापि तादृशाहिप्रयोज्यदुःखानुत्पत्तेस्सदैव संभवात् अहिगतदुःखानुत्पत्तेः सुतरां तादृशव्यापारप्रयोज्यत्वात् दुःखोपधायकव्यापाराभावानुकूलव्यापारस्य धात्वर्थत्वपक्षेपि पञ्चम्यर्थस्य प्रयोज्यत्वस्य यदि दुःखे वृत्तित्वस्य यदि व्यापारेन्वयस्तदा पूर्ववदेवाप्रसिद्धिस्तस्य कस्यापि दुःखाजनकत्वात् समवायिकारणविधया स्वदुःखंप्रति जनकत्वेपि तदुपधायकव्यापाराभावं प्रति कर्तृव्यापारस्य कथमपि प्रयोजकत्वस्यासंभवात् कर्मगतदुःखोपधायकव्यापाराभावे पञ्चम्यर्थाधेयत्वान्वये यद्व्यापाराद्दुःखं प्रसिद्धं तद्गततादृशव्यापाराभावस्य कर्तृव्यापारं विना कदाचिदभावेन तंप्रति तस्य प्रयोजकत्वसंभवेपि यस्याहिप्रभृतेः स्वत एव दुःखोपधायकव्यापाराभावस्तदीयतादृशव्यापाराभावं प्रति कर्तृव्यापारस्य प्रयोजकत्वासंभवात् दुःखस्य परम्परयाप्युक्तव्यापारजन्यतया धात्वर्थतावच्छेदकफलत्वाभावेन तदाश्रयतया रक्ष्यस्य कर्मत्वासंभवाच्चेति ।

**विरहगर्भमिति ।** यन्निष्ठस्य घटादिनाशोपधायकव्यापाराभावस्यानुकूलो यो व्यापारस्स तदपादानकं घटकर्मकं रक्षणमित्यर्थः । व्याख्यानमस्य प्राग्वत् । **भक्षणादाविति ।** समभिव्याहारविशेषगृहीततात्पर्यविषयार्थनिरूढलाक्षणिकधात्वर्थभक्षणकर्तृत्वाभावानुकूलव्यापारघटकभक्षणादावित्यर्थः । **प्रयासोऽनादेय इति ।** भक्षणादिनिष्ठाभावानुकूलव्यापारो धात्वर्थः गोनिष्ठकर्तृतानिरूपकत्वनिष्ठद्वित्वावच्छिन्नप्रतियोगिताकत्वरूपद्वितीयान्तार्थस्य यवनिष्ठकर्मतानिरूपकत्वनिष्ठप्रतियोगिताकत्वरूपपञ्चम्यन्तार्थस्यान्वयः अथवा भक्षण[illegible]धात्वर्थः प्रतियोगितायामेव गोनिष्ठकर्तृ-

उपाध्यायादधीते, रामादधीतसंदेश, इत्यादावाख्यातुराख्यातोपयोग इत्यनेनापादानता । तत्र प्रकृत्यर्थपण्डितादिकर्तृकोच्चारणाधीनत्वं पञ्चम्यर्थः। तस्य च श्रवणोच्चारणार्थविशेषज्ञानादिक्रियायामन्वयः । मृत्पिण्डाद् घटो जायते इत्यादौ जनिकर्तुःप्रकृतिरित्यनेनापादानत्वम् । तत्र प्रकृतित्वं न विकारित्वम्, प्रकृतिविकृतिभावाभावेऽपि "प्राक्केकयीतो भरतस्ततोऽभूद्, वायोर्जात" इत्यादौ पञ्चमीदर्शनात् । नहि सुतवपुषो मातापितृशरीरविकारत्वमपितु तदीयशुक्रशोणितादिविकृतित्वमेव । शुक्रशोणितादेः शरीरस्थत्वेऽपि मलमूत्रादेरिव शरीरावयवत्वाभावात् । नच तत्र हेतुपञ्चम्येव नापादानपञ्चमीति वाच्यम् । गुणातिरिक्तहेतौ पञ्चम्यनुशासनविरहात् । अन्यथा दुग्धाद्दधि जायते, मृत्तिकाभ्यो घटो जायते, शृङ्गाद्धनुर्जायत; इत्यादावपि हेतुपञ्चम्यैवोपपत्तौ जनिकर्तुरित्यादिसूत्रस्यैव वैयर्थ्यापत्तेः । तस्मात्कारणत्वमेव प्रकृतित्वम् । दण्डाद्धटो जायत इत्यादयोऽपि प्रयोगा इष्यन्त एव । 'अतएवेश्वरस्य' द्रव्यादिकार्याप्रकृतित्वेऽपि यतो द्रव्यं गुणाः कर्मेत्यादौ पञ्चमी । नच प्रकृतिपदेन कारणमात्रविवक्षायामपि क्रियाविवक्षाभावादपादानपञ्चम्यनुपपत्तिर्हेतुपञ्चमी च प्रकृतेऽनुपपन्नैवेति वाच्यम् । अगत्या जायत इत्यादिक्रियाध्याहारेण तत्र पञ्चम्या उपपादनीयत्वात्। हिमवतो गङ्गा प्रभवतीत्यादौ भुवः प्रभव इत्यनेनापादानता। यत्संबन्धात्प्रभवनं प्रथमप्रकाशः स प्रभवः। प्रथमप्रकाश एव प्रभवत्यर्थः। पञ्चम्यर्थः संबन्धाधीनत्वं तादृशक्रियायामन्वेति संबन्धे च हिमवदादेः प्रकृत्यर्थस्यान्वयः। उपाध्यायादन्तर्द्धत्ते छात्र इत्यादावन्तर्द्धौ येनादर्शनमिच्छतीत्यपादानता । अन्तर्द्धिरन्तर्धानम् स्वनिष्ठान्यकर्तृकदर्शनविषयताविरहोद्देश्यको व्यापारः । एवंच व्यापारानुकूलतयान्तर्द्धानघटको यत्कर्तृकदर्शनविषयताविरहोद्देशः सोऽपादानमिति सूत्रार्थः । उक्तस्थलीयपञ्चम्या अन्तर्द्धिघटकदर्शनान्वयि कर्तृतानिरूपकत्वमेवार्थ इत्युपाध्यायकर्तृकदर्शनविषयताया यः स्वनिष्ठोऽभावस्तदुद्देश्यकव्यापारकर्ता छात्र इति तत्रान्वयबोधः । इदन्तु बोध्यम्। अस्मादयं दीर्घोऽस्मादयं तार इत्यादौ नापादानपञ्चमी, दैर्घ्याद्यवधेरपादानत्वस्यानुशासनात्। ध्रुवमपायइत्यनेन हि अपाये विभागरूपक्रियायां क्रियान्तरजन्यविभागे च यदवधिभूतं तस्यापादानत्वं विधीयते न त्ववधिमात्रस्य । यदि चापायपदं वस्तुमात्रोपलक्षणं तदा तदुपादानमनर्थकं स्यात् । अथ तत्पदेन क्रियामात्रमुपलक्ष्यते अस्माद्दीर्घ इत्य [illegible] च भवतीत्यध्याहार्यम् दीर्घभवनं च दीर्घतैवेति क्रियायाः सावधित्वम् । आवश्यकश्च क्रियाध्याहारस्तद्योगमन्तरेण कारकत्वस्यानिर्वाहात् एवं बलाहकाद्विद्योतते विद्युदित्यादौ द्योतनादिक्रियायाः सावधिकत्वविरहेण निःसृत्येत्यध्याह्रियते। अतएव नैतदपादानं निर्दिष्टविषयमपि तूपात्तविषयमिति वैयाकरणाः निर्दिष्टत्वमुच्चरितत्वम् । उपात्तत्वमध्याहृतत्वम् । विषयोऽवधित्वनिरूपकः । निःसरणं च विभाग एवेति उक्तस्थलेऽध्याहृतक्रियायाः सावधिकत्वमिति चेत्। एवं

---

ताकत्ववृत्तित्वस्य यवनिष्ठकर्मताकत्वनिष्ठत्वस्यचान्वयः यदिवारणं न स्यात्तदा भक्षणं तद्यवकर्मकं गोकर्तृकं च स्यादिति वारणं भक्षणनिष्ठोभयाभावप्रयोजकं यत्र गौः यवभक्षणे न प्रवृत्ता अपितु तृणभक्षणे महिषीच यवभक्षणे तत्र वारणंविनापि भक्षणे तादृशोभयाभावस्य सिद्धत्वाद्वारणस्य तत्प्रयोजकत्वासंभवात् यवेभ्यो गां वारयतीति न प्रयोगः प्रयासश्चान्यत्र कृत्द्वितीयादेर्धात्वर्थतावच्छेदकफलशालित्वरूपकर्मत्वादिबोधकव्युत्पत्तिसंकोचव्युत्पत्त्यन्तरकल्पनादिरूपो बोध्यः । गुणातिरिक्तेति । गुणत्वमत्र कार्यस्य ज्ञाप्यस्य वाश्रय आश्रितत्वं बोध्यम् कारणत्वमेवेति। कार्याश्रयाश्रितव्यतिरिक्तकारणत्वं विवक्षितं तादृशहेतौ हेतावित्यनेन पञ्चमीप्राप्तेः सामान्यतः कारणत्वविवक्षायामपि वा न क्षतिः अस्य सूत्रस्य क्रियाविषयकत्वेन क्रियायोगाभावे तादृशहेतावपि हेतोरित्यस्य चरितार्थतासंभवात् । विरहोद्देश्यकइति । तादृशविषयत्वाभावरूपफलेच्छाधीन इत्यर्थः । उद्देश इच्छा तथाच व्यापारानुकूलस्यैवोद्देश्यस्यान्तर्द्धानघटकत्वोपपत्तिः । वि-

सति वृक्षात्पततीत्यादौ वृक्षादेरसंग्रहः । तत्रापि विभागक्रियाऽध्याहियतइति चेत्, तत्र निर्दिष्टविषयताप्रवादविरोधः । एवमस्मादीर्घ इत्यादावपि क्रियाध्याहारे तत्समशीले माथुराः स्रौघ्नेभ्यः आढ्यतरा इत्यादावपि क्रियाया अध्याहरणीयतया तत्रापादानस्यापेक्षितक्रियात्मकस्योपात्तविषयान्तर्भावप्रसङ्ग इति तादृशापादानयोरविशेषापत्तिः । एवंच "उपात्तविषयं किञ्चिन्निर्दिष्टविषयं तथा । अपेक्षितक्रियं चेति त्रिधापादानमुच्यते" इति शाब्दिकविभागविरोधः । अथापायपदेन क्रियासामान्यं क्रियाजन्यविभागश्च विवक्षितः । एवंच वृक्षात्पततीत्यादौ न विभागात्मकक्रियाध्याहार, इति तदपादानमपि निर्दिष्टविषयम् । यत्रापादानतानिर्वाहार्थमेव क्रियाध्याहारो बलाहकादित्यादौ तदपादानमुपात्तविषयम् । यत्र वाक्यस्मार्थ्यार्थं तदध्याहारस्तत एव चापादानतानिर्वाहो, यथा माथुराः स्रौघ्नेभ्यः अस्मादीर्घ इत्यादौ तत्रापेक्षितक्रियत्वमिति चेत्, एवमप्ययमस्मात्तार इत्यादावगतिस्तत्राहि तारभवनं तारत्वं जातिः । जातेश्च न सावधिकत्वमिति कुतोऽपादानता । अन्यथाऽयमस्माद्गौरित्याद्यापत्तिः । नच जातेरपि तारत्वस्यैवायमस्मात्तार इति प्रतीतिवलाद्धवलत्वेव सावधिकत्वमिति वाच्यम् । यदेव ह्येकापेक्षं तारत्वं तदेवान्यापेक्षया मन्दत्वं समनियतजातिद्वयानभ्युपगमात् । समनियतत्वानभ्युपगमे जातिसङ्करप्रसङ्गात् । तथाच तारत्वादेः सावधिकत्वे स्वापेक्षया यस्तारस्तमपेक्ष्य स्वस्मिन्मन्दव्यवहार इव तारव्यवहारोऽपि स्यात् । स्वापेक्षया यो मन्दस्तमपेक्ष्य तारव्यवहारवत्तमपेक्ष्य स्वस्मिन्मन्दव्यवहारोऽपि स्यात् । अथ तदपेक्षया तारव्यवहारस्तत्सजातीयत्वे सति साक्षात्कारप्रतिबन्धकतावच्छेदकजातिमत्त्वमवलम्बतेऽतो न स्वापेक्षया यस्तारस्तदपेक्षया तारव्यवहारोन्यापेक्षया तारेऽपि भवतीति चेत्तर्हि अस्मात्तार इत्यत्र साजात्यसमानाधिकरणसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिरूपतारपदप्रवृत्तिनिमित्तघटकसाजात्ये साक्षात्कारे च पञ्चम्यर्थान्वयो वाच्यः । तावतैव दर्शितातिप्रसङ्गवारणसंभवात् । साजात्यं तद्वृत्तिशब्दत्वजातिस्तस्याः साक्षात्कारस्य च न सावधिकत्वमिति न सावधिकत्वरूपमपादानत्वं तत्र पञ्चम्यर्थः । नच साजात्यघटकजातेः सावधिकत्वाभावेऽपिवृत्तेः सावधिकत्वमस्त्येव । एवं साक्षात्कारो विलक्षणविषयिताशालिज्ञानविषयिताच सावधिकैवेति तत्र पञ्चम्यर्थान्वयेन सामञ्जस्यमिति वाच्यम् । यतो वृत्तेर्विषयितायाश्च स्वाधारविषयप्रतियोगिकत्वमेव नतु तदवधिकत्वम् । तदवधिकत्वतत्प्रतियोगिकत्वयोर्वस्तुनोर्भेदात् । अन्यथा घटे वर्त्तते घटमवगाहतइत्यत्र घटाद्वर्त्तते घटादवगाहतइति प्रयोगस्य घटस्यापादानत्वेन दुर्वारत्वात् । अतएव प्रतियोगिताया अपादानत्वानात्मकतयाऽन्यादिशब्दयोगे प्रतियोगिवाचकपदात्पञ्चमी सूत्रान्तरेणानुशिष्टा । प्रतियोगित्वस्यापादानतारूपत्वे तद्वैयर्थ्यापत्तेः । अथान्यादिशब्दार्थभेदादेः क्रियात्वाभावेन कारकत्वासंभव इति मुनिः सूत्रान्तरं प्रणिनायेति चेत् । तर्हि तारादिघटकवृत्त्यादेः क्रियात्वमनुमन्यते भवता । तस्मादत्र पञ्चम्युपपादकं सूत्रान्तरमनुसर्तव्यमिति, गुणो द्रव्याद्भिन्न इत्यादौ अन्यारादिति सूत्रेणैव पञ्चमी । अन्यपदस्यान्यार्थकपरत्वादिति बहवः । नचान्यपदेन तदर्थकविवक्षणे तत्समानार्थकेतरपदोपादानवैयर्थ्यम् । अन्येतरपदयोरेकस्यान्योन्याभावविशिष्टार्थपरत्वात् । अपरस्य पृथक्त्वरूपगुणविशिष्टार्थपरतया सार्थक्यात् । पृथग्विनेत्यादिसूत्रे पृथक्पदोपादानं तद्योगे वैकल्पिकतृतीयोपपत्त्यर्थम् । वस्तुतस्तत्र पृथक्पदमसाहित्यार्थकं, नतु गुणवदर्थकम् । चन्द्रापृथगप्यनङ्ग इत्युदाहरणेऽसाहित्यस्यैव प्रतीतेः । यत्तु अन्यादिपदं नान्योन्याभावार्थकपदपरं, घटः पटो नेत्यादावपि नञस्तदर्थकतया तद्योगे पञ्चम्यापत्तेः । नचान्यपदमन्योन्याभावविशि-

---

भागक्रियाध्याह्रियत इति । विभज्येत्येवमध्याह्रियत इत्यर्थः । विवक्षित इति । तथाच यत्रोपात्तक्रियानिरूपितावधित्वेनापादानत्वं तत्रावधितानिरूपकत्वं यत्रोपात्तक्रियाजन्यविभागावधित्वेनापादानत्वं तत्र स्वावधिकविभागजनकत्वं पञ्चम्यर्थ इति पततीत्यत्र विभज्यत इति क्रियाध्याहारस्य न प्रयोजनमित्युपात्तविषयतैवेति भावः । वृत्तेरिति । स्ववृत्तिशब्दत्वादिजातिमत्त्वं [illegible] इत्यर्थः । तस्मादेवेति । तारो मन्द इत्यादौ यत्राव-

ष्टार्थपदपरम्। तस्यापि विशिष्टार्थवाचकत्वात्। नञ्पदंच न तथा तदुपस्थितार्थस्य नामान्तरार्थे भेदान्वयसंभवेन तत्र धर्मिमात्रवाचकत्वादिति वाच्यम्। द्रव्याद्गुणस्य भेद इत्यादौ पञ्चमीनिर्वाहाय भेदार्थकपदस्यैवोपादेयत्वात्। अन्यादिपदस्यापि वाच्यविशेषणभेदार्थकत्वादित्युक्तरीत्यानान्येतरोभयपदसार्थक्यमिति तन्न। अन्योन्याभाववाचकपदस्य पञ्चम्यनुपयोगित्वे द्रव्यादन्यो गुण इत्यादौ पञ्चम्यनुपपत्तेः गुणादौ पृथक्त्वरूपगुणासंभवेनान्योन्याभावस्यैवान्यपदार्थत्वात्। अन्योन्याभावार्थकपदस्य पञ्चमीप्रयोजकत्वे तत्र निपातातिरिक्तविशेषणप्रवेशेनापि नञ्योगे पञ्चमीवारणसंभवात्। वस्तुतस्त्वन्योन्याभावीयप्रतियोगित्वरूपार्थविवक्षायां पञ्चमी नञ्पदोपस्थापिताभावस्य च प्रतियोगिता न विभक्त्या बोध्यते नञर्थे प्रतियोगितयैवाधेयत्वातिरिक्तविभक्त्यर्थान्वयस्य व्युत्पन्नत्वान्न चैत्रस्येत्यादौ षष्ठ्याद्यर्थस्य नञर्थप्रतियोगित्वादतो न तद्योगे पञ्चमी। पृथक्त्वगुणानङ्गीकर्तृमीमांसकमते सूत्रे अन्यतरपदयोरेकतरोपादानवैयर्थ्यं दुर्वारमुक्तरीत्या सार्थकत्वासंभवादिति चेन्न। तन्मतेऽप्येकपदस्य प्राधान्येनान्योन्याभाववाचकस्यापरपदस्य तद्विशिष्टवाचकस्य संग्राहकतया सार्थक्यात्। नच पटाद्भेद इत्यादौ क्रियायोगादपादानपञ्चम्येव। धातूपस्थाप्यपदार्थप्रतियोगिताया अपादानतारूपत्वे घटे वर्ततइत्यादौ पञ्चमीप्रयोगस्य परत्वेनाधिकरणसप्तम्यादिना बाधादेवानवकाशात्। अभावीयविलक्षणप्रतियोगिताया एव वा तथात्वात्। घटादन्यत्वमित्यादौ चापादानत्वासंभवेऽप्यन्यपदयोगेनैव पञ्चमी। तत्रान्यपदाद्विशेषणतया भासमानभेद एव पञ्चम्यर्थान्वयोपगमात्। ननु भावप्रत्ययात्प्राधान्येन भासमाने तस्मिन् पदार्थैकदेशेऽपि ससंबन्धिके प्रतियोगिसंबन्धान्वयस्य व्युत्पत्तिसिद्धत्वादिति वाच्यम्। प्राधान्येन भावप्रत्ययाद्भासमानेऽप्यन्यत्वे घटपटादिप्रतियोगिकत्वान्वयविवक्षया घटादन्यत्वमिति प्रयोगात्तन्निर्वाहायैवान्येतरपदद्वयोपादानम्। 'अथवा ध्रुवमपाये' इत्यत्रावधित्वमेव विवक्षितं नतु प्रतियोगित्वमुभयानुगतरूपाभावादिति पटाद्भेद इत्यादौ पञ्चम्युपपत्तयेऽन्येतरपदोपादानम्। वस्तुतोऽन्येतरपदं स्वरूपपरमेव। अर्थपरत्वे घटादन्य इतिवद्घटादेक इति प्रयोगापत्तेः। यद्येकपदस्यान्यत्वरूपेण नान्यार्थकताऽपितु समभिव्याहृतान्यत्वोपलक्षिते वस्तुनि बुद्धिविषयतावच्छेदकघटत्वादिनैव। चैत्र एकमानयति मैत्रश्चापरमित्यादौ घटत्वपटत्वादिनैवानयनकर्मतादिप्रतीतेर्नतु पटघटान्यत्वादिना। अन्यत्वान्वयिप्रतियोगिवाचकपदासमभिव्याहारात्। अन्यथा तद्योगे पञ्चम्या असाधुत्वेऽपि घटस्यैक इति प्रतियोगिनि षष्ठ्यापत्तेरित्युच्यते तदाप्यन्यार्थकतदादिपदयोगे पञ्चमीप्रयोगापत्त्यार्थग्रहणासंभव इति। तथाच पटाद्भिन्नं घटाद्भिद्यतइत्यादौ पञ्चमीनिर्वाहाय तत्रापादानत्वमेव कथं चिदुपपादनीयम्। तथाहि। भिदधातोर्नान्योन्याभावोऽर्थो घटाद्भिनत्ति पट इति प्रयोगापत्तेः भिद्यते पट इत्यादिप्रयोगानुपपत्तेश्च, कर्त्तरि यगात्मनेपदासंभवात् अदेवादिकाच्च न श्यन्संभवः परस्मैपदित्वाच्च अकर्मकधातुयोगे कर्मकर्तृविवक्षाया अप्रयोगात्। कस्यचिदकर्मकस्य योगेण्यर्थान्तर्भावेणैव कर्मकर्तृत्वस्योपपादनीयत्वात् अन्योन्याभावस्याजन्यतया तदर्थकधातोर्ण्यर्थान्तर्भावस्य दुष्करत्वात्। भिद्यते कुसूल इत्यादौ भिदेर्विदारणार्थकत्वेन सकर्मकतया कर्मकर्तृत्वसंभवात्। अतोऽन्यत्वेन ज्ञापनं भिद्धातोरर्थः। ज्ञापनं ज्ञानविषयताप्रयोजकव्याप्तिपक्षधर्मता। तदाश्रयोऽसाधारणधर्म एव भिदाकर्तृत्वाद्भेदक उच्यते। अन्यत्वप्रकारकानुमितिविषयतारूपधात्वर्थतावच्छेदकफलाश्रये भिदाकर्मतया भेद्यः। एवंच पृथिवी इतरेभ्यो भिद्यते इत्यादौ पृथिव्यादेः

---

धिमत्त्वं नानुभविकं तत्र, नतु दीर्घोह्रस्व इत्यादौ तत्रोक्तरीत्या ध्रुवमपायइति सूत्रेणैव पञ्चम्युपपादनसंभवात्। अपादानपञ्चम्येवेति। ध्रुवमपाय इति सूत्रेणेति शेषः भिद्धातोर्भेदार्थकत्वे तस्याकर्मकधातुत्वापत्त्या भिद्यत इति प्रथमान्तपदसाकाङ्क्षस्य साधुत्वानुपपत्तिस्तदनुपपत्तिमुपपादयति कर्त्तरीत्यादिदुष्करत्वादित्यन्तेन। भिदाकर्तृत्वादिति। तथाच घटादाकारविशेषः पटं भिनत्तीत्येव प्रयोगः साधुः ध्रुवमपाय इति सूत्रेणान्यतरत्वेनावधिप्रतियोग्युभयरूपापादन-

कर्मतैव न केवलकर्तृता । अन्योन्याभावे साध्ये सर्वतान्त्रिकाणां तादृशप्रतिज्ञालिखनं केषांचिदनवधानेन । प्रतिज्ञास्थवह्न्यादिपदं वह्न्यादिज्ञानविषयतार्थकम् । हेत्ववयवस्थपञ्चम्याज्ञाप्यत्वं नार्थोऽपितु प्रयोज्यत्वमेवेति मणिकारादिमतानुसारेणैव केषांचिदिति सूक्ष्मविवेचनचतुराः । अर्जुनः क्रोशाल्लक्ष्यं विध्यति अद्य भुक्त्वायं द्व्यहाद्भोक्ता इत्यादौ सप्तमीपञ्चम्यौ कारकमध्ये इति पञ्चमी प्रकृत्यर्थयोरध्वकालयोः कारकद्वयव्यवधायकतामभिधत्ते तथाच स्वाधिष्ठितदेशानन्तरक्रोशात्मकाध्वभागानन्तरदेशस्थं विध्यत्यर्जुनइत्यादिप्रथमस्थले बोधः । समभिव्याहृतकर्त्रधिष्ठितदेशानन्तर्यं विशेषणतया प्रकृत्यर्थान्वयि, विशेष्यतया प्रकृत्यर्थान्वयि चानन्तरदेशस्थत्वं पञ्चम्यर्थः । स्वीयैकार्थान्वितापरपदार्थान्वितापरस्वार्थबोधकत्वमप्यत्र व्युत्पत्तिवैचित्र्यादेकपदस्य स्वीक्रियते भोजनकृत्यधिकरणैतद्दिवसानन्तरद्व्यहानन्तरदिनवृत्तिभोजनकृतिमानयमित्याकारकबोधश्चरमस्थले । कारकपदेन क्रियानुकूलव्यापाररूपकारकपदार्थतावच्छेदकस्यापिविवक्षितत्वात् एकक्रियानुकूलकृत्यन्वयिनः प्रकृत्यर्थाधिकरणकालानन्तरकालीनत्वस्य प्रकृत्यर्थविशेषणीभवदपरक्रियानुकूलकृत्यधिकरणकालानन्तर्यस्य बोधकत्वेऽपि पञ्चम्युपपत्तिः । कारकद्वयमध्यवर्तिताचात्र कालस्य नोपपद्यते कर्तुरैक्यात् । अतएवोक्तम् कर्तृशक्त्योर्मध्ये चैकः काल इति ॥ इति पञ्चमी ॥

संबन्धविवक्षायां कारकविभक्त्यप्रसक्तेः शेषे षष्ठीत्यनेन चैत्रस्येदमित्यादौ षष्ठी । चैत्रस्य द्रव्यमित्यादौ स्वत्वस्य, चैत्रस्य स्वं, घटस्य कारणं, चैत्रस्य हस्तः, इत्यादौ निरूपितत्वावयवत्वादीनां संबन्धत्वेनैव षष्ठ्यर्थता नतु विशिष्य शक्त्यानन्त्यप्रसङ्गात् । संयोगादिसंबन्धसत्त्वेऽपि चैत्रस्य नेदं वास इत्यादौ स्वत्वादिसंबन्धविशेषबोधतात्पर्येण यत्र नञ् प्रयुज्यते तत्र विशेषरूपेण षष्ठ्या लक्षणैव । विभक्तौ न लक्षणेति प्रवादस्यानुशासनासत्त्वे एकविभक्त्यर्थेऽपरविभक्तेर्न लक्षणेत्येतत्परत्वात् । अतएव च कृद्योगापि हि षष्ठी संबन्धत्वेनैव बोधयतीति मिश्राः ।

---

परत्वस्य वक्तव्यतया पञ्चम्यन्तार्थस्य घटनिष्ठप्रतियोगिताकत्वस्यान्यत्वप्रकारकानुमितीयविषयताप्रयोजकव्याप्तिपक्षधर्मतारूपधात्वर्थैकदेशेऽन्यत्वे द्वितीयान्तार्थस्य परवृत्तित्वधात्वर्थघटकविषयतायां धात्वर्थव्याप्तिपक्षधर्मत्वस्याख्यातार्थाश्रयत्वरूपकर्तृत्वे तस्याकारेऽन्वयादित्याकार एवोक्तधात्वर्थरूपभिदा कर्त्ता नतु पटइति घटाद्भिनत्तिपट इति न प्रयोग उक्तविषयत्वरूपकर्मत्वस्य पटे सत्त्वाद्घटादाकारेण भिद्यते पट इति प्रयोगोपपत्तिः घटात्पटस्य भेदइत्यस्याप्युक्तरीत्यैवोपपत्तिरिति भावः । **केषांचिदनवधानेनेति** । येषां तत्तत्साध्यकप्रतिज्ञास्थसाध्यबोधकपदं साध्यपरमेव हेतुपञ्चम्या ज्ञाप्यत्वमेवार्थस्तेषां पृथिवीतरेभ्यो भिद्यत इत्यस्य भेदसाध्यकप्रतिज्ञात्वस्य दुरुपपादत्वादुक्तप्रकारेण धातोर्भेदार्थकत्वस्यासंभवादिति प्रमादेनैव तादृशप्रतिज्ञेत्येवोपेयमिति भावः । **मणिकारमतानुसारेणैवकेषांचिदिति** । उक्तप्रतिज्ञेत्यनुषज्यते मणिकारमते तत्साध्यकप्रतिज्ञायास्तत्तत्साध्यकानुमितिविषयपरपदघटिततया भेदसाध्यकप्रतिज्ञाया भेदानुमितिविषयतावती पृथिवीति बोधजनिकाया उक्ताकारत्वस्य सूपपादत्वान्मणिकारमतानुसारिणां केषांचिदप्रामादिक्येव सा प्रतिज्ञेति भावः । **सप्तमीपञ्चम्यौकारकमध्यइति** । शक्तिद्वयमध्येयौकालाध्वानौ ताभ्यामेतेस्त इत्यर्थः । **विवक्षितत्वादिति** । पञ्चम्युपपत्तिरित्यनेनान्वयः कारकमात्रस्य विवक्षितत्वे पूर्वस्थले यथार्जुनरूपकर्तृकारकलक्ष्यरूपकर्मकारकद्वयमध्यवर्त्तित्वेन क्रोशस्य तद्बोधकपदात्पञ्चम्युपपद्यते तथाद्यभुक्त्वेत्यादौ द्व्यहस्य कारकद्वयमध्यवर्तित्वाभावादेकस्यैव कर्तृकारकस्य सत्त्वात् कारकपदेन कारकशक्तेरपि सङ्ग्रहे तु कर्तुरेकत्वेऽपि तच्छक्तेः कर्तृत्वस्य क्रियानुकूलव्यापाररूपाया एतद्दिवसीयभोजनानुकूलायाः परदिवसीयभोजनानुकूलायाश्च कृतेर्भेदाद्व्यहस्य तयोर्मध्यवर्तित्वात्तद्बोधकपदात्पञ्चम्युपपत्तिरिति भावः । कारकशक्तिमध्यवर्तितामुपपादयति । **एकक्रियेत्यादिना** । एकक्रियेति भोक्तेति पदप्रतिपाद्यक्रियेत्यर्थः । **प्रकृत्यर्थेति** । पञ्चमीप्रकृत्यर्थद्व्यहकालेत्यर्थः । अधिकरणेति सम्पातायातम् । **अपरक्रियेति** । भुक्त्वेतिपदप्रतिपाद्यक्रियेत्यर्थः । **कर्तृशक्त्योरिति** । कर्तुः शक्त्योः कृत्योरित्यर्थः ।

इति व्युत्पत्तिवादगूढार्थतत्त्वालोके पञ्चम्यालोकः ।

**लक्षणेत्येतत्परत्वादिति** । तथाचानुशासनाभावेऽपि स्वत्वादेरन्यविभक्त्यर्थत्वाभावात्तत्र स्वत्वेन स्वत्वेलक्षणा संभवत्येवेति भावः । **अतएवेति** । लाघवात्संबन्धत्वेन संबन्धमात्रे एकशक्तत्वादेवेत्यर्थः । **संबन्धत्वेनैवेति** । एव कारेण कर्तृकर्मणोः कृतीति सूत्रेण षष्ठ्यर्थत्वेन बोधितकर्तृत्वकर्मत्वयोः कर्तृत्वकर्मत्वलाभ्यां सर्वत्र शक्त्या बोधन-

इत्थमेव च संबन्धत्वेन कर्मत्वादिविवक्षया मातुः स्मृतमित्यादावधीगर्थेत्यनुशासनस्य नियमपरतया सार्थक्योपपादनं वृत्तिकृतामुपपद्यते। संबन्धत्वविशिष्टसंबन्धविवक्षायां शेषे षष्ठीत्यस्य षष्ठ्यविधायकत्वे तादृशानुशासनस्य विधित्वमेव स्यात्। अतएवच "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते"इत्यत्र पक्वमित्यनुषज्यमानायाः षष्ठ्याः संबन्धत्वेन कर्तृत्वमर्थः न तु स्वत्वम्। शूद्रकर्तृकवृषोत्सर्गे चरुहोमानुपपत्तेरिति नवीनस्मार्त्तानां मतमप्युपपद्यते। नच तत्र कृद्योगा षष्ठी कर्तृत्वत्वेनैव बोधयतीति वाच्यम्। निष्ठायोगे तस्या निषेधात्। अतएव "नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचना" इत्यादौ करणत्वादेः संबन्धत्वेन विवक्षया षष्ठ्युपपत्तिः तृतीयादिविधिविषयतया विशेषरूपेण करणत्वादिसंबन्धविवक्षायां षष्ठ्यनुपपत्तेः। अथ संबन्धत्वेन संबन्धस्य षष्ठीवाच्यत्वे पुरुषस्य दण्ड इत्यादौ दण्डस्य पुरुष इत्यादिरपि प्रयोगः स्यात्। दण्डी पुरुषो रूपवान् घट इत्यादिवद्दण्डरूपादेः पुरुषघटाद्यनाधारत्वेऽपि पुरुषो दण्डो घटवद्रूपमित्यादिः प्रयोगो दुर्वारः, तदत्रास्तीत्यर्थ इव तदस्येत्यर्थे मतुपो विधानात्। दण्डरूपादिपदोत्तरषष्ठ्या चैत्रघटादिनिष्ठतदर्थसंबन्धप्रतिपादने तदुत्तरमत्वर्थीयस्य प्रसंगादिति चेत्। विशिष्य केषांचित्संबन्धानां षष्ठ्यर्थतोपगमेऽपि घटस्य रूपमित्यादिप्रयोगानुरोधेन समवेतत्वादेः षष्ठ्यर्थताया आवश्यकत्वेन हस्तस्य चैत्रः, चैत्रवान् हस्तः शाखाया वृक्षः वृक्षवती शाखेति कथं न प्रयुज्यते पूर्वप्रयोगाभावादिति चेत्तुल्यम्। नराणां क्षत्रियः शूरो नरेषु वा, अध्वगानां रथगामिनः शीघ्रतरा अध्वगेषु वा, गवां कृष्णा संपन्नक्षीरा गोषु वेत्यादौ यतश्च निर्द्धारणमित्यनेन षष्ठीसप्तम्यौ विधीयेते, तदर्थश्च जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनं तद्धर्मावच्छिन्नार्थकपदात्षष्ठीसप्तम्याविति। प्रकृतेच क्षत्रियत्वादिविशेषणविशिष्टे नरादौ तच्छून्यनरादिव्यावृत्तत्वेन शौर्यविशेषादिरूपविधेयसंबन्धोऽभिमत इति नरादिपदात्षष्ठी। नरेभ्यो राक्षसाः शूरतमा इत्यादौ राक्षसत्वादिविशेषणविशिष्टे तच्छून्यनरादिव्यावृत्तशूरतमत्वविवक्षायामपि न निरुक्तनिर्द्धारणं राक्षसत्वादिविशिष्टस्य नरत्वादिसामान्यधर्मानवच्छिन्नत्वात्। नराणां क्षत्रियः शूरतम इत्यादौ क्षत्रियादिनिष्ठशूरतमत्वादौ नरादिसामान्यव्यावृत्तत्वबाधात् शून्यत्वान्तं व्यावृत्त्यवधेर्विशेषणम्। तद्धर्माश्रययत्किंचिद्व्यावृत्तत्वविवक्षणे द्रव्येषु घटो गन्धवानित्यपि स्यात्, गन्धादेर्यत्किंचिद्द्रव्यव्यक्तिव्यावृत्तत्वात्। तादृशविशेषणशून्यसामान्यव्यावृत्तत्वनिवेशे नराणां क्षत्रियः शूरतम इत्यादावेव तदसंभवः। शूरतमत्वादेः क्षत्रियत्वादिशून्यराक्षसाद्यव्यावृत्तत्वादतस्तद्धर्मावच्छिन्नेति। अथ विधेये जात्यादिविशेषणशून्यसाधारणधर्मावच्छिन्नान्वितं व्यावृत्तत्वं साधारणधर्मावच्छिन्नवाचकपदोत्तरषष्ठ्यादेरेवार्थो वाच्यः। तावता च नरत्वादिरूपसाधारणधर्मावच्छिन्नवृत्तत्वस्यैव लाभः संभवति। नतु क्षत्रियत्वादिशून्यत्वविशेषितनरादिव्यावृत्तत्वस्य प्रकृत्यर्थे नरादौ तादृशविशेषणशून्यत्वबोधकाभावात्। नच षष्ठ्या एव तदर्थः शक्त्यानन्त्यप्रसङ्गात्। नच भेद एव षष्ठ्यर्थः तत्रच क्षत्रियादिपदार्थस्य प्रतियोगित्वेनान्वयात् क्षत्रियान्यनरादिव्यावृत्तत्वलाभः शक्तिभेदं विनैवेति वाच्यम्। एवमपि संख्यातिरिक्तविभक्त्यर्थस्य प्रकृत्यर्थविशेष्यतयैव भानमिति व्युत्पत्तिविरोधापरिहारात्। नरेषु क्षत्रियाणामेव शौर्यमित्यादौ क्षत्रियादेर्विभक्त्यर्थविशेषणतयोपस्थितस्य भेदे विशेषणतया भानोपगमे व्युत्पत्त्यन्तरविरोधाच्च। अस्तु लक्षणया नरादिपदादेव क्षत्रियान्यनरत्वादिविशेषरूपेणोपस्थितिरिति चेत्। अस्तु। व्यावृत्तत्वं किं तावत्

---

व्यवच्छेदः क्रियते कुलालो घटस्य कर्ता न पटस्येति कुलालसंयुक्तेऽपि घटे संबन्धनिषेधस्थले संबन्धत्वेनाभावस्य बाधितत्वात् कर्मतात्वादिना कर्मत्वबोधो लक्षणयैव भवति सा च कर्मत्वस्यान्यविभक्त्यर्थत्वेऽपि कर्तृकर्मणोः कृतीति सूत्रेणानुशिष्टत्वान्न विरुध्यते नञ्समभिव्याहारस्थले कर्तृतात्वेन कर्तृत्वबोधे विवक्षितेऽपि तृतीयादिकं न भवत्यपि तु षष्ठ्येवेति नियमस्य निरूढलक्षणाग्राहकत्वपर्यवसन्नस्य सूत्रफलत्वेन सूत्रवैयर्थ्यस्यापि न प्रसङ्ग इति भावः। तदर्थश्चेति।

कुत्र वा तदन्वयः । व्यावृत्तत्वं तदवृत्तित्वम्, शूरतमादिपदोपस्थापिते धर्मे तदन्वय इति चेन्न । पदार्थतावच्छेदकेन पदार्थान्तरानन्वयात् । पदार्थानां जातिमति सत्तेत्यादौ जातिमदन्यपदार्थवृत्तित्वसामान्याभावस्य सत्तादौ बाधितत्वात् । तादृशपदार्थसमवेतत्वाद्यभावस्य चाप्रसिद्धेर्व्यावृत्तिबोधासंभवाच्च । एवं द्रव्येषु कम्बुग्रीवादिमान् घट इत्यादौ घटत्वादिधर्मस्यान्वयितावच्छेदकरूपेणानुपस्थितत्वात्तत्र व्यावृत्तत्वान्वयबोधो दुर्घट इति । अत्र केचित् नराणां क्षत्रियः शूर इत्यादौ क्षत्रिय इव लक्षणया क्षत्रियान्योऽपि क्षत्रियपदार्थः शूरपदस्यापि शूर इव तदन्योऽप्यर्थः षष्ठ्यर्थोऽभेदः क्षत्रिये तदन्यस्मिंश्चान्वेति, तथा च नराभिन्नः क्षत्रियः शूरो, नराभिन्नक्षत्रियान्यो न शूर इत्यर्थः । नराणां क्षत्रियेषु शौर्यमित्यत्रापि क्षत्रियपदं प्राग्वदुभयार्थकम् । शौर्यपदं च तत्तदत्यन्ताभावार्थकम् । तथाच नराभिन्नक्षत्रिये शौर्यं तदन्यस्मिंस्तदभाव इतिबोधः । उद्देश्यविधेययोर्यादृशसंबन्धो भावान्वयबोधे भासते तत्संबन्धावच्छिन्नविधेयाभावः उद्देश्यवाचकविधेयवाचकपदयोर्वैय्यधिकरण्यस्थले विधेयपदलक्ष्यार्थः तयोः सामानाधिकरण्यस्थले तु विधेयधर्मिभिन्न इति सामान्यतो व्युत्पत्तिरित्याहुस्तन्न । 'तथासति' तस्मै पुरुषोत्तमाय नम इत्यत्र तत्पदार्थतदन्ययोरेव पुरुषपदार्थाभेदविवक्षणे उत्तमपदेनासामर्थ्यात्समासाप्रसक्तेर्न निर्द्धारणइति निषेधाश्रयणेन प्रकाशकृतां षष्ठीसमासखण्डनानौचित्यप्रसङ्गात् । एवं नरेषु शूरस्य क्षत्रियस्येदं राज्यमित्यादौ शूरपदार्थाशूरान्वितक्षत्रियपदार्थक्षत्रियान्यस्य षष्ठ्यर्थसंबन्धादौ नान्वयः किंतु शूरान्वयिक्षत्रियादेरन्वय इत्येतन्नोपपद्यते । श्वेतं सैन्धवं भुङ्क्ष्व इत्यादौ कर्मतादिविशेषणतया लवणादिबुद्धौ मुख्यविशेष्यतयाऽश्वादेरभानादेकपदोपस्थापितयोर्द्वयोस्तत्प्रकृतिकविभक्त्यर्थे एकस्य विशेषणतयाऽपरस्य तदविशेषणतया भानस्याव्युत्पन्नत्वात् । एवं द्रव्येषु क्षितिपाथसी रसवती इत्यादौ क्षितिजलोभयत्वाद्यवच्छिन्नभिन्ने रसवदाद्यन्यत्वबोधो न संभवति । रसादिमत्यपि प्रत्येकमुभयत्वावच्छिन्नभेदसत्त्वात् । नापि प्रत्येकभेदावच्छिन्ने तथैव बाधात् । नाप्येकभेदविशिष्टापरभेदावच्छिन्ने एकपदस्य तादृशभेदावच्छिन्नलक्षकत्वे परपदार्थे रसवदाद्यन्यरूपविधेयानन्वयात् । द्वन्द्वघटकैकपदार्थमात्रे विधेयान्वयस्याव्युत्पन्नत्वात् । नापि पदाभ्यां लक्षणया तत्तद्भिन्नोपस्थितौ अभेदेनैकभिन्नान्विते अपरभिन्ने तथापि पदार्थद्वये विधेयान्वयानुपपादनात् । द्वन्द्वे समस्यमानपदार्थानां परस्परमनन्वयादित्यपि चिन्त्यम् । यत्तु नराणां शूरः क्षत्रिय इत्यादौ शूरत्वान्वयी अभेदः षष्ठ्यर्थः । नराभिन्नशूरत्वाद्यवच्छेदेन क्षत्रियाभेदाद्यन्वयः । एवंच क्षत्रियान्ये नरेऽर्थतः शौर्यव्यवच्छेदलाभ इति । तदत्यन्तमसत् । नराणां क्षत्रिये शौर्यमित्यादौ, क्षत्रियाणां कर्णः प्रचुरं ददातीत्यादौ चानिर्वाहात् । इदं तु तत्त्वम् निर्द्धारणविभक्तेर्व्यावृत्तत्वमेवार्थः । व्यावृत्तत्वं चाभेदान्वयिविधेयसमभिव्याहारस्थलेऽन्योन्याभावप्रतियोगित्वम् । भेदान्वयिस्थले चात्यन्ताभावप्रतियोगित्वम् । तस्यच विधेयतावच्छेदकावच्छेदेनान्वयः । अतो न द्वित्वाद्यवच्छिन्नाभावमादायातिप्रसङ्गः । अभावे च प्रकृत्यर्थस्य नरादेः क्षत्रियत्वादिरूपोद्देश्यतावच्छेदकावच्छिन्नभेदविशिष्टप्रकृत्यर्थतावच्छेदकनरत्वादिव्यापकाधिकरणतानिरूपिताधेयतासंबन्धेनान्वयः । एतावतैव जात्यादिरूपविशेषणशून्यप्रकृत्यर्थनरादिसामान्यव्यावृत्तेर्विधेयधर्मे लाभः । द्रव्याणां क्षितिपाथसी रसवती इत्यादौ भेदद्वयादिविशिष्टद्रव्यत्वादिव्यापकतैव संबन्धः । विधेयस्य शूरतमादेर्निर्द्धारणविभक्तिप्रकृत्यर्थतावच्छेदकनरत्वादिविशिष्टतादात्म्यादिरेव संबन्धतया भासते । अतो नराणां राक्षसः शूर इत्यादेर्नोपपत्तिः । अन्यत्स्वयमूह्यम् । इति षष्ठी ।

---

सूत्रार्थश्चेत्यर्थः । **शूरपदार्थेत्यादि** । शूरपदार्थो योऽशूरस्तदन्वितस्य क्षत्रियपदार्थस्य क्षत्रियान्यस्येत्यर्थः । **क्षत्रियादेरन्वय इति** । क्षत्रियान्यस्तु मुख्यविशेष्यतयैवावभासत इतिशेषः । तथाभाने व्युत्पत्तिविरोधमाह श्वेतमित्यादि ।

इति षष्ठीटीका ।

आधारसप्तम्या आधेयत्वमर्थः, तस्य क्रियायामन्वयः। आधाराधेयभावश्च न संयोगादिरूपसंबन्धात्मकः। कुण्डादिसंयोगिनो बदरादेरपि कुण्डाधारताप्रसङ्गात्। अपि तु पदार्थान्तरमेव। सच संबन्धविशेषावच्छिन्नः संयोगेनाधिकरणं समवायेनाधिकरणमित्यादिव्यवहारात्। अथ वोक्ताऽतिप्रसङ्गभिया संयोगेनाधारत्वमेवातिरिक्तम्। समवायसंबन्धावच्छिन्नं च समवायादिरूपमेव। नच समवायस्य संबन्धत्वेन द्विष्ठतया रूपादेरपि पटाद्यधिकरणताप्रसङ्गः। तथासति तुल्ययुक्त्याधिकरणत्वस्यापि द्विष्ठतया तादृशातिप्रसङ्गस्य दुर्वारत्वात्। यदि चाधारताया आधारेऽनुयोगित्वं संबन्ध आधेये च प्रतियोगित्वमिति संबन्धवैलक्षण्यान्नातिप्रसङ्गः आधारतानुयोगिताया एवाधारव्यवहारप्रयोजकत्वादित्युच्यते, तदा समवायस्यापि तद्वैलक्षण्येनातिप्रसङ्गवारणादतिरिक्ताधारतायां मानाभावात्। स्पर्शाद्याधारवाय्वादेरूपाद्याधारतावारणायाधेयभेदेनाधारत्वमतिरिक्तमिति न सत्। आधेयभेदभिन्नाधिकरणतानामतिरिक्तसमवायस्य च कल्पनामपेक्ष्याऽऽधेयभेदेन समवायभेदस्यैवोपगन्तुमुचितत्वात्। अथ संयोगेनाधिकरणत्वमपि संयोगरूपमस्तु। कुण्डबदरादिसंयोगानां कुण्डादिकमनुयोगि न तु बदरादिकमिति नातिप्रसङ्गः। न चैवमपि कुण्डादेः कुण्डादिनिष्ठसंयोगानुयोगितया कुण्डाधारतापत्तिः। तादृशसंयोगस्य कुण्डादिनिष्ठत्वेऽपि तत्प्रतियोगिकत्वानुपगमात्तत्प्रतियोगिकसंबन्धानुयोगिताया एव तदाधारव्यवहारप्रयोजकत्वात्। नचासौ संयोगो बदरादौ कुण्डविशिष्टबुद्धिप्रयोजकतयोभयानुयोगिक एक एवमुभयप्रतियोगिकोऽपीति वाच्यम्। आधेये संयोगेनाधिकरणविशिष्टबुद्धेरप्रामाणिकत्वात्, कुण्डे बदरमित्यादिविशिष्टबुद्धौ संयोगप्रतियोगिताया एव संबन्धत्वात्। पटे रूपमित्यादौ समवायप्रतियोगितावत्। अन्यथा तादृशविशिष्टबुद्धिबलाद्रूपादावपि घटादिसमवायानुयोगिताप्रसङ्गादिति चेन्माभूत्तत्संबन्धावच्छिन्नाधारत्वमप्यतिरिक्तम्। यत्तु तत्पतनप्रतिबन्धकसंयोगवत्त्वं तदाधारत्वं कुण्डादिपतनप्रतिबन्धकसंयोगवत्त्वं च न बदरादौ तत्संयोगसत्त्वेऽपि तस्य पतनादिति। तदसत्। यस्य पतनमप्रसिद्धं तदाधारत्वासंग्रहात्। स्वस्मिन्स्वपतनप्रतिबन्धकसंयोगसत्त्वेन स्वस्यापि स्वाधारताप्रसङ्गाच्च। स्वान्यत्वे सति स्वनिष्ठपतनानुत्पादकप्रयोजकसंयोगवत्त्वं तदिति चेन्न। एतदनुपस्थितावप्यधिकरणव्यवहारादित्यलम्। अथाधारसप्तम्या आधेयतार्थकत्वे भूतले वर्त्तते घट इत्यादौ धात्वर्थस्य वृत्तेराधेयतारूपत्वेन तत्र भूतलाद्याधेयत्वाभावेनायोग्यताप्रसङ्ग इति चेन्न तत्र निरूपकत्वस्यैवाधारतारूपत्वेन निरूप्यत्वस्यैव सप्तम्यर्थत्वात्। भूतलादिनिरूप्यत्वस्य च घटादिनिष्ठवृत्तावबाधात्। अतएव इतिहेतुस्तदुद्भवइत्यादौ हेतौ हेतुतायां चोद्भवपदार्थोत्पत्तिवृत्तित्वाभावेऽपि हेतुतायामुत्पत्तिनिरूपितत्वसत्त्वेन सप्तम्युपपत्तिः। अथवा वृद्धातोरपि आधारत्वमेवार्थस्तन्निरूपकत्वमेव घटादेस्तत्कर्तृत्वम्। एवंच तादृशधात्वर्थे भूतलाद्यधिकरणकत्व

---

**आधेयत्वमर्थ इति**। आधारत्वस्य सप्तम्यर्थत्वे तस्य निरूपकत्वसंबन्धेनान्वयस्य वक्तव्यतया नञ्समभिव्याहारस्थले निरूपकत्वसंबन्धस्य वृत्त्यनियामकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्य बोधयितुमशक्यत्वात् आधेयत्वस्यैव सप्तम्यर्थतायां वाच्यतया प्रतियोग्यभावान्वयतुल्ययोगक्षेमतानियमानुरोधात्सर्वत्रैवाधेयत्वमेव सप्तम्यर्थ इत्युपेयमिति भावः। **संयोगेनाधारत्वमेवेति**। संयोगस्तु न विशिष्टप्रत्ययानुरोधेन कल्प्यः किन्तु प्रत्यक्षेणोभयनिष्ठतया सिद्ध एव तस्यैवाधारत्वरूपत्वे उक्तातिप्रसङ्गो दुर्वारः स्यादिति तेनाधारत्वस्यातिरिक्तत्वमवश्यं वाच्यम् समवायस्तु न संयोगवदुभयनिष्ठतया प्रत्यक्षोऽपि तु विशिष्टबुद्ध्या कल्प्यः सच तदुपपत्तये आधार एव कल्पनीय इति तस्यैवाधारत्वरूपत्वेप्यतिप्रसङ्गविरहान्न तदवच्छिन्नाधारत्वमतिरिक्तमुपेयमिति भावः। **संबन्धत्वेन द्विष्ठतयेति**। संयोगवद्विशिष्टबुद्धिविषयतयासमवायसिद्धौ संबन्धत्वहेतुनासंयोगवदेव द्विष्ठत्वमपि समवाये सिध्येत तथाच समवायस्याधारतारूपत्वेप्यतिप्रसङ्गः स्यादिति समवायावच्छिन्नाधारत्वमप्यतिरिक्तमुपेयमिति भावः। **अधिकरणत्वस्यापि द्विष्ठतयेति**। ननु विशिष्टबुद्धिमात्रस्यैव संयोगसमवायादिसंसर्गविषयकत्वादाधारत्वस्य संबन्धतया भानस्यैवाप्रसिद्धेस्तत्र संबन्धत्वस्याप्रामाणिकतया समवायवत्संबन्धत्वेन हेतुना कथमाधारत्वे द्विष्ठत्वसिद्धिरिति। नच रूपाधारोयमिति बुद्धेरूपाधारत्वविशिष्टबुद्धित्वेन तत्संबन्धगोचरत्वस्यावश्यकतया तत्स्वरूपस्यैव तत्संबन्धत्वस्य वाच्यतया संबन्धत्वेन द्विष्ठत्वस्य सिद्ध्यापत्तिरिति वाच्यम् आधेये च

मेव सप्तम्यन्तेन बोध्यते तत्र तदबाधात्। अथाधारसप्तम्या क्रियायां प्रकृत्यर्थाधिकरणकत्वं यदि बोध्यते तदा चैत्रे चैत्रो गच्छतीत्यादिप्रयोगापत्तिः। तत्र धात्वर्थस्य स्पन्दादेः कर्त्रादिवृत्तित्वात्। भुवि गच्छतीत्यादिश्च न स्यात्। चैत्रनिष्ठक्रियाया भुवि बाधादिति चेन्न । तत्र कर्तृघटितपरम्परासंबन्धावच्छिन्नाधारताया एव सप्तम्यर्थत्वेन सर्वसामञ्जस्यात् । परम्परासंबन्धस्यापि प्रतीतिबलेन क्वचिदाधारतानियामकत्वोपगमात् । अवच्छेद्यताविशेषोऽप्याधारसप्तम्यर्थः । यथा वीणायां शब्दः, कर्णे शब्दः, वृक्षाग्रे कपिसंयोग इत्यादौ, एषु कारकतानिर्वाहाय भवतीत्यध्याहारः । अथवा सप्तम्यधिकरणेचेति चकारेणाकारकाधारवाचिनोऽपि सप्तमी, अतएव साध्यवद्भिन्नसाध्याभाववदवृत्तित्वमित्यत्र साध्यवद्भिन्ने यः साध्याभाव इति सप्तमीतत्पुरुषेण व्याख्यानं संगच्छते तत्र क्रियाध्याहारे सापेक्षतयाऽसामर्थ्येन समासानुपपत्तेः । चर्मणि द्वीपिनमित्यादौ निमित्तात्कर्मयोगइत्यनेन सप्तमीप्रकृत्यर्थचर्मादेर्हननादिक्रियानिमित्तत्वं बोधयति । निमित्तत्वं च न कारणत्वम् । चर्मादेर्हननादिक्रियाकारणत्वे मानाभावात् । पूर्ववर्त्तित्वेऽपि इच्छाकृत्यादिना अन्यथासिद्धत्वात्। अपितु क्रियाजनिका या विनियोज्यत्वेनेच्छा तद्विषयत्वं स्वविषयकतादृशेच्छाधीनत्वमेव तत्र क्रियान्वयी सप्तम्यर्थः तदेकदेशविषयितायां निरूपकत्वेन प्रकृत्यर्थान्वयः । चर्मादेर्घात्यव्याघ्रादेः संबन्धश्च न सप्तम्यर्थः अपितु सप्तम्याः साधुत्वे स्वरूपसन्नपेक्षितः । गोषु दुह्यमानासु गत इत्यादौ यस्य च भावेनेत्यनेन गवादिपदात्सप्तमी तत्समानाधिकरणदुह्यमानादिपदाच्च नीलं घटमानयेत्यादौ नीलादिपदाद्वितीयावद्विशेषणपदस्य विशेष्यपदसमानविभक्तिकत्वनियमात् । सप्तमीविधायकसूत्रे च भावपदं क्रियापरम् । तथाच यद्विशेषणकृदन्तार्थविशेषणतापन्नक्रियया क्रियान्तरस्य लक्षणं व्यावर्त्तनं तद्वाचकपदात्सप्तमीति तदर्थः । उक्तस्थले गमनादिक्रियादोहनादिसमानकालीनत्वादिपुरस्कारेण बोध्यतयाभिप्रेता। अतो व्यावर्त्तकविशेषणप्रविष्टतादृशक्रियाया अपि व्यावर्त्तकतया तत्कर्माद्यभेदान्वयविशेष्यगवादिपदात्सप्तमी । अतस्तादृशसप्तम्याः समानकालीनत्वादिकमात्रमर्थः । तत्र दुह्याद्युपस्थापितदोहनादेर्निरूपकत्वेनान्वयाद्दोहनसमानकालीनत्वादिकं गमनादौ लभ्यतइति न युक्तम् दुह्याद्युपस्थापितक्रियायाः कृदर्थविशेषणतयोपस्थितायाः समानकालीनत्वादिविशेषणत्वासंभवात् प्रकृत्यर्थगवादिनानन्वितस्य सप्तम्या बोधनासंभवाच्च, किंतु समभिव्याहृतदोहनादिक्रियैव सप्तम्यर्थः । तस्याश्च समानकालीनत्वा-

---

प्रतियोगित्वमित्यस्यासामञ्जस्यात् स्वरूपसंबन्धस्याधारत्व एव प्रतियोगित्वादिति चेन्न, तुल्ययुक्त्येत्यस्य ह्ययमर्थः समवायो यदि प्रतियोगिनाऽसंवद्धएव संबन्धोऽसंबद्धत्वाविशेषात्सर्वसंबन्धः स्यात् एवमनुयोगिनाप्यसंबद्धस्य तत्र संबन्धत्वेऽसम्बद्धत्वाविशेषात् सर्वत्र संबन्धः स्यादित्युभाभ्यां तस्य संबन्धः सति संबन्धे प्रतियोग्यनुयोगिनोः समवायेसति यथैकस्यापरस्थत्वं तथा समवायस्योभाभ्यां संबन्धे उभयस्थत्वमुरीक्रियते अनयैव च युक्त्याऽऽधारत्वस्याप्याधेयेनासंबद्धस्य तदाधारताव्यवहारप्रयोजकत्वेऽसंबद्धत्वाविशेषात्सर्वत्राधारव्यवहारप्रयोजकतास्यादित्याधेयेन तस्य संबन्धोवाच्य एवमाधारातिरिक्तस्यतस्याधारेणासंबद्धस्य तत्राधारताव्यवहारप्रयोजकत्वेऽसंबद्धत्वाविशेषात्सर्वत्र तत्प्रयोजकत्वं स्यादित्याधारेणापि तस्य संबन्धोऽभ्युपेयः तथाचोभाभ्यां संबन्धाविशेषाद्विष्ठत्वं तस्य स्यादिति तथाचाधारेण सम्बन्धाद्यथा तत्र घटादौ रूपादेराधेयस्याधारबुद्धिव्यवहारौ तथाधेयेनापि संबन्धात्तत्र रूपादावाधारस्य घटादेराधारबुद्धिव्यवहारौ स्यातामित्यतिप्रसङ्गस्य दुर्वारतेति भावः ॥ **चर्मादेरिति** । यत्र मृगचर्मार्थिना व्याघ्रमहत्वा वने प्रवेष्टुमशक्तेन व्याघ्रो हन्यते तत्र चर्मणि द्वीपिनं हन्तीति प्रयोगः स्यादिति चर्मणा सह व्याघ्रादेर्योवयवावयविभावादिसंबन्धस्तस्यापि सप्तम्यर्थत्वं वाच्यमिति तु न वाच्यं तादृशस्य संबन्धस्यानेकत्वेन शक्त्यानन्त्यप्रसङ्गादन्यतमत्वादिनानुगतधर्मेण शक्तौ तस्यापि शाब्देभानप्रसङ्गात् निरुक्तेच्छाप्रयोज्यत्वमात्रविषयकस्य तादृशसंबन्धाविषयबोधस्यानुभविकत्वाच्च तत्र शक्तेर्लक्षणायाश्चानभ्युपगमादगत्या तादृशसूत्रस्य कर्मणा घात्यादिना निमित्तस्य योगे सति निमित्तबोधकपदान्निमित्तत्वरूपेर्थे सप्तमी साधुरित्यत्र तात्पर्यस्य वक्तव्यत्वात् तत्र च सम्बन्धस्य कर्मयोगपदार्थस्यान्यतमत्वेन प्रवेशेऽपि क्षत्यभावात् तस्य शाब्दबोधानपेक्षितज्ञानविषयत्वलक्षणस्वरूपसत्त्वेन साधुत्वएवोपयोग इति भावः ॥

इति गूढार्थतत्त्वालोके सप्तम्यालोकः ॥

दिकं क्रियान्तरे संबन्धः । तत्र वर्त्तमानार्थकक्तसमभिव्याहारस्थले समानकालीनत्वं दोग्धव्यासुगतइत्यादि भविष्यदर्थकक्तस्थले प्राक्कालीनत्वं दुग्धासुगतइत्यादावतीतार्थकक्तस्थले उत्तरकालीनत्वं संबन्धतयां भासते पाथसि पीते तृषा शाम्यतीत्यादावतीतार्थकक्तसमभिव्याहारात्कार्यकारणभावोऽपि संबन्धतया भासत इत्यादिकमूहनीयम् । गुणान्यत्वे सति सत्त्वादित्यादौ सतीत्यनन्तरं सत इत्यध्याहार्यमन्यथा लक्षणीयक्रियाभावेनोक्तसूत्राविषयतया सप्तम्यनुपपत्तेः । तत्र चास्धातोरर्थ आधारता गुणान्यत्वाद्याधारतायाश्च सत्ताधारतायां तद्व्यक्तित्वं संबन्धतया भासतइति चिन्तामणिकारोक्तसामानाधिकरण्यलाभनिर्वाहः । शयानेन चैत्रेण भुक्तमित्यादौ शयनभोजनादिक्रिययोः समानकालीनत्वभानेऽपि तत्र लट्प्रत्ययेनैव समभिव्याहाराद्भोजनादिसमानकालीनत्वं शयनादिक्रियायां बोध्यतेऽतो न सप्तमी अन्यतस्तदनभिधानएव सप्तमीविधानात् । इति सप्तमी ।

चैत्र त्वया भुज्यतामित्यादौ संबोधने चेति प्रथमा संबोधनमेवाह, तच्च वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेनेच्छा । प्रथमार्थतादृशेच्छाया विषयतासंबन्धेन प्रकृत्यर्थविशेषणतया भानम् । अथ संबोध्यत्वज्ञानं विनापि त्वया भुज्यतामित्यादिवाक्याधीनस्य चैत्रादेर्वाक्यार्थबोधस्य भोजनादिप्रवृत्तेश्च निर्वाहात् चैत्रेत्यादिप्रथमान्तपदप्रयोगोऽनर्थक इति चेन्न । संबोध्यतानुमापकासाधारणाभिमुख्यादिविरहे विशिष्यचैत्रत्वाद्यवच्छिन्ने युष्मत्पदशक्तिग्रहनिर्वाहस्यैव तत्प्रयोजनत्वात् । चैत्रत्वाद्यवच्छिन्ने बोध्यत्वग्रहं विना संबोध्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकयुष्मत्पदस्य विशिष्यचैत्रत्वाद्यवच्छिन्ने शक्तेर्निश्चेतुमशक्यत्वात् । न चैवमपि यत्रानन्तरवाक्यं न युष्मच्छब्दघटितं चैत्रात्र घटोऽस्तीत्यादौ तत्र संबोधनपदसार्थक्यं दुरुपपादमेवेति वाच्यम् । तत्रापि तत्तद्वाक्ये स्वीयवाक्यार्थबोधार्थोच्चरितत्वरूपतात्पर्यनिश्चयार्थमेव तत्पदप्रयोगात् । तादृशतात्पर्यनिश्चयं विना श्रुतादपि तत्तद्वाक्याच्चैत्रादेः शाब्दबोधासंभवात् । चैत्रस्याश्वानयनादिबोधाय मैत्रस्य च लवणानयनादिबोधायोच्चरितात्सैन्धवमानयेति वाक्याद्वैपरीत्येन चैत्रमैत्रयोस्तत्तद्वाक्यार्थबोधवारणाय तदीयतदर्थबोधे तदीयतद्बोधार्थोच्चरितत्वरूपतात्पर्यनिश्चयस्य हेतुतया आवश्यकत्वात् । संख्यातिरिक्तसुबर्थः प्रकृत्यर्थविशेष्यतयैव भासत इति नियमे संख्याभेदवत्संबोधनभेदोऽपि निवेशनीयः अतः संबोधनस्य प्रकृत्यर्थविशेषणतया भानेऽपि न क्षतिः । संबोधनस्य प्रकृत्यर्थविशेष्यतयैव वा भानमुपेयम् । वस्तुतो नामार्थस्य प्रकृतिप्रत्ययार्थमन्तरा कृत्वैव क्रियान्वय इत्यनुरोधात्सुबर्थकर्मत्वादेः प्रकृत्यर्थविशेष्यतयैव भानमुपेयते नतूक्तनियमानुरोधेन तथा नियमे मानाभावात् । संबोधनविभक्त्यन्तप्रकृत्यर्थस्यान्यत्र विशेषणतयाऽन्वयात्संबोधनस्य विशेष्यतया भानं निर्युक्तिकमिति कृतं विस्तरेण । इति संबोधनम् ।

प्रातिपदिकप्रकृतिकाः स्त्रियामित्यनेन विहिताष्टाबादयः क्वचित्स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति । अजा अश्वा शूद्रा श्यामा चपला ब्राह्मणी गौरी सुकेशी गर्भिणीत्यादौ । स्त्रीत्वं च योनिमत्त्वम् । नच स्त्रीपरपदात्साधुत्वार्थष्टाबादिप्रत्ययो नतु स्त्रीत्वं तस्यार्थः । क्वचित् स्त्रीत्वबोधश्च स्त्रीप्रत्ययप्रकृतितात्पर्यविषयत्वरूपलिङ्गज एवेति वाच्यम् । खट्वादौ व्यभिचारेण तादृशहेतोः स्त्रीत्वासाधकत्वात् । प्राणित्वेन विशेषणेऽपि देवतादौ व्यभिचारात् । वस्तुतस्त्वजवत्यपि अजा नास्तीत्यादिप्रयोगात्स्त्रीत्वस्य नञर्थान्वयितावच्छेदकतया भानमावश्यकम् अन्यथा पुंसाधारणजातिविशेषावच्छिन्नाभावस्य बाधेन तादृशप्रयोगस्य प्रामाण्यानुपपत्तेः । नच प्रातिपदिकार्थ एव स्त्रीत्वं तस्य च तदर्थएव जात्यादिमति विशेषणत्वेनान्वयः स्त्रीप्रत्ययास्तु द्योतका एव । अतएव "स्वार्थो द्रव्यं च लिङ्गं च संख्या कर्मादिरेव च । अमी पञ्चैव नामार्थास्त्रयः केषांचिदग्रिमा" इति शाब्दिकानां कारिकापि सङ्गच्छते । तत्र स्वार्थो जात्यादिरूपो गवादिपदमुख्यार्थः । द्रव्यं गवादिरूपस्तद्धर्मी तन्मते औपचारिको गवादिपदार्थः । लिङ्गस्य प्रातिपदिकार्थत्वमावश्यकमेव नात्र प्रा-

ह्मणोऽपितु ब्राह्मणीत्यादौ पुंस्त्वबोधकपदान्तराभावेन तद्बोधानुपपत्तेः। ब्राह्मणादिपदाच्च जात्यादेर्द्वयस्य च भानं नियतमेव। लिङ्गभानं तात्पर्ययोग्यताधीनं क्वाचित्कम् ब्राह्मणीत्यादौ पुंस्त्वाद्यबोधादिति वाच्यम्। उक्तयुक्त्या पुंस्त्वस्य प्रातिपदिकार्थत्वेऽप्यनन्तानां प्रातिपदिकपदानां स्त्रीत्वार्थकत्वे गौरवात् लाघवेनाल्पीयसां स्त्रीप्रत्ययानां तदर्थकत्वकल्पनौचित्यात्। अतएव स्त्रीत्वसंग्रहाय प्रातिपदिकार्थेत्यादिसूत्रे लिङ्गग्रहणम्। अन्यथा प्रातिपदिकार्थएव तदन्तर्भावेन पृथक् तदुपादानानुपपत्तेः। क्वचित्स्त्रीप्रत्ययः स्त्रियं भार्यात्वेन प्रकृत्यर्थविशेष्यतया बोधयति आचार्याणी मानवी शूद्रीत्यादौ। भार्यात्वं संबन्धविशेषः तत्रैव च निरूपकत्वेन प्रकृत्यर्थान्वयः। खट्वाटवीदेवतापदे न स्त्रीप्रत्ययां नार्थबोधकाः। तत्र प्रकृत्यर्थे योनिमत्त्वरूपस्त्रीत्वस्यायोग्यतयाऽनन्वयात्। नच शब्दगतं स्त्रीत्वादिरूपधर्मान्तरमेव तत्र परम्परासंबन्धेनार्थगततया भासत इति श्रीपतिदत्तोक्तं युक्तम्। तद्भाने मानाभावात्। यूस्त्र्याख्यावित्यत्र स्त्र्याख्यपदं स्त्रीलिङ्गशब्दपरं नतु स्त्रीत्वविशिष्टार्थकशब्दपरम्। तेनाटव्यादिशब्दानां स्त्रीत्वविशिष्टाबोधकत्वेऽपि न नदीसंज्ञानुपपत्तिः। अतएव स्त्रीभ्रूप्रभृतीनां स्त्रीप्रत्ययान्तत्वाभावेन स्त्रीत्वविशिष्टाबोधकत्वेऽपि नदीसंज्ञाप्रसक्त्या नेयङुवङ्स्थानाविति निषेधसंगतिः। नचैवं सेनान्ये स्त्रियै इत्यादावपि नदीसंज्ञा स्यात्। सेनान्यादिशब्दस्य तत्र विशेष्यनिघ्नतया स्त्रीलिङ्गत्वादिति वाच्यम्। प्रयोगानुसारेण विशेष्यसमभिव्याहारानधीनायाः स्त्रीलिङ्गताया विवक्षणीयत्वादिति संक्षेपः॥ इति लिङ्गार्थनिरुपणम्।

तद्धितप्रत्यया अपि नामप्रकृतिकाः क्वचित्प्रकृत्यर्थेन स्वार्थैकदेशस्य, क्वचिच्च तेन स्वार्थस्यान्वयबोधं जनयन्ति। तत्र गार्गिरित्यत्रापत्यार्थविहिततद्धितार्थस्यापत्यस्यैकदेशे जन्यत्वे निरूपकतया प्रकृत्यर्थगर्गाद्यन्वयः। गार्ग्य इत्यादौ तद्धितार्थस्य गोत्रापत्यैकदेशपुत्रघटकजन्यत्वे तथा तदन्वयः। गार्ग्यायण इत्यादौ तद्धितार्थस्य युवापत्यस्यैकदेशे जन्यत्वे गार्ग्यस्य जीवति तु वंश्ये युवेतिपरिभाषितयुवार्थघटकजीवने च गर्गादेरन्वयस्तेन गर्गादिजीवनकालीनो गर्गगोत्रापत्यस्यापत्यमयमिति बोधः। माञ्जिष्ठं वास इत्यत्र तेन रक्तमित्यर्थे तद्धितो विहितः। तत्संबन्धाधीनतदीयरूपारोपविषयत्वं तेन रक्तत्वम्। शङ्खः पीत इत्यारोपमादाय शङ्खादेरारोप्यपीतिमाद्याश्रयहरितालादिरक्तत्वस्य वारणायाधीनान्तमारोपे विशेषणम्। पटादेश्चक्षुरादिना रक्तत्वस्य वारणाय तदीयत्वं रूपविशेषणम्। अत्रच रागकरणस्य मञ्जिष्ठादेः प्रकृत्यर्थस्य तद्धितार्थैकदेशसंबन्धे प्रतियोगितया रूपे चाश्रयतयाऽन्वयः। शूल्यमुख्यमित्यादौ तद्धितार्थसंस्कृतैकदेशे पाकादिरूपसंस्कारे शूलोखादेः प्रकृत्यर्थस्याधिकरणत्वेनान्वयः। पौषी रात्रिरित्यादौ नक्षत्रयुक्तकालार्थे तद्धितः। कालस्य नक्षत्रयुक्तत्वं च तन्नक्षत्रशशिभोगाश्रयत्वं, तदेकदेशे शशिभोगे च कर्मतया तन्नक्षत्रान्वयः। पौषो मासः पौषो वर्ष इत्यादौ सास्मिन्नित्यनेन विहितस्य तद्धितस्य पौर्णमासीघटितत्वावच्छिन्नोऽर्थः पौर्णमास्यां प्रकृत्यर्थपौष्यादेरभेदेनान्वयः। पौषादिपदं च न केवलं यौगिकम् पौषः पक्ष इत्यादिव्यवहारविरहात् अतो रूढमपि। अतएव सूत्रे संज्ञाग्रहणं रूढिनिरूपकतावच्छेदकं च मासनिष्ठशुक्लप्रतिपदादिदर्शान्ततिथिसमुदायत्वं नतु त्रिंशत्तिथिरूपमासत्वमात्रम्। यत्किंचित्तिथ्यवधिकत्रिंशत्तिथिसमुदाये मासव्यवहारेऽपि चान्द्रसौरपौषादिवहिर्भूतपौष्यादिघटितत्रिंशत्तिथ्यन्तर्गततिथिषु

---

गोत्रापत्यैकदेशइति। गोत्रञ्च तदपत्यं गोत्रापत्यम्। अपत्यं पौत्रप्रभृतिगोत्रमिति सूत्रेणापत्यस्य स्वनिरूपितसाक्षात्परम्परासाधारणजन्यत्ववतो गोत्रसंज्ञाविधानात् जीवतितुवंश्येयुवेतिसूत्रम् वंश्ये पित्रादौजीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमपत्यं भवतीति तदर्थः। तथाच स्वपुत्रपुत्रनिरूपितसाक्षात्परम्परासाधारणजन्यत्ववतः पित्रादिजीवनकालीनस्यापत्यस्य युवसंज्ञस्यैकदेशे जीवने पुत्रनिष्ठजन्यत्वे च प्रकृत्यर्थस्यान्वयइति। पौष्यादेरिति। पुष्यनक्षत्रयुक्ता पौर्णमासी पौषी तद्बोधकशब्दात्सास्मिन्नित्यनेन तद्धिते पौषशब्दो मासवाची निष्पद्यते तत्र प्रकृतिभूतपौषीशब्दार्थपुष्यनक्ष-

पौषादिव्यवहारविरहात् । अथैवमपि सौरे पौषादिव्यवहारस्य निर्विवादतया धनुःस्थरविविशिष्टत्वमेव न कथं पौषादिपदशक्यतावच्छेदकमुपेयत इति चेन्न । सौरे पौषादौ पौष्यादिपूर्णिमाया अलाभे योगरूढिलभ्यपौषपदार्थविलोपापत्तेः । नच तत्र रूढिमात्रमवलम्ब्यैव पौषादिव्यवहारः सौरपौषादौ मुख्य इति वाच्यम् । तथासति योगार्थव्युत्पादनवैयर्थ्यात् । अथ विलुप्यतां वर्षविशेषे पौषादिपदमुख्यार्थः का क्षतिः तत्र लक्षणया सौरमासे पौषव्यवहारस्योपगन्तव्यत्वात् स्थलपद्मादौ पङ्कजव्यवहारवदिति चेत्तर्हि तत्र पौषादिपदमुख्यार्थमासनिमित्तकाब्दिकश्राद्धादिविलोपप्रसङ्गः । यथाश्रुतशूलपाणिग्रन्थानुसारिणस्तु धनुरादिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तेषु धनुरादिस्थरविसमाप्यमकरादिस्थरविसंक्रान्तिमन्मासाभिन्नधनुरादिस्थरव्यधिकरणशुक्लप्रतिपदापिदर्शान्तेषु वा पौषादिपदस्य रूढत्वमेव स्वीकुर्वन्ति, नतु यौगिकत्वम् । "अन्त्योपान्त्यौ त्रिभौ ज्ञेयाविति, वचनात् । पौषादिमासीयपौर्णमास्यां पुष्यादियोगस्यानियमात् ।" नच योगानादरे लाघवात्तत्तद्राशिस्थरविविशिष्टकालरूपसौरादिमासएव पौषादिपदशक्तिरुचितेति वाच्यम् । सा वैशाखस्यामावास्या या

---

त्रयुक्तकालस्येत्यर्थः । **पौषादिव्यवहारेति** । पौषशुक्लचतुर्दशीमारभ्य माघशुक्लचतुर्दशीपर्यन्तसमुदायस्य सावनमासव्यवहारविषयस्य पौष्याभिन्नपौर्णमासीघटितमासत्वेन पौषत्वापत्त्या तद्घटकमाघशुक्लपक्षीयतिथिदिनादिषु पौषस्येदं दिनं तिथिर्वा पौषमित्यादिव्यवहारापत्त्या पौषादिशब्दः शुक्लप्रतिपदमारभ्यामान्ततिथिसमुदाये पौषीघटिते पर्याप्तं यत्त्रिंशत्त्वं तदवच्छिन्ने योगरूढ इति भावः । **धनुस्थरविविशिष्टेति** । धनुष्कर्मकरविभोगानधिकरणकालावृत्तित्वे सति तादृशकालवृत्तिदिनपर्याप्तत्रिंशत्त्वावच्छिन्नमिति तु नार्थः । त्रिंशद्दिनन्यूनाधिकदिनकस्यापि तादृशमासस्य सत्त्वात् । किन्तु तादृशसंख्यायाः त्रिंशत्त्वत्वेन प्रवेशमविधाय समुदायत्वत्वेन प्रवेशं विधाय पञ्चदशदिनादिवृत्तिसमुदायत्ववारणाय स्वानधिकरणस्वाश्रयाव्यवहिततादृशभोगाधिकरणदिनकान्यत्वं विशेषणं च प्रक्षिप्य तादृशसमुदायत्वावच्छिन्नोऽर्थस्तस्य वाच्यः अत्र तादृशाव्यवहितोत्तरत्वनिवेशात्तादृशपौषान्तरीयदिनमादाय नाप्रसिद्धिः तादृशभोगाधिकरणत्वनिवेशाच्च स्वाश्रयाव्यवहितराश्यन्तररविभोगाधिकरणदिनमादाय नाप्रसिद्धिः स्वानधिकरणत्वनिवेशान्मासघटकस्वाश्रयाव्यवहिततादृशभोगाधिकरणदिनमादाय नाप्रसिद्धिः तादृशपञ्चदशदिनसमुदायत्वस्य स्वानधिकरणतादृशदिनकत्वेन तत्परिग्रहासंभव इति । **विलोपापत्तेरिति** । योगरूढिशब्दाल्लक्षणां विना रूढ्यर्थमात्रविषयकबोधानभ्युपगमादवयवशक्तिसमुदायशक्तिभ्यां योगार्थाभिन्नरूढ्यर्थविषयकबोधस्यैवोपगन्तव्यतया प्रायशो धनुस्थादिरविविशिष्टदिनसमुदायस्य पौष्याद्यभिन्नपूर्णिमाघटितत्वस्यासंभवाद्योगरूढ्यर्थस्योक्तबोधविषयस्याप्रसिद्ध्यापत्तेरित्यर्थः । तथा च शुक्लप्रतिपदादिदर्शान्तदिनसमुदाय एव रूढिरङ्गीकार्या तादृशसमुदायस्य पौष्याद्यभिन्नपूर्णिमाघटितत्वसंभवेन योगरूढ्यर्थप्रसिद्धिसम्भव इति भावः । योगार्थबाधादिस्थले लक्षणां विनापि समुदायशक्त्या बोधस्याभ्युपगततया पौषादिशब्दस्य सौरमासे रूढिरुपगन्तुं शक्यत एवेत्यत आह । **नचेति** । रूढशब्दानां यत्र शास्त्रेण योगः प्रदर्श्यते तत्र योगार्थरूढ्यर्थयोः कथञ्चिदप्यभेदोपपादनसंभवे योगरूढत्वमेवान्यथामण्डपादिशब्दवद्रूढयौगिकत्वमत्र च पूर्वोक्तरीत्या रूढिस्वीकारे योगरूढत्वमेवाङ्गीकार्यं तथासति योगार्थस्य मासान्तरव्यावर्त्तकत्वेन रूढ्यर्थस्य पक्षादियौगिकव्यावर्त्तकत्वेन योगरूढ्योः सार्थकत्वं संभवति सौरमासे रूढिस्वीकारे व्यावर्त्तकत्वाभावेन यौगिकत्वस्य व्युत्पादनं व्यर्थं स्यादिति भावः । अथास्तु पौषशब्दो योगरूढो रूढ्यर्थतावच्छेदकन्तु धनुस्थरविविशिष्टत्वमेव यत्र पौषशुक्लचतुर्दश्यादौ कदाचिद्धनुःसंक्रान्तिस्तत्र योगार्थाभिन्नरूढ्यर्थप्रसिद्धिर्यत्र क्वचन प्रसिद्ध्यापि योगार्थव्युत्पादनस्य सार्थकत्वसंभवः येषु वर्षेषु पौषपूर्णिमातः प्रागेव मकरसंक्रान्तिस्तेषु सौरमासस्य योगार्थाभिन्नत्वस्यासंभवेन योगरूढ्यर्थविलोपेऽपि न काचित्क्षतिर्लक्षणयैव सौरमासस्य पौषशब्देन व्यवहारसंभवात् । शुक्लप्रतिपदादिदर्शान्ते रूढेरभ्युपगमो निरर्थक इत्याह । **अविलुप्यतामित्यादि** । यस्मिन् मासे यत्र तिथौ यो मृतो द्वादशमासपूर्त्तौ तस्मिन्मासि तत्र तिथौ तस्याब्दिकं श्राद्धं विहितं तस्य विलोपः स्यात्सौरमासपरिग्रहे द्वादशमासानन्तरं प्रायशस्तन्मासीयतत्पक्षीयतत्तिथेर्लाभस्यासंभवादित्याह । **तत्रपौषादिति** । **धनुरादिस्थरव्यारब्धेत्यादि** । पौषशुक्लप्रतिपत्त्वेन यस्य व्यवहारस्तस्य नियमेन धनुस्थरविसंबन्धत्वाल्लक्षणसंगतिः यदिमलमासस्य वैशाखादिमासत्वं नेष्टं तदाह । **धनुरादिस्थरविसमाप्येत्यादि** । शुक्लप्रतिपदादिदर्शान्तस्य यस्य मेषस्थरव्यधिकरणत्वेसति वृषसंकान्त्याश्रयत्वं तस्यैव वैशाखत्वं नैवं मलमासस्येति न तस्यतत्त्वम् अग्रिमशुक्लप्रतिपदादिदर्शान्तसमुदायस्यावश्यं किञ्चिदपिकाले मेषस्थरव्यधिकरणत्वात् वृषसंक्रान्त्यधिकरणमासाभिन्नत्वाच्च वैशाखत्वमक्षतम् मासभिन्नेतितुप्रामादिकः पौषशुक्लप्रतिपदादिदर्शान्तस्यप्रायोमकरसंक्रान्तिमत्त्वेन मकरसंक्रान्तिमन्मासभिन्नत्वासंभवात् मार्गशुक्लप्रतिपदादिपौषदर्शान्तस्य पुष्यसंबन्धयोग्य[illegible] पौषशुक्ल[illegible]दिषु धनुर्मकरोभयसंक्रान्तिमत्त्वे तुसस्य

रोहिण्या संबध्यते इत्यादिश्रुतिबलाच्चान्द्रएव वैशाखादिपदशक्तिसिद्धेः। वस्तुतो नक्षत्रेण युक्तः काल इत्यत्र नक्षत्रयोगयोग्यत्वमेव विवक्षितम्। पुष्याद्ययुक्तायामपि पौषादिपूर्णिमायां पौष्यादिव्यवहारात्। अन्यथा माघ्यां यदि मघा नास्तीत्यादेरसंगत्यापत्तेः पुष्यादियोगयोग्यता च धनुरादिस्थरव्यारब्धपक्षीयत्वं तद्रूपाक्रान्तपौर्णमासीघटितत्वरूपयोगलभ्यतावच्छेदकं नियतमेव पौषादेरिति नोक्तानुपपत्त्या यौगिकत्वनिराकरणसंभवस्तत्पदानाम्। अथैवं निरुक्तरूपस्य पुष्याद्यघटिततया तेन रूपेण पूर्णिमाबोधकपौष्यादिशब्दानां यौगिकत्वप्रसक्तिरेव नास्ति पौषी रात्रिरित्यादौ पुष्यादियोग एव प्रतीयते न तु निरुक्तं योग्यत्वम्। मकरादिस्थरव्यारब्धकृष्णपक्षीयरात्र्यादावपि तथा व्यवहारादिति नक्षत्रेण युक्तः कालइत्यत्र योग एव विवक्षणीयो नतु योगयोग्यत्वमिति पौर्णमास्यां पौष्यादिपदस्य न यौगिकत्वसंभवश्चेन्नवतु पौष्यादिपदं निरुक्तरूपावच्छिन्नपूर्णिमारूढमेव पौषादिपदानां तद्योगपुरस्कारेण मासवाचकत्वे बाधकाभावाद्यौगिकत्वं कथं प्रत्याख्येयम्। नच सास्मिन्पौर्णमासीति सूत्रस्यास्मिन् पौष्यादिपूर्णिमायोग्यतेत्यर्थविवक्षया धनुरादिराशिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्ते तद्धितान्तसमुदायरूढिग्राहकतयोपपत्तौ योगरूढिस्वीकारोऽनुचित इति वाच्यम्। केवलरूढिपक्षे समुदायशक्यतावच्छेदकशरीरे आरब्धान्तविशेषणप्रक्षेपेण गौरवात्। पौषतैषमाघादिनानापदानां गुरुधर्मावच्छिन्ने शक्तिकल्पनमपेक्ष्य सास्मिन्नित्यर्थेऽणः प्रत्ययस्यैकशक्तिकल्पनाधिक्यस्योचितत्वात्। नच योगरूढिपक्षे पौषादिपदानां योगार्थरूढ्यर्थाभेदान्वयबोधजनकत्वकल्पनाधिक्येन गौरवमिति वाच्यम्, भवन्मतेऽपि तत्तदर्थे यौगिकरूढत्वभ्रमदशायां सति च तत्तदर्थाभेदान्वयपरत्वग्रहे तथान्वयबोधस्य दुरपह्नवतया तत्र तादृशबोधहेतुताकल्पनस्यावश्यकत्वादिति दिक्। वैष्णवी ऋक् ऐन्द्रं हविरित्यादौ देवतार्थविहिततद्धितस्य तद्देवताकत्वमर्थः। मन्त्रस्य तद्देवताकत्वं तदुद्देश्यकत्यागकरणत्वेन वेदबोधितत्वम्। अथ मन्त्रस्य त्यागकरणत्वं बाधितमेव विनापि मन्त्रमिच्छाविशेषरूपस्य तस्योत्पत्त्या व्यभिचारात्। इष्टसाधनताज्ञानघटितक्लृप्तसामग्र्या अन्यथासिद्धत्वाच्चेति मन्त्रस्य करणतां कथं वेदो बोधयेद् बोधयन्वा प्रमाणं भवेत्। सत्यम्। मन्त्रस्य त्यागकरणत्वं त्यागाङ्गोच्चारणकत्वं नतु तज्जनकत्वमतो न दोषः। हविषस्तद्देवताकत्वं च तदुद्देश्यकत्यागकर्मत्वम्। तस्त्यागोद्देश्यतायाः एव तद्देवतापदार्थत्वात्। नचैवं घृतादिसंप्रदानब्राह्मणस्य घृतादिदेवतात्वापत्तिः। उद्देश्यपदेन वेदबोधितद्रव्यस्वामित्वप्रकारेण विषयताया एव विवक्षितत्वात् संप्रदाने च स्वामित्वस्याबाधितत्वात्। नच त्यागोद्देश्यतायाश्चतुर्थ्यापि बोधनात्तद्धितचतुर्थ्योर्देवतात्वबोधकतायामविशेषात्। "तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः। देवता-

---

मासस्य पौषमासत्वाभावे तद्वारणाय धनुस्थरविसमाप्येत्युक्तम्। मकरस्थरविसंबद्धदिनावधिकाधिकसंख्यत्ववद्दिनरहितत्वम् लुप्तमासस्य तादृशदिनवत्वात्तद्वारणम् समासं मे धनमित्यादौ स्वल्पावस्थिते समाप्तिप्रयोगात्समाप्येत्यन्तात्कथञ्चिदुक्तार्थलाभः यदि लुप्तमासे विमतिस्तदा समाप्येत्यन्तं वस्तुस्थितिकथनमात्रमिति बोध्यम्। **रोहिण्येति**। यदि मेषस्थरविविशिष्टदिनसमुदायस्य वैशाखमासत्वं स्यात्तदातदीयामावास्याया नियमेन रोहिणीसंबन्धविरहाच्छ्रुतिविरोधः स्यात् वैशाखशुक्लप्रतिपदादिदर्शान्तस्य मासत्वे तदमावास्यायाः प्रायोरोहिणीसम्बन्धसंभवात्संगतिरित्यर्थः। **अन्यथेति**। पुष्यादिसम्बन्धादेव पौषादित्व इत्यर्थः। **माघ्यांयदीत्यादि**। मघासंबन्धादेव माघीत्वेन तत्र मघानिषेधस्यायोग्यतयाऽसंगत्यापत्तेरित्यर्थः।

**रात्र्यादावपीति**। पुष्यनक्षत्रयोग इति शेषः। **तथाव्यवहारादिति**। पुष्यनक्षत्रयोगनिबन्धनपौषीतिव्यवहारादित्यर्थः। तथाच यदियोगार्थतावच्छेदकं पुष्ययोगयोग्यत्वं स्यात्तस्य धनुस्थरव्यारब्धपक्षीयत्वरूपस्यमकरस्थरव्यारब्धपक्षीयतिथावभावात्तादृशव्यवहारो न स्यात् नचोक्तयोग्यत्वं धनुस्थरव्यारब्धमासीयत्वमेवास्तु मकरारब्धकृष्णपक्षीयरात्रावपि तथात्वमस्तीति वाच्यम् तादृशमासबहिर्भूतपुष्यनक्षत्रयुक्तरात्रिमात्रे पुष्ययोगनिबन्धनस्य पौषीरात्रिरिति व्यवहारस्य सत्त्वेन तस्य तथाप्यनुपपत्तेः। नच तादृशमासीयपुष्यनक्षत्रयोगरहितरात्रिषु पौषीति व्यवहारापत्तिरपि दोष इति वाच्यं तन्मासस्य पौषत्वेन पौषस्येयं रात्रिरिति व्युत्पत्त्यापौषीति व्यवहारस्योपपन्नतयेष्टापत्तेरिति भावः। **त्यागाङ्गोच्चारणेति**। मन्त्रोच्चारणं

सङ्गतिस्तत्र दुर्बलं तु परं परम्" इत्यनेन विरोध इति वाच्यम् । त्यागोद्देश्यतायां वेदमेयत्वस्याधिकस्य निवेशनीयतया चतुर्थ्या तदंशाबोधनेन तस्योपायान्तरबोध्यतया चतुर्थ्यधीनदेवतात्वबोधस्य विलम्बिततया तद्धितापेक्षया चतुर्थ्यां जघन्यतोपपत्तेः देवतार्थविहिततद्धितेनैव देवतात्वघटकतदंशस्यापि बोधनात् । अथ चतुर्थ्या वेदमेयत्वांशस्य साक्षादबोधनेऽपि त्यागोद्देश्यत्वस्य साक्षाद्बोधनेन पित्रादीनां साहित्यावच्छिन्नानां पितृभ्यो दद्यादिति चतुर्थ्यधीनत्यागोद्देश्यताबोधस्य पितरो देवता इति तद्धितसमानार्थकदेवतापदाधीननिरपेक्षत्यागोद्देश्यत्वबोधापेक्षयाऽविलम्बितत्वेन साहित्यावच्छिन्नानां निरपेक्षाणां वा श्राद्धोद्देश्यत्वमित्यत्र चतुर्थ्यपेक्षया देवतापदस्य बलवत्त्वरूपं शूलपाणिपर्यालोचितं विनिगमकं न संगच्छत इति चेन्न । पितृभ्यो दद्यादिति चतुर्थ्या साहित्यावच्छिन्नस्य त्यागोद्देश्यताबोधे तत्र वेदसमानार्थकस्मृतिवाक्यजन्यत्वग्रहे सत्येवाप्रामाण्यशङ्कानुदयः, तादृशग्रहश्च विलम्बितः । देवतापदात्त्यागोद्देश्यताबोधश्च तदुद्देश्यतांशे वेदबोधितत्वावगाही स्वस्मिन्नप्रामाण्यशङ्काव्युदासाय न ज्ञानान्तरमपेक्षते, स्वस्यैव स्वात्मकोद्देश्यताबोधांशे व्यावर्त्तकवेदजन्यत्वावगाहनात्, अप्रामाण्यशङ्काकलंकितश्च बोधो जातोऽप्यकिंचित्कर इति देवतापदस्य झटिति निश्चीयमानप्रामाण्यकबोधजनकतया बलवत्त्वेन विनिगमनाया उपपत्तेः । एवं श्राद्धार्थावाहनप्रकाशकात् पितर इत्यादिमन्त्रबहुवचनोपस्थापितसाहित्यावच्छिन्नावाहनबोधेन साहित्यावच्छिन्नानां श्राद्धदेवतात्वलाभेऽपि मन्त्रलिङ्गस्य विपक्षबाधकतर्कादिसापेक्षव्याप्तिनिश्चयाधीनतया सुतरां पितरो देवता इत्यतो दुर्बलतेति बोध्यम् । कापोतं राजतं जनतेत्यादौ समूहार्थविहितस्य पर्याप्तसमुदायत्वावच्छिन्नोऽर्थः पर्याप्तौ प्रकृत्यर्थकपोतत्वाद्यनवच्छिन्नस्यान्वयः । कपोतशुकसारिकादिपर्याप्तसमुदायत्वस्य पर्याप्तिश्च न न्यूनवृत्तिकपोतत्वादिनाऽवच्छिद्यते, अतो न तादृशसमुदाये कापोतादिव्यवहारः । पर्याप्त्यवच्छेदकत्वे चान्यूनवृत्तित्वमेव च तन्त्रं न त्वनतिरिक्तवृत्तित्वमपि । अन्यथा आकाशत्वादेरिव घटत्वादेरपि द्वित्वादिपर्याप्त्यवच्छेदकता न स्यात् । आकाशावितिवत् घटावित्यपि न स्यात् । इत्थं च कपोतमात्रवृत्तिशतत्वादिपर्याप्तावपि अतिरिक्तवृत्तिकपोतत्वादेरवच्छेदकतानिर्वाहात् । कपोतशतादावपि कापोतादिव्यवहारोपपत्तिः पर्याप्त्यतिप्रसक्तधर्मस्य तदनवच्छेदकत्वे गत्यन्तरं चिन्तनीयम् । इति तद्धितार्थः ।

---

विनात्यागमात्राददृष्टोत्पत्तिविरहेण त्यागेनादृष्टजननीये सहकारित्वं तदङ्गत्वं बोध्यम् । **साहित्यावच्छिन्नानामिति** । अथ स्वमते साहित्यावच्छिन्ने प्रकृत्यर्थे प्रकृतेः शक्तिनिरूढलक्षणयोरनभ्युपगमात् विभक्त्या च बहुत्वस्यैवोपस्थापनात् बहुत्वस्यासाहित्यरूपत्वादसहितानामपि बहुत्वप्रत्ययादिदमसङ्गतमिति चेन्नासति बाधके इह घटपटमठाः सन्ति चैत्रमैत्रावागच्छतो धवखदिरौ छिनत्तीत्यादितः सह घटपटाभ्यां मठोस्ति चैत्रेण सह मैत्र आगच्छति धवेन सहखदिरं छिनत्तीति वाक्येभ्य इव क्रियान्वयस्थले साहित्यबोधस्यानुभविकत्वे बहुत्वस्यापेक्षाबुद्धिविशेषविषयतारूपस्य साहित्यात्मकस्य विभक्तितात्पर्यविषयतायां वाच्यत्वात् तदभिप्रायेण तथोक्तेः पितरो देवता इत्यत्र क्रियाविशेषान्वयाभावेन भवन्तीत्यादिक्रियान्वयेऽपि वा ततः साहित्यबोधस्याननुभविकत्वेन साहित्यरूपबहुत्वविशिष्टे देवतापदार्थानन्वयेन साहित्यावच्छिन्नत्वस्योद्देश्यत्वे भानासंभवः एवं देवतापदार्थस्योद्देश्यत्वविशिष्टस्य तादात्म्येन पितृपदार्थेऽन्वयोऽवगम्यते तत्र च बहुत्वस्योद्देश्यविशेषणत्वेपि न तदवच्छिन्नत्वस्योद्देश्यत्वे विधेयविशेषणे भानम् श्यामो घटो रक्तो भवतीति प्रयोगात् तद्धितेन त्वनवच्छिन्नमेवोद्देश्यत्वमुपस्थाप्यत इति न तत्र साहित्यावच्छिन्नोद्देश्यत्वप्रतीतिरिति भावः । **गत्यन्तरंचिन्तनीयमिति** । स्वरूपसंबन्धरूपावच्छेदकत्वभानमनभ्युपेत्य तद्धर्मविशिष्टस्याधेयतया पर्याप्तावन्वये धर्मिपारतन्त्र्येण स्वव्याप्यत्वसंबन्धेन तद्धर्मस्यान्वयाभ्युपगमरूपगत्यन्तरमित्यर्थः ।

इति व्युत्पत्तिवादतत्त्वालोके तद्धितालोकः ।

धातुप्रकृतिकाश्च लकारकृत्सन्यङ्णिच्प्रभृतयः प्रत्ययाः केचिद्धात्वर्थान्वितमधिकं स्वार्थं ब्रुवते । अर्थान्तरमनभिदधानाश्च केचिदाकाङ्क्षानिर्वाहकतया प्रकृतिभिः स्वीयार्थबोधनमेवोपकुर्वते । तत्र लडादिदशलकाराणां लः कर्मणि च भावे चाकर्मकेभ्य इति सूत्रेण कर्तृकर्मभावेष्वनुशिष्टानां कर्तृत्वसामान्यमर्थः । तावन्मात्राभिधानेनैव प्रथमान्तपदोपस्थाप्यविशेषणतया तदन्वयेन कृतिविशिष्टस्य कर्तुर्बोधनिर्वाहाल्लकारस्य तद्बोधकतया न लःकर्मणीतिसूत्रविरोधः, बोधकताया एव तत्र सप्तम्यर्थत्वात्, नतु वाचकतायाः गौरवेण विशिष्टधर्मिणि शक्तेर्याधात् । मैत्रः पचतीत्यादौ लकारे प्रथमान्तपदसामानाधिकरण्यप्रवादस्याभेदेन तदर्थान्वितस्वार्थबोधपरत्वाभावेऽपि कथंचिदुपपादनसंभवात् । तृतीयायाः साधुतानियामकं लकारादिना कर्तुरनभिधानमपि कर्तृत्वविशिष्टाबोधनमेव, नतु विशिष्टशक्त्याऽबोधनपर्यन्तमतो विशिष्टस्य लकारावाच्यत्वेऽपि चैत्रः पचतीत्यादौ न तृतीयापत्तिः । अन्वयबलेन विशिष्टबोधात् । चैत्रः पक्वेत्यादौ कृत्प्रत्ययस्य धर्मिणि शक्तावपि न क्षतिः । शक्त्यधीनविशिष्टबोधसाधारणबोधस्यैवानभिधानपदार्थप्रतियोगित्वात् । अथानभिहिते कर्त्तरि तृतीयेत्यनुशासनेऽपि सप्तम्यर्थो बोधकत्वमेव । तथाच चैत्रेण पच्यतइत्यादौ तृतीयार्थकर्तृत्वस्य प्रकृत्यर्थविशेष्यतयैव भानान्न कर्तृत्वविशिष्टधर्मिबोधकत्वमिति सूत्रविरोधः । यदिच तत्र कर्त्रादिपदं धर्मपरम् । तथाच समभिव्याहृतलकाराद्यनभिहितं कर्तृत्वं तृतीयार्थ इति सूत्रार्थः चैत्रेणपच्यत इत्यादौ कर्तृत्वस्य तृतीयामात्रार्थत्वाल्लकारेण तदनभिधानं सुघटमित्युच्यते, तदा तत्रानभिधानशब्दार्थो भवतैव वक्तव्यः । न तावदवाचकत्वं तदर्थः । लकारसामान्यस्यैव कर्तृत्वशक्तत्वेनानुक्तेरसंभवात् । कर्त्तरि यकोऽसाधुत्वादेव चैत्रः पच्यते इत्यादिप्रयोगवारणात् यगाद्यनुत्तरत्वस्य कर्तृत्वशक्ततावच्छेदककोटावनिवेशात् । तत्र तन्निवेशे पच्यन्ते माषाः, भिद्यते कुसूलः, लूयते केदार इत्यादौ कर्मकर्तुः माषकुसूलकेदारादेः कर्तृत्वबोधानुपपत्तिः । नच तत्र स्वयमेवेत्यस्याध्याहारेणाव्ययस्वयंपदोत्तरतृतीयया कर्तृत्वं बोध्यते नतु लकारेणेति वाच्यम् । स्वयमित्याद्यध्याहारं विनापि तत्र कर्तृत्वबोधाभ्युपगमात् । तत्र लकारेण कर्तृत्वाबोधने कर्मकर्त्तुः कर्मवत्कर्मणा तुल्यक्रिय इत्यतिदेशवैयर्थ्यापातात् । लकारस्य कर्मत्वबोधकतयैव यगात्मनेपदचिण्चिण्वद्भावरूपातिदेशफलनिर्वाहात् । नच कर्मकर्त्तरि लकाराधीनकर्मत्वबोधस्याप्यावश्यकता वस्तुगत्या कर्म कर्तुः कर्मत्वातिदेशे चैत्रः स्वं पश्यति स्वं हन्तीत्यादावपि यगात्मनेपदादिप्रसङ्गात् । लकारेण कर्मत्वविवक्षायामेव कर्मत्वातिदेशस्य स्वीकरणीयत्वात् तथाच त्वन्मतेऽपि कर्मत्वातिदेशासंगतिरिति वाच्यम् । कर्मत्वविवक्षायामपि कर्तृत्वविवक्षणे कर्तृकर्मादिसंज्ञासमावेशविरोधेन परत्वात्कर्तृसंज्ञया कर्मसंज्ञाया बाधेनात्मनेपदचिण्वद्भावाद्यनुपपत्तेः । कर्त्तरि शबित्याद्यपवादविषयतया यकोऽप्यनिर्वाहादिति सार्थकत्वात् । नच कर्मत्वकर्तृत्वयोरुभयोस्तत्र बोधस्वीकारे तदेकतरस्याख्यातार्थतयोद्देश्यतावच्छेदकतया भानासंभवात्समूहालम्बनबोधएव स्वीकरणीय इति वाक्यभेदापत्तिरिति वाच्यम् । एकत्र द्वयमिति रीत्या तदुभयबोधस्य समूहालम्बनविलक्षणस्य स्वीकारात् । यदि च विधेयद्वयज्ञानं समूहालम्बनात्मकमेव । अतएव विधे-

---

**स्वीयेति** । स्वंप्रकृतिः । **कथंचिदिति** । स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वपरत्वेनेत्यर्थः । स्वं प्रथमान्तम् । कर्मवत्कर्मणातुल्यक्रियइति सूत्रम् । कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यादिति तदर्थः । तुल्यशब्दोऽत्रैकपर्यायः समानजातीयस्तुल्यजातीय इत्यादौ तथादर्शनात् । तथाच कर्मस्थक्रियाऽभिन्नक्रियावान् कर्तेति कर्मैव यदा सौकर्यविवक्षया स्वव्यापारप्राधान्येन कर्तृत्वेन विवक्ष्यते तदा स कर्ता कर्मतुल्यो भवति । तस्मिन् लकारे यगात्मनेपदचिण्चिण्वद्भावादिसर्वं कर्म लकारवद्भवतीति तात्पर्यार्थः । **वस्तुगत्या कर्मकर्तुरिति** । आख्यातोपस्थापितकर्मत्वानन्वयित्वेसति प्रकृतिक्रियानिरूपितकर्मत्ववदभिन्नस्य प्रकृतक्रियाकर्तृत्वेन विवक्षितस्येत्यर्थः । **आख्यातार्थतयेति** । उभयस्येत्यादिः आख्यातस्य स्वार्थविधेयताकबोध एव साकाङ्क्षत्वेनोद्देश्यतावच्छेदकतया तदर्थस्य कस्यचिदपि

यभेदे वाक्यभेद इति मीमांसकसिद्धान्तोऽपीत्युच्यते, तदास्तु धातोरेव स्वकर्मकक्रियायां लक्षणा, कर्तृत्वसंबन्धमध्यएव वा स्वनिरूपकक्रियाकर्मत्वस्याप्यन्तर्भाव इत्यलम् । एवमकर्मकत्वेऽपि प्रसूते गौः, प्रास्नोष्ट गौः, नमते दण्डमूलमनंस्त दण्ड, इत्यादौ ण्यर्थान्तर्भावेणैव कर्मकर्तृतानिर्वाहे "न दुहस्नुनमां यक्चिणा" विति यक्चिणनिषेधोपपत्तिः । एवं चैत्रेण पक्ष्यत इत्यादौ कर्तृत्ववाचकताया दुरपह्नवत्वात् तृतीयानुपपत्तिः । चैत्रः पक्ष्यतइत्यादौ लकारेण कर्तृत्वबोधनात्स्याल्लकारसाधारणरूपस्य तद्वाचकतावच्छेदकताध्रौव्याच्च । नापि तदबोधकत्वं तदनभिधानं चैत्रेण पच्यतइति वाक्यजबोधे कर्तृत्वविषयके तादृशवाक्यघटकसफलपदानामेव जनकतया तद्घटकलकारस्यापि कर्तृत्वबोधकताया वाङ्मात्रेणाप्रत्याख्येयत्वात् । कर्तृत्वविषयत्वाप्रयोजकत्वं लादीनां तदनभिधायकत्वं चैत्रेण पच्यत इत्यादौ धात्वर्थविशेषणतया कर्तृत्वविषयता तृतीयाप्रयोज्यैव न त्वाख्यातप्रयोज्या । आख्यातस्याश्रयतासंबन्धावच्छिन्नकर्तृत्वप्रकारताया एव कार्यतावच्छेदकत्वादित्यपि न सम्यक् । पचतीत्यवान्तरवाक्यार्थबोधासंग्राहकतया प्रकारताया एवाख्यातजन्यतावच्छेदकत्वासंभवात् । प्रथमान्तसमभिव्याहारज्ञानस्य योग्यताज्ञानादेर्वा जन्यतायामुक्तप्रकारताया अवच्छेदकत्वात् । यदिच प्रथमान्तपदसमभिव्याहृताख्यातपदजन्यतावच्छेदकतयैव धर्मिविषयतानिरूपितकर्तृत्वविषयताया आख्यातप्रयोज्यत्वम् । कर्तृत्वविषयतासामान्यं च नाख्यातपदज्ञानसामान्यजन्यतावच्छेदकं तादृशसामान्यकार्यकारणभावे मानाभावादित्युच्यते, तदापि चैत्रेण पच्यते तण्डुल इत्यादिवाक्यार्थबोधस्य परस्परसमभिव्याहृतपदसमूहरूपवाक्यज्ञानहेतुकतया तद्वाक्यार्थविषयतान्तःपातिकर्तृत्वविषयताया वाक्यघटकाख्यातप्रयोज्यत्वं दुर्वारमेवेति । मैवम् । अनभिहितेति कर्त्तरि तृतीयेत्यस्य कर्तृत्वविशेष्यतया प्रातिपदिकार्थेऽविवक्षिते तृतीयेत्यर्थः । प्रातिपदिकार्थविशेषणतयैव कर्तृत्वेऽविवक्षिते इति यावत् । अवधारणपरतया प्रातिपदिकार्थविशेष्यतया कर्तृत्वेविवक्षिते तदुत्तरं तृतीयेति पर्यवसितम् । अतश्चैत्रः पचतीत्यादावाख्यातेन कर्तृत्वबोधनादुक्तार्थानामप्रयोग इति न्यायात्तृतीयापत्तिविरहात् । प्रातिपदिकार्थान्वयितया

---

भानासंभवादित्यर्थः । **स्वकर्मकेति** । स्वं कर्ता नच चैत्रः स्वं हन्तीत्यत्र कर्तुः कर्मवद्भावो दुर्वारः स्वकर्मकत्वेन भासमानक्रियाकर्तृत्वेन विवक्षितत्वस्यैव कर्मवद्भावप्रयोजकतया तस्य सत्त्वादिति वाच्यम् स्वकर्मकत्वेन धातूपस्थाप्यत्वस्य विवक्षितत्वात् स्वनिरूपकत्वेनेत्यादिकल्पान्तरस्यातएवानुसरणाद्वा तत्र कर्मत्वकर्तृत्वोभयविषयतानिरूपितैकविशेष्यतावत्त्वेन तात्पर्यविषयत्वस्य कर्मवद्भावप्रयोजकत्वात्तण्डुलः पच्यत इत्यादौ तण्डुलनिष्ठविशेष्यतायाः कर्मत्वनिष्ठसांसर्गिकविषयतया कर्तृत्वनिष्ठप्रकारताख्यविषयतया निरूपितत्वात्कर्मवद्भावः । स्वं पश्यति चैत्र इत्यत्र चैत्रनिष्ठविशेष्यताया अतथात्वान्न कर्मवद्भावः । **अन्तर्भावइति** । आश्रयत्वतादृशकर्मत्वयोरुभयोः संबन्धत्वादितिशेषः । **स्याल्लकारेति** । स्येति लृद्विकरणस्यं पञ्चम्या रूपं स्यादिति उत्तरेति शेषः । नित्यसापेक्षत्वान्नासामर्थ्यम् प्रयुक्तेत्यप्रयुज्यमानापि क्रियास्यं प्रयुज्येतिल्यब्लोपे पञ्चम्याःप्रयोजिका स्यलकारेति पाठः प्रमादात्स्याल्लकारेति रूपतांप्राप्तः स्यस्य लकारइति षष्ठीतत्पुरुषः संबन्धश्चोत्तरत्वरूपः षष्ठ्यर्थः । स्याद्युत्तरेतियुक्तः पाठः । चैत्रेणात्मा हन्यत इत्यत्रात्मपदार्थस्यास्ति कर्तृत्वविशेष्यतयाविवक्षितत्वं नच तृतीयाभवति तदुत्तरमित्यतआह । **प्रातिपदिकार्थविशेषणतयैवेति** । लघुभूतं तत्तात्पर्यार्थमाह । **प्रातिपदिकार्थविशेष्यतयेति** । तत्तत्प्रातिपदिकार्थविशेष्यतया समभिव्याहृतक्रियाकर्तृत्वे विवक्षिते तत्प्रातिपदिकोत्तरंतृतीयाभवतीत्यर्थः । तेन चैत्रेण ग्रामो गम्यत इत्यत्र चैत्रप्रातिपदिकार्थविशेष्यतया कर्तृत्वे विवक्षिते ग्रामप्रातिपदिकान्न तृतीयापत्तिः । नचात्मप्रातिपदिकार्थचैत्रविशेष्यतया कर्तृत्वस्य विवक्षितत्वात्तदुत्तरं तृतीयास्यादितिवाच्यं कर्तृत्वनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेन तात्पर्यविषयतावतः पदात्तृतीया भवतीत्युक्तावदोषात् चैत्रश्चैत्रेण हन्यत इत्यत्रैकचैत्रपदस्य कर्मत्वनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वेनेदन्त्वेन तात्पर्यविषयतया तस्मात्तृतीयाया अप्रसक्तेरिति । ननु चैत्रविशेष्यतया कर्तृत्वेविवक्षिते चैत्रेण चैत्रःपचतीति कथं न प्रयोग इत्यत आह । **उक्तार्थानामिति** । विशेष्यतया वा विशेषणतया वा कर्तृत्वे बोधिते चैत्रकर्तृकक्रियालाभादाख्याते कर्तृत्वबोधकतया विवक्षिते कर्तृत्वस्य कथञ्चिदपि न पुनर्विवक्षासंभवइति प्रातिपदिकार्थविशेष्यतया तद्विवक्षाया अभावान्न तृतीयाप्रसक्तिरितिभावः । **प्रातिपदिकार्थान्वयितयेति** । नच प्रातिपदिकार्थान्वयितया कर्तृत्वस्य विवक्षितत्वं चैत्रोस्तीत्यत्राप्यस्ति नास्ति च तृतीयेति व्यभिचारः स्यादतोविशेष्यतयेत्युपादेयमेवेति वाच्यम् । तत्तत्प्रातिपदि-

कर्तृत्वविवक्षायामित्येव सम्यक् किं विशेष्यतयान्वयित्वपर्यन्तनिवेशनेनेति नाशङ्क्यम् । संख्यातिरिक्तसुबर्थस्य प्रकृत्यर्थविशेष्यतयैवान्वय इति व्युत्पत्तिसूचकत्वेन विशेष्यतयान्वयित्वपर्यन्तस्यावश्यं विवक्षणीयत्वाद्यथाश्रुतसूत्रार्थानुरोधेन कर्त्तरि लकारविभक्त्योः शक्तिवादिभिर्वैयाकरणैरपि प्रातिपदिकार्थविशेष्यतया कर्त्तरि विवक्षिते तृतीयेत्येव सूत्रार्थो वाच्यः । अन्यथा चैत्रेण पच्यत इत्यादौ कर्त्तुरनभिधानस्योक्तक्रमेण दुर्वचतापत्तेरित्यलमधिकेन । अथानभिहितेकर्त्तरि तृतीयेत्यस्योक्तार्थकत्वे चैत्रादिकर्तृकत्वविशेषितपाकादिविवक्षया चैत्रेण पचतीत्यादिप्रयोगापत्तिः । नच परस्मैपदार्थककर्तृत्वान्वयिविशेष्यविरहान्न तथा प्रयोगः विशेष्यतयापि कर्तृत्वबोधसंभवात् । चैत्रमैत्रोभयकर्तृकपाकस्थले चैत्रकर्तृकपाककर्त्ता मैत्र इत्यन्वयतात्पर्येण चैत्रेण पचति मैत्र इति प्रयोगस्य दुर्वारत्वाच्च । नच कर्तृत्वातिरिक्ते विशेषणतापन्नायां कर्तृत्वेवा विशेषणतानापन्नायां क्रियायामेव तृतीयार्थकर्तृत्वान्वयो व्युत्पन्न इति वाच्यम् । चैत्रेण पाचयति मैत्र इत्यादौ ण्यर्थकर्तृत्वविशेषणतापन्ने पाकादौ चैत्रादिकर्तृकत्वान्वयेन तादृशव्युत्पत्तेरसिद्धेः । नचलकारार्थकर्तृत्वविशेषणतानापन्नक्रियाविशेषणतया कर्तृत्वबोधकत्वं सुपां व्युत्पन्नमिति न कश्चिद्दोष इति वाच्यम् । उक्तस्थले चैत्रेण पक्कवान् मैत्र इति प्रयोगापत्तेः । मैवम् । आश्रयातिरिक्ताविशेषणतापन्नकर्तृत्वविशेषणतानापन्नक्रियायां तृतीयार्थकर्तृत्वान्वयव्युत्पत्तौ न किंचिद्बाधकम् ।

मैत्रेण पाचयतीत्यादौ कर्तृत्वनिर्वाहकव्यापारो णिजर्थः । तत्राश्रयातिरिक्ते व्यापारे विशेषणं कर्तृत्वमिति तद्विशेषणतापन्नक्रियायां तृतीयार्थकर्तृत्वविशेषणत्वे न किंचिद्बाधकम् । चैत्रेण पचति मैत्र इत्यादयश्च न प्रयोगाः । तत्राश्रयएव कृतेर्विशेषणतया तद्विशेषणतानापन्नक्रियायां तृतीयया कर्तृत्वबोधनासंभवात् । कृतिविशेष्यकबोधाभिप्रायेण चैत्रेण पचतीति वारणायाश्रयविशेषणत्वमुपेक्ष्याश्रयातिरिक्ताविशेषणत्वं निवेशितम् । अनभिहिते कर्त्तरि तृतीयेत्यस्यापि निरुक्तक्रियाविशेषणतया प्रातिपदिकार्थान्वयिकर्तृत्वविवक्षायां तदुत्तरं तृतीया भवतीत्येवार्थ इति दिक् । कर्तृत्वं च चैत्रः पचतीत्यादौ क्रियानुकूला कृतिरेव । तस्या एवानुकूलकृतित्वेन कृतित्वेन वाऽऽख्यातवाच्यता । रथो गच्छति, काष्ठं पचतीत्यादौ च क्रियानुकूलव्यापाररूपे कर्तृत्वे निरूढलक्षणा कृतित्वजातेः प्रवृत्तिनिमित्तत्वे लाघवात् । मीमांसकास्तु । व्यापारत्वेनैव शक्तिः, पचतीत्यादावपि तेनैव रूपेण बोधोपगमात् । एवंचाचेतनेऽपि प्रयोगो मुख्य एव । कृतित्वस्य लाघवं चार्किंचित्करम् । यत्र लघुगुरुरूपाभ्यां बोधो निर्विवादस्तत्रैव लघुरूपावच्छिन्ने शक्त्युपगमात् । प्रकृते त्र कृतित्वेन बोधस्य सविवादत्वात्, तथापि तदवच्छिन्ने शक्त्युपगमे तत्रामुख्यार्थेऽनादितात्पर्यकल्पनायां गौरवात् । एवं बीजादिनाङ्कुरः कृत इत्यादौ विनापि यत्नं कृञः प्रयोगात्, तस्यापि व्यापारसामान्यार्थकता अतः करोतिविवरणीयार्थकत्वेऽपि नाख्यातस्य यत्नत्वावच्छिन्नवाचकता न वा किं करोति पचतीति प्रश्नोत्तरयोः समानप्रकारकबोधजनकत्वानुरोधेन तथात्वम् । अत्र केचित् । पचतीतिवाक्यजन्यबोधे सति यत्नत्वावच्छिन्ने वर्त्तमानत्वसंशयानुदयात्तत्र यत्नत्वावच्छिन्ने वर्त्तमानत्वबोधकत्वासद्धौ तदवच्छिन्ने शक्तिर्लाघवात्सिध्यति । नहि यत्नाविनाभूतक्रियाविशेषलिङ्गकानुमानलभ्येन यत्नत्वावच्छिन्नेन समं वर्त्तमानत्वा[illegible]न्वयबोधकत्वमाख्यातस्य.र्थाध्याहारमतेऽपि संभवति, लडादिकृतवर्त्तमानत्वान्वयबोधे लडादिसमभिव्याहृतधात्वन्यतरजन्यविशेष्योपस्थितेः कारणताया आवश्यकत्वात्, अन्यथा निराकाङ्क्षयत्नादिपदमात्राद्यत्नाद्युपस्थितावपि तत्र वर्त्तमानत्वादेर्लडादितोबोधप्रसङ्गात् । नचार्थाध्याहारवादिनां द्वारं पिधानं कृतिरित्यादितोद्वारकर्मककृतेरिव पचति यत्न इत्यादितः पाकयत्नो वर्त्तमान इत्याद्याकारको वर्त्तमानत्वादेर्बोध इष्ट एवेति वाच्यम् । परस्परसा-

---

कार्थान्वयितया कर्तृत्वं यत्र विवक्षितं तत्रैव कर्तृत्वार्थिका तृतीया भवतीत्यस्य विवक्षितत्वात् भावाख्यातस्य स्वरूपार्थकत्वस्याप्यभावे तृतीयानुपपत्तिरित्यत आह । कर्तृत्वेवेति । तत्रामुख्यार्थइति । रथोगच्छतीत्यादौ व्यापारादावि-

काङ्क्षपदार्थद्वयान्वयावोधएवाध्याहृतस्येव निराकाङ्क्षपदादुपस्थितस्यार्थस्य विषयतायास्तैरुपगमात् । तत्रान्वयानुभावकसाकाङ्क्षपदसत्त्वात् । प्रकृते चान्वयबोधस्याऽऽकाङ्क्षानुपयोगिपदार्थान्वयविषयकत्वेन तेषामप्यसंमतत्वात् । तत्स्वीकारे निराकाङ्क्षस्याप्यनुभावकत्वस्वीकारापत्तेः । शाब्दबोधे आकाङ्क्षानुपयोगप्रसङ्गाच्चेति तन्न । तात्पर्यलिङ्गेन यत्नत्वावच्छिन्ने वर्त्तमानत्वानुमितेरेवोपगमात् । तादृशवर्तमानत्वप्रतीतौ शाब्दत्वप्रतीतेः सविवादत्वादित्याहुः । अत्र नैयायिकाः । रथो गच्छतीत्यादावाश्रयत्वमेवाख्यातार्थो नतु व्यापारः । अन्यदीयगमनानुकूलनोदनादिविलक्षणव्यापारवति गच्छतीत्यप्रयोगात् । एवंच काष्ठं पचतीत्यादिप्रयोग एव व्यापारशक्तिमाख्यातस्य साधयेद् यदि स्वारसिकः स्यात् । तदेव न । नहि चैत्रः पचतीत्यादिप्रयोगेण काष्ठं पचतीत्यादिप्रयोगस्याविशेषः । एवमचेतने स्वरसतः कर्तृपदाप्रयोगात् कृञोऽपि यत्नत्वविशिष्टोर्थः । एवं चैत्र एव पचति पाककर्त्ता नत्वचेतनं काष्ठादीत्यादिप्रयोगाल्लकारस्य यत्नत्वविशिष्टार्थकताया आवश्यकत्वात् । लाघवात्तत्रैव शक्तिर्व्यापारे लक्षणेति । नच यत्नत्वस्याख्यातावाच्यनिवृत्तिजीवनयोनियत्नसाधारणतया लकारशक्यतावच्छेदकत्वासंभव इति वाच्यम् । निवृत्त्यादियत्नस्याख्यातवाच्यतोपगमे क्षतिविरहात् । निवृत्त्यादेः पाकानुकूलताविरहेण तत्काले पचतीतिप्रयोगापत्तिविरहात्, दृष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वजातेरेवाख्यातप्रवृत्तिनिमित्तत्वोपगमाद्वा । अतएवेश्वरकृतेर्जन्यमात्रजनकत्वेऽपीश्वरः पचति ईश्वरो भुङ्क्ते इत्यादयो न प्रयोगाः । नचैवमीश्वरो वेदं वक्ति मथुरायां कृष्णो विहरतीत्यादिप्रयोगानुपपत्तिः । अत्राख्यातस्य लक्ष्यार्थव्यापारबोधकतोपगमात् । ईश्वरकृतिसाधारणधर्मस्याख्यातप्रवृत्तिनिमित्तत्वेऽपि तत्र व्यापारलक्षणाया आवश्यकत्वात् । तथाहि । आत्मा पचति शरीरं पचतीत्यादिस्वारसिकप्रयोगविरहादाख्यातार्थकृतेरुद्देश्यतावच्छेदकशरीरविशेषावच्छेदेन समवायेनान्वयनियमः स्वीकरणीयः । चैत्रादिपदस्य शरीरविशेषविशिष्टात्मपरतया चैत्रः पचतीत्यादौ शरीरविशेषात्मकोद्देश्यतावच्छेदकावच्छेदेनात्मनि समवायेनान्वयसंभवात् । गौरः पचतीत्यादावपि गौरादिपदस्य गौरशरीराद्यवच्छिन्नात्मनि आख्यातस्यैव वा व्यापारे लक्षणोपगमात् । एवंचेश्वरकृतेः शरीरानवच्छिन्नत्वादुक्तस्थले कृतेस्तथान्वयासंभव इति व्यापारलक्षणा आवश्यकी । ईश्वरकृतिसाधारणयत्नत्वावच्छिन्न एवाख्यातार्थः । असाधारणानुकूलत्वं यत्ने क्रियायाः संबन्धतया भासते नत्वनुकूलतामात्रम् । असाधारणानुकूलताया एवाकाङ्क्षानिरूपकत्वोपगमादतोऽस्मदादिकर्तृकपाकादिक्रियानुकूलकृतिमादाय नेश्वरः पचतीतिप्रयोगः । वेदवचनादौ च ईश्वरकृतेरेवासाधारणकारणत्वात् ईश्वरो वेदं वक्तीत्यादयः प्रयोगा इत्यपि केचित् । अथ कृतेराख्यातस्य कृञश्च वाच्यत्वे करोतीत्यादौ कृतेर्द्विधा भानं स्यात् । धातुप्रत्यययोर्द्वयोः कृतिबोधकत्वादिति चेन्न । एको ऽ इत्यादौ एकत्वद्वित्वादिबोधकप्रकृतिप्रत्ययोभयसत्त्वेऽप्येकधैवैकत्वादिधीवत्प्रकृतेऽपि बाधकाभावात् तत्र विभक्तेः साधुत्वार्थकत्वेऽत्रापि तथात्वात् । अथ तर्हि करोति चैत्र इत्यादौ प्रातिपदिकार्थे साक्षादेव कृत्यन्वयः स्यात् । स च नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नत्वात् तथा न संभवतीति नामार्थधात्वर्थयोः साक्षादन्वयोपगमे कर्मतादिबोधकविभक्तेरसत्त्वेऽपि तण्डुलः पचतीत्यादौ कर्मतादिसंबन्धेन तण्डुलादेः पाकादावन्वयसंभवेन तादृशवाक्यात्तण्डुलकर्मकपाकादिबोधापत्तेः । नच प्रातिपदिकार्थप्रकारकक्रियान्वयबोध एवाव्युत्पन्नो नतु क्रियाप्रकारकप्रातिपदिकार्थविशेष्यकबोधोऽपीति वाच्यम् । घटः करोतीत्यादितः कर्मतासंबन्धेन कृत्यादेः घटादावन्वयाभावात् क्रियाप्रकारकनामार्थविषयकबोधस्याव्युत्पन्नत्वादिति चेन्न । उक्तातिप्रसङ्गवारणाय धातोः कर्मतादिसंबन्धेन क्रियान्वयाबोधकत्वव्युत्पत्तेरुपगमान्नत्वाश्रयतासंबन्धेन कृत्यादिरूपक्रियान्वयाबोधकत्वव्युत्पत्तेरित्यदोषात् । नच तादृशातिप्रसङ्गवारणाय धातुजन्यकृत्यादिप्रकारकान्वयबोधे प्रत्ययजन्यविशेष्योपस्थितेर्हे-

तुता वाच्या । तादृशकारणाभावात् प्रातिपदिकार्थविशेष्यकबोधोपि न संभवतीति वाच्यम् । कर्मत्वादिसंबन्धेन कृत्यादिप्रकारकबोधस्याप्रसिद्ध्या सामग्र्यकल्पनेनापादकाभावात् तादृशकारणताया अकल्पनात् । नच क्रियते चैत्र इत्यादौ कृतिप्रकारकबोधवारणायैव उक्तकारणताकल्पनमावश्यकमिति वाच्यम् । सति तात्पर्ये इष्टत्वात् । कर्तृविशेष्यकान्वयबोधपरधातूत्तरयकोऽसाधुत्वाच्च प्रामाणिकानां न तथा प्रयोगः । करणं चैत्र इत्यादौ चैत्रादौ धात्वर्थकृतेराश्रयतासंबन्धेनान्वयबोधवारणाय तादृशकार्यकारणभावकल्पनमित्यपि न । तादृशबोधे आख्यातान्तधातुना समभिव्याहारज्ञानहेतुतयैवोक्तस्थले तादृशबोधवारणसंभवात् । दीधितिकृतस्तु गच्छति जानाति करोतीत्यादौ आख्यातस्याश्रयत्वे निरूढलक्षणायाः स्वीकारान्न नामार्थे क्रियायाः साक्षादन्वय इत्याहुः । तन्मते यद्यप्याश्रयत्वसंबन्धस्याधिकस्य जानाति चैत्र इत्यादिवाक्यजन्यबोधविषयताकल्पनेन गौरवं, तथापि यत्र धातोर्ज्ञानाश्रयत्वे लक्षणाग्रहः शक्तिभ्रमो वा तत्र चैत्रादिविशेष्यको ज्ञानाश्रयत्वादिप्रकारको बोध आश्रयतायाः संसर्गतावादिनामप्यनुमतः । चैत्रादिविशेष्यकाश्रयतासंसर्गकज्ञानादिप्रकारकशाब्दबोधस्तु दीधितिकारमते क्वचिदपि न प्रसिध्यतीति तादृशशाब्दबोधे योग्यताज्ञानादेर्हेतुताकल्पनं तथाविधशाब्दबोधाङ्गीकर्तुर्मणिकारस्य मते आवश्यकमिति गौरवम् । वस्तुतस्तु चैत्रेण ज्ञायते घट इत्यादौ कर्मप्रत्ययस्थले यावतां पदार्थानां प्रकारता, तावतां चैत्रो जानाति घटमित्यादि कर्तृप्रत्ययस्थले तथात्वं, परंतु विशेष्यविशेषणभाववैपरीत्यम् । एवं कर्मप्रत्ययस्थले यस्य ससंबन्धिकपदार्थस्य यदंशे विशेष्यता कर्तृप्रत्ययस्थले तन्निरूपकतायास्तदंशे प्रकारता इत्यनुभवस्य दुरपह्नवत्वाभिप्रायेणाश्रयत्वस्याख्यातार्थतां दीधितिकार उररीचकार । चैत्रेण ज्ञायते इत्यत्राधेयत्वरूपतृतीयार्थस्य चैत्रविशेष्यत्वात् । चैत्रो जानातीत्यत्राधेयतानिरूपकत्वरूपाधारतायाश्चैत्रांशेऽप्रकारत्वे तादृशानुभवविरोधात् । नच चैत्रेण ज्ञायत इत्यत्राप्याधेयत्वं संसर्ग एव न तु विशेष्यमिति वाच्यम् । तथासति आत्मना ज्ञायते न घटेनेत्यादौ घटादिवृत्तित्वाभावबोधानुपपत्तेः । आधेयत्वस्य तृतीयार्थताविरहेण तृतीयान्ताद्घटादिवृत्तित्वरूपप्रतियोग्यनुपस्थितेः आधेयत्वसम्बन्धस्याभावप्रतियोगितानवच्छेदकतया च तत्सम्बन्धावच्छिन्नघटाभावबोधस्य तत्रोपगमासंभवात् । तादृशसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वे ज्ञाने न घट इत्यादिवाक्यजन्यप्रत्यये ज्ञानाद्यधिकरणकतादृशसंबन्धावच्छिन्नघटाद्यभावस्याप्यवगाहनसंभवाद्घटे ज्ञानं न वेत्यादिसंशयनिरासाय कदाचिज्ज्ञाने न घट इत्यादिकमपि प्रयुज्येत । अतएवानुकूलकृतिमत्त्वादिरूपकर्तृत्वादेरपि चैत्रः पचतीत्यादौ प्रकारता मणिकृतापि स्वीक्रियते नतु संसर्गता । न पचतीत्यादावन्वयबोधानिर्वाहात् । तादृशसंबन्धस्य वृत्त्यनियामकतया अभावप्रतियोगितानवच्छेदकत्वेन तत्संबन्धावच्छिन्नक्रियाविरहप्रत्ययस्य तत्रोपगमासंभवात् । एवं चैत्रेण ज्ञायत इत्यादावाधेयत्वस्य तृतीयया अविवक्षणे प्रातिपदिकार्थमात्रविवक्षया तद्विषयानुशिष्टप्रथमैव स्यात् । जानाति चैत्र इत्यादौ चाख्यातेन कर्तृत्वाविवक्षणे धात्वर्थरूपभावमात्रपरतया परस्मैपदस्य श्नादिविकरणस्य वा साधुतापत्तिः । भावकर्मणोरित्यात्मनेपदविधायकानुशासनविषयत्वात् कर्त्तरीत्यधिकारीयक्र्यादिभ्यः श्ना इत्यनुशासनाविषयत्वाच्चेति, तत्राख्यातस्य कर्तृत्वाबोधकतायुक्तिस्तु न साधीयसी इतराविशेषणतया क्रियाबोधपरत्वरूपभावविवक्षायामात्मनेपदानुशासनविषयतोपगमादुक्तस्थले परस्मैपदसाधु[illegible]त्तादृशभावविवक्षादिविरहस्य श्नाद्यनुशासनविषयत्वोपगमेन श्नादिविकरणस्य साधुतायाश्च निर्वाहसंभवात् । पचन् पचतीत्यादाविवोद्देश्यतावच्छेदकविधेयाभेदेन जानन् जानातीत्यादेर्निराकाङ्क्षतानिर्वाहायापि जानातीत्यादावाख्यातस्याश्रयतार्थकतोपगम आवश्यकः । अन्यथा कृदन्तप्रतिपाद्यतावच्छेदकस्य ज्ञानादिरूपविधेयभिन्नतया निराकाङ्क्षताविरहेण तथा प्रयोगापत्तेः । एतेन तत्राश्रयतायाः प्रकारतोपगमे जानाति

चैत्र इत्यादिवाक्यज्ञानघटितशाब्दसामग्र्या भिन्नविषयप्रत्यक्षादिप्रतिबन्धकतायामाख्यातजन्याश्रयत्वोपस्थित्यादिरूपाधिक्यकारणानां निवेशो गौरवेणाश्रयतायाः संसर्गत्वमेवोचितमित्यादिकमनुपादेयम् । नश्यतीत्यादौ प्रतियोगित्वरूपकर्तृत्वमाख्यातार्थस्तादृशसंबन्धस्याभावप्रतियोगितावच्छेदकत्वेन नश्यतीत्यादौ नाशप्रतियोगित्वाभावबोधस्यैव स्वीकरणीयतया न संसर्गतासंभवः । अथाख्यातस्य कर्तृत्वशक्ततावच्छेदकं रूपं दुर्वचम् । नच तिङ्त्वं तथा तसादिसाधारणस्य तिङ्त्वस्य दुर्वचत्वात् । नच पाणिनीयसङ्केतसंबन्धेन तिङ्पदवत्त्वमेव तिङ्त्वं तिबाद्यष्टादशसु तत्पदसंकेतग्राहकं च आदिरन्त्येनेति सूत्रमेव तत्संकेतमविदुषामनधीतपाणिनीयतन्त्राणां तिप्त्वादिना शक्तिभ्रमादेव शाब्दबोध इति वाच्यम् । एवंसति घटादिवाचकघटादिपदेष्वपि कस्यचिच्छब्दस्य पुरुषविशेषीयसंकेतसंभवेन तुल्ययुक्त्या तत्रापि तच्छब्दस्यैव शक्ततावच्छेदकतापत्त्या तिबादिषु पाणिनेस्तिङ्पदसंकेतवत्तत्र शब्दान्तरसंकेतस्यापि अन्यपुरुषीयस्य संभवात् । तत्तच्छब्दानामपि प्रवृत्तिनिमित्ततायाः सुवचत्वाद्विनिगमनानुपपत्तेः । अत्र केचित् । तिबादिस्थानिनो लकारस्य लत्वजातिपुरस्कारेण कृतिवाचकता । पचतीत्यादौ लकाराश्रवणेऽप्यादेशेन तिबादिना स्थानिनः स्मरणात्ततएवार्थोपस्थितिः । आदेशादेशिभावमविदुषां तु तिप्त्वादिना शक्तिभ्रमादेवार्थोपस्थितिः । यत्र तिबादेर्लादेशत्वज्ञानं नास्ति श्रुतलकाराद्यर्थोपस्थितिस्तत्र पचतीत्यादिवाक्याच्छाब्दबोधवारणाय पचतीत्याद्यानुपूर्वीज्ञानजन्यबोधे तिबादेर्लादेशत्वज्ञानमपि हेतुः । नचोक्तस्थले धातुसाकाङ्क्षत्वज्ञाने भवत्येव शाब्दबोधस्तदसत्त्वे च कारणाभावादेव नापत्तिरिति वाच्यम् । पचतीत्यादौ तिबादिना लकारस्योपस्थापनेऽपि तत्तद्धातुसाकाङ्क्षतया तत्स्मारकाभावेन शाब्दबोधानुपपत्तेः लकारे धातुसाकाङ्क्षत्वग्रहस्य शाब्दबोधहेतुत्वासंभवात् । नहि तत्तद्धातुसाकाङ्क्षत्वेन लस्तिबादिस्थानीयेन तद्रूपावच्छिन्नमेव तिबादिः स्मारयेत् अपितु लत्वेनैव तथात्वमिति । एवं तत्तद्धातुपदाव्यवहितोत्तरत्वरूपतत्साकाङ्क्षत्वेन येन पुंसा न लकारः श्रुतस्तस्य तेन रूपेण तत्तत्स्मरणासंभव इति । अत्रेदं चिन्त्यते । लकारतिबाद्योरनतिप्रसक्तस्थान्यादेशभावस्य दुर्वचत्वात् तिबादिस्मारितलकारस्य वाचकत्वं न विचारसहम् । तिबादेरेव यत्र वाचकताग्रहस्तदनुरोधेन पचतीत्याद्यानुपूर्वीज्ञानस्य तिबादिजन्योपस्थितिसहकारेण शाब्दबोधोपधायकताकल्पनस्यावश्यकतया लकारजन्योपस्थितिसहकृततादृशानुपूर्वीज्ञानतिबादिधर्मिकलादेशत्वज्ञानघटितसामग्र्यन्तरकल्पने गौरवेण लाघवात्तिबादेरेव ताद्रूप्येण शक्तिकल्पनाया उचितत्वं चेत्याख्यातसामान्यस्य कर्तृत्वइव तद्विशेषस्यात्मनेपदस्य कर्मत्वे शक्तिर्नतु यथाश्रुतग्राहिवैयाकरणमत इव कर्मरूपधर्मिवाचकत्वं गौरवात् । प्रथमान्तपदार्थे कर्मत्वान्वयबलादेव कर्मता विशिष्टधर्मिलाभसंभवात् । नचात्मनेपदस्य शानच्प्रत्ययस्य धर्मिणि शक्तेः पच्यमानमानयेत्यादौ पच्यमानादिनिष्ठानयनकर्मत्वाद्यनुरोधेनावश्यकत्वात्ततएवोपपत्तौ आख्यातरूपात्मनेपदस्य धर्मवाचकत्वं निर्युक्तिकमिति वाच्यम् । तङ्शानच्साधारणस्यात्मनेपदत्वस्य शक्ततावच्छेदकत्वएव तथोक्तिसंभवात् । तादृशात्मनेपदत्वस्य चागुरोर्निर्वचनासंभवात्, पाणिन्यादिसंकेतसंबन्धेनात्मनेपदवत्त्वस्य शक्ततावच्छेदकताया उक्तरीत्याऽनवकाशात् । अतस्तादीनां तत्तद्रूपेण शक्तिकल्पनस्यावश्यकतया लाघवात्कर्मत्वएव तत्कल्पनात् । कर्मत्वं च त्यज्यते ग्रामो, गम्यते ग्राम, इत्यादौ धात्वर्थतावच्छेदकीभूतसंयोगविभागादिरेव विशेष्यतया तिङ्वाच्यः । चैत्रेण गम्यते ग्राम, इत्यत्र तृतीयार्थस्तत्कर्तृकत्वरूपमाधेयत्वं तस्य धात्वर्थे संयोगात्मकफलावच्छिन्ने स्पन्दलक्षणे व्यापारे तस्य च जन्यतासंबन्धेनात्मनेपदार्थसंयोगरूपफले तस्य चाश्रयतासंबन्धेन प्रथमान्तपदोपस्थाप्यग्रामेऽन्वय इति चैत्रवृत्तिर्यः संयोगावच्छिन्नस्पन्दस्तज्जन्यसंयोगवान् ग्राम, इत्याकारकः शाब्दबोधः । चैत्रेण त्यज्यते ग्राम, इत्यत्र संयोगस्थाने विभागमन्तर्भाव्य बोधउपपादनीयः ।

अथ चैत्रनिष्ठक्रियाजन्यसंयोगविभागादेर्ग्रामादाविव चैत्रादावपि सत्त्वात्, चैत्रेण त्यज्यते गम्यते चैत्र, इत्यपि स्यात् । न स्याच्च चैत्रेण न गम्यते, न त्यज्यते चैत्र, इत्यादीति चेत् । अत्र दीधितिकारप्रभृतयः फलमिव तत्र क्रियान्वयिपरसमवेतत्वमपि कर्माख्यातार्थः । परत्वे च भेदरूपे प्रतियोगितया फले आश्रयतयान्वयिनः प्रथमान्तपदोपस्थाप्यस्यान्वयः । चैत्रे चैत्रान्यसमवेतक्रियाजन्यसंयोगादिमत्त्वस्यान्वयायोग्यत्वात् । तादृशसंयोगाद्यभावस्य च तत्रान्वययोग्यत्वान्न तत्रापत्त्यनुपपत्त्योरवकाश इत्याहुः । तत्रेदं चिन्तयन्ति । प्रथमान्तपदोपस्थाप्यकर्मणोऽन्वयितावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितया भेदांशेऽन्वयोपगमेऽपि चैत्रेऽपि चैत्रस्य द्वित्वादिनाभेदसंभवेन तत्समवेतक्रियायां परसमवेतत्वाक्षतेरुक्तदोषोद्धारासंभवः । अन्वयितावच्छेदकावच्छिन्नप्रतियोगितया तत्र तद्भानस्वीकारे चैत्रेण द्रव्यं गम्यते इत्यादावनुपपत्तिः, द्रव्यत्वावच्छिन्नभिन्नसमवेतत्वादेः क्रियादौ बाधात् । नच तत्र द्रव्यपदं लक्षणया चैत्रान्यद्रव्यपरमिति वाच्यम्, मन्देन गम्यते मन्द इत्यादौ मन्दस्य मन्दान्यमन्दपरत्वासंभवात् मन्दान्यसमवेतमन्दवृत्तिक्रियाया अप्रसिद्ध्यानुपपत्तितादवस्थ्यात् । अननुगतमन्दगततत्तद्व्यक्तित्वोपस्थित्यनैयत्यात् । कर्तृव्यक्तिभिन्नमन्दत्वेन लक्षणाग्रहस्य तादृशवाक्यजन्यधीपूर्वत्वस्य नियमतोऽसंभवात् । नच फलविशेष्यव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेन परत्वेऽन्वयात्संबन्धोपस्थितेश्चानपेक्षणान्नानुपपत्तिरिति वाच्यम् । संसर्गतात्पर्यज्ञानानुरोधेन तदुपस्थितेरपि शाब्दबुद्धावपेक्षणीयत्वात् । तद्व्यक्त्या तद्व्यक्तिर्न गम्यते इत्यादावभावप्रतियोगिकोटिप्रविष्टतद्व्यक्तित्वावच्छिन्नभिन्नसमवेततद्व्यक्तिसमवेतक्रियाया अप्रसिद्धेः । येतु फलं भेदश्च कर्मप्रत्ययार्थः, फले जन्यतासंबन्धेन भेदे च स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन क्रियाया अन्वयः भेदफलयोश्च कर्मण्याश्रयतासंबन्धेनान्वयः । चैत्रसमवेतक्रियावच्छिन्नभेदस्य चैत्रो नाश्रय इति तादृशक्रियाजन्यफलाश्रयत्वेऽपि तस्य चैत्रेण चैत्रो गम्यतइति न प्रयोगः । मन्दो मन्देन गम्यते इत्यादेरेकमन्दादिनिष्ठक्रियावच्छिन्नभेदसहितस्य तज्जन्यफलस्य मन्दान्तरे सत्त्वान्नानुपपत्तिरिति ब्रुवते । तन्मतेऽपि चैत्रेण चैत्रो न गम्यते इत्यादेरनुपपत्तिर्दुर्वारैव । चैत्रे चैत्रसमवेतक्रियावच्छिन्नभेदाभावसत्त्वेऽपि तादृशक्रियाजन्यफलाभावस्य बाधात् । नच फलाभावो नञा न तत्र प्रत्याय्योऽपितु भेदाभाव एव कर्मणीति वाच्यम् । यदा चैत्रेण ग्रामो न गम्यते तदापि तादृशप्रयोगानुपपत्तेः । तादृशभेदाभावस्य ग्रामे बाधात् । नच भेदस्य सामानाधिकरण्यसंबन्धेन फलेऽन्वयः तादृशसंबन्धेन क्रियावच्छिन्नभेदविशिष्टस्य क्रियाजन्यफलस्यैव चाभावो नञा कर्मणि प्रत्याय्यतइति न दोषः विशिष्टाभावस्योभयत्र सत्त्वादिति वाच्यम् । एवमपि मन्देन यत्रापरमन्दो न गम्यतेऽपितु ग्रामादिरेव तत्र ग्रामादिगन्तरि मन्दे मन्दान्तरनिष्ठक्रियावच्छिन्नभेदसहितस्य स्वात्मकमन्दनिष्ठक्रियाजन्यग्रामादिसंयोगस्य सत्त्वेन विशिष्टाभावबाधान्मन्देन मन्दो न गम्यते इत्यादेरनुपपत्तिः । यदि फलमेव कर्माख्यातार्थस्तस्याश्रयत्वस्वानुकूलक्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन कर्मण्यन्वयः, नञ्समभिव्याहारे च तदुभयसंबन्धावच्छिन्नक्रियाजन्यफलाभाव एव तत्रान्वयीत्युच्यते, तदापि यत्र चैत्रमैत्रयोरुभयकर्मजसंयोगस्तत्र चैत्रनिष्ठतादृशसंयोगस्य चैत्रे आश्रयत्वस्वानुकूलक्रियावच्छिन्नभेदवत्त्वोभयसंबन्धेन सत्त्वाच्चैत्रेण चैत्रो न गम्यते इत्यस्यानुपपत्तेः । चैत्रेण चैत्रो गम्यते इत्यापत्तेश्च । अत्रोच्यते । भेदः फलंच कर्माख्यातार्थः । स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन चैत्रादिनिष्ठक्रियाविशेषितभेदस्य स्वसामानाधिकरण्यस्वप्रतियोगितावच्छेदकजन्यत्वोभयसंबन्धेन फलेऽन्वयः । विशिष्टफलस्य नञसमभिव्याहारे विशिष्टफलाभावस्य नञ्समभिव्याहारे च कर्मण्यन्वयः चैत्रमैत्रयोरुभयकर्मजसंयोगस्थले चैत्रवृत्तिक्रियावच्छिन्नभेदस्य चैत्रेऽसत्त्वेन विशिष्टफलाभावोऽक्षतः । यत्र मन्देन ग्रामो गम्यते नतु मन्दान्तरं तत्र मन्दनिष्ठग्रामसंयोगे मन्दान्तरनिष्ठक्रियावच्छिन्नभेदसामानाधिकरण्यस्य तन्मन्दान्तर्भावेण सत्त्वेऽपि तादृशभेदप्रतियोगि-

तावच्छेदकमन्दान्तरनिष्ठक्रियाजन्यत्वस्यासत्वात्तद्धटितोभयसंवन्धेन मन्दनिष्ठक्रियावच्छिन्नभेदविशिष्टस्य फलस्याभावो मन्देऽक्षत एवेति न कश्चिद्दोषः। कर्तृप्रत्ययस्थले चाधेयतया प्रकृत्यर्थान्वितस्य फलस्य भेदरूपापरार्थे सामानाधिकरण्यस्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वोभयसंवन्धेनान्वयः तादृशभेदस्य च स्वप्रतियोगितावच्छेदकत्वसंवन्धेन क्रियायाम्। यत्र चैत्रक्रियया ग्रामे न संयोगोऽपि त्वन्यत्र तत्र ग्रामं गच्छति चैत्र इति प्रयोगवारणाय स्वजनकक्रियावच्छिन्नप्रतियोगिताकत्वस्य चैत्रो ग्रामं गच्छतीत्यादौ चैत्रश्चैत्रं गच्छतीति प्रयोगवारणाय सामानाधिकरण्यस्य संवन्धमध्ये निवेशः। चरमस्थले चैत्रग्रामसंयोगस्य ग्रामनिष्ठचैत्रक्रियावच्छिन्नभेदे संवन्धद्वयसत्त्वेपि चैत्रवृत्तित्वविशिष्टस्य तत्संयोगस्य तादृशभेदे सामानाधिकरण्यविरहाच्चैत्रक्रियायां तद्भेदप्रतियोगितावच्छेदकत्वसत्त्वेपि नातिप्रसङ्गः। चैत्रश्चैत्रं न गच्छतीत्यादौ च तादृशभेदान्वितक्रियाकर्तृत्वाभाव एव चैत्रे प्रतीयते, नतु क्रियायां द्वितीयार्थविशिष्टभेदस्य प्रतियोगितावच्छेदकत्वसंवन्धावच्छिन्नाभावः। तादृशसंबन्धस्य वृत्त्यनियामकत्वात्। यदि तात्पर्यविशेषवशात् क्रियानुयोगिकोऽप्यभावः क्वचित्प्रतीयते इत्यनुभवसिद्धं तदा प्रतियोगितावच्छेदकत्वेऽपि द्वितीयाद्यर्थत्वमुपगम्यविशिष्टभेदप्रतियोगितावच्छेदकत्वाभावान्वय एव तत्रोपगन्तव्य इति दिक्। फलावच्छिन्नव्यापारबोधकधातूनां फले व्यापारे च शक्तिद्वयम्। कर्त्राख्यातस्थले फलं धात्वर्थव्यापारविशेषणतया भासते तत्र द्वितीयार्थाधेयत्वान्वयः, कर्माख्यातस्थले फलं धात्वर्थव्यापारस्य विशेष्यतया भासते तस्य विशेष्यतया आख्यातार्थ आश्रयत्वं तद्विशेष्यतया कर्मेति दीधिधिकृतः। केचित्तु, संयोगादिरूपफलावच्छिन्नव्यापारबोधकानां गमिप्रभृतीनां कर्मप्रत्ययापेक्षया बहूनां फले शक्तिकल्पनामपेक्ष्य कर्मप्रत्ययानां फले शक्तिकल्पनमेव लघीयः, धातूनां च व्यापारमात्रवाचिता। धातोः फलबोधकतामते नामार्थधात्वर्थयोराधाराधेयभावसंवन्धेन साक्षादन्वयासंभवात्फलाश्रयत्वस्य कर्मणि प्रकारतया भानस्योपगन्तव्यतया तत्संसर्गस्याधिकस्यभानकल्पनेनापि गौरवं फलस्य प्रत्ययार्थत्वे च तदाश्रयत्वं संबन्ध एवेति लाघवम्। नच धातूनां व्यापारमात्रवाचित्वे ग्रामं त्यजतीत्यादितोऽपि ग्रामं गच्छतीत्यादित इव संयोगादिरूपफलावच्छिन्नस्यन्दबोधापत्तिः। ग्रामस्त्यज्यते इत्यादितोऽपि ग्रामो गम्यतइत्यत इव स्पन्दजन्यसंयोगादिमत्त्वेन भानप्रसङ्ग इति वाच्यम्। कर्मप्रत्ययस्य संयोगविभागादिरूपनानाफलवाचित्वेऽपि तत्तत्फलबोधे धातुविशेषसमभिव्याहारज्ञानस्यापेक्षयातिप्रसङ्गविरहात्। त्यजति गच्छति स्पन्दते इत्यादौ कर्मासमभिव्याहृते बोधवैलक्षण्यं च तत्तद्धातूनां फलविशेषावच्छिन्नव्यापारलक्षणोपगमेनोपपादनीयम्। फलान्वितस्वार्थव्यापारबोधकत्वं गम्यादेः स्वभावाधीनं तदभावात्स्यन्दिप्रभृतिष्वकर्मकत्वव्यवहार इत्याहुस्तन्न। यागमिप्रभृतीनामिव त्यजिगमिप्रभृतीनामपि पर्यायतेति भ्रमदशायां याति गच्छतीत्यादाविव त्यजति गच्छतीत्यादितोऽप्यविलक्षणबोधोत्पत्त्या धातुविशेषसमभिव्याहारस्य फलविशेषबोधनियामकताकल्पनासंभवात्। नच ग्रामं त्यजतीत्यादितः संयोगावच्छिन्नव्यापारबोधस्तात्पर्यसत्वे इष्यतएव। त्वन्मतेऽपि तात्पर्यानुरोधेन लक्षणया तद्बोधोत्पत्तेरावश्यकत्वात्। परंतु तत्र विभागादिरूपफलएव फलप्रत्ययतात्पर्यस्यानादितया संयोगादिरूपफलप्रत्यायनेच्छया स्वरसतो न तादृशप्रयोग इति वाच्यम्। विना शक्तिभ्रमं लक्षणाग्रहं च ग्रामं त्यजतीत्यादितः सत्यपि तात्पर्ये संयोगावच्छिन्नव्यापाराप्रतीतेरानुभविकतया धातोः फलविशेषवाचिताया आवश्यकत्वात्। ज्ञायते इष्यते क्रियते घट इत्यादौ विषयत्वरूपं कर्मत्वं तदर्थः। नच कृतिविषयतायाः फलतत्साधनतदुपादा-

---

त्यर्थः। घटादिपदेष्वपीति[१]। घटत्वकलशत्वाद्यनेकधर्माणां शक्ततावच्छेदकत्वे गौरवादिति शेषः। प्रवृत्तिनिमित्ततायाइति[२]। शक्यतावच्छेदकं यथा शब्दव्यवहारप्रवृत्तेर्निमित्तं तथा शक्ततावच्छेदकमपीति शक्ततावच्छेदकतायाइत्यर्थः। तत्रोपगन्तव्यइतिदिगिति। ग्रामं गच्छति न गुणं नचाभावमित्यादौ तु गतिर्द्वितीयायामुक्ता द्रष्टव्येति सूचितम्।

१. एतत्प्रतीकं १९९ पृष्ठस्य अष्टमपंक्तौ द्रष्टव्यम्। २. एतच्च तत्रैवैकादशपंक्तौ।

नसाधारणतया यत्र घटः क्रियते इत्यादिप्रयुज्यते तत्र जलाहरणं कपालं क्रियत इत्यादिप्रयोगस्यापत्तिरिति चेत् । कृत्यर्थकधातुसमभिव्याहृतकर्मप्रत्ययस्य चिकीर्षाप्रयोज्यसाध्यताख्यविलक्षणविषयत्वमेवार्थः । उक्तस्थले च कपालादौ कृतेस्तादृशविषयत्वाभावान्नोक्तप्रयोगप्रसङ्गः । काशाः कटं क्रियन्ते इत्यादौ साध्यताख्यविषयताश्रयकर्मान्तरसमभिव्याहृतकर्मप्रत्ययेनव्यापार्यतारूपविषयतापि प्रत्याय्यते तदुपादानतया कृतिविषयकाशादौ साध्यतारूपकृतिविषयताविरहेऽपि न तादृशप्रयोगानुपपत्तिः । तादृशकर्मसमभिव्याहाररूपतत्प्रयोजकविरहात् काशाः क्रियन्ते इत्यादौ काशादौ व्यापार्यताबोधानुपपत्तेर्न तादृशप्रयोग इति काशाः कटाः क्रियन्ते इत्यादावपि विशेष्यभेदेन वाक्यार्थभेदात्कर्मद्वयवाचकपदयोः समभिव्याहारे व्यापार्यताबोधानुपपत्तिश्च । क्रियते इत्यत्र विषयतायाः कर्मप्रत्ययार्थत्वे पाकानुपधायककृतिमादाय पाकोऽकारीत्यादिप्रयोगापत्तिरित्यादिकन्तु दूषणं निराकृतमधस्तात् । कर्तृकर्मत्ववत्कालविशेषेऽनुशिष्टा लडादयः कालविशेषमपि बोधयन्ति । तत्र लट्प्रत्ययस्य वर्त्तमानकाले शक्तिः । पचतीत्यादौ कृत्यादिरूपव्यापारबोधकप्रत्ययोपस्थाप्यकालस्तादृशव्यापार एवान्वेति नतु क्रियायाम् । यदा पुरुषो व्यापारशून्यस्तदधीनाग्निसंयोगादिरूपः पच्यादेरर्थो विद्यते तदायं न पचतीति प्रयोगादयं पचतीत्युक्ते इदानीमयं पाकयत्नवान्नवेति संशयनिवृत्तेः पूर्वापरीभावापन्नस्थाल्यारोपणादिव्यापाराणां विशिष्यपच्याद्यर्थघटकत्वेन प्रत्येकतद्व्यापारेषु कालान्वयबोधापेक्षया कृत्यादिरूपैकार्थे तदन्वयस्यैव लाघवेनोचितत्वाच्च । वर्त्तमानकालश्च तत्तच्छब्दप्रयोगाधिकरणकालरूपस्तत्तच्छब्दार्थः अतो नैककालप्रयुक्तलडादितोऽपरलडादिप्रयोगाधिकरणकालीनत्वस्य कृत्यादावन्वयः । स्वप्रयोगाधिकरणकालत्वेन स्ववाच्यत्वे स्वत्वाननुगमात् शक्त्यानन्त्यम् सामान्यतो व्युत्पत्तेर्दुर्घटतया पूर्वव्यक्तिबोधानुपपत्तिः सर्वनामविचारदर्शितरीत्या समाधास्यते । विशिष्य तत्तत्कालत्वावच्छिन्नबोधस्यानुभवसिद्धतया सर्वनामशक्तौ बुद्धिस्थत्वादिवच्छब्दप्रयोगाधिकरणत्वमुपलक्षणविधया व्यावर्त्तकं वाच्यम् । नच तत्कालस्यैवंसत्यवाच्यत्वे तज्ज्ञानानुपत्तिरसमाधेयैवेति वाच्यम् । शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेन तत्तत्कालत्वानामेवोपलक्षणीयत्वात् । अथ शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मो वर्षत्वादिकमपि कालद्वयावृत्तिधर्मत्वनिवेशेपि एतद्रूपमासत्वादिव्यावर्त्तनमशक्यम् । क्षणद्वयावृत्तिक्षणवृत्तिधर्मत्वेन तद्व्यावर्त्तनेच अध्ययनाद्यनधिकरणेऽप्यध्ययनाद्यधिकरणस्थूलकालान्तर्गतक्षणेऽसमाप्तारब्धाध्ययने पुंसि चिन्तामणिमयमधीत इत्यादिप्रयोगानुपपत्तिः । यदिच स्वप्रागभावानधिकरणस्वाश्रयकर्तृकप्रकृतक्रियाप्रागभावाधिकरणशब्दप्रयोगाधिकरणकाल एव वर्त्तमानकाल आधेयतासंबन्धेन कृतावन्वेत्यतो नोक्तस्थले चिन्तामणिमयमधीतइत्यादिप्रयोगानुपपत्तिः आरम्भावधिसमाप्तिपर्यन्तस्य स्थूलकालस्यापि तथात्वेन शब्दप्रयोगाधिकरणक्षणादिरूपान्तरालकालेऽध्ययनाद्यनुकूलकृतिविच्छेदेऽपि शब्दप्रयोगाधिकरणत्वोपलक्षिततादृशस्थूलकालवृत्तित्वस्यापि तादृशक्रियानुकूलकृतावबाधेन योग्यतानिर्वाह इत्युच्यते, तदा येन समग्रचिन्तामणिमधीत्य किंचित्कालोत्तरं पुनश्चिन्तामणिमध्येष्यते तत्रान्तरालदशायामप्ययं चिन्तामणिमधीत इति प्रयोगापत्तिः । यदि स्तुतिपाठादिविच्छेददशायामपि प्रत्यहमयं स्तुतिं पठतीत्यादिवदुक्तस्थलेऽपि दर्शितप्रयोग इष्ट एवेत्युच्यते तदापि स्वपदेन विशिष्य तत्तत्कृतीनामुपादानेनाननुगमो दुरुद्धर एवेति चेन्न । शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षणेनानुगतीकृततत्क्षणदिन ·संवर्षत्वाद्यवच्छिन्नएव काले लटः शक्तिः । क्रियारम्भा

अधस्तादिति । द्वितीयायाम् । कालद्वयावृत्तीति । प्रकृते प्रयोगाधिकरणतदनधिकरणकालद्वयावृत्तीत्यर्थः । प्रकृतप्रयोगानधिकरणकालावृत्तीतिमात्रं वक्तव्यम् मासमुदायत्वरूपवर्षत्वस्य प्रकृतशब्दप्रयोगानधिकरणमासान्तरवृत्तित्वात्तद्वारणम् । एतद्रूपमासत्वादिति । एतदित्यनेन त्रिंशद्दिनस्थायियत्किञ्चिद्व्यक्तिग्रहस्तदेव रूपं यस्य स एव तद्रूपो मासस्तत्त्वस्य प्रयोगाधिकरणाखण्डैककालवृत्तेः प्रयोगानधिकरणकालावृत्तितया तत्संग्रहो दुर्वारइत्यर्थः । आदिपदादखण्डैकव्यक्तिवृत्तिवर्षत्वादिपरिग्रहः । क्षणद्वयावृत्तिक्षणवृत्तीति । उक्तमासत्वादिवारणाय क्षणवृत्तीति क्षणसमुदायवारणायान्त्यन्तम् । असमाप्तेति । असमाप्तमारब्धाध्ययनं यस्य तस्मिन्नित्यर्थः । स्वप्रागभावेति । स्वं वर्त्तमानत्वान्वयिकृतिः

त्पूर्वं कर्मसमाप्त्युत्तरं चाधीतेपचतीत्यादिप्रयोगवारणाय कृत्यादिरूपव्यापारे तादृशकालस्य स्ववृत्तिप्रागभावाप्रतियोगित्वस्ववृत्तिध्वंसाप्रतियोगिप्रकृतक्रियाकर्तृनिष्ठत्वाभ्यां विशेषितेनाधेयतासंबन्धेनान्वयनियम उपगन्तव्यः। तत्तत्क्रियारम्भपूर्वमपि तत्समाप्त्युत्तरमपि वा वर्त्तते यस्तत्तत्क्रियानुकूलकृत्यधिकरणकालस्तस्य दर्शितविशिष्टाधेयतासंबन्धस्तादृशकृतौ बाधितोऽप्रसिद्धो वेति न शब्दप्रयोगाधिकरणतादृशकालमादाय दर्शितप्रयोगापत्तिः। सम्बन्धे स्वपदार्थस्य विशिष्य निवेशे व्युपपत्तिश्चिन्त्या। नच क्रियानुकूलकृतिशून्यान्तरालदशायां स्थूलकालमादाय पचति अधीते इत्यादिवत्तादृशकृत्यधिकरणक्षणेऽपि स्थूलकालावच्छिन्नाभावमादाय न पचति नाधीते इत्यादिप्रयोगस्तत्र नञो वर्त्तमानक्षणमात्रान्विततादृशक्रियानुकूलकृत्यभावबोधकतानियमात्। उक्तरीत्या विशिष्यशब्दप्रयोगाधिकरणक्षणादिरूपकालस्यापि लट्प्रत्ययेन बोधनसंभवात्। नञ्समभिव्याहारस्थलेऽपि प्रतियोगिन्येव कालान्वय इति तु न सत्। तत्तत्क्षणवृत्तिपाकादिकृतेरभावस्यान्यक्षणावच्छेदेन तदानींतनस्थूलकालावच्छेदेन तादृशकृतिमति सत्त्वेनोक्तातिप्रसङ्गस्य दुर्वारत्वात्। नच कालानवच्छिन्नाधारतासंबन्धेन नञर्थस्य पुरुषेऽन्वयान्नोक्तातिप्रसङ्ग इति वाच्यम्। तादृशस्थूलकाले यत्रात्मनि पाकादिकृतिस्तादृशकालान्तर्गततादृशकृत्यनधिकरणक्षणे न पचतीत्यादिप्रयोगोपपत्तये तत्क्षणावच्छिन्नपाकादिकृत्यभावबोधस्यैव तत्र तत्र स्वीकरणीयतया क्वचित्प्रतियोग्यप्रसिद्धेर्दुर्वारत्वात्। व्यापाराबोधकेन च लडादिप्रत्ययेन क्रियायामेव वर्त्तमानत्वान्वयो बोध्यते जानातीत्यादौ नतु लडर्थाश्रयत्वादौ ज्ञानाद्यसत्त्वेऽपि तदाश्रयत्वादिसंबन्धे सति जानातीत्यादिप्रयोगापत्तेः। ज्ञानादिविशिष्टे आश्रयत्वादौ कालान्वयमुपगम्यातिप्रसंगवारणे विशेषणे ज्ञानादावपि तदन्वयस्यावश्यकत्वे तस्यैव स्वीकारौचित्यात्। नश्यतीत्यादौ क्रियायां कालान्वयस्वीकारे विनष्टादावपि नश्यतीत्यादिप्रयोगः स्यादिति तत्रोत्पत्तेरपि लडाद्यर्थत्वमुपगम्य तत्रैव कालान्वयं दीधितिकृदुपजगाम। वस्तुतस्तु नाशत्वमुत्पत्तिमदभावत्वम् तथाच धातुप्रतिपाद्यतावच्छेदकोत्पत्तावेव कालान्वय इत्येव साधीयः। वर्त्तमानकालस्योत्पत्तिसंबन्धेन धात्वर्थेऽन्वय इत्यपि वदन्ति।

लृट्प्रत्ययेन पक्ष्यतीत्यादौ प्रत्ययार्थकृतौ ज्ञास्यतीत्यादौ क्रियायां भविष्यत्वं प्रत्याय्यते। यद्यपि भुव उत्पत्त्यर्थकतया अनागतकालोत्पत्तिकत्वं भविष्यच्छब्दार्थस्तथापि पक्ष्यतीत्यादौ कृत्यादावनागतत्वमात्रस्य प्रतीतिरुपेयते उत्पत्तिप्रतीतेर्निष्फलत्वाद्भविष्यत्युत्पत्स्यत इत्यादौ धातुनैव तादृशोत्पत्तिः प्रत्याय्यते, नङ्क्ष्यतीत्यादौ च दर्शिता गतिः। तथाच वर्त्तमानप्रागभावप्रतियोगित्वम् प्रतियोगितासंबन्धेनान्वयो वर्त्तमानप्रागभावोवालृट्प्रत्ययार्थः प्रागभावानङ्गीकारे वर्त्तमानकालध्वंस एव तदर्थध्वंसस्य कालोपाधित्वेन स्वसमानकालपदार्थाधारतया अनागतकृतेर्वर्त्तमानकालध्वंसोत्पत्तिमत्तया उत्पत्तिसंबन्धेन कृत्यादावन्वयः। अथ पचमानेऽप्युदीच्यपाकानुकूलकृतिमादाय पक्ष्यतीत्यादिप्रयोगापत्तिः। पाकानुकूलकृतित्वावच्छेदेन चानागतत्वबोधस्वीकारो न संभवति। पूर्वपूर्वपाकानुकूलकृतौ तद्बाधात्पक्ष्यमाणेऽपि पक्ष्यतीति प्रयोगानुपपत्तेः। तत्तत्पाकानुकूलकृतित्वावच्छेदेनापि तदन्वयासंभवः तत्तत्पाकत्वेन पदादनुपस्थितेः। नापि यत्किंचित्पाकानुकूलाद्यकृतित्वावच्छेदेन तदन्वयः आद्यत्वोपस्थापकपदाभावात्। तत्तद्व्यक्तिमनन्तर्भाव्य दुर्वचत्वाच्चेति चेन्न। प्रागभावस्य वर्त्तमानत्वं शब्दप्रयोगाधिकरणक्षणवृत्तित्वं वर्त्तमानप्रागभावस्य प्रत्ययार्थत्वे तस्य स्वविशिष्टकालवृत्तिकृतिजन्यपाकाननुकूलत्वविशिष्टप्रतियोगितासंबन्धेन वर्त्तमानकालध्वंसस्य तदर्थत्वे च स्वपूर्वकालीनकृतिजन्यपाकाननुकूलत्वविशिष्टाधेयत्वसंबन्धेन कृत्यंशेऽन्वयोपगमे उदीच्यकृतौ वर्त्तमानप्रा-

---

उक्तत्रित्वेन संसर्गत्वे बाधित इत्युक्तं विशिष्टरूपेण तथात्वेऽप्रसिद्धइति। उपपत्तिश्चिन्त्येति। स्ववृत्तिप्रागभावप्रतियोगित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदादेस्संसर्गत्वे स्वपदार्थस्य संसर्गघटकत्वेऽपि क्षत्यभावादननुगमविरह इति भावः इत्यादिप्रयोगो नचेत्यन्वयः। पचमान इति। यस्याः पाकक्रियायाः काचित्कृतिरुत्तरका-

गभावादेर्दर्शितविशिष्टसंबन्धासत्त्वेनातिप्रसङ्गविरहात् । ध्वंसपूर्वत्वं च तदनधिकरणत्वमेव । नचान्तरालिककृतिजन्यस्य पच्यर्थव्यापारस्य पूर्वव्यापारानुकूलकृत्यजन्यतया आन्तरालिककृतेः पूर्वकृतिजन्यपाकानुकूलत्वमक्षतमेवेति तस्या अपि निरुक्तविशिष्टसंबन्धेन वर्त्तमानप्रागभावादिमत्त्वमक्षतमेवेति वाच्यम् । कृतिजन्यपाकेत्यत्र कृतिजन्यव्यापाराधीनफलानुकूलव्यापारस्य विवक्षितत्वात् ।

पक्तेत्यादौ लुटोऽनद्यतनभविष्यत्त्वमर्थः । अनद्यतनभविष्यत्त्वं च शब्दप्रयोगाधिकरणदिवसावृत्तित्वे सति शब्दप्रयोगकालीनप्रागभावप्रतियोगित्वम् शब्दप्रयोगाधिकरणदिवसध्वंसोत्पत्तिकत्वं वा । केचित्तु भविष्यत्त्वमेव तस्यार्थः । क्रियायाः कृतेर्वा स्वरूपसदनद्यतनत्वमेव तत्साधुताऽनियामकम् असाधुत्वादेवाद्य पक्ष्यतीत्यादौ पक्तेति न प्रयोग इत्याहुस्तन्न । तथासति भविष्यत्त्वादिकमपि नाख्यातार्थः स्यात् । स्वरूपसद्भविष्यत्त्वादिकमेव लुडादिप्रत्ययस्य साधुतानियामकम् । असाधुत्वादेव पक्ष्यति पक्तेतिवत्पचतीत्यादौ पक्ष्यतीत्यादिप्रयोगविरह इत्यस्यापि वक्तुं शक्यत्वात् । पचति पक्ष्यतीत्यादेरविलक्षणबोधजनकत्वमनुभवविरुद्धमिति कालविशेषबोध आवश्यक इति चेत्, तदा पक्ता पक्ष्यतीत्यादेरपि विलक्षणबोधजनकत्वस्यानुभविकतया अनद्यतनत्वान्वयबोधोऽपि दुर्वारः । यदि च पक्ष्यतीत्यादिवाक्यजन्यबोधे सति भविष्यत्त्वादिसंशयानुदयाद्भविष्यत्त्वादेः शाब्दधीविषयत्वमावश्यकमित्युच्यते, तदानद्यतनत्वबोधेऽपि ईदृशीमेव युक्तिं गृहाण । एवं न पक्ष्यतीत्यादावभावे अनागतकालावच्छिन्नत्वभानमावश्यकम् । अन्यथा पक्ष्यत्यपि वर्त्तमानवृत्तपाककृत्यभावमादाय न पक्ष्यतीत्यादिप्रयोगप्रसङ्गात् । नच पक्ष्यत्यप्यनागत यत्किंचित्कालावच्छेदेन वर्त्तमानमभावमादाय न पक्ष्यतीति प्रयोगो दुर्वार एवेति वाच्यम् । अनागतकालावच्छिन्नत्वंहि तत्र वर्तमानक्षणध्वंसावच्छिन्नत्वम् । तादृशध्वंसनिष्ठा अवच्छेदकताऽनवच्छिन्ना ग्राह्या अनागतकृतिमति च पुंसि तदभाववृत्तौ वर्त्तमानक्षणध्वंसरूपः कालः प्रतियोगी वृत्तावप्यवच्छेदक इति विरोधभञ्जनाय तादृशकृत्यनवच्छेदकावान्तरकालावच्छिन्नएवावच्छेदक उपेय इति नोक्तातिप्रसङ्ग इत्युक्तयुक्त्या अनागतत्वस्य यथा लुडाद्यर्थत्वं तथाऽद्य पक्ष्यति न पक्तेत्यत्रानद्यतनकालावच्छिन्नत्वस्याभावेऽभाने श्वः पक्ष्यत्यप्यद्यतनानागतकालावच्छिन्नपाककृत्यभावमादाय न पक्तेति प्रयोगप्रसङ्गेन लुटोऽनद्यतनार्थत्वमावश्यकम् । अनागतानद्यतनकालावच्छिन्नत्वमपि ढुकरीत्यातिप्रसङ्गवारणाय प्रकृतशब्दप्रयोगाधिकरणदिनध्वंसनिष्ठानवच्छिन्नावच्छेदकताकत्वरूपं ग्राह्यम् । अवच्छेद्यावच्छेदकभावश्च संबन्धविधया भासते ध्वंस एव पदार्थ इत्यवधेयम् । अथ नञ्समभिव्याहारस्थलेऽपि कृतावेव कालान्वयोऽस्तु । अनागतकृतिश्च महाप्रलयस्याप्रामाणिकतया सर्वत्रैव प्रसिद्ध्यतीति न प्रतियोग्यप्रसिद्धिः अभावान्वयश्चात्मनि कालानवच्छिन्नाश्रयतासंबन्धेनोपगम्यतामिति चेन्न । यदुत्तरकाले चैत्रीयौदनपाकादिकमप्रसिद्धं तदानीं चैत्र ओदनं न पक्ष्यतीति प्रयोगानुपपत्तेः अनागतचैत्रीयौदनकर्मकपाकानुकूलकृत्यप्रसिद्ध्या तदभावप्रत्यायनासंभवात् । नचाभावे कालान्वयोपगमेपि यत्तण्डुलव्यक्त्यादिकर्मकपाक एवाप्रसिद्धस्तद्व्यक्त्यादिपरस्यैतत्तण्डुलं न पक्ष्यतीत्यादिवाक्यस्याप्रमाणत्वापत्तिः प्रतियोग्यप्रसिद्धेर्दुर्वारत्वादिति तत्र पाके तद्व्यक्तिकर्मकत्वाभाव एव नञा बोध्यत इति

---

लभाविनी तस्याः वर्त्तमानकृतिमतीत्यर्थः । तेन पाकान्तरानुकूलायाउदीच्यकृतेः परित्राह्यताव्यावृत्तिः तादृशकृतिसत्त्वे पक्ष्यतीतिप्रयोगस्येष्टापत्तेस्तद्व्यावर्त्तनाय पचमान एवार्थादपक्ष्यतीति वक्तव्यम् । सम्बन्धासत्त्वेनेति । वर्त्तमानोदीच्यकृत्योरेकपाकं प्रत्येवानुकूलत्वेन प्रागभावाधिकरणकालवृत्तिवर्त्तमानकृतिजन्यपाकंप्रत्यनुकूलत्वस्यैवोदीच्यकृतौ सत्त्वात्तादृशानुकूलत्वविशिष्टप्रतियोगित्वसम्बन्धासत्त्वेनेत्यर्थः । अप्रमाणिकतयेति । घटादिसन्ततिरित्यन्तं समुच्छिद्यते सन्ततित्वात् प्रदीपसन्ततिवदित्याद्यनुमानस्याप्रयोजकत्वादनुकूलतर्काभावात् तैलवर्त्त्याद्यत्यन्तोच्छेदेऽप्रदीपैकसन्तानात्यन्तसमुच्छेदसंभवेऽपि सर्गप्रयोजकानामनन्तजीवानन्तकालोत्पद्यमानानन्तादृष्टप्रवाहाणामुच्छेदस्यासंभावितत्वात् सर्वमुक्तेरपिसन्दिग्धत्वादिति भावः । चैत्रीयौदनेति । चैत्रीयत्वमोदनान्वयिबोध्यं ननु कृत्यन्वयि कृतेस्तथात्वेऽभावबोधस्य सर्वथैवाप्रमात्वात्

उपगन्तव्यम् तथा चोक्तस्थलेपि तत्तत्पाके चैत्रीयौदनकर्मकत्वाभावबोधोपगमेनोपपत्तिरिति वाच्यम् । पाके तत्कर्मकत्वाभावबोधोपगमे तादृशपाकानुकूलानागतकृतेः कर्त्तरि भानस्योपगन्तव्यतया तदुत्तरं कदाचिदपि येन न पक्ष्यते तादृशकर्तृसमभिव्याहृतदर्शितवाक्यस्य प्रामाण्योपपादनासंभवात् । अगत्या तु यत्कर्मको यत्कर्तृकः पाकोऽप्रसिद्धस्तादृशकर्मकर्तृघटितार्थकनञ्पदवद्वाक्यस्यायोग्यतोपगम्यतें । केचित्तु तत्रापि पाके तत्कर्मकत्वाभावस्य तादृशे च कर्तरि पाककृत्यभावस्य बोधमुपगम्य प्रामाण्यमुपपादयन्ति । तात्पर्यसत्त्वे एकेनापि नञाऽभावद्वयबोधनसंभवात् । नचैवं तण्डुलमात्रं पचति पक्ष्यति वा चैत्रेऽपि तण्डुलमयं न पचति न पक्ष्यतीति प्रयोगः स्यात् । तत्तण्डुलाकर्मकपाकानुकूलवर्त्तमानादिकृत्यभावाबाधादिति वाच्यम् यतः सुबर्थप्रतियोगिकस्वार्थाभावान्वितक्रियाकर्तृत्वाभावबोधकत्वं नञः आकाशं न पचति घटइत्यादावपि न स्वीक्रियते तादृशबोधजनकताया अव्युत्पन्नत्वात् येनोक्तातिप्रसंगः स्यात् किन्तु पाक आकाशाकर्मकः पाककृत्यभाववान् घट इत्यादिसमूहालम्बनबोध एवोक्तस्थले च चैत्रे पाककर्तृत्वाभावबोधान्न प्रामाण्यप्रसंगः अस्तु वा तत्राभावान्वितक्रियाकर्तृत्वाभावविषयकोऽसमूहालम्बनरूप एव बोधस्तथापि न दर्शितातिप्रसंगः तादृशबोधेन्वयितावच्छेदकावच्छेदेन प्रथमाभावभाननियमात् । पाकत्वावच्छेदेन च तण्डुलादिकर्मकत्वाभावान्वये योग्यताविरहात् । अन्ध आकाशं न पश्यतीत्यादावपीदृशी गतिः । अथ यत्तण्डुलादिकर्मको यत्पुरुषकर्तृकः पाकोऽप्रसिद्धस्तत्पुरुषेऽन्यकर्मकपाककर्तृत्वस्य तण्डुलादौ चान्यपुरुषपच्यमानत्वादेर्भ्रमदशायां तण्डुलमयं न पक्ष्यतीत्यादिवाक्यस्य बोधकताया अनुभवसिद्धत्वेनापाकर्त्तुमशक्यत्वान्नोक्तप्रकारः साधीयान् विरोधिनिश्चयसत्त्वेन तत्पुरुषे पाककर्तृत्वसामान्याभावस्य पाकत्वावच्छेदेन तण्डुलकर्मकत्वाभावस्य च प्रतीत्यसंभवादिति चेन्न । तत्र तादृशवाक्यस्य एकाभावावगाहिभ्रमजनकत्वोपगमात् । नच सर्वत्रैव तदुपगमौचित्येन प्रयासवैफल्यमिति वाच्यम् । विशेषदर्शिभिरप्रतारकैरपि तथाविधवाक्यप्रयोगात् तस्य प्रसिद्धार्थकतासंपादनस्यावश्यकत्वात् । नच तत्तण्डुलादिकर्मकत्वं तन्निष्ठविक्लित्तिजनकत्वं तदपि वा प्रसिद्धमिति कथं पाके तदभावप्रत्यय इति वाच्यम् । विक्लित्त्यादावेव तत्तद्वृत्तित्वाभावबोधोपगमात् ।

अपाक्षीदित्यादौ लुङोऽतीतकालोर्थः तस्याप्याख्यातसामान्यार्थकृत्यादावन्वयः तस्य च सम्बन्ध आधेयत्वं अथवा कालविशेषणतयैवातीतत्वं लुङोर्थः आश्रयतासम्बन्धेन च तस्य कृत्यादावन्वयः कालान्तर्भावस्य व्यर्थत्वात् । अतीतत्वं वर्त्तमानध्वंसप्रतियोगित्वं वस्तुतो वर्त्तमानध्वंस एव लुङाद्यर्थः तस्य प्रतियोगितासंबन्धेन कृत्यादावन्वयः । मध्यदशायामपाक्षीदित्यादिप्रयोगवारणमुक्तरीत्या बोध्यम् ।

लुङ्प्रत्ययस्यातीतत्ववदनद्यतनत्वमप्यर्थः । अद्य पचत्यपचदित्यप्रयोगात् । अभून्नृप इत्यादावनद्यतनत्वसत्त्वेति तदविवक्षया नलङ्प्रत्ययेन लुङ्बाधः । अतोप्यनद्यतनत्वबोधकत्वं लङ्प्रत्ययस्यावश्यकम् । स्वरूपसदनद्यतनत्वस्य लङ्साधुतानियामकत्वेऽनद्यतनत्वस्य वस्तुसतो विवक्षामात्रेणो-

---

यत्र चैत्रः परकीयमोदनं पक्ष्यति न स्वौदनं तादृशस्थलीयोक्तप्रयोगे ओदनपदस्य तादृशौदनपरत्वस्यावश्यकत्वात् प्रतियोगिनि कालानन्वये चातीतादिचैत्रीयौदनकर्मकपाककृतेः प्रसिद्ध्या तदभावो बोधयितुं शक्य इति भावः । **नचैवमिति** । अभावद्वयभानोपगमे सतीत्यर्थः । **स्वार्थाभावेति** । स्वं नञ्पदम् । **कालविशेषणेति** । अतीतकालस्य लुङर्थत्वेप्यतीतत्वं यद्यपि तदर्थस्तथापि तत्काले विशेषणीभवदेव तदर्थो न स्वातन्त्र्येण स्वातन्त्र्येण च तदर्थत्वं विवक्षितमित्यर्थः । **मध्यदशायामिति** । एकपाकानुकूलायाः कृतेः कस्याश्चिदतीतत्वे कस्याश्चिद्भविष्यत्त्वे च वर्त्तमानकृतिदशायामित्यर्थः । भविष्यत्त्वं च नापत्तौ प्रयोजकं मध्यशब्दस्वारस्यादुक्तम् । नच वर्त्तमानकृतिदशायामित्येवकुतो नोक्तमिति वाच्यम् आपत्तिप्रयोजकस्य तत्पाकानुकूलकृतेरतीतत्वस्यातोलाभासंभवात् । **उक्तरीत्येति** । स्ववृत्तिकृतिजन्यपाकाननुकूलत्वविशिष्टप्रतियोगित्वस्य संसर्गत्वोपगमेनेत्यर्थः । पाकरूपाणां सर्वव्यापाराणां एकफलं प्रत्यनुकूलतया तादृशकृतिप्रयोज्यव्यापा-

कस्थले लङ्वारणानुपपत्तेः । इदमप्यनद्यतनत्वं प्रकृतशब्दप्रयोगाधिकरणदिनावृत्तित्वम् । अथवा स्वातन्त्र्येणानद्यतनत्वं न लङर्थः किंतु तादृशदिनाद्यक्षणवृत्तिध्वंसप्रतियोगित्वरूपमनद्यतनातीतत्वं विशिष्टमेवातीतत्वमनद्यतनत्वम् ।

परोक्षत्वं च लिटोर्थः । अध्यास्त सर्वर्तुसुखामयोध्यामित्यादौ परोक्षत्वसत्त्वेपि परोक्षत्वाविवक्षया न लिट् । परोक्षत्वं वक्तुः साक्षात्काराविषयत्वम् । केचित्तु स्वभिन्नकर्तृकत्वमेव परोक्षत्वमतएव लिडु-त्तमपुरुषासंभवेनापरोक्षतायामपि लिटः साधुत्वे णलुत्तमो वेत्यादेर्ज्ञापकत्वमुपायकारोक्तं संगच्छते । अन्यथा निद्रादिदशायां स्वकर्तृकगमनादिक्रियायाः स्वपरोक्षत्वसंभवेन ज्ञापकत्वासंगतेरित्याहुः । कलिङ्गे ष्वस्थोसि नाहं कलिङ्गान् जगामेत्यादावत्यन्तापह्नवस्थले सूत्रान्तरेण क्रियाया अपरोक्षत्वेपि लिड्विधानात् तादृशज्ञापकबलेन व्यातेने किरणावलीमित्यत्र लिटः साधुत्वोपपादनमुपायकृताम-युक्तमेवेति बोध्यम् । अत्यन्तापह्नवश्चाबाधितपरोक्तविपरीतबोधनाय तदुपपादकाभावप्रतिपादनेच्छा कलिङ्गाधिकरणकदर्शनादेरुपपादकं कलिङ्गगमनादिकं तेन विना तदसंभवात् । अत्यन्तापह्नवस्वरू-पसत्त्वेव लिट्साधुतानियामकः ।

लिङ्लोटोर्विधिरर्थः, परप्रवृत्त्यर्थं तत्प्रयोगात् । विधिः प्रवर्त्तकज्ञानविषयो धर्मः स च धर्मो न्यायनये कृतिसाध्यत्वं बलवदनिष्टाननुबन्धित्वसहितमिष्टसाधनत्वं च, ओदनकामः पचेत्स्वर्गकामो यजेतेत्यादावोदनस्वर्गादिरूपं यत्फलं तत्साधनत्वं पाकयागादि क्रियायां प्रतीयते । तादृशफलानां च तत्तद्रूपेण लिङादिशक्यतावच्छेदककोटिप्रवेशे शक्त्यानन्त्यं सर्वसाधारण्येन व्युत्पत्त्यनुदयेनापूर्वफ-लसाधनबोधानिर्वाहश्चेतीष्टत्वेन तेषामनुगमः । इष्टत्वं समभिव्याहृतपदोपस्थापितकामनाविषयत्वमतः स्वर्गकामः पचेतेत्यादौ शक्तिभ्रमशून्यस्य नौदनादिसाधनत्वधीर्नवा तत्तात्पर्येण तथा प्रयोगः प्रामा-णिकानामिष्टत्वज्ञानस्याप्रवर्तकत्वेपि शक्यफलानुगमार्थं तस्य शक्यता । वस्तुतस्तु अशक्यस्यैव तस्य शक्यानुगमकता सर्वनामस्थले बुद्धिस्थत्ववत्तेन रूपेण फलानां संकेतविषयतां विना शक्यैक्यासंभवात् । तस्य संकेतविषयत्वोपगमेपि यथा न तस्य वाच्यता तथा प्रपञ्चितमन्यत्र । अत्रचेष्टत्वस्य शाब्दबो-धेऽभानाद्विशिष्टेष्टतावच्छेदकस्वर्गत्वादिप्रकरेण शाब्दबोधोत्पत्त्या विधिवाक्यात्प्रवर्त्तकज्ञाननिर्वाहः यत्तु इष्टत्वेन फलभानेपि स्वर्गकामादिपदैकदेशोपस्थितस्वर्गत्वावच्छिन्नस्य विध्यर्थैकदेशे इष्टेऽभेदान्व-यात्प्रवर्त्तकज्ञाननिर्वाह इति । तदपि न सत् वृत्तिशब्दैकदेशे इतरानन्वयनियमात् स्वर्गत्वादिप्रकारेण कामनाधीनप्रवृत्तौ स्वर्गत्वादिविशेषितफलसाधनताज्ञानस्य हेतुतया अभेदेन स्वर्गादिविशेषितफल-साधनताज्ञानस्यानुपयोगित्वाच्च । अभेदेन स्वर्गादिप्रकारकस्वर्गादीष्टसाधनताज्ञानमपि स्वर्गत्वादिप्र-कारकप्रवृत्तौ हेतुः । अतएव स्वर्गकामो यजेतेत्यादितः प्रवृत्तिरिति तु न युक्तम् । स्वर्गत्वप्रकारकका-

---

रप्रयुक्तफलप्रयोजकव्यापाराननुकूलत्वमुक्तानुकूलत्वं बोध्यम् । **अतएव लिडुत्तमेति** । व्यातेने किरणावलीमिति न संगच्छते क्रियायाः परोक्षत्वएवलिटो विधानात् स्वकर्तृकक्रियायाः स्वपरोक्षत्वं नहि संभवति वक्तृपरोक्षत्वं च विवक्षितम् उत्तमपुरुषेहि य एव वक्ता स एवकर्त्तेति शङ्काया उपायनामकटीकाकृता वर्धमानेन णलुत्तमोवेति सूत्रस्यापारोक्ष्येपि लिटः प्रयोगे ज्ञापकत्वमुरीकृत्य समाधानं कृतं । ज्ञापकताचास्य सूत्रस्य तदैव संभवति यदि लिडुत्तमस्य नियमतः परोक्षविषयत्वेऽसं-भवः स्यादसंभवश्च न स्वसाक्षात्काराविषयत्वरूपपारोक्ष्यस्य लिड्विषयत्वे संभवति यत्राभ्यासविशेषाहितसंस्कारात्पुरुषा-न्तरनोदनादिनावादेशान्तसंयोगानुकूलव्यापाराश्रयत्वलक्षणकर्तृत्वं तादृशव्यापारासाक्षात्कर्तृत्वञ्च कस्यचित्तत्र स्वमातृकगम-नक्रियायाः स्वपरोक्षत्वस्योक्तस्य संभवात्तत्रैव परवचनादितः स्वगमनमवधार्याहं जगामेति प्रयोगस्य लिडुत्तमघटि-तस्य संभवादपारोक्ष्यविषयज्ञापकतासंगतास्यात् । यदा तु स्वभिन्नकर्तृकत्वमेव पारोक्ष्यं तदा लिटः परोक्षविषयत्व उत्तमपुरुषस्य सर्वथैवासम्भवस्तत्र स्वस्य वक्तुरेव कर्तृत्वात् नियमेनोक्तपारोक्ष्यस्यासंभवइति तत्रासंभविनो लिडुत्तम-स्योक्तसूत्रविषयत्वमयुक्तं स्यादिति तत्सूत्रमेव लिटः क्वचिदपरोक्षविषयतां ज्ञापयतीति ज्ञापकत्वोक्तिः प्रकाशकृतो-भवति सङ्गतेत्यर्थः । **लिड्विधानादिति** । तथा चोक्तसूत्रस्य तादृशलिडुत्तमविषयतयापि लब्धविषयत्वात् ज्ञापकत्वस्योक्त-

मनाया अधिकारत्वानुपपत्तेः। अथेष्टत्वस्य शक्योपलक्षणत्वे तदंशाभाननिर्वाहेपि स्वर्गत्वादेरशक्यस्य भानं न संभवति अशक्यस्य भानोपगमेतिप्रसङ्गादिति चेत्। स्वर्गत्वाद्यवच्छिन्ने समभिव्याहृतकामनाविषयत्वज्ञानसहकृतस्य तादृशकामनाविषयतावच्छिन्नशक्तिज्ञानस्य स्वर्गत्वादिप्रकारकशाब्दधीहेतुत्वोपगमेतिप्रसङ्गानवकाशात्। वस्तुतस्तादृशकामनाविषयतावच्छेदकत्वोपलक्षितस्वर्गत्वादिविशिष्टसाधनत्वे शक्तिस्वीकारात्सर्वसामञ्जस्यम्। नच स्वर्गत्वादिविशिष्टसाधनत्वस्य विधिप्रत्ययवाच्यत्वं न संभवति स्वर्गत्वादेर्गङ्गास्नानादिजन्यस्वर्गादिसाधारण्येन यागादिजन्यतानवच्छेदकतया यागादौ स्वर्गत्वादिविशिष्टसाधनत्वबाधात् नहि जन्यतानवच्छेदकधर्मो जनकत्वनिरूपके विशेषणमिति वाच्यम्। स्वर्गत्वादेः शक्यविशेषणत्वेपि तदुपलक्षितवैजात्यावच्छिन्ननिरूपितजनकतायाः यागादावबाधितायाः स्वर्गादिजनकतात्वेन विधिप्रत्ययतो भानसंभवात्। घटत्वादिविशिष्टवाचकपदघटिताद् घटं द्रव्यत्वेनैव जानातीत्यादिवाक्यात् घटत्वाद्युपलक्षितघटादिविशेष्यकत्वभानवत्। नच तद्धर्मावच्छिन्ननिरूपिततत्साधनत्वज्ञानं विना तद्धर्मप्रकारकफलेच्छाधीनप्रवृत्त्यनिर्वाह इति शङ्क्यम्। वह्नित्वादिप्रकारकेच्छातोपि तृणादिसमवधानेऽभ्रान्तप्रवृत्तेरानुभविकत्वात् भूयः सुखार्थिनामपि भ्रमं विना क्रियाविशेषे प्रवृत्तेश्च तद्धर्मावच्छिन्नफलार्थिप्रवृत्तौ तद्धर्मप्रकारेण भासमानफलं प्रति साधनताज्ञानस्यैव प्रवर्त्तकत्वात्। सच धर्मः कार्यतावच्छेदकतया भासतां कार्यांशे उपलक्षणतयैव वेत्यन्यदेतत्। नहि वह्नित्वादिकं तृणादिजन्यतावच्छेदकं व्यभिचारिसाधारणत्वात्। नवा भूयस्त्वादिकं कस्यचिज्जन्यतावच्छेदकमर्थवशसंपन्नत्वात्। एवं सति घटत्वावच्छिन्नफलार्थी तन्त्वादौ कथं न प्रवर्त्तते तन्त्वादेरपि घटत्वाद्युपलक्षितजन्यसत्त्वादिविशिष्टनिरूपितद्रव्यत्वावच्छिन्नसाधनतावत्त्वादिति चेत् फलानुपधाननिश्चयात्तस्य स्वातन्त्र्येण प्रवृत्तिप्रतिबन्धकत्वात् फलोपधायकसाधनत्वस्य वा विधिप्रत्ययार्थतया घटकामस्तन्तुमुपाददीतेत्यादिर्न प्रयोगः। नच तथापि स्वर्गत्वादेर्यागादिनिष्ठकारणताघटकव्यापकतानिरूपकतानवच्छेदकतया स्वर्गत्वावच्छिन्ननिरूपितव्यापकताघटितकारणताया बाधः स्वर्गादिनिष्ठकार्यतावच्छेदकवैजात्यस्य च कारणताग्रहोत्तरकालकल्प्यत्वेन प्रागनुपस्थित्या तदवच्छिन्ननिरूपितव्यापकताबोधासंभव इति स्वर्गकाम इत्यादौ विध्यर्थबोधानुपपत्तिर्दुर्वारैवेति वाच्यम्। स्वरूपसंबन्धरूपाया एव कारणताया विध्यर्थत्वोपगमात्। अन्यथा सिद्धिनिरूपकतानवच्छेदकनियतोत्तरवर्त्तितावच्छेदकधर्मवत्स्वर्गकत्वमेव स्वर्गकारणत्वं। नियतोत्तरवर्तितावच्छेदकश्च धर्मो विशिष्य उत्तरकालकल्प्यो जातिविशेष एव नियतोत्तरवर्त्तितावच्छेदकत्वेन सामान्यरूपेण शाब्दबुद्धौ भासते नियतोत्तरवर्त्तितावच्छेदकत्वं च कारणतावच्छेदकत्वाभिमतधर्मावच्छिन्नतद्व्यापाराभावाधिकरणताविशिष्टोत्पत्तिक्षणावच्छिन्नाधिकरणतानिरूपकतानवच्छेदकत्वम् अधिकरणतावैशिष्ट्यं च स्वावच्छेदकक्षणाव्यवहितोत्तरक्षणावच्छिन्नस्वाश्रयनिष्ठत्वसंबन्धेन। वस्तुतः स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम्। नियतपूर्ववर्तितावच्छेदकत्वं चाव्यवहितपूर्वकालावच्छिन्नवृत्तिकाभावघटितदैशिकव्यापकतायाः स्वाश्रयत्वस्वाश्रयनिरूपितव्यापारत्वववत्त्वान्यतरसम्बन्धेनावच्छेदकत्वमेव व्यापकत्वनिरूपकतावच्छेदकवैजात्यस्य विशिष्यानुपस्थितावपि स्वर्गधर्मत्वेन ज्ञानं संभवत्येव। व्यापकताघटकाभावप्रतियोगितायां स्वरूपतोवच्छेदककोटिप्रविष्टाया अपि जातेर्व्यापकताभाने स्वर्गधर्मत्वादिना भाने न बाधकम्। स्वर्गधर्मत्वादेरुपलक्षणतया

---

युक्त्या तस्यासंभवात्तादृशज्ञापकबलेन बाातेन इत्यस्योपपादनमयुक्तमित्यर्थः। **अधिकारत्वानुपपत्तेरिति**। यद्धर्मावच्छिन्नसाधनताज्ञानात्प्रवृत्तिस्तत्प्रकारककामनाया एवाधिकारत्वात् प्रकृते च स्वर्गाभिन्नसाधनताज्ञानात्प्रवृत्तिरुपगता नहि स्वर्गत्वावच्छिन्नसाधनताज्ञानादित्यर्थः। **स्वरूपतोवच्छेदककोटीति**। विजातीयस्वर्गसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावीयावच्छेदकत्वनिष्ठप्रतियोगितावच्छेदककोटौ वैजात्यस्य स्वर्गधर्मत्वादिना न प्रवेशोऽपितु स्वरूपत एव स्वर्गधर्मत्वेन प्रवेशे यागत्वादौ स्वर्गधर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वस्यैव सत्त्वेन व्यापकतावच्छेदकत्वं दुर्घटं स्यादितिभावः।

भानात् । प्रतियोगित्वासंबन्धेन प्रतियोगिप्रकारकज्ञानएव प्रतियोगिकोटावुपलक्षणप्रकाराभाननियमात् । प्रकृते च कारणताशरीरघटकाभावस्य प्रतियोगिताप्रकारेण भाननियमात् । अतएव स्वरूपतो वह्नित्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नाभावत्वेन लक्षणप्रवेशस्य संभवदुक्तिकता । इत्थमेव चेष्टतावच्छेदकधर्माणामुपलक्षणीभूतेनेष्टतावच्छेदकत्वेन व्यापकताघटकाभावप्रतियोगितावच्छेदककोट्यप्रविष्टेनापीष्टतावच्छेदकधर्माणां सर्वसाधारणशक्तिग्रहे भानमुपपद्यत इति । एतेन नियतोत्तरवर्त्तितावच्छेदकधर्मवत्स्वर्गकत्वस्य विध्यर्थतामते यागादिधर्मिकताद्दशकारणताग्रहस्य प्रवृत्तिहेतुता वाच्या । तदपेक्षया च स्वर्गादिधर्मिकनियतोत्तरवर्त्तितावच्छेदकधर्मरूपयागादिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वे ताद्दशसाध्यताविशिष्टमात्रस्य विध्यर्थत्वे च लाघवम् ताद्दशसाध्यताया निरुक्तसाधनान्तर्गतत्वादितीष्टसाधनत्वस्य विध्यर्थत्वं प्रवर्त्तकत्वं च व्याहन्येत । एवं यत्र कारणतावच्छेदकधर्मोप्यनुपस्थितोतिप्रसक्तेन न्यूनवृत्तिना वा धर्मेण कारणमुपलक्षितं तत्र शब्दात्कारणताग्रहानुपपत्तिश्चेति निरस्तम् । व्यापकताघटितकारणतायाः साध्यतामपेक्ष्यागरीयस्या एवोक्तरीत्या प्रवर्त्तकत्वादिसंभवात् । ताद्दशसाधनताशरीरेव्यापकतावच्छेदकत्वेनैव कारणतावच्छेदकप्रवेशात्तद्ग्रहे विशिष्य तदुपस्थित्यनुपस्थित्यनुपयोगाच्चेति । विजातीयस्वर्गनिरूपितसमवाय एव स्वर्गादिनिष्ठयागादिजन्यतावच्छेदकसम्बन्धः । तथाच वैजात्यस्य सम्बन्धघटकतयैव व्यापकताशरीरे निवेशान्नोपस्थित्यपेक्षा । नवा कारणताविघटकव्यभिचारावकाश इत्याहुः । तदसत् । विजातीयस्वर्गनिरूपितसमवायत्वेन संबन्धतायां मानाभावात् । ताद्दशसंबन्धघटितव्यापकताया विधिप्रत्ययार्थत्वे तस्य स्वर्गादिनिष्ठवैजात्यभेदेन शक्तिबाहुल्यप्रसङ्गात् । ताद्दशकार्यसंबन्धघटितेष्टकारणतायाश्च प्रमाणान्तरेणाप्रत्यायितत्वात् । तत्र शक्तिग्रहानुपपत्त्या शाब्दबुद्धौ तद्भानानुपपत्तेश्च । नचेष्टतावच्छेदकत्वोपलक्षितस्वर्गत्वावच्छिन्ने कारणताघटकाधिकरणादिपदार्थे च खण्डशः शक्तिरुपेया । आकाङ्क्षावशाच्चाधिकरणरूपविध्यर्थे विजातीयस्वर्गनिरूपितसमवायस्य संबन्धतया भानात्ताद्दशकार्यसंबन्धघटितकारणतायाः शाब्दबोधे भानमुपगन्तव्यम् । नतु ताद्दशसंबन्धान्तर्भावेण शक्तिरिति न काचिदनुपपत्तिरिति वाच्यम् । एवंसति संसर्गतात्पर्यज्ञानानुरोधेन ताद्दशसंसर्गोपस्थित्यपेक्षाया दुर्वारत्वात् । नच तत्संसर्गेण विशेषणविशिष्टविशेष्यपरत्वज्ञानमेव संसर्गभाननियामकम् तत्रापि च संसर्गः संसर्ग एव नतु विशेषणमिति न ज्ञानापेक्षेति वाच्यम् । विशेषणविशिष्टविशेष्यस्य वाक्यार्थत्वेन पूर्वमनिश्चिततया तत्परत्वग्रहस्य शाब्दबोधात्पूर्वमसंभवात् । तत्तत्संबन्धविषयतानिरूपितविशेषणादिविषयताशालिबोधपरत्वज्ञानस्यैव हेतुतया तत्र संबन्धस्य विशेषणतया तदुपस्थितेरावश्यकत्वात् । एवं विजातीयस्वर्गनिरूपितसमवायसंबन्धेन स्वर्गत्वावच्छेदेन जन्यतोपगमे स्वर्गत्वस्याश्वमेधजन्यत्वसामानाधिकरण्यमात्रमेव हि शब्देनापि प्रतीयते नतु स्वर्गत्वस्य जन्यतावच्छेदकत्वमसामर्थ्यादसंभवाच्चेत्यादिमिश्रग्रन्थविरोधः । यत्तु वैजात्यमेव कार्यतावच्छेदकं तच्च संबन्धविध्रयैव कारणताघटकं कार्यतावच्छेदकधर्मविशिष्टनिरूपितकार्यतावच्छेदकसंबन्धेन कार्यवन्निष्ठाभावप्रतियोगित्वस्य कारणताशरीरे निवेश्यत्वादिति । तदप्यसत् । कार्यस्य कार्यतावच्छेदकरूपेणैव निवेशनीयतया तदुपस्थित्यपेक्षाध्रौव्यात् । नच संबन्धसंकोचे प्रमेयत्वेनैव कार्यप्रवेशः संभवतीति वाच्यम् । विजातीयस्वर्गवन्निष्ठाभावप्रतियोगितात्वस्यागुरोरवच्छेदकत्वसंभवे विजातीयस्वर्गीयसमवायसंबन्धेन प्रमेयवन्निष्ठाभावप्रतियोगितात्वरूपगुरुधर्मावच्छिन्नाभावाप्रसिद्धेः । एतेन स्वर्गत्वमेव यागजन्यतावच्छेदकमवच्छेदकताघटकसमवायसंबन्धसंकोचे न व्यभिचार इत्यपि निरस्तम् । ताद्दशसंबन्धविशेषणेष्टतावच्छे-

---

प्रतियोगिताप्रकारेणेति । स्वर्गधर्मत्वसमानाधिकरणानवच्छिन्नावच्छेदकतानिरूपितावच्छेदकतानिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिरूपिताधेयत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपिततत्तदवच्छेदकनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगितानिरूपकत्वेनेत्यर्थः । यदि स्वर्गधर्मत्वस्यावच्छेदककोटौ विशेषणत्वं स्यात् स्वर्गधर्मत्वावच्छिन्नावच्छेदकतानिरूपकत्वघटितप्रतियोगितानिरूपकत्वेन प्रवेशः स्यादिति भावः । लक्षणेप्रवेशस्येति । धूमे वह्निद्रव्यत्वादिव्याप्यत्वस्यानुगतैकलक्षणे वह्नित्वावच्छिन्नव्यापकतावच्छेदकत्वसमानाधिकरणनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववन्निरूपितवृत्तित्वाभावत्वरूपे प्रवेशस्येत्यर्थः

दकविशिष्टस्य प्रमाणान्तरावेद्यतया तत्र शक्तिनिश्चयासंभवात्। नहि समभिव्याहृतफलबोधकपदोपस्थाप्यतावच्छेदकत्वरूपोपलक्षणधर्मेण यथा स्वर्गत्वादीनां शक्तिग्रहे भानं तथोपलक्षणीभूततादृशपदोपस्थाप्यतावच्छेदकसंबन्धत्वेन विजातीयस्वर्गनिष्ठसमवायादेरपि तत्र भानसंभवः। स्वर्गपदाच्छुद्धसमवायेनैव स्वर्गत्वविशिष्टस्योपस्थितौ विशिष्टसमवायेन स्वर्गत्वविशिष्टस्य स्वर्गपदार्थत्वोपगमे लक्षणाप्रसङ्गात्। शुद्धसमवायेन स्वर्गत्वविशिष्टविषयककामनावतोऽनधिकारप्रसङ्गात्। मीमांसकास्तु अहरहः संध्यामुपासीतेत्यादौ नित्यतया निष्फले संध्योपासनादाविष्टसाधनत्वस्यायोग्यत्वेनान्वयासंभवान्नेष्टसाधनत्वं लिङर्थः। अथ संध्यावन्दनादेरप्यर्थवादोपस्थापितब्रह्मलोकावाप्त्यादिफलसाधनत्वमव्याहतम्। यत्र नित्येऽर्थवादादपि न फलोपस्थितिस्तत्रापि फलाभावनिश्चायकप्रमाणाभावाद्योग्यतासंशयसंभवेन फलसाधनत्वप्रत्ययो लिङादितः संभवत्येव। नत्र तद्बोधो नोपयोगी निष्फलतया ज्ञाते चैत्यवन्दनादौ प्रवृत्तिवारणायेष्टसाधनताज्ञानस्य प्रवृत्तिहेतुतावश्यकत्वेन नित्यविधेः प्रवृत्तिनिर्वाहाय तस्य फलसाधनताबोधकताया आवश्यकत्वादिति चेन्न। "संध्यामुपासते ये च सततं संशितव्रता" इति श्रुतौ सततमिति श्रुतेः कदाचिदस्य संध्यावन्दनादिबाधस्तेन स्वीयसंध्यावन्दने ब्रह्मलोकावाप्तिफलानुपधानस्य निश्चिततया अहरहः संध्यावन्दने ब्रह्मलोकावाप्तिसाधनताबोधनेऽपि तस्य संध्यावन्दने प्रवृत्त्यनिर्वाहात् यत्र च नित्ये विशिष्यफलबोधकोऽर्थवादादिर्नास्ति तत्र विधिप्रत्ययेन इष्टत्वेन फलसाधनताबोधस्य जननेऽपि इच्छाविषयताऽवच्छेदकस्वर्गत्वादिरूपविशेषधर्मप्रकारेण फलविषयकतत्साधनताबोधस्यानिर्वाहेण प्रवृत्त्यनिर्वाहात्। इष्टसाधनताज्ञानाघटितकारणस्तोमात्मिकायाः संध्यावन्दनाद्यभावगोचरनरकादिसाधनताज्ञानाधीनतद्गोचरद्वेषघटितसामग्र्या एव संध्यावन्दनादौ प्रवर्तकताया उपगन्तव्यतया नित्यस्थले इष्टसाधनताबोधस्यानुपयोगिताया दुर्वारत्वात्। नच विश्वजिता यजेतेत्यत्र विशिष्टफलाश्रवणेऽपि यथा स्वर्गकामपदस्याध्याहारेण तत्समभिव्याहाराद् विशेषरूपावच्छिन्नस्वर्गसाधनताबोधस्तथा नित्यस्थलेऽपि विशेषधर्मप्रकारकस्वर्गसाधनबोधसंभवात् उक्तप्रवृत्तिसामग्र्यन्तरकल्पनमयुक्तमिति वाच्यम्। बहुवित्तव्ययायाससाध्यविश्वजिद्यागेनतत्तद्ग्रामपश्वादिफलोद्देशेन प्रवृत्त्यनुपपत्तेः, तद्विधेः स्वर्गफलतात्पर्यनिश्चयात्संध्यावन्दनादौ चाल्पायाससाध्ये ग्रामादिफलोद्देशेनापि प्रवृत्त्युपपत्तेः, तद्विधेः स्वर्गपरत्वनिश्चयायोगात्। स्वर्गादिफलकामनारहितैर्मुमुक्षुभिरपि संध्यावन्दनाद्याचरणादुक्तप्रवृत्तिसामग्रीकल्पनस्यावश्यकत्वाच्च। तादृशसामग्रीं विना प्रायश्चित्तादाविष्टासाधने प्रवृत्त्यनिर्वाहाच्च। नच तत्रापि पापध्वंसेष्टसाधनताज्ञानात्प्रवृत्तिर्निर्वहति। सुखदुःखाभावेतरगोचरेच्छायां इष्टसाधनताज्ञानस्य नियमतोऽपेक्षायां निष्फलपापध्वंसस्येष्टत्वासंभवात्। नरकसाधनगोचरद्वेषस्य तद्ध्वंसगोचरेच्छाजनकत्वोपगमेऽस्मदीयसामग्र्यामिष्टसाधनत्वज्ञानाघटितप्रवृत्तिसामग्र्यामविवादात्। कृतिसाध्यताज्ञानसहितेच्छासामान्यसामग्रीतश्चिकीर्षोत्पत्तेर्निष्फलेऽपि संध्यावन्दनादौ निर्वाहेण प्रवृत्त्युपपत्तेः। नच नरकानुत्पाद एव प्रायश्चित्तस्य संध्यावन्दनादेश्च फलमितीष्टसाधनताज्ञानघटितैव प्रवृत्तिसामग्री नरकद्वेषवतां च तदनुत्पादे नियमत एवेच्छेति तेषां नित्यसंध्यावन्दनाद्यनुष्ठानमुपपद्यते। अन्यैश्च तत्रानुष्ठीयते इति वाच्यम्। नरकानुत्पादस्य तत्प्रागभावात्मकस्य प्रतियोगिविकल्पग्रासेन फलत्वासंभवात्। अत्यन्ताभावस्य प्रतियोगिविरोधितया कदाचित्पापान्तरेण यस्य नरकदुःखं जनितं जनिष्यते वा तदात्मन्यसत्त्वान्नित्यत्वेन चोभयोः फलत्वासंभवात्। योगक्षेमसाधारणसाधनतायाश्च गुरुशरीरत्वेन प्रवृत्त्यनुपयोगित्वात्। यदपि मण्डलीं कुर्यादित्यादिवाक्यप्रामाण्यवारणायेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकमिति तदपि न। मण्डलीकरणादिज-

---

**प्रतियोगिविकल्पग्रासेनेति।** यस्य कदाचिदपि नोत्पादस्तस्य प्रागभावे मानाभावात्तस्यावस्तुत्वात्। यस्यावश्यमुत्पत्तिस्तस्यैव प्रागभावस्य स्वीकरणीयतया सन्ध्योपासने कृतेऽपि तदुत्पत्तेरावश्यकत्वात्तदनुत्पत्त्यर्थं सन्ध्योपासनस्य वैयर्थ्यापत्तेरिति भावः। यदि च सन्ध्यावन्दनाद्यकरणजन्यतावच्छेदकदुःखगतवैजात्यस्य प्रसिद्धत्वेन तदवच्छिन्नप्रतियोगिताकप्रागभावो दुःखं मे माभूदिति प्रतीतिसिद्धो नाप्रसिद्धः सन्ध्यावन्दनाद्यकर्तरि तत्प्रसिद्धेः स चैक एवात्यन्ताभाववत्तस्य संबन्धः प्रत्यात्मगतो नानाप्रतियोग्युत्पादविनाश्यो येन सन्ध्यावन्दनं क्रियते तदात्मनि कदाचिदपि तादृशदुःखस्योत्पादसंभवात् प्रागभावसंबन्ध एव सदैव वर्तते येन तु न तत्क्रियते तस्य दुःखोत्पादेन प्रागभावसंबन्धनाश इतिचेदुपेयते तदाप्याह। **फलत्वासंभवादिति।**

न्यतद्ध्वंसादिरूपफलेऽपि कदाचित्कस्यचिदिष्टसाधनताभ्रमेणेच्छोत्पत्त्या मण्डलीकरणादावपीष्टसाधनत्वाबाधेनेष्टसाधनत्वविध्यर्थतामतेऽपि तद्वाक्यप्रामाण्यस्यावश्यकतया इष्टापत्तेः । स्वर्गकामो मण्डलीं कुर्यादिति वाक्यजन्यबोधे च स्वर्गकामनाया मण्डलीकरणादिनिष्ठकर्तव्यत्वप्रयोजकत्वभानेन तदर्थबाधेन तद्वाक्याप्रामाण्योपपत्तेः । न चेष्टसाधनत्वस्य विधिप्रत्ययार्थत्वानुपगमे स्वर्गकामो यजेतेत्यादिवाक्याद्यागादौ प्रवृत्त्यनुपपत्तिः । तत्राभावगोचरद्वेषघटितसामग्र्यसंभवात् यागाद्यभावस्य नरकादिरूपद्विष्टसाधनत्वाभावात् इष्टसाधनत्वबोधकमानाभावेन तज्ज्ञानघटितसामग्र्या अपि भवन्मते दुर्घटत्वादिति वाच्यम् । इष्टसाधनत्वस्य विध्यर्थताविरहेऽपि स्वर्गसाधनं न स्वर्गकामनाधीनकृतिसाध्यमितीतरबाधबलात्स्वर्गकामकृतिसाध्यतान्वयितावच्छेदकतया स्वर्गसाधनत्वस्योक्तविधिजन्यबोधे भानाद्यागादाविष्टसाधनताज्ञानादेव प्रवृत्तिनिर्वाहात् । इत्थंच सन्ध्यावन्दनादौ तत्कालावच्छिन्नशौचादिकमेवाधिकारो नतु फलकामनापि । अतः फलकामनाशून्यस्यापि शौचादिमतः सन्ध्यावन्दनाकरणं प्रत्यवायजनकं फलकामनायास्तत्राधिकारत्वे तच्छून्यस्यानधिकारितया तदकरणं न प्रत्यवायमावहेत् । नच मुमुक्षापवादेन स्वर्गादिरूपफलकामनायाः कदाचिदसंभवेऽपि नरकाभावरूपफले नियमत एवेच्छासंभवतीति न शौचादिमतः सन्ध्यावन्दनाद्यकरणस्य प्रत्यवायजनकत्वानुपपत्तिरिरिति वाच्यम् । नरकाद्यनुपस्थित्यैव तदभावाज्ञानेन तदिच्छाविरहोपपत्तेरित्याहुः । तदसत् । ध्वंसादेरत्यन्ताभावविरोधितया निष्प्रमाणकतया नरकात्यन्ताभावस्यैव प्रायश्चित्तसन्ध्यावन्दनादिफलत्वसंभवादिष्टसाधनताज्ञानाद्यघटितप्रवृत्तिसामग्र्या असिद्धेः, करणान्तरकल्पनापेक्षया गुरुशरीरक्षेमसाधनताज्ञानस्यैव सर्वत्र प्रवृत्तिहेतुतेति दण्डाद्धट इत्यादिप्रतीतिबलात्स्वरूपसंबन्धविशेषरूपस्य क्षेमसाधारणसाधनत्वस्योपगमे तच्छरीरगौरवस्याप्यभावाच्चेति नित्यस्थले शौचादिफलकामनयोरुभयोरधिकारत्वेऽपि प्रत्येकमेव तयोरधिकारिता नतु मिलितयोरिति फलकामनाशून्यस्यापि शौचादिमतोऽधिकारितया तस्यापि नित्याकरणं प्रत्यवायजनकम् । अथ वा सन्ध्यावन्दनाकरणेन प्रत्यवायजननेऽधिकारैकदेशशौचादिमत्त्वमेव सहकारि नतु फलकामनापि तदसत्त्वेपि प्रत्यवायोत्पत्तेः सर्वसिद्धत्वात् । एतेन संवलिताधिकारानुपगमे शौचादिशून्यफलकामनावतो दैवान्नित्याकरणं प्रत्यवायं जनयेदिति निरस्तम् । अतएव नित्यकाम्यजयन्तीव्रतादौ फलकामनाया अधिकारत्वस्य सर्वसिद्धतया शौचादिमतः फलकामनारहितस्य तदकरणं प्रत्यवायं जनयतीति । अपरेतु चैत्यनवन्देतेति वाक्यप्रामाण्यानुरोधेनेष्टसाधनत्वस्य विध्यर्थत्वमावश्यकम् । कृतिसाध्यत्वादिमति चैत्यवन्दनादौ कृतिसाध्यत्वाद्यभावस्य नञा बोधने तद्वाक्यस्याप्रामाण्यापत्तेः । कृतिसाध्यतायाश्च विधित्वं निर्युक्तिकम् । तदनङ्गीकारेऽपि कृतेराख्यातसामान्यार्थतया विधिप्रत्ययस्यापि तदर्थकतया पचेतेत्यादौ कृतेः पाकानुकूलत्वभानस्यावश्यकतयार्थात्पाकादावपि कृतिसाध्यताभानात् । कृतिसाध्यताया विधित्वेऽपि तत्तत्कालतत्तत्पुरुषविशेषितकृतिसाध्यताविषयकस्य प्रवर्त्तकज्ञानस्य शाब्दबोधोत्तरमेव स्वीकरणीयतया विधिवाक्यजशाब्दबोधतः साक्षात्प्रवृत्त्यनिर्वाहात् । अस्तु वा साध्यतासंबन्धेनैवाख्यातसामान्यार्थकृतेः क्रियायां विधिप्रत्ययजन्यबोधे भानम् । प्रवर्त्तिका चिकीर्षापि साध्यतासंबन्धेन कृतिप्रकारिका क्रियेच्छैव । नच लडादिस्थले आख्यातार्थकृतेः क्रियाविशेष्यतयैव भानमिति व्युत्पत्तेः क्लृप्तत्वात्पचेतेत्यादौ न तस्याः क्रियाविशेषणतया भानसंभव इति वाच्यम् । व्युत्पत्तिवैचित्र्येण तदुपपत्तेः । शक्त्यभेदेपि व्युत्पत्तिभेदे बाधकाभावात् । अतएव प्राचीनैराख्यातार्थस्यैव कृतेः कर्मप्रत्ययस्थले क्रियाविशेषणतया भानमुपेयते एवं क्वचित्पाकादाविव सर्वत्रैव यागपाकादेः लौकिकप्रमाणादेव कृतिसाध्यताबोधो निर्वहतीति वदन्ति । न कलञ्जं भक्षयेदित्यादिनिषेधविधेः प्रामाण्यानुरोधतः बलवदनिष्टाननुबन्धित्वस्य विध्यर्थे प्रवेशः । निषिद्धेऽपि कलञ्जभक्षणादौ तृप्त्यादिरूपेष्टसाधनत्वसत्त्वेन तदभावस्य नञा बोधने प्रामाण्यानुपपत्तेः । बलवदनिष्टाननुबन्धित्वस्य विधित्वे तस्यैवाभावो बलवदनिष्टनरकानुबन्धिनि तत्तत्कर्मण्यबाधितो बोध्यत इति तत्प्रामाण्योपपत्तिः । बलवदनिष्टाननुबन्धित्वस्येष्टसाधनताविशेषणतया वाच्यत्वे विशिष्टाभावस्यैव शाब्दबोधे भानम् । सोऽपि विशेषणाभावो यतोऽबाधितः कलञ्जभ-

---

एतेनेति । अथवेत्यादि प्रक्षान्तरोपगमेनेत्यर्थः ।

क्षणादौ विशिष्टाभावबोधानन्तरमेव तल्लिङ्गकानुमानगम्यो बलवदनिष्टानुबन्धित्वरूपस्तदननुबन्धित्वाभावः प्रवर्त्तकमिव निवर्त्तकमपि ज्ञानं श्रुतिवाक्यात्परम्परयैव नतु साक्षात् । एतन्मते च न तादृशाभावस्य शाब्दबोधे भानं पदार्थैकदेशतया इतरविशेषणतयोपस्थितत्वेन नञर्थविशेषणतयाऽनिष्टाननुबन्धित्वान्वयासंभवात् । वस्तुतो विशिष्टशक्तौ विशेष्यविशेषणभावे विनिगमनाविरहात् पृथगेव बलवदनिष्टाननुबन्धितायाः वाच्यत्वम् । नच बलवदनिष्टाननुबन्धित्वे इष्टसाधनत्वस्य विशेष्यत्वे विधिवाक्यतः क्रियाविशेष्यकेष्टसाधनताज्ञानासंभवात् क्रियागोचरचिकीर्षाद्यर्थं विधिवाक्यजशाब्दबोधोत्तरमिष्टसाधनत्वप्रकारकक्रियाविशेष्यकज्ञानान्तरं कल्पनीयमिति तदकल्पनप्रयुक्तलाघवमेव बलवदनिष्टाननुबन्धित्वस्य विशेषणत्वे विनिगमकमिति वाच्यम् । क्रियायां बलवदनिष्टासाधनत्वज्ञानस्यापि तद्गोचरेच्छाहेतुतया बलवदनिष्टासाधनत्वस्येष्टसाधनत्वविशेषणत्वमते क्रियाविशेष्यकतत्प्रकारकज्ञानान्तरस्य कल्पनीयतया मतद्वये कल्पनासाम्यता॰ यदिच बलवदनिष्टसाधनत्वज्ञानमेव द्वेषसामग्रीत्वेनेच्छाप्रतिबन्धकं नतु तदसाधनत्वज्ञानमिच्छाहेतुस्तदोक्तस्य विशेष्यविशेषणभावे विनिगमकस्य संभवेऽपि विशिष्टस्य वाच्यत्वे श्येने विध्यर्थवाच्येन तद्विधायकश्रुतेरप्रामाण्यप्रसङ्ग इति शक्तिभेदस्य श्येने केवलेष्टसाधनताबोधस्य चोपगम आवश्यकः । मणिकृतापि विशिष्टस्य वाच्यत्वे श्येने विध्यर्थबाधेन तत्र बलवदनिष्टासाधनत्वस्याभानं लिखितम् । तदभानं विशिष्टशक्तिपक्षे न संभवति । विशिष्टशक्तेर्विशेषणविनिर्मोकेन विशेष्यांशाभासकत्वात् । तत्तद्धर्मप्रकारेण पदार्थविषयकशाब्दबोधे तत्तद्धर्मांशे शक्यतावच्छेदकत्वपर्याप्त्यवगाहिज्ञानस्य हेतुत्वात् । अन्यथा विशिष्टस्वर्गादिवाचकस्वर्गादिपदाद्विना लक्षणां केवलं सुखत्वादिप्रकारकशाब्दबोधापत्तेः । यदिच केवलसुखत्वादिना स्वर्गादिरूपसुखबोधो लक्षणामन्तरेण स्वर्गादिपदादिष्यतएव नेष्यते परं सुखान्तरबोधस्तत्र शक्तिविरहादिति शक्यतावच्छेदकतापर्याप्त्यवगाहित्वमनुपयोगीत्युच्यते तदापि बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य शक्यतायां श्येननिष्ठवैरिवधसाधनत्वस्य बलवदनिष्टसाधनत्वनियतत्वेन तदसाधनत्वविशिष्टत्वेन विधिप्रत्ययावाच्यतया सुतरां तत्र विध्यर्थत्वानिर्वाह एव । यत्तु श्येनस्यादृष्टाद्वारकत्वघटितहिंसालक्षणानाक्रान्ततया बलवद्दुःखाजनकत्वमिति मतान्तरम् । तदसत् । तथासति श्येने तात्त्विकप्रवृत्तिवारणाय बलवद्दुःखाप्रयोजकत्वज्ञानस्यैव प्रवृत्तिहेतुताया उपगन्तव्यतया तस्यैव विध्यर्थताया आवश्यकत्वेन श्येने तद्बाधाच्छ्रुतेरप्रामाण्यप्रसङ्गतादवस्थ्यात् । श्येनस्य हिंसात्वविरहेऽपि अभिचारतया नरकजनकत्वस्य दुर्वारत्वाच्च । यत्तु अभिचरन्नित्यस्य वैरिवधगोचरप्रबलकामनाविशिष्टार्थतया तादृशकामनाविशिष्टस्यैव पुरुषस्य बलवद्द्वेषविषयाजनकत्वरूपबलवदनिष्टाननुबन्धित्वघटकद्वेषानुदयात् तादृशकामनाविशिष्टवृत्तिबलवद्द्वेषविषयाजनकत्वं श्रुतिवाक्यात् प्रत्येतव्यं, तच्च श्येनेऽबाधितमेव वैरिवधे उत्कटरागवतस्तज्जन्यनरके बलवद्द्वेषानुत्पत्त्या तादृशनरकस्य वैरिवधोत्कटकामनाविशिष्टवृत्तिद्वेषाविषयत्वात् । नह्येकदा एकत्रावर्त्तमानयोरेकतरमपरविशिष्टवृत्तीति मिश्राणां मूलाभिप्रायवर्णनं तदपि न बलवद्द्वेषविषयदुःखजनकत्वत्वावच्छिन्नाभावस्य वाच्यतास्वीकारे पुरुषविशेषीयबलवद्द्वेषविषयदुःखजनकत्वाभावस्य प्रत्ययासंभवात् तादृशदुःखजनकत्वत्वप्रतियोगिकाभावस्यातिप्रसक्ततया बलवद्द्वेषविषयदुःखजनकत्वाभावे च खण्डशक्तिस्वीकारे विशिष्टशक्तिस्वीकारपरित्यागात् । एवं यत्रोत्कटरागो यदा तत्रैव नोत्कटद्वेषस्तदा तज्जन्ये फले उत्कटरागदशायां च तज्जन्यदुःखरूपफलान्तरे उत्कटद्वेषे न किंचिद्बाधकमिति वैरिवधे उत्कटरागदशायां च श्येनजन्यनरके बलवद्द्वेषो दुरपवाद एव अस्तुवा फलविशेषोत्कटरागघटिता उपायगोचरोत्कटरागसामग्री तत्रैव तज्जन्यतया ज्ञाते सति फलान्तरेप्युत्कटद्वेषविरोधिनी तथापि नरकवैरिवधयोरेकतरं प्रति श्येनस्य हेतुत्वाग्रहदशायां तयोर्बलवद्द्वेषरागयोर्युगपत्संभव एव । यत्तु दीक्षाङ्गपशुघातस्य नरकासाधनतया मा हिंस्यादित्यत्रावैधहिंसैव विवक्षितेति श्येनस्य नरकासाधनत्वोपपादनं, तदपि न । तावतापि अभिचारविधया तथात्वस्य दुर्वारत्वात् । अथ खण्डशक्तिमवलम्ब्यानिष्टासाधनत्वविनिर्मोकेन क्वचिद्विधिबोधोपगमे

---

इत्यनेकतयाऽनेकशक्त्यापत्तिरिति खण्डशक्तिः खण्डशक्तिस्वीकारइति । विशिष्टशक्तौ प्रतियोगिताविशेषसंसर्गघटितरूपस्यानेकतयाऽनेकशक्त्यापत्तिरिति शत्रुवधकामनावद्वृत्तिद्वेषविषयदुःखजनकतास्वीकरणीया तथासत्यभिचरन्नित्यादिसमभिव्याहारवशात् ... प्रतियोगित्वस्य ...

श्वेतं छागमालभेतेत्यादावपि तत्परित्यागसंभवात् अविरोधेन मा हिंस्यादित्यत्र श्रुत्यर्थसंकोचो न स्यादिति सांख्यमतमेव साधीय इति चेत्स्यादेव अविरोधेऽपि ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्रेवसामान्यविधेर्विशेषेतरपरत्वं व्युत्पत्तिसिद्धमिति मा हिंस्यादित्यत्र संकोचः । अथ वा कथंचिद्बाधकापनयसंभवेनौत्सर्गिकार्थपरित्याग इति हिंसानिषेधसंकोचेनैवोपपत्तौ न श्वेतं छागमालभेतेत्यादौ विधिप्रत्ययस्य बलवदनिष्टासाधनत्वार्थपरित्याग इत्यर्थः । अथ यागपाकादिजन्यश्रमादावपि कदाचित्कस्यचिद्बलवद्द्वेषोदयात् यजेत पचेतेत्यादौ अप्रामाण्यप्रसङ्गो दुर्वारः । यत्तु बलवदनिष्टासाधनत्वं न लौकिकविध्यर्थः । किं तु न कलञ्जमित्यादिश्रुतेः प्रामाण्योपपत्तये वैदिकलिङ्गएव तदर्थकता तत्रापि बलवदनिष्टं नरकमेव ताद्रूप्येणार्थः । अत इष्टोत्पत्तिनान्तरीयकश्रमादेः कदाचित् द्वेषविषयतया न यागादौ विध्यर्थबाध इति तदपि न, शाकं न भुञ्जीतेत्यादिवैद्यकवाक्ये बलवदनिष्टाजनकत्वनिषेधपरत्वं विना प्रामाण्यानुपपत्तेः तत्रापि रोगाजनकत्वं विध्यर्थस्तदभावो नञा बोध्यतइति चेद् रिक्तायां न गच्छेत् पुष्ये नोद्वहेदित्यादिज्योतिःशास्त्रवचनस्य नैकः पर्वतमारोहेदित्यादिवाक्यस्य च का गतिः । तत्रापि विशिष्य तत्तदनिष्टासाधनत्वस्य विधिप्रत्ययार्थत्वे शक्त्यानन्त्यप्रसङ्गो व्युत्पत्त्यनुपपत्तिश्च । अत्र वदन्तिद्वेषविषयतावच्छेदकत्वोपलक्षितनरकत्वाद्याश्रयसाधनतात्वावच्छिन्नप्रतियोगिताकाभावकूटे तादृशाभावत्वेनानुगते एकैव विधिप्रत्ययस्य शक्तिः उपलक्षणीभूतद्वेषविषयतावच्छेदकत्वं परित्यज्य नरकाद्यसाधनत्वं प्रतीयते कुत्रचिन्नरकासाधनत्वं कुत्रचिद्रोगासाधनत्वं प्रतीयतइत्यत्र तात्पर्यमेव नियामकं प्रतियोगितायाः प्रकारतया भानात् प्रतियोगितावच्छेदकघटकनरकत्वादौ द्वेषविषयतावच्छेदकत्वस्योपलक्षणतया शक्तिग्रहे भानमविरुद्धम् । नच प्रमेयत्वादेरपि उपलक्षणतया भानमविरुद्धमिति प्रमेयत्वादेरुपलक्षणतया नरकत्वाद्यनुगमकत्वं कथं न स्वीक्रियते विनिगमकाभावादिति वाच्यम् । सुखाद्यसाधनत्वस्य विध्यर्थताविरहेण प्रमेयत्वादेः सुखत्वादिसाधारण्यंनोकरूपस्येत्यस्यैव विनिगमकत्वात् । नच तात्पर्याभावात् सुखाद्यसाधनत्वेबोधकत्वोपपत्तौ विध्यर्थत्वेऽपि क्षतिविरह इति वाच्यम् । तस्य विध्यर्थत्वेन तत्तात्पर्येणाधुनिकानां न भुञ्जीतेत्यादिंप्रयोगापत्तेः ॥

॥ इति महामहोपाध्यायगदाधरभट्टाचार्यकृतो व्युत्पत्तिवादः समाप्तः ॥ शुभं भवतु ॥

---

त्वावच्छिन्नस्य संसर्गतया भानोपगमेन न कस्यचिद्दोषस्य संभव इति भावः । **अविरोधेपीति** । यथाश्रुत वाक्यार्थयोर्विरोधाग्रहेऽपि विशेषार्थे तात्पर्यग्रहात्तत्र लक्षणारूपः सङ्कोचो भवत्येवेत्यर्थः । अथ प्रयोजनविरोधाद्यपरिस्फूर्तौ मुख्यार्थातिरिक्ततात्पर्यग्रह एव न भवतीति तात्पर्यग्रहार्थं ब्राह्मणेभ्य इत्यादेः पर्यालोचने क्रियमाणे यदा कौण्डिन्याय तक्रमेवदीयतामित्यवगम्यते तदा ब्राह्मणेभ्य इति वाक्यस्य तात्पर्यं कौण्डिन्यातिरिक्तब्राह्मणे लक्षणाबीजमवधार्यते यदा तु कौण्डिन्यायतक्रमपीति गृह्यते तदा तु नोक्तार्थे तात्पर्यं विज्ञायत इति शक्तशब्दप्रयोगमपहाय लाक्षणिकप्रयोगप्रयोजनन्तु नास्त्येवेति विरोधमूलक एव सङ्कोचः सामान्यविशेषस्थलेऽपि ज्ञायते तत्र विरोधस्य वाक्यापर्यालोचनदशायामगृहीतत्वादविरोधेपि सामान्यविशेषभावे संकोच इत्युक्तिस्तादृशाग्रहेपीत्येतत्परतया नेया यदि सामान्यविशेषभावः संकोचप्रयोजकः स्यात्सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतान्तक्रमपि कौण्डिन्यायेत्यादावपि संकोचः स्यादित्यभिप्रायेणाह—**अथवेति** ।

व्युत्पत्तिवादगूढार्थतत्वालोकः समाप्तः ॥